THE
CHOWKHAMBÂ SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.
Nos. 385, 386, 390, 394, 403 & 404.

THE

# VĪRAMITRODAYA,

## VYAVAHĀRAPRAKĀS'Ā

By

MAHĀMAHOPĀDHYĀYA PAṆḌIT MITRA MIS'RA.



Edited With Introduction Index etc.,

By

Paṇḍit Vishṇu Prasāda Bhāndārī.



VOL. VII.

Fasciculas I-VI-१ से ६




*PUBLISHED & SOLD BY*
*THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE,
*Benares City.*

1932.

चौखम्बा-संस्कृत-ग्रन्थमाला

ग्रन्थ-संख्या ३०

ग्रन्थाङ्कः ३८५, ३८६, ३९०, ३९४, ४०३, ४०४.

श्रीः

# वीरमित्रोदयस्य

## व्यवहारप्रकाशः ।

श्रीमहामहोपाध्याय श्रीमित्रमिश्रविरचितः ।

नेपालदेशीय-

साहित्योपाध्याय पं० विष्णुप्रसाद भण्डारिणा

संशोधितः ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

१९८९.

# भूमिका

इह तावज्जगति चेतनप्रवृत्तिं प्रति कलृप्तस्य ज्ञानस्येष्टसाधनताविषयकत्वे निर्विवादात् सुखस्यैव सर्वैरभिलष्यमाणतया प्रवर्तकज्ञानीयविषयतापन्नमिष्टं सुखमेवेत्यत्र न वैमत्यं केषां चिदपि ।

सुखसाधनता च धर्मस्यैवेत्यास्थेयम् । न चार्थादेरपि तत्साधनताया दर्शनान्न तन्मात्रसाध्यत्वं तस्येतिवाच्यम् । सत्यप्यर्थादौ धर्माभावे सुखानुपलब्धेः । क्वचिदसत्यपि धर्मे सति चार्थादावहं सुखीतिसुखोपलब्धिस्तु भ्रान्तिरेव । व्यसनिजनस्य मादकद्रव्यसेवनोत्तरजायमानसुखित्वप्रत्ययवत् । सात्विकवृत्तिविशेषात्मकस्य तस्य तत्साधनत्वेन शास्त्रबोधितधर्मविशेषं विनाऽनुपपत्तेः । न च राजसादित्वेन शास्त्रबोधिते तस्मिन् व्यभिचार इति शङ्क्यम् । तत्रापि सत्त्वलेशानुवृत्तिः शास्त्रप्रामाण्यादभ्युपेयैव ।

स च धर्मो वेदैकप्रमेयः । तत्त्वं च बलवदनिष्टाननुबन्धित्वे सति श्रेयःसाधनतया वेदतदुपजीविप्रमाणान्यतरगम्यत्वम् । श्येनादिव्यावृत्त्यर्थं बलवदनिष्टेत्यादि । स्वर्गादिरूपफलेऽतिप्रसङ्गवारणाय श्रेयःसाधनतयेति । प्रमाणे तदुपजीवित्वविशेषणदानात् मन्वादिस्मृतीनां वेदमुपजीव्य प्रवृत्तत्वेन तत्प्रमेये नाव्याप्तिर्न वा शाक्यादिस्मृतिगम्येऽतिव्याप्तिः । शाक्यादिस्मृतीनां वेदोपजीवित्वाभावेन तद्गम्ये तदन्यतरगम्यत्वाभावात् । न च अर्हदादीनामीश्वरावतारत्वोक्तेस्तदुक्तस्य वेदत्वमापादनीयम् । आस्तिकपरिगृहीतवेदविरुद्धार्थाभिधायकत्वेन तेषामीश्वरावतारत्वासिद्धेः । न च विनिगमनाभावेनान्योन्यविरोधादुभयोरप्यप्रामाण्यमितिवाच्यम् । बन्धनिवर्तकब्रह्मात्मैक्यज्ञानसाधनस्य महावाक्यस्यैव मुख्यवेदत्वेनेतरेषां च तदुपयोग्यन्तःकरणशुद्ध्यादिप्रतिपादकत्वेन वेदत्वात्तदेकवाक्यतयैव वेदत्वस्य वाच्यत्वात् । एवं च साक्षात्परम्परया वा तदेकवाक्यतापन्नानामेव वेदत्वस्य सिद्धौ तद्विरुद्धार्थाभिधायिनामीश्वरावतारत्वस्य साधयितुमशक्यत्वात् । बन्धनिवर्तकत्वं तु ब्रह्मात्मैक्यज्ञानस्यैवेति आचार्यादीनामीश्वरावतारत्वेन परिगृहीतानां गुरुशिक्षितानामन्येषां चानुभवान्निश्चीयते । इत्यास्तां तावत् ।

तस्मात्सिद्धमेतत् यत् शाक्यादिस्मृतिगम्यस्य न धर्मत्वमिति । धर्मस्यैव च सुखसाधनत्वात्तदर्थिभिस्तत्प्रतिपादकमेव शास्त्रमाश्रयणीयं नान्यत् ।

तच्चाम्नायतत्त्ववेदिभिर्दिव्यदृष्टिभिर्लोकोपकारपरायणैः प्राचीनैर्मनुयाज्ञवल्क्यादिमहर्षिभिः प्रणीतं नैकविधं वर्वर्ति । तत्र क्वचित्क्वचिदापाततोऽन्योन्यं विरुद्धत्वेन प्रतिभासमानानामार्षाणां वचसामविरोधविधाव्यवस्थापनायैव निगमागममर्माभिज्ञैरर्वाचीनैरनेकैर्विद्वद्वरैः सत्तर्कोपष्टब्धन्यायोपेता नानानिबन्धाः समुद्भाविता इति नापरोक्षं प्रेक्षावताम् । तेष्वेकायमन्यतमो पण्डितप्रवरमित्रमिश्रसङ्कलितो वीरमित्रोदयाभिधो महान् निबन्धः ।

प्रायेणायं श्लोकसङ्ख्यया लक्षद्वयपरिमितो द्वाविंशतिप्रकाशेषु विभज्य समाप्तिमवापितः ।

ते यथा—

| | | | | | |
|---|---|---|---|---|---|
| १ | परिभाषाप्रकाशः (मुद्रितः) | | ५ | प्रतिष्ठा | ,, |
| २ | संस्कार ,, | ,, | ६ | राजनीति ,, | (मुद्रितः) |
| ३ | आन्हिक ,, | ,, | ७ | व्यवहार | ,, |

| | | | | | |
|---|---|---|---|---|---|
| ९ | श्राद्धप्रकाशः | | १६ | कर्मविपाक ,, | |
| १० | तीर्थं ,, | (मुद्रितः) | १७ | चिकित्सा ,, | |
| ११ | दान ,, | | १८ | प्रायश्चित्त ,, | |
| १२ | व्रत ,, | | १९ | प्रकीर्णक ,, | |
| १३ | समय ,, | | २० | लक्षण ,, | (मुद्रितः) |
| १४ | ज्यौतिष ,, | | २१ | भक्ति ,, | |
| १५ | शान्ति ,, | | २२ | मोक्ष ,, | |

एषु चाद्याश्चत्वारः प्रकाशा अनुक्रमेण, राजनीति-तीर्थ-लक्षणप्रकाशा बहुलविद्वज्जनानुरोधवशतो व्युत्क्रमेणेति सप्त प्रकाशा मुद्रयित्वा प्रकाशिताः सन्ति । तथैव प्रकृतोऽयं व्यवहारप्रकाशो मुद्रयितुमुपक्रान्तः ।

तत्र तावत्स्मार्तधर्मस्य साधारणासाधारणत्वाभ्यां पूर्वं द्वैविध्येऽपि असाधारणस्य तस्य वर्णानुबन्धित्वेनाश्रमानुबन्धित्वेनोभयानुबन्धित्वेन गुणानुबन्धित्वेन निमित्तानुबन्धितया च पञ्चविधत्वात्सामस्त्येन षाड्विध्यं पर्यवस्यति । तत्र "ब्राह्मणो नित्यं मद्यं वर्जयेत्" इति वर्णधर्मः, अग्नीन्धनभिक्षाचर्यादिराश्रमधर्मः, "पालाशो दण्डो ब्राह्मणस्य" इत्यादिर्वर्णाश्रमधर्मः, शास्त्रीयाभिषेकादिगुणशालिनो गृहस्थविशेषस्य राज्ञः प्रजापालनादिरूपो गुणधर्मः, विहिताकरणप्रतिषिद्धसेवननिमित्तप्रायश्चित्तात्मको निमित्तधर्मः, अहिंसासत्यक्षमाद्यात्मकः साधारणो धर्मः । एतच्च परिभाषाप्रकाशे नानावचनोपन्यासेन सम्यग्विवेचितमस्ति । अस्मिंश्च व्यवहारप्रकाशे प्रजापरिपालनात्मकगुणधर्म एव सुविवेचितोऽस्ति । प्रजापरिपालनस्य दुष्टनिग्रहमदुष्टानुग्रहं च विनाऽसम्भवात् दुष्टादुष्टत्वयोश्च व्यवहारदर्शनमन्तरेण दुर्निरूपत्वात् प्रजापालनाधिकर्तुर्व्यवहारदर्शनमावश्यकमिति 'व्यवहारान् स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम्' इत्यादिना याज्ञवल्क्यादिभिः प्रतिपादितम् । तद्घटकव्यवहारत्वं तु ऋणादानादिलौकिकार्थविषयककथात्वमेव । कथात्वस्य शास्त्रीयपदार्थविषयकत्वेन तदभावान्न व्यवहारस्य कथापदव्यपदेश्यता । यथा वैदिकार्थविषयककथायामधिकरणादिव्यपदेशस्तथात्र व्यवहारव्यपदेशः ।

अत्र च परिभाषापरिष्कार-प्रमाणनिरूपण-विवादपदनिर्देश प्रकीर्णकाख्यानि चत्वारि प्रकरणानि ।

तत्र प्रथमे प्रकरणे व्यवहारलक्षणं, सलक्षणास्तद्भेदाः, सामान्यविशेषाभ्यां परिभाषाया निरूपणं, धर्माधिकरणेक्षणं, व्यवहारदर्शनविधिविवेचनम्, प्राड्विवाकादिस्वरूपनिरूपणम्, आदेयानादेयव्यवहारविवेचनम्, प्रत्यभियोगनिरूपणं, निन्हवादिविवेचनम् इत्यादयो विषयाः । द्वितीये साक्ष्यादिलक्षणं, साक्षिप्रश्नविधिस्तद्द्वैधे निर्णयः, लिखितस्वरूपं तद्भेदाः, भुक्तिः, लौकिकप्रमाणाभावे दिव्यप्रमाणानि तेषां भेदाः स्वरूपाणि चेत्यादयः । तृतीये ऋणादानादीन्यष्टादश पदानि तद्भेदाश्चेत्यादयः । चतुर्थे पूर्वप्रकरणोपयोगिनः पूर्वमनुक्ताः सुनिरूपिताः सन्ति ।

ग्रन्थकर्तुः परिचयस्तु ग्रन्थकर्त्रा स्वयमेव परिभाषाप्रकाशे प्रकाशान्तरेषु चोपोद्घातप्रसङ्गेऽनेकैः पद्यैर्निजवंशावलीं वर्णयता प्रकटीकृत एवास्तीति तदनुरोधेन किञ्चिदुच्यते ।

तत्र तावत्परिभाषाप्रकाशोपोद्घाते—

गोपाचलस्थधरणीसुरवंशपद्म--

श्रीनन्दनन्दनपदद्वयचित्तवृत्तिः
श्रीहंसपण्डित इति प्रथमानकीर्तिः ॥ (२८)
यो दूरवारकुलभूरनुभूतसौख्यः
श्रीहंसपण्डित इति प्रथितः पृथिव्याम् ।
आसीद्विवेकचतुरश्चतुरः समग्रान्
वेदानधीत्य कृतकर्मकलाकलापः ॥ (२९)
यज्ञादिकर्मकरणाय किलावतीर्णः
पूर्णः श्रिया निजकुलाभरणायमानः ।
मिश्रः परः परशुराम इति द्विजेन्द्र—
स्तस्याभवत्स तनयो विनयोदितश्रीः ॥ (३०)
यो दर्भाग्रसमानबुद्धिविभवः प्रख्यातकीर्तिर्गुणैः
श्रौतस्मार्तसमस्तकर्मकुशलाच्चण्डीश्वराख्याद्गुरोः ।
अध्यायान्तमधीत्य शास्त्रमखिलं मीमांसया मांसलः
शश्वत्खण्डितखण्डनः समभवत्सङ्ख्यावतामग्रणीः ॥ (३१)
पुत्रस्तस्य विभाति सद्गुणनिधिर्दानाम्बुसृष्टाम्बुधि-
र्धीरः श्रीयुतमित्रमिश्रसुकृती कल्याणकल्पद्रुमः ।
कीर्तीर्दिक्षु विदिक्षु यस्य रजनीजानिप्रभाभास्वरा
गायन्ति द्विजदारका हिमहरक्षीराब्धिशुभ्रा भुवि ॥ (३२)
तेनानेकनिबन्धसिन्धुमनिशं निर्मथ्य बुद्ध्या पुन-
र्वेदान्साङ्गपदक्रमोपनिषदान् श्रुत्वावधार्यापि च ।
धर्मार्थादिपुमर्थनिर्णयपरः श्रीवीरसिंहाज्ञया
ग्रन्थोऽयं रचितः परोपकृतये *श्रीवीरमित्रोदयः* ॥ (३६)

राजनीतिप्रकाशोपोद्घाते—

श्रीगोपाचलमौलिमण्डनमणिः श्रीदूरवारान्वये
श्रीहंसोदयहंसपण्डित इतिख्यातो द्विजाधीश्वरः ।
यं लक्ष्मीश्च सरस्वती च विगतद्वन्द्वं चिरं भेजतु-
र्भोक्तारं रभसात्समानमुभयोः साम्राज्यमाढ्यं गुणैः ॥ (४०)

इत्यादिभिरयं पण्डितप्रकाण्डो मित्रमिश्रो गोपाचल—(ग्वालियर) निवासी दूरवार-कुलजनिः पञ्चगौडान्तःपाति सनाढ्याभिधब्राह्मणजातीय आसीत्। अस्य पितामहः श्रीमान् हंसपण्डित आसीत्, पिता च परशुराममिश्रो यज्ञादिकर्मनिरतः काशीनिवासिश्रौतस्मार्त-क्रियाकलापनिपुणाच्चण्डीश्वरपण्डितादधिगतविद्य इति सिद्ध्यति । गोत्रं चास्य शाण्डिल्याख्यमासीदित्यानन्दकन्दचम्पूभूमिकाकारेण प्रतिपादितमस्ति । प्रमाणत्वेन च धर्मय्य-दीक्षितकृतायामद्वैतविद्यातिलकदर्पणाख्यायां टीकायां स्थितम्—

अस्ति प्रशस्तचरितो भुवि मित्रमिश्रः
शाण्डिल्यगोत्रकलशाम्बुधिलब्धजन्मा ।
पुंसः परस्य हृदयङ्गमकौस्तुभोऽसौ
सर्वासु दिक्षु विततोर्जितकीर्तिराशिः ॥

[illegible]

आनन्दकन्दचम्पूसमाप्तौ च मित्रमिश्रेण स्वस्य त्रयो भ्रातरो द्वौ ज्यायांसावेकश्च कनिष्ठः स्वसा चैकेत्युक्तम् । तत्र मुख्यो वीरेश्वरस्तदनुजन्मा चक्रपाणिरिति, कनीयान् योगादित्यनामा, स्वसा च सुनीतिनाम्नीति । तथा च मित्रमिश्रस्य वंशावली—

( ग्वालियरनिवासी शाण्डिल्यगोत्रः )

( दूरवारकुलसमुत्पन्नः सनाढ्यब्राह्मणः )

श्रीहंसमिश्रः

|

परशुरामिश्रः

|

वीरेश्वरः, चक्रपाणिः, मित्रमिश्रः, योगादित्यः, सुनीतिः, [ कन्या ]

इति सिद्ध्यति ।

उपरिसमुद्धृत–'तेनानेकनिबन्धसिन्धु-'मितिपद्येन श्रीवीरसिंहमहाराजाज्ञयायं महान् निबन्धो व्यरचीत्युक्तेर्बुन्देलाधिराजो वीरसिंहो मित्रमिश्रस्याश्रयप्रभुरासीदिति व्यक्तीभवति । अत एव मित्रमिश्रेण स्वकृतिषु तत्र तत्रोपोद्घाते स महाराजो बहुशः स्तवनकर्मीकृतोऽस्ति ।

यथा परिभाषाप्रकाशे—

अस्ति स्वस्तिलकायमानकरकानीहारहारप्रभा-
प्रादुर्भावपराभवव्यसननिर्भिलिम्पन् यशोभिर्दिवम् ।
मुष्णन् वैरिमहांसि विज्ञजनतां पुष्णन् समं बन्धुभि-
र्दिग्विख्यातबुंदेलवंशतिलकः श्रीवीरसिंहो नृपः ॥ (१९)
कस्तावद्बलिकर्णभार्गवमहादानप्रमाणस्तवः
कश्चासौ कुरुपाण्डुपाण्डुरयशःप्रस्तावनाविस्तरः ।
यावद्वर्षति वीरसिंहनृपतिर्वृष्टीरिमाः काञ्चनी-
र्वारां प्रावृषि तावदञ्जनरुचिर्धारा न धाराधरः ॥ (१६)

इत्यादिभिः, प्रकाशान्तरेषु च—

अन्तर्गम्भीरतान्धूकृतसलिलनिधिर्लोलिताशेषबन्धु-
र्बुन्देलानन्दसिन्धुः सुललितललनालोचनेन्दीवरेन्दुः ।
भ्रूभङ्गीलेशभङ्गीकृतरिपुनिवहो नृत्यसङ्गीतरङ्गी
सन्मातङ्गी तुरङ्गी धरणीपतिरभूद्वीरसिंहो नृसिंहः ॥
अमुष्य प्रस्थाने सति सपदि नानेभनिवहै-
रिहैकोऽपि द्वेषी न खलु रणरोषी समजनि ।
परं तस्थौ दुःस्थो गहनकुहरस्थोऽपि भयतः
क्षिपन्नुच्चैर्दिक्षु भ्रमितचकितं चक्षुरभितः ॥
दानैरर्थिनमर्थनाविरहिणं प्रत्यर्थिनं च क्षणात्
कुर्वाणे सति वीरसिंहनिखिलक्ष्मामण्डलाखण्डले ।
कामं चेतसि कामधेनुरतनोत्कल्पद्रुमः कल्पितं
मोघीभूतजनिः समाश्रितखनिश्चिन्तां च चिन्तामणिः ॥

इत्यादिभिश्च श्रीवीरसिंहमहीपतेर्वदान्यताधर्माभिमानिताशौर्यादयो गुणा लोकोत्तरा

आसन्निति प्रतीयते । अस्य च राजधानी 'ओडछा' नाम्नी नगर्यपि अमरपुरीव परममनोहरासीदिति मित्रमिश्रेण तत्र तत्र स्वकीयग्रन्थोपोद्घाते विशेषतः स्वकृत आनन्दकन्दचम्पू-नामके चम्पूकाव्येऽनेकधा वर्णितमस्ति । तत्र आनन्दकन्दचम्पूतो लेशत उद्धृत्य विदुषां मनोविनोदायोपन्यस्यते--

साम्नाढ्यैः सन्नयाढ्या सुकृतिभिरतुलैरुज्ज्वला कान्यकुब्जैः
शाकद्वीपीयसारस्वतकृतसुषमा मालवाबद्धमाला ।
पाश्चात्यैर्दाक्षिणात्यैर्मधुमथनपदार्थीभवच्चित्तवित्तै-
रुद्यद्विद्याकवित्वैर्द्विजपतिभिरसावोडछा सम्बभासे ॥
देवैः क्वापि भूदेवैरिव निखिलजनारब्धसेवैः सदैव
क्षत्रैः कुत्रापि चित्रा स्वकृतिषु निपुणैः क्वापि वैश्यैरुपास्या ।
अक्षुद्रैः क्वापि शूद्रैर्विहितसमुदयागाधविद्यासमुद्रै-
र्धन्या सावोडच्छा पूरयति मम चतुर्वर्णसृष्टीरभीष्टाः ॥

इत्यादिभी राजधानीमुपवर्ण्य श्रीवीरसिंहमहाराजेन लक्षत्रयव्ययं कृत्वा मथुरायां स्वद्वारा निर्मापितस्य श्रीभगवतो राधिकारमणस्य मन्दिरनिर्माणेतिवृत्तमुक्तचम्पू-ग्रन्थे पण्डितप्रकाण्डेन श्रीमित्रमिश्रेणेत्थंमुपवर्णितम्--

स्वान्तेऽचिन्तयदेकदा परिषदामग्रे समग्रेश्वरो
दृक्चेतःसुलभेऽपि कैटभरिपौ दृग्गोचरेऽपि स्थितम् ।
दीर्घं कंचिदुपायमञ्चिततया हर्तुं तमः सञ्चितं
सर्वेषामपि दुर्लभं च सुलभीकर्तुं तमाद्रान्तरः ॥ १ ॥
चक्रे श्रीयुतमित्रमिश्रसुकृतिद्वारा दुरारोहणं
श्रीनारायणधाम नाम मथुरालङ्कारमोङ्कारवत् ।
क्षीणक्षीरसमुद्रमुद्रविसमालम्बेऽविलम्बे रतो
वैकुण्ठेऽपि विकुण्ठधीरपि निरालम्बो यदालम्बते ॥ २ ॥
यच्छृङ्गे योऽवर्धत श्रीभुजभजनवशादस्य गोवर्धनाद्रे-
र्यद्दोर्दण्डेन रुद्धः परमसुखमसावन्वभूत्कैटभारेः ॥
तेनोच्चीभूय भूयः सुखयति सुभगो रंहसा वीरसिंह-
प्रासादच्छद्मनाद्य त्रिभुवनगरिमा बिभ्रदङ्कं तमेषः ॥ ३ ॥
ऊर्ध्वं मूर्ध्नाभिरुन्धद्गुरुगरिमभृता रोदसी मध्यमेन
क्ष्माधोभागस्य भूम्ना जयति मधुपुरे मन्दिरं कैटभारेः ॥
पूर्याभावात्प्रपूर्य त्रिभुवनमधुना स्थैर्यमाचर्य बिभ्रत्
ब्रह्मैवान्तः समाधौ यश इव विशदं वीरसिंहस्य राज्ञः ॥ ४ ॥
कृत्वाङ्के स्मेरपङ्केरुहनयनमशङ्केन भूमौ फणाग्रे
सप्ताधोलोकभूमा फणिकुलपतिनाऽबोधि कूर्मस्थितेन ॥
दोःस्तम्भे वेश्मदम्भाद्दनुजकुलरिपोर्वीरसिंहस्य शङ्के
न्यस्योर्वीचारमूर्ध्वं पुनरियममुना मीयते सप्तलोकी ॥ ५ ॥
वीरसिंहकृतमिन्दिरापतेः सुन्दराकृति रराज मन्दिरम् ।
केशवे दधदनन्ततुङ्गिमा वीरसिंहनृपतेरिवाशयः ॥ ६ ॥
वीतांहोवीरसिंहोद्भटघटितगुहामन्दिरे कैटभारे-

राभाति स्तम्भकूटं त्रिभुवनभवनस्येव मेरोर्विरोधि ।
यत्तुङ्गोत्सङ्गरिङ्गत्तरमतुलकुलं मत्तपारावताना-
माराच्चारालिमालिङ्गति वियति मुहुः खण्डपिण्डक्रमेण ॥ ७ ॥
विषादव्यापादी भृशमनवसादीकृतहरि-
प्रसादप्रासादो हिमगिरिविवादोपघटकः ।
बुदेलाभूल्लासक्षितिरमणचूडामणितया
व्यधत्त व्याधानामपि च परमब्रह्म सुलभम् ॥ ८ ॥
तदायामं कामं त्रिजगदभिरामं सुमनसां
तदुच्चैर्भावं कः कथयितुमशक्तः प्रभवतु ।
यदङ्के पर्यङ्केऽजनि शशभृदङ्केन तुलितः
स यो विश्वातङ्कत्रिपदपदरङ्कत्रिभुवनः ॥ ९ ॥
विकुण्ठं वैकुण्ठं जलधिमपि कुर्वञ्जलधियम्
प्रसीदन् प्रासादं भजति भजनीयो दिविषदाम् ।
तदानन्दास्यन्दः स्वयमपि सदानन्दलहरी-
षु वन्दे बुन्देलाकुलजलधिवेलार्जिततपः ॥ १० ॥

इत्यादिभिः—

इन्दिरेन्द्रमधिगत्य सुन्दरे वीरसिंहकृतुङ्गमन्दिरे ।
छत्रयन्नुदयते फणीश्वरः स्वां फणां ध्वजटी न सारुणा ॥ २१ ॥
प्रासादोद्यत्तुषाराचलमतिरचलन्मण्डलं चण्डभानो-
स्तं दृष्ट्वा द्रष्टुकामः फणिपतिरुदगान्नाम वैकुण्ठधाम ।
वैकुण्ठं सन्दधानो रजनिमणिरसौ तन्मणिर्मध्यरात्रौ
वातव्याधूतपूतध्वजपटममरा वर्णयन्त्येवमेव ॥ २२ ॥
यः सौन्दर्यमये मुकुन्दनिलये दत्ते क्षणं वीक्षणं
स्थाणुर्वा पुरुषोऽथवेति वलते तस्मिन् सतां संशयः ।
नाश्चर्यं तदपि प्रतीहि यदसावाश्चर्यभूमा मुने !
पाषाणप्रतिमामिषोढजडिमा तस्मिन् रमावल्लभः ॥ २३ ॥
भूयिष्ठानि पदानि कैटभभिदः प्रेष्ठानि भूमण्डले
तत्रासौ मथुरा नितान्तमधुरा तत्रापि तन्मन्दिरम् ।
तत्किं नारद ! वेदयामि विदितं ते भावि सर्वं पुरो
बुन्देलापतिचेतसीव मुरजित्तत्रैव चित्रायते ॥ २४ ॥

इत्यन्तैः पद्यकदम्बकैः । एभिश्च मन्दिरस्यालौकिकशोभाशालित्वं व्यक्तमवगम्यते । परं चेखिद्यते मानसं यदीदृशं दर्शनीयतमं भारतीयशिल्पिकौशलसर्वस्वभूतं श्रीभगवतोऽपरं वैकुण्ठसदनभूतं श्रीवीरसिंहमहाराजस्य धार्मिकतामूलकभगवद्भक्तिपरायणताया आदर्शतां गतं तन्मन्दिरमस्माकं भारतीयानां दौर्भाग्यात्साक्षात्सपरिवारेण कलिनेवावतीर्णेन औरङ्गजेबनामकेन यवनसम्राजा विनिपात्य १६६१ खिस्ताब्दे तत्स्थाने "जुम्मामसजिद" इत्यभिधानं भवनं निर्माप्य कथामात्रावशेषतां नीतम् । आनन्दकन्दचम्पूग्रन्थस्य सुद्रिस्त्वाद्विस्तृतमन्दिरवर्णनदिदृक्षाकौतुकस्य तत एव पूरयितुं शक्यत्वाद्विस्तृततद्वर्णनसन्निवेशनेऽत्र समुदासितम् ।

श्रीकाशीराजवंशप्रबलजलनिधेर्मेदिनीमल्लनामा
पूर्णः पीयूषरश्मेः समजनि जनतानन्दसन्दोहसिन्धुः ।
बन्धुर्दीनद्विजानां तदनु च समभूदूर्जितैरर्जुनाभो
गर्जत्प्रत्यर्थिसैन्यप्रमथननिपुणैरर्जुनो भूमिपालः ॥

इत्यादिभिर्द्वाविंशतिपद्यैः परिभाषाप्रकाशोपोद्घाते श्रीमित्रमिश्रेण बुंदेलाधिपतीनां वंशक्रम इत्थमुपदर्शितः—

मेदिनीमल्लः ( काशीराजवंश्यः )
|
अर्जुनः
|
मलखानः
|
प्रतापरुद्रः ( ओडछाप्रतिष्ठापकः )
|
मधुकरशाहः
|
वीरसिंहदेवः ( श्रीमित्रमिश्रस्याश्रयप्रभुः )
|
जुहारसिंहः
|
श्रीविक्रमादित्यदेवः
|
नरसिंहदेवः

वीरसिंहमहाराजस्य राज्यसमयः १६०५ आरभ्य १६२७ खिस्ताब्दं यावत् ( इम्पीरियल् गजेटियर् एडिसन् वा० ११ पृ० २४३ ) स एव समयो मित्रमिश्रस्यापि । आनन्दकन्दचम्पूसमाप्तौ तन्निर्माणसमयो ग्रन्थकर्त्रा इत्थमुपन्यस्तः—

प्राप्य श्रीमित्रमिश्रोऽयमतमिश्रत्रयोदशीम् ।
अतुलां स तुलां सूरे गते चम्पूमपूरयत् ॥
मीनारोहिणि रोहिणीसहचरे कृत्वान्तिमे रेवतीं
याते चण्डमरीचिमालिनि तुलां वारे च वाचस्पतेः ।
शाके साष्टगजर्तुभूपरिमिते ह्यानन्दकन्दाभिधां
चम्पूं पूरितवान्सितस्मरतिथौ श्रीमित्रमिश्रः कृती ॥

एतेन १६८८ शके तुलास्थे सूर्ये कृष्णपक्षत्रयोदश्यां गुरुवासरेऽस्य ग्रन्थस्य पूर्णं सञ्जातमिति सिद्धम् । अत्र शकपदं विक्रमाब्दस्यैवोपलक्षकमिति प्रतिभाति । अकब्बरपुत्रजहांगीरसमय एव मित्रमिश्रस्य समय इति तु वीरसिंहमहाराजाश्रयणेन सिद्धमेव । तदनुरोधवशात् पूर्वोक्तशकस्य वैक्रमत्वमभ्युपेयमेव ।

वीरसिंहमहाराजस्य पुत्रपौत्रादेर्जुहारसिंहप्रभृतेरपि परिभाषप्रकाशीयोपोद्घाते वर्णनदर्शनात् विचार्यमाणे सोऽयं मित्रमिश्रो न केवलमुक्तमहाराजसमय एवासीत् किन्तु तत्पुत्रपौत्रादिराज्यकालेऽपि समुपस्थित आसीदिति वाढं प्रतीयते ।

एवं च ईशवीयसप्तदशशताब्द्या उत्तरार्धभागेऽस्यावस्थितिरिति निर्विवादम् ।

मित्रमिश्रप्रणीतत्वेन प्रसिद्धेषु ग्रन्थोष्वद्ययावत्परिज्ञाता ग्रन्थास्त्विमे —

१ याज्ञवल्क्यस्मृतिटीका (वीरमित्रोदयाख्या । चौखम्बासंस्कृतग्रन्थमालायां प्रकाशिता)

२ वीरमित्रोदयः ( गणितग्रन्थः ) अमुद्रितः काशिकराजकीयसरस्वतीभवनस्थः )

३ आनन्दकन्दचम्पूः ( काशिकराजकीयसरस्वतीभवनात्प्रकाशिता )

४ वीरमित्रोदयः ( द्वाविंशतिप्रकाशात्मको महान् धर्मशास्त्रनिबन्धः )

तत्र वीरमित्रोदयाभिधाया याज्ञवल्क्यस्मृतिटीकायाः प्रारम्भभागे—

उत्तंसस्तीरभुक्तेरखिलबुधगुरुः श्रीसदानन्दधीमान्
श्रीभाजो मित्रमिश्राजगदुपकृतये बिभ्रदादेशदीपम् ।
ज्ञानानां दैन्यदोषापहमकलिमथं याज्ञवल्क्योक्तिकोशात्
दृष्ट्वा स्मृत्यर्थसारं समचिनुत यशोधर्मलक्ष्मीविहारम् ॥

इति पद्यदर्शनेन मैथिलसदानन्दविदुषा निर्माय तन्नाम्ना प्रख्यापिता याज्ञवल्क्यस्मृतिटीकेति व्यक्तीभवति । तथा वीरमित्रोदयाख्यगणितग्रन्थारम्भे—

दैवज्ञरामेण कृते वीरमित्रोदयाभिधे ।
तद्व्याख्याने शिवकृते स्पष्टं खेटप्रसाधनम् ॥

इति लेखदर्शनात् स ग्रन्थोऽपि दैवज्ञरामेण प्रणीय मित्रमिश्रनाम्ना विख्यापित इति दृढीभवति । एवं च महाकायः प्रकृतोऽयं वीरमित्रोदयाख्यो निबन्धोऽपि नानाविधविषयेषु लोकातिशायिचतुरस्रपाण्डित्यशालिनाऽपि सततं राजपरिचर्याचरणपरतया स्वयं निर्मातुमपारयता मित्रमिश्रेण पण्डितप्रकाण्डान्तरैर्विनिर्माप्य स्वनाम्ना प्रसिद्धिमवापितः स्यादिति भवति सम्भावनास्पदम् । परं सामस्त्येनास्य निर्माणावसरालाभेऽपि कतिपयस्यांशस्य स्वयं निर्माणसम्भवात् उपरितनलेखवत् स्पष्टतरप्रमाणान्तरानुपलब्धि यावन्नात्र विषये निश्चप्रचतया वक्तुं सुशकम् ।

तदित्थं ग्रन्थकर्तृविषये यद्यावदुपलब्धमैतिह्यं तदिह प्राज्ञानां समक्षमुपक्षिप्तम् । विद्वद्भिरादृतस्य सर्वाङ्गपूर्णस्यास्य निबन्धस्य गौरवविषये न वक्तव्यशेषः । प्रकृतस्यादसीयव्यवहारप्रकाशस्य विषये तु विद्वदनुभवसाक्षिकया याज्ञवल्क्यस्मृतेर्विज्ञानेश्वरीयमिताक्षरायास्तत्रतत्रत्याया विषमतायाः समुत्सारणे साधुतत्तात्पर्यप्रकटने चानितरसाधारण्यमित्येव पर्याप्तम् । अस्यां भूमिकायां भूयान् विषयो वीरमित्रोदयाख्यटीकासहितयाज्ञवल्क्यस्मृतेरानन्दकन्दचम्प्वाश्च भूमिकासाहाय्येन सन्निवेशित इति तत्कर्तारौ खिस्ते इत्युपाह्वश्रीनारायणशास्त्रि–साहित्याचार्यश्रीनन्दकिशोरशास्त्रिणौ भूयोधन्यवादार्हौ ।

सोऽयं व्यवहारप्रकाशः पूर्वं कलिकातायां मुद्रितोऽप्यशुद्धिबहुलतया स्थले स्थले त्रुटित तया च ग्रन्थार्थपरिज्ञाने विदुषां महदसामञ्जस्यमावहत् । तत्परिजीहीर्षया संस्कृत्य पुनरमुं मुमुद्रयिषता प्राचीनार्वाचीननिबन्धजातप्रकाशनबद्धपरिकरेण श्रीजयकृष्णदासगुप्तमहाशयेनैतत्संशोधनाय सादरमभ्यर्थितेन मया मुद्रितपुस्तकमाधारीकृत्य काशीस्थराजकीयपुस्तकालयस्थितं लिखितं शुद्धप्रायमपरपुस्तकं समानाय्य तदाश्रयेण शोधनकार्यं समपादि, समयोजि च विस्तृतविषयानुक्रमणिकादिना ।

तदेवं सपरिश्रमं सावधानं च कृतसंशोधनेऽप्यत्र मादृशजनमतिमान्द्यसुलभा अक्षरयोजकादिजाश्च त्रुटीरुपेक्ष्य कलहंसप्रकृतयो गुणैकपक्षपातिनो विपश्चिदपश्चिमाः समनुभवन्तु धर्मशास्त्रीयव्यवहारकाण्डविषयकचातुरीरसम् । प्रसीदतु चानेन व्यापारेण सकलशङ्करो भगवान् शङ्कर इत्याशास्ते—

सं० १९८९ चैत्रशुक्लपक्षे
३ तिथौ शनिवासरे
वाराणस्याम् ।

विदुषां विधेयो
नेपालाभिजनः
श्रीविष्णुप्रसाद भण्डारी ।

## वीरमित्रोदये-व्यवहारप्रकाशस्थ-

# विषयाणां सूची ।

**इति परिभाषापरिष्काराख्यं प्रथमं प्रकरणम् ।**



## अथ प्रमाणनिरूपणप्रकरणम् ।

**इति प्रमाणनिरूपणाख्यं द्वितीयं प्रकरणम् ।**

**अथ प्रमेयनिरूपणप्रकरणम् ।**

इति प्रमेयनिरूपणे ऋणादानाख्यव्यवहारपदनिरूपणम् ।

इति सीमाविवादाख्यव्यवहारपदनिरूपणम् ।

इति साहसाख्यव्यवहारपदनिरूपणम् ।



इति स्त्रीसंग्रहणाख्यव्यवहारपदनिरूपणम् ।

**इति व्यवहारपदनिर्देशापराख्यं प्रमेयनिरूपणाख्यं तृतीयं प्रकरणम् ।**

**अथ प्रकीर्णकप्रकरणम् ।**



**इति प्रकीर्णकाख्यं चतुर्थं प्रकरणम् ।**

**इति वीरमित्रोदये व्यवहारप्रकाशस्थविषयाणां सूची समाप्ता ।**

श्रीगणेशाय नमः ।

# अथ वीरमित्रोदयस्य व्यवहारप्रकाशः ।

पुरतः प्रविलोक्य भर्गचापं परतः कामपि कामकार्मुकज्याम् ॥
पुलकाञ्चितपीनबाहुदण्डः कुशलं नः कुरुताद्रघुप्रकाण्डः ॥१॥
स्वस्तिश्रीयुतवीरसिंहनृपतेराज्ञावशादुत्सुकः
श्रीमित्राभिधपण्डितः प्रतिदिशं कीर्त्यानिशं मण्डितः ॥
नानानिर्णयवर्णनव्यसनिनां सङ्ख्यावतां प्रीतिदं
सम्प्राप्तव्यवहारसाधकमिमं कुर्वे प्रकाशं परम् ॥ २ ॥
उद्धृत्तप्रभवप्रजापरिभवप्राग्भारभङ्गाहृता-
नन्ताकारमरागमत्सरबुधाराध्यं निदिध्यासनैः ॥
धर्मैकाश्रयमाश्रयं मुनिगिरामद्धा सदुद्धारकं
प्रस्तौमि व्यवहारमच्युतमिव प्राक्प्रस्तुतं प्राक्तनैः ॥ ३ ॥

परिभाषापरिष्कारः प्रमाणानां निरूपणम् ॥
विवादपदनिर्देशः प्रकीर्णकविवेचनम् ॥ ४ ॥
एवं प्रकरणान्यत्र चत्वारि प्रथमे पुनः ।
लक्षणं व्यवहारस्य निरुक्तिर्मुनिभाषिता ॥ ५ ॥
व्यवहारस्य भेदाश्च स्वलक्षणविलक्षणाः ॥
सामान्यतो विशेषाच्च परिभाषाप्रकाशनम् ॥ ६ ॥
सामान्यपरिभाषायां धर्माधिकरणेक्षणम् ॥
दर्शने व्यवहारस्य राज्ञो विधिविवेचनम् ॥ ७ ॥
प्राड्विवाकस्वरूपं च सभापतिसभासदाम् ॥
निरूपणं च सभ्यानां सयुक्तिकबलाबलम् ॥ ८ ॥
केषां चित्सभ्यभिन्नानामपि स्थानं सभास्थले ॥
तत्प्रयोजनमादेयानादेयव्यवहारयोः ॥ ९ ॥
विवेचनमथो कार्य्यं सद्द्रष्टकसभापतेः ॥
प्रतिज्ञोत्तरहेतूनां पादानां सिद्धिशालिनाम् ॥ १० ॥
निरूपणमसद्द्रष्टावद्रष्टौ च सभापतेः ॥
अद्रष्टकस्य दोषोक्तिः सम्यक्द्रष्टौ फलाभिधा ॥ ११ ॥

विशेषपरिभाषायां प्रत्यभियोगनिर्णयः ॥
निह्नवादौ विधिस्तत्र निह्नवादिविवेचनम् ॥ १२ ॥
विलम्ब्योत्तरदानं च क्वचिन्नैव विलम्बनम् ॥
आद्ये प्रकरणे त्वर्था विविच्यन्ते क्रमादमी ॥ १३ ॥
उपोद्घातप्रसङ्गाद्यैरन्येऽपि तदनुव्रताः ।
द्वैतीयीके तु साक्ष्यादिलक्षणं तत्र साक्षिणः ॥ १४ ॥
असाक्षिणस्तत्र हेतुः साक्षिप्रश्नविधिस्तथा ॥
तद्द्वैधे निर्णयः कौटसाक्ष्ये क्वचिददोषता ॥ १५ ॥
निर्णयो लिखितस्याथ तद्भेदास्तत्परीक्षणम् ॥
साक्षिणां लिखितस्यापि शब्दत्वेन प्रमाणता ॥ १६ ॥
भुक्तिर्विशेषणान्यस्या अर्थापत्त्यनुमानता ॥
लौकिकानां प्रमाणानामभावे दिव्यभावना ॥ १७ ॥
दिव्यभेदास्तद्व्यवस्था देशकालाधिकारिणः ।
तन्मातृकास्तद्विशेषविधयो विविधाः क्रमात् ॥ १८ ॥
तेषामपि च शब्दोत्थाऽनुमानत्वेन मानता ॥
एतेऽर्था विव्रियन्ते ऽथो तार्तीयीके ततः क्रमात् ॥ १९ ॥
व्यवहारपदान्यष्टादशोद्दिष्टानि लक्षणम् ॥
तेषां सामान्यमथ तद्भेदानां विविधा विधाः ॥ २० ॥
एतेऽर्थाः सम्यगुच्यन्ते तुरीये तु प्रकीर्णकम् ॥
यन्नोक्तमुपयुक्तं तद्विविच्य प्रतिपाद्यते ॥ २१ ॥

अथ कोऽयं व्यवहारः ? प्रमाणतर्कोपष्टब्धः पक्षप्रतिपक्षपरिग्रह इति चेत्, न । वादादेरपि तत्त्वापत्तेः । लिखितादिप्रमाणविशेषः परिगृह्यत इति चेत्, न । तत्रापि तत्प्रवृत्त्यविरोधात् । अनुमानाद्यबहिर्भावाच्च तेषामव्यावर्त्तकत्वात् । अत एवान्यविरोधेन स्वसम्बन्धितया कथनमित्यपि परास्तम् । प्रमाणान्तर्भावेण स्वरूपनिरूपणानौचित्याच्च । कथनादेर्व्यवहारपदवाच्यत्वे "व्यवहारान्नृपः पश्येत्" इत्याद्यनन्वयाच्च ।

उच्यते । ऋणादानादिलौकिकार्थविषया कथैव व्यवहारः । कथाव्यपदेशाभावस्तु शास्त्रीयपदार्थाविषयकत्वात् । अधिकरणादिव्यपदेशो यथा वैदिकार्थविषयककथायां तथात्र व्यवहारव्यपदेशः । अत एव यथायथं हेत्वाभासनिग्रहस्थानादियोजनमपि युक्तम् ।

तच्च तत्र तत्र प्रदर्शयिष्यते । चतुष्पात्त्वमपि तस्य तदविरोध्येवे-त्यप्युपपादयिष्यते । यत्तु गोपालेन तत्त्वनिर्णिनीषुकथात्वाद्वाद-त्वमेवास्येति मिश्रमतत्वेनोभयस्य जयभङ्गफलकत्वात् स्थापना-वसानत्वाच्च जल्प एवायमिति तन्निरस्तम् , तत् द्वयमप्ययुक्तम् । शङ्कातत्त्वाभियोगभेदेन उभयरूपत्वस्यैव युक्तत्वात् । वैतण्डिकस्य व्यवहारायोग्यत्वादस्य वितण्डात्वं परमसम्भवि । अन्यविरोधेन स्वसम्बन्धितया कथनमिति विज्ञानयोगिवचोऽप्येवं सति नायुक्तम् । नच पश्येदित्यनन्वयः । निर्णयार्थकथनतया सर्वनिबन्धृभिस्तद्व्या-ख्यानात् ।

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ (अ.२श्लो०५)

इति याज्ञवल्क्यवचनं यद्यपि व्यवहारपदान्यृणादानादीनि सामा-न्येन लक्षयति तथापि व्यवहारसामान्यलक्षणमपि समानसंवि-त्संवेद्यतया ततः प्रतीयते । तस्य ह्ययमर्थः । स्मृत्याचारादिधर्म-प्रमाणातिक्रान्तरीत्यान्यैरभिभूतः पुरुषो राजादिभ्यो व्यवहारद-र्शिभ्यो यद्यावेदयति तर्हि तदावेद्यमानं चतुष्पाद्व्यवहारस्य पदं विषयः । इति प्रसिद्धमृणादानादि लक्ष्यत्वेन मन्वाद्युक्तमुपाक्षिप्तमि-ति । एवञ्चाधर्षितस्यार्थित्वमाधर्षकस्य प्रत्यर्थित्वं तयोर्विवादश्च व्यवहार इति प्रतीयते । इदमेव च मिताक्षरायामन्यविरोधेनेत्यादिना निष्कृष्टमुक्तम् । अन्यविरोधेनेत्यनुक्ते प्रश्नोत्तरादिरूपेण स्वसम्बन्धि-कथनमपि व्यवहारः स्यात् । स्वसम्बन्धितयेत्यनुक्ते एकसम्बन्धित-या साक्षिणां कथनमन्यविरोधि भवत्येवेत्यस्याप्यर्थित्वापत्तिरतः स्वसम्बन्धितयेति । इदं चोत्तरचतुष्टयेऽप्यनुगतम् । नच सम्प्रतिपत्ताव-व्याप्तिः । तत्रापि साध्यतया वादिना निर्दिष्टस्य सिद्धतया निर्देशे तद्विरोधपर्य्यवसानात् । अन्यथोत्तरत्वभङ्गप्रसङ्गात् । यत्रापि द्वा-वपि भाषावादिनौ तत्रापि परस्परविरोधावश्यम्भावान्नाव्याप्तिः । इदं चाग्रे व्यक्तीभविष्यति ।

यच्च कात्यायनेनोक्तम्—

प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे ।
साध्यमूलस्तु यो वादो व्यवहारः स उच्यते ॥ इति ।

एतच्च व्यवहारहेतुव्यवहारस्वरूपोक्तिपरतया माधवीयपारिजाता-दिष्वेवं व्याख्यातम् । विहिताचरणनिषिद्धवर्जनादिप्रयत्नसाध्ये

धर्माख्ये वस्तुनि विच्छिन्ने विप्लुते सतीति व्यवहारहेतुरुक्तः । धर्माधर्मविप्लवस्यैव व्यवहारहेतुत्वात् ।

तथा च नारदः—

मनुः प्रजापतिर्यस्मिन् काले राज्यमबूभुजत् ॥
धर्मैकतानाः पुरुषास्तदासन् सत्यवादिनः ॥

तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः ।
नष्टे धर्मे मनुष्येषु व्यवहारः प्रवर्त्तते ॥ इति ।

बृहस्पतिरपि—

धर्मप्रधानाः पुरुषाः पूर्वमासन्नहिंसकाः ।
लोभद्वेषाभिभूतानां व्यवहारः प्रवर्त्तते ॥ इति ।

न्यायेत्यादिना व्यवहारस्वरूपमुक्तम् । तत्र माधवीयव्याख्यानम्—

न्यायः शिष्टसम्प्रतिपन्नं लौकिकमाचरणं तस्य विस्तर इदं युक्तमिदमयुक्तमिति उपपत्तिपुरःसरो निर्णयः तस्मिन् विषयभूते तत्प्रवर्त्तकोऽर्थिप्रत्यर्थिनोः साध्यमूलः साध्यमृणादानादिपदं तन्मूलस्तद्विषयको यो विवादः स व्यवहार इति ।

मदनरत्ने तु न्यायः प्रमाणं तस्य विस्तरः प्रवृत्तिर्यस्य तस्मिन् विषय इति । साध्यमूल इत्यादि तुल्यम् ।

मदनरत्नाकरस्मृतिचन्द्रिकाकल्पतरुकारैः सर्वमेवेदं वचनं व्यवहारस्वरूपपरतयापि व्याख्यातमित्थम्—प्रयत्नसाध्ये कष्टसाध्ये पराभिभवेन स्वेच्छया भोक्तुमशक्ये गृहक्षेत्रादौ सति न्यायः प्रमाणं विस्तार्यते प्रपञ्च्यते यस्मिन् तस्मिन् धर्माधिकरणे सदसि, साध्यमूल इत्यादि पूर्ववत् । तेनापि प्रागुक्तमेव विवक्षितमतस्तत्रत्यपदकृत्ये नातीव यतितव्यम् ।

वयं तु सर्वसप्तम्यन्तसामानाधिकरण्येन व्याचक्ष्महे । विहितानुष्ठानादिगोचरप्रयत्नसाध्ये धर्माख्ये न्यायविस्तरे नीयतेऽर्थोऽनेनेति न्यायः प्रमाणं श्रुतिस्मृत्यादि विस्तार्यते प्रवर्त्ततेऽस्मिन् श्रुत्यादिप्रमेय इत्यर्थः । विच्छिन्ने विविधच्छिन्ने प्रमाणापरिज्ञानतात्पर्यानवधारणादिना दुर्ज्ञेये सति । यद्वा धर्म आख्यायते ऽनेनेति धर्माख्यो धर्मप्रतिपादक इति यावत् । न्यायविस्तरे प्रमाणसमूहे श्रुतिस्मृत्यादौ प्रमादादिना विच्छिन्ने लुप्तप्राये सति साध्यमूल इत्यादि गतार्थमिति ।

हारीतः,

स्वधर्मस्य यथा प्राप्तिः परधर्मस्य वर्जनम् ।
न्यायेन क्रियते तत्तु व्यवहारः स उच्यते ॥ इति ।

न्यायेन प्रमाणेन । एतस्यापि पूर्वोक्त एव तात्पर्यम् ।

निरुक्तिरपि व्यवहारपदस्याऽमुमेवार्थमुपलक्षयति । सा च कात्यायनेनोक्ता—

वि नानार्थेऽव सन्देहे हरणं हार उच्यते ।
नानासन्देहहरणाद्व्यवहार इति स्मृतः ॥ इति ।

इति व्यवहारलक्षणम् ।

---

## अथ व्यवहारभेदाः ।

नारदः,

सोत्तरोऽनुत्तरश्चेति स विज्ञेयो द्विलक्षणः ।
सोत्तरोऽभ्यधिको यत्र विलेखात्पूर्वकः पणः ॥ इति ।

यदि पराजयेऽहं तदा पराजयदण्डाभ्यधिकमेतावद्राज्ञे दास्यामीति पत्रलिखनपूर्वकं प्रतिज्ञायते स सोत्तर इत्यर्थः । तद्रहितोऽनुत्तर इत्यर्थादुक्तं भवति । स एव त्रयोदशप्रकारनिबन्धनानवान्तरभेदानुद्दिश्य विवृतवान् ।

यथाह—

चतुष्पाच्च चतुःस्थानश्चतुःसाधन एव च ।
चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्त्तितः ॥
त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा ।
अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च ॥
धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥
तत्र सत्ये स्थितो धर्म्मो व्यवहारस्तु साक्षिषु ।
चरित्रं तु स्वीकरणे राजाज्ञायां तु शासनम् ॥
सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते ।
चतुर्णामपि वर्णानां रक्षणाच्च चतुर्हितः ॥
कर्त्तॄनथो साक्षिणश्च सभ्यान् राजानमेव च ।
व्याप्नोति यादृशो यस्माच्चतुर्व्यापी ततः स्मृतः ॥
धर्मस्यार्थस्य यशसो लोकपङ्क्तेस्तथैव च ।

चतुर्णां करणादेव चतुःकारी प्रकीर्त्तितः ॥
कामात्क्रोधाच्च लोभा(१)च्च त्रिभ्यो यस्मात्प्रवर्त्तते ।
त्रियोनिः कीर्त्यते तेन त्रयमेतद्विवादकृत् ॥
अभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः ।
शङ्काऽसतां तु संसर्गात्तत्त्वं होडाभिदर्शनात् ॥
पक्षद्वयाभिसम्बन्धात् द्विद्वारः समुदाहृतः ।
पूर्ववादस्तयोः पक्षः प्रतिपक्षस्तदुत्तरः ॥
भूतच्छलानुसारित्वात् द्विगतिः समुदाहृतः ।
भूतं तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलम् ॥
राजा स पुरुषः सभ्याः शास्त्रं गणकलेखकौ ।
हिरण्यमग्निरुदकमष्टाङ्गः समुदाहृतः ॥
ऋणादानं ह्युपनिधिः सम्भूयोत्थानमेव च ।
दत्तस्य पुनरादानमशुश्रूषाभ्युपेत्य च ॥
वेतनस्यानपाकर्म तथैवास्वामिविक्रयः ।
विक्रीयासम्प्रदानं च क्रीत्वाऽनुशयमेव च ॥
समयस्यानपाकर्म विवादः क्षेत्रजस्तथा ।
स्त्रीपुंसयोश्च सम्बन्धो दायभागोऽथ साहसम् ॥
वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेव च ।
द्यूतं प्रकीर्णकञ्चैवेत्यष्टादशपदः स्मृतः ॥
क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते ॥ इति ।

यद्यपि प्रतिज्ञादीनां वक्ष्यमाणानां साक्षाद्व्यवहारस्वरूपघटकत्वाद्व्यवहारपादत्वं युक्तम् । धर्म्मादीनां तु "तत्र सत्ये स्थितो धर्म" इति नारदोक्तप्रकारेणैव निर्णयमात्रहेतुत्वान्न साक्षाद्व्यवहारपादत्वमर्हम् । याज्ञवल्क्यादिभिरत एव तेषामेव व्यवहारपादत्वमुक्तम् । तद्वचनानि त्वग्रे प्रदर्शयिष्यन्ते । तथापि निर्णयाख्यचतुर्थव्यवहारपादहेतुत्वेन गौणमेव व्यवहारपादत्वमेषामत्रोक्तम् । व्यवहारपदेन निर्णय एव वा लक्ष्यते । तद्धेतुत्वं तत्पादत्वमिति द्रष्टव्यम् । तथा च बृहस्पतिः धर्म्मादीनां निर्णयहेतुत्वं स्पष्टमेवाह—

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुःप्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णयः ॥ इति ।

गौणानामेषां धर्म्मादिपादानामधिकरणकथनम् "तत्र सत्ये स्थि-

---

( १ ) मोहाच्चेत्यपि पाठः ।

तो धर्म" इत्यादिना । अत्र माधवीये 'चरित्रं तु स्वीकरणे' इति पाठं लिखित्वा देशाचारश्चरित्रं तत्स्वीकारे तदेव निर्णयहेतुरिति व्याख्यातम् । कात्यायनवचनं च तत्र—

यद्यदाचर्य्यते यत्र धर्म्यं वाऽधर्ममेव वा ।
देशस्याचरणे नित्यं चरित्रं तद्धि कीर्त्तितम् ॥

इति समाहितम् । चण्डेश्वरेण तु "चरित्रं पुस्तकरणम्" इति पठित्वा पुस्तं पञ्जिकेत्यर्थः । तत्करणमधिकरणं यस्येति व्याकृतम् । तद्रूढिहीनाद्वचनान्तरासम्वादाच्च हेयम् । तेषां निर्णयहेतुत्वं प्रपञ्चितं कात्यायनेन--

दोषकारी तु कर्तृत्वं धनहारी स्वकं धनम् ।
विवादे प्राप्नुयाद्यत्र स धर्मेणैव निर्णयः ॥

वाक्पारुष्यस्तेयादिदोषकारी व्यवहारप्रवर्त्तनमन्तरेणैवानुतापादिना धर्म्माभिमुखोऽधर्म्माद्भीतश्च स्वस्य दोषकर्तृत्वं स्वयमभ्युपैति । यत्र धनस्वामी धर्म्माभिमुखादधर्मभीरोश्चाधमर्णादेर्व्यवहारं विनैव स्वकीयं धनमाप्नोति, तत्रोभयत्र सम्प्रतिप्रत्युत्तर इति यावत् । धर्मेणैव निर्णय इत्यर्थः । अत एवोक्तम्—'तत्र सत्ये स्थितो धर्म' इति ।

स्मृतिशास्त्रं तु यत्किञ्चित् प्रथितं धर्मसाधकैः ।
कार्य्याणां नियमार्थेषु व्यवहारः स्मृतो हि सः ॥

धर्मसाधकैः सभ्यैः स्मृतिशास्त्रं साक्ष्यादिक्रियाप्रत्यायकमर्थिप्रत्यर्थिनोः कार्य्यनिर्णयार्थं प्रथितं प्रख्यापितं यत्र चतुष्पाद्व्यवहारप्रवर्त्तनेन निर्णयकरणमिति यावत् । तत्र व्यवहारो निर्णयहेतुरित्यर्थः । अत एवोक्तम्—"व्यवहारस्तु साक्षिषु" इति । साक्षिग्रहणं प्रमाणोपलक्षणम् । चरित्रविषयवचनं पूर्वमेवोपवर्णितम् ।

न्यायशास्त्राविरोधेन देशदृष्टेस्तथैव च ।
यं धर्मं स्थापयेद्राजा न्याय्यं तद्राजशासनम् ॥

न्यायशास्त्रं व्यवहारप्रतिपादकं स्मृत्यादिशास्त्रं तदविरोधेन । देशदृष्टेर्देशाचारस्य अविरोधेनेति समासान्तर्गतस्य निष्कृष्यान्वयः । राजा यं धर्मं स्थापयेत् आज्ञापयेत् तत् न्याय्यम् उक्तं राजशासनम् अन्यदन्याय्यमित्यर्थात् । तादृशशासनानुरोधेन निर्णयः कर्त्तव्य इत्यर्थः । धर्मादीनामुत्तरोत्तरस्य पूर्वपूर्वबाधकत्वमुत्तरत्र विवेक्ष्यते । असतां विटस्तेनादीनां संसर्गात् पारदार्य्यस्तेयादिशङ्का तयाभियोगः शङ्काभियोगः । होडा लिङ्गं

चौर्य्यादिचिह्नं तद्दर्शनात् साक्षाद्दर्शनं वा होडादर्शनं तस्मात्, अनेनैव चौर्य्यादि कृतमिति निश्चयरूपेणाभियोगस्तत्त्वाभियोग इत्यर्थः। हिरण्याग्न्युदकानां यथासम्भवं व्यवहाराङ्गत्वम्। अष्टादशपदानि निरूपयिष्यन्ते। क्रियाभेदात् एकैकव्यवहारपदसम्बन्धिव्यापारभेदात्। अनन्तप्रकारत्वं शतशाखत्वम्।

इति व्यवहारभेदाः।

## अथ सामान्यपरिभाषा।

### तत्र धर्म्माधिकरणाख्यसभानिरूपणम्।

बृहस्पतिः—

दुर्गमध्ये गृहं कुर्य्याज्जलवृक्षान्वितं पृथक्।
प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम्॥
माल्यधूपासनोपेतां बीजरत्नसमन्विताम्।
प्रतिमालेख्यदैवैश्च युक्तामग्न्यम्बुना तथा॥ इति।

लक्षण्यां वास्तुशास्त्रोक्तलक्षणेन लक्षिताम्। अग्न्यम्बुनेति समाहारद्वन्द्वः। सभायां धर्म्माधिकरणत्वं कात्यायन आह—

धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम्।
यत्राधिक्रियते स्थाने धर्म्माधिकरणं हि तत्॥ इति।

तत्र सभ्योपवेशनमाह मनुः—

यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः।
राज्ञश्चाधिकृतो विद्वान् ब्राह्मणस्तां सभां विदुः॥ इति।
(८। ११)

त्रय इत्युपलक्षणम्। अधिकानामपि स्मृतत्वात्। तच्च वक्ष्यते। अधिकृतो विद्वान् प्राड्विवाकः। अत्र "प्रविशेत्सभाम्" "सभामेव प्रविशेत्" इत्यादिवचनात् सभा मुख्यं व्यवहारदर्शनस्थानम्। अन्यान्यप्यमुख्यानि व्यवहारदर्शनस्थानि भृगुवचनादवगन्तव्यानि।

दश स्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः।
निर्णयं येन गच्छन्ति विवादं प्राप्य वादिनः॥
आरण्यास्तु स्वकैः कुर्य्युः सार्थिकाः सार्थिकैस्तथा।
सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः॥
उभयानुमतं चैव गृह्यते स्थानमीप्सितम्।
कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः॥

ग्रामपौरगणश्रेण्यश्चातुर्विद्यश्च वर्गिणः ।
कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथा ॥ इति ।

स्वकः=आरण्यकैः । ग्रामेऽपीत्यपिशब्दाद्ये ग्रामेऽरण्यादौ च निवसन्ति ते । उभयवासिभिः=ग्रामारण्योभयवासिभिः निर्णयं कुर्य्युरुभयव्यवहाराभिज्ञत्वात्तेषाम् । कुलिकाः=कुलश्रेष्ठाः । सार्थो=ग्रामदेवयात्रादौ मिलितो जनसङ्घः तन्मुख्याः सार्थवाहादयः । पुरं=मुख्यनगरम् । तस्मादर्वाचीनो ग्राम इति पुरग्रामनिवासिनोर्भेदः । कुलिकादीनि पञ्च स्थानानि तानि चारण्यकादीनामेव । ग्रामादीनि दश स्थानानि साधारणानि । ग्रामो=ग्रामाकारेणावस्थितो जनः । पौरः=पुरवासिनां समूहः । गणः=कुलानां समूहः । श्रेण्यो=रजकाद्यष्टादश हीनजातयः । चातुर्विद्यः=आन्वीक्षिक्यादिविद्याचतुष्टयोपेतः । वर्गिणो=गणप्रभृतयः ।

इति सभानिरूपणम् ।

---

## अथ व्यवहारदर्शनविधिः ।

तत्र मनुः—

व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥
तत्रासीनः स्थितो वापि पाणिमुद्यम्य दक्षिणम् ।
विनीतवेषाभरणः पश्येत्कार्य्याणि कार्य्यिणाम् ॥
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभि ।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक् ॥
धर्मासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेत् ॥ इति ( अ० ८श्लो० १।२।३।२३ )

व्यवहारान्=पूर्वलक्षितान् । दिदृक्षुर्निर्णिनीषुः । पार्थिवोऽभिषिक्तक्षत्रियः । तमेवाधिकृत्य प्रजापालनव्यवहारदर्शनादिविधानात् । "यथावृत्तो भवेन्नृप" इत्यादिषु नृपग्रहणात्तु अन्यस्यापि तत्स्थानापन्नस्य प्रजापालनौपयिकं धर्मजातं भवतीति गम्यते । आसीनः स्थितो वेति सामर्थ्याद्यनुसारेण पूज्यापूज्यार्थिप्रत्यर्थ्यपेक्षया वा व्यवस्थितो विकल्पः । दक्षिणपाण्युद्यमनं कार्यिणामवधानबोधनार्थम् । विनीतवेषाभरणत्वम् अभीषणवेषाभरणत्वं तेषामप्रतिभानिवृत्त्यर्थमुपात्तम् । प्रत्यहमित्यनेनाह्निकवद्व्यवहारदर्शनस्यावश्यकतोक्ता । देशदृष्टाः श्रुतिस्मृत्यनुक्ता अपि देशा-

चाररूपास्तदविरुद्धा हेतवो युक्तिकलापाः । यथोदीच्यमध्यदेशीयानां कन्यां याचितुमागताय भोजनदानं कन्याप्रतिश्रवणप्रतिबद्धमतस्तस्मिन् कृते अवश्यं तस्मै कन्या दातव्येति निर्णतव्यम् । एवमन्यदप्यूह्यम् ।

यथाह कात्यायनः—

यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः ।
श्रुतिस्मृत्यनुरोधेन देशदृष्टः स उच्यते ॥ इति ।

मार्गेषु=व्यवहारपदेषु । निबद्धानि=सम्बद्धानि । धर्मनिर्णयोपयोगित्वात् धर्मासनम् । संवीताङ्गो वस्त्राद्यावृतशरीरः । अनेन नीतिशास्त्रोक्तं कामंणादिपरिहारोपयोगि सर्वमुपलक्षितम् । समाहितो=विक्षेपशून्यः । विक्षेपदशायां तत्त्वप्रतिभासायोग्यत्वाच्चित्तस्य । लोकपालप्रणामोऽपि तदुपयोगी ।

याज्ञवल्क्यः—

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ इति । (अ०२श्लो०१)

अत्र—

व्यवहारान् स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् । ( १ । ३६० )

इत्यनेनैव याज्ञवल्क्येन विहितस्य व्यवहारदर्शनस्यानुवादो ब्राह्मणसाहित्यादिविधानार्थः । ब्राह्मणग्रहणं क्षत्रियादिव्युदासाय । "सहयुक्तेऽप्रधाने"(अ०२पा०३सू०१९) इतिव्याकरणस्मृतेः सहार्थतृतीयया तेषामप्राधान्यं गम्यत इति तत्प्रयोजनमदर्शनान्यथादर्शनयोर्न तेषां दोषः किन्तु राज्ञ एवेति बोधनम् । धर्मशास्त्रानुसारेणेत्यनेनैव क्रोधलोभविवर्जिते सिद्धे तद्वर्जनोपादानं क्रोधलोभाभ्यामदर्शनान्यथादर्शनयोर्दोषातिशयप्रदर्शनार्थम् । न च क्रियानुवादेनानेकगुणविधाने वाक्यभेदः । दर्शनकर्त्तृतया वाक्यान्तरप्राप्ते तावद्विशेषणविशिष्टस्यैकार्थस्य बोधनात्तदनापत्तेः । पौरुषेयवाक्ये तात्पर्यानुरोधेन तस्यादोषत्वाच्च ।

ननु सर्वेऽपि व्यवहारदर्शनविधयो न तावत्केवलादृष्टार्थाः । प्रजापालनौपयिकदुष्टादुष्टपरिज्ञानस्य दृष्टस्यावश्यकत्वात् । अत एव विज्ञानेश्वरः—"अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मस्तच्च दुष्टनिग्रहं विना न सम्भवति । तत्परिज्ञानं च व्यवहारदर्शनं विना नेति व्यवहारदर्शनमहरहः कर्त्तव्यमित्युक्तम्—"व्यवहारान् स्वयं पश्येत्" इत्यादि । नच तदेव फलमिति वाच्यम् । स्वर्गादिफलस्यादर्शनान्यथादर्शनयोः प्रत्यवायस्य च वचनान्तरैर्बोधनात् ।

तथाच कात्यायनः—

सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥ इति ।

अत्र ब्राह्मणपुरोहितशब्देन अनियुक्तानां तेषां ग्रहणम् । सभ्यशब्देन नियुक्तानाम् ।

बृहस्पतिरपि—

विप्रो धर्मद्रुमस्यादिः स्कन्धशाखे महीपतिः ।
सचिवाः पत्रपुष्पाणि फलं न्यायेन पालनम् ॥
यशो वित्तं फलरसो भोगोपग्रहपूजनम् ।
अजेयत्वं लोकपङ्क्तिः स्वर्गे स्थानं च शाश्वतम् ॥
विदित्वैतान्न्यायरसान् समो भूत्वा विवादने ।
त्यक्तलोभादिकं राजा धर्म्यं कुर्याद्विनिर्णयम् ॥ इति ।

न्यायरसान्=व्यवहारदर्शनफलानि । प्रत्यवायोऽपि मनुनोक्तः—

विद्धो धर्मो ह्यधर्मेण सभां यत्रोपतिष्ठते ।
शल्यं चास्य निकृन्तन्ति विद्धास्तत्र सभासदः ॥
पादोऽधर्मस्य कर्त्तारं पादः साक्षिणमृच्छति ।
पादः सभासदः सर्वान् पादो राजानमृच्छति ॥ (८।१२।१८)

कर्त्तृसमपापाः सर्वे भवन्तीति तात्पर्य्यम् । न त्वन्यपापस्यान्यत्र सङ्क्रमसम्भवः ।

नारदोऽपि—

(१)न्यायमार्गादपेतं तु ज्ञात्वा चित्तं महीपतेः ।
वक्तव्यं तत्प्रियं नात्र न सभ्यः किल्विषी भवेत् ॥

तत्प्रियं न वक्तव्यं=राज्ञो मनोऽनुकूलमेव न वाच्यम्। किन्तु न्याय्यम्। एवं सति सभ्यो न किल्बिषी भवेदिति नञ्द्वयान्वयः ।

अधर्मतः प्रवृत्तं तं नोपेक्षेरन् सभासदः ।
उपेक्षमाणाः सनृपा नरकं यान्त्यधोमुखाः ॥
अन्यायेनापि तं यान्तं येऽनुयान्ति सभासदः ।
तेऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः ॥ इति ॥

मनुः—

राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्त्तारं निन्दार्हो यत्र निन्द्यते ॥ इति (८।१९)

---

(१) इदमधस्तनानि च वचनानि मुद्रितनारदस्मृतौ न दृश्यन्ते ।

किञ्च दुष्टादुष्टपरिज्ञानोपायेष्वनेकेषु प्राप्तेषु विधावस्मिन्नभ्युपगम्यमानेऽयं नियमविधिः स्वर्गादिफलप्रत्यवायपरिहारयोर्भव्यत्वेऽपूर्वविधिरिति वैरूप्यं चापद्यते। व्यवहारदर्शनमात्रोपायकत्वं यदि दुष्टादुष्टपरिज्ञानस्य तर्हि तदर्थतयाऽननुष्ठानार्थता ज्ञानस्येति विधिर्व्यर्थः। अथ यथा भट्टसोमेश्वरेणानुष्ठानं विनाभूतस्यापि ज्ञानस्य विध्यधीनाङ्गत्वनिर्वाहाय "यदेव विद्यया" इत्यादिवाक्येन कर्मार्थतया विधिरभ्युपगतो, यथा च मिश्रादिभिर्लिङ्गादेवाङ्गत्वं ज्ञानस्येत्युक्तम्। तथा व्यवहारदर्शनस्य तदविनाभावेऽपि विधिरभ्युपेयताम्। मैवम्। कर्मानुष्ठानस्यापूर्वसाधनत्वात्तत्पर्यवसायिज्ञानविधिरविनाभावेऽप्यस्तु। दुष्टादुष्टपरिज्ञानस्य तु तदभावान्नाङ्गापेक्षेतिवैषम्यम्। न चास्यापि प्रजापालनमदृष्टार्थमुपकुर्वतः परम्परयास्त्येवापूर्वपर्यवसानमित्यस्त्वङ्गत्वार्थ एव विधिरिति वाच्यम्। एवमपूर्वपर्यवसायिविधिसम्भवेऽपि श्रुत्याद्यभावेऽनारभ्यविधेरङ्गत्वाबोधकत्वात्। अन्यथाध्ययनाध्यापनयोरप्यङ्गत्वापत्तेः। ज्ञानस्य तु वाक्यादेवाङ्गत्वं "यदेव करोति" इति श्रवणात्। येन कर्मणेच्छेत्तत्र जपेज्जुहुयात्।

एवं विनायकं पूज्य ग्रहांश्चैव विधानतः।
कर्मणां फलमाप्नोति (या०स्मृ०अ०१श्लो०२९३)

इति च श्रवणाज्जपहोमविनायकस्नपनग्रहयज्ञानामिव। अत एवाध्ययनाधानयोरङ्गत्वाभावाज्ज्ञानाहवनीयादिफलमात्रपर्यवसितत्वं प्रतिकर्मप्रयोगावसायित्वम्। सकृदेव त्वाधानाध्ययनानुष्ठाने तज्जनितज्ञानाग्निमतां त्रैवर्णिकानामुत्तरोत्तरकर्ममात्राधिकारितेति सिद्धान्तः। शूद्राद्यधिकारनिवृत्तिश्च तद्विधिबोधिताध्ययनाधानोपायकज्ञानाग्निलाभ उपायान्तरस्य ज्ञानाग्निद्वारकाक्षेपप्रतिक्षेपात्। प्रजापालनं परं ज्योतिष्टोमाद्यपूर्वमिव स्वफलापूर्वं जनयतीत्यन्यदेतत्।

अत्र ब्रूमः। व्यवहारदर्शनोत्पत्तावेव विधेस्तात्पर्यम्। अन्ये तु विधयस्तस्य निमित्तफलोपाधिभेदेनाधिकारविधयः। प्रयोगभेदश्च 'अग्निहोत्रं जुहोति' इत्युत्पन्नस्य "यावज्जीवमग्निहोत्रं जुहुयात्" "अग्निहोत्रं जुहुयात् स्वर्गकाम" इत्यत्रेव। अतो न वैरूप्यादिदोषः। दृष्टार्थतया तु न विधिरयं प्रमाणान्तरसिद्धत्वात्तस्य। यद्यपि व्यवहारशास्त्रे न्यायसिद्धानुवादका एव प्रायो विधय इत्येतस्यापि तथात्वे न बाधकं, तथापि विधित्वे सम्भवत्यनुवादत्वमङ्गीकर्तुमनर्हम्। यत्र तु तदसम्भवस्तत्र तदेवाश्रीयते व्यवहारशास्त्रत्वादिति सकलनिबन्ध-

स्वरसायातः समाधिः । दुष्टादुष्टपरिज्ञाने तु यद्युपायान्तरप्राप्तया व्यवहारदर्शनस्य पाक्षिकत्वं तदास्य नियमविधित्वमेवाध्यापनादिविधीनामिवार्जनोपायतया तद्वदेवोपायान्तरादर्जने प्रत्यवायकल्पनवदुपायान्तरात् दुष्टादुष्टपरीक्षया प्रजापालनेऽपीत्यवसेयम् । स्मृत्यादीनां च त्रैवर्णिकचातुर्वर्ण्याधिकारिकत्वात् म्लेच्छादीनां यथाकथञ्चिद्दुष्टादुष्टपरिज्ञानेन प्रजापालनेऽपि न क्षतिः । (१)न चैवं प्रजापालनविधेरभिषिक्तक्षत्रियाधिकारिकत्वादन्येषां तत्र फलाभावेनाप्रवृत्तिः ! दृष्टद्रव्यादिलाभार्थं कथञ्चित् प्रवृत्तावपि तस्माद्धर्माभावप्रसङ्गोऽन्यथादर्शनादर्शनन्यायप्रवृत्त्यादिना प्रत्यवायाभावापत्तिश्चेति वक्तव्यम् । यतो दयाहिंसादिसाधारणधर्मान्तर्भावेन प्रजापालनस्य तेषामपि धर्मजनकत्वात् । नृपपदेन तत्सङ्ग्रहसम्भवाच्च ।

तस्मादयमत्र निष्कर्षः । उत्सर्गापवादादिमूलभूतान्वयव्यतिरेकादिन्यायमूलकता यत्र सम्भवति तादृशव्यवहारशास्त्रस्य सर्वस्य न वेदमूलकता कल्प्यते । यदंशे तदसम्भवस्तत्रादृष्टार्थकतया वेद एव मूलं कल्प्यते । वास्तुसामुद्रिकादिविधिषु ज्योतिःशास्त्रायुर्वेदप्रामाण्यव्यवस्थापकप्रसङ्गेनाचार्य्यैः स्मृत्यधिकरणे व्यक्तमेव एतत्प्रपञ्चितम् । अत एव 'अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः" इत्युक्तम् । वचनविरोधे न्यायस्य बाध्यत्वादर्थशास्त्रस्य च तन्मूलकत्वात् ।

यत्तु "स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः" इति वचनम् । तस्यायमाशयः । न्यायानुपष्टब्धस्मृत्यपेक्षया न्यायोपष्टब्धा स्मृतिर्बलवतीति न्यायानुपष्टब्धस्मृतेस्तात्पर्य्यान्तरकल्पना कार्य्येति । तस्य चोत्सर्गापवादविषयव्यवस्थाविकल्पादिरूपस्य न्यायस्य प्रत्यायकं हेतुमाह—व्यवहारत इति । वृद्धव्यवहारादन्वयव्यतिरेकादिरूपादनादिव्युत्पत्त्यपरपर्य्यायान्न्यायो प्रत्येतव्य इत्यर्थः ।

नारदोऽपि—

धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः । इति ।(अ०१श्लो०४०)

धर्मशास्त्रयोर्विरोधे युक्तिर्न्यायः । न्यायपर्यालोचनाभावे सोपपत्तिकं दोषमाह—

बृहस्पतिः,

केवलं शास्त्रमाश्रित्य न कर्त्तव्यो हि निर्णयः ।
युक्तिहीनविचारे हि धर्महानिः प्रजायते ॥

(१) अस्य वक्तव्यमित्यनेनान्वयः ।

चौरोऽचौरः साध्वसाधु जायते व्यवहारतः ।
युक्तिं विना विचारेण माण्डव्यश्चौरतां गतः ॥
असत्याः सत्यसदृशाः सत्याश्चासत्यसन्निभाः ।
दृश्यन्ते भ्रान्तिजनकास्तस्माद्युक्त्या विचारयेत् ॥ इति ।

साध्वसाधुरिति छान्दसः सुलोपः। साधुरसाधुरित्यर्थः । व्यवहारतो=निर्युक्तिकात् । अर्थशास्त्रं चात्र धर्मशास्त्रान्तर्गतमेव नीतिव्यवहारशास्त्ररूपं गृह्यते । औशनसाद्यर्थशास्त्रस्य 'धर्मशास्त्रानुसारेण' इत्यनेनैवं निरस्तत्वात् । विरोधोदाहरणं तु—

हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।
अतो यतेत तत्प्राप्तौ (या०१।३५२) इत्यर्थशास्त्रम् ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्ज्जितः (या०२।१)

इति धर्मशास्त्रम् । अनयोश्च क्वचिच्चतुष्पाद्व्यवहारे प्रवर्तमाने विरोध आपतति । कस्यचित्प्रमाणतः पराजयार्हस्य छलादिना जयेऽवधार्यमाणे सोऽत्यन्तमैत्रीयोग्यो मित्रं लभते । अन्यस्य तदवधारणे धर्मलाभोऽधर्मपरिहारश्च सत्यवादित्वात् । तत्र मित्रलाभमनपेक्ष्य धर्म एवानुरोद्धव्यः । द्वयोः प्रमाणयोरेककर्तृकत्वेन(१) तुल्यबलत्वेऽपि प्रमेययोरर्थधर्मयोर्धर्मस्य प्राबल्यात् । प्रमाणबलाबलवैपरीत्येऽपि प्रमेयबलाबलानुरोधेन तस्य बाध्यत्वेन शिष्टाकोपनये व्यवस्थितत्वात् । किमुत समानबलाबलत्वे । अत एव "धर्मार्थसन्निपातेऽर्थग्राहिण एतदेव" इति धर्मविरुद्धार्थग्रहण आपस्तम्बेनैतच्छब्दपरामृष्टं द्वादशवार्षिकं प्रायश्चित्तमुपदिष्टम् । केचित्तु—

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥
नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रच्छन्नं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति ॥ (मनु०८।३५०।३५१)
मन्युः क्रोधो मन्युं हन्ति न तु पुरुषः पुरुषान्तरमित्यर्थवादः ।

तथा—

आततायिनमायान्तमपि वेदान्तगं रणे ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥

जिघांसीयात्=जिघांसी सन् इयात् गच्छेदित्यर्थ इत्यादि ।

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥

---

(१) मन्वादिरूपैककर्तृनिष्पन्नत्वेन ।

धनग्रहणेन प्राप्तावपि पृथक् क्षेत्रग्रहणं स्वल्पस्यापि क्षेत्रस्य शासनाद्यारूढस्य हर्त्ता धनस्य च बहुतरस्य, येन वृत्तिच्छेद एव भवति तावतो हर्त्ताऽऽततायीति द्रष्टव्यम् ।

तथा—

(१)उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा ।
आथर्वणेन हन्ता च पिशुनश्चापि राजनि ॥

पिशुनः=यदभिधानेनावश्यं प्राणात्ययो भवति तादृशपैशुन्यस्य राजगामिनः कर्त्ता ।

भार्य्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः ।
एवमाद्यान् विजानीयात् सर्व्वानेवाततायिनः ॥

एवमाद्यानित्यनेन वधतुल्यस्वपीडाकारिण इत्युक्तं भवति । उद्यतासिपदसमभिव्याहारात् प्रवृत्तक्रिया एवाततायिनो न भूतभाविक्रियाः । एतेषामाततायिनां वधे दोषाभावप्रतिपादकं वचनकदम्बकमर्थशास्त्रम् आत्मरक्षणार्थत्वात् ।

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥

इत्यादि धर्मशास्त्रम् । दृष्टार्थत्वाभावात् । अनयोर्विरोधे सम्भवत्यपि आतताय्यनाततायिविषयत्वेन सामान्यविशेषभावेन बाध्यबाधकभावविपर्यये धर्मशास्त्रत्वात्सामान्यशास्त्रमेव बलवत् । आततायिवधे दोषाभावप्रतिपादनं तु कथञ्चिदन्यथात्मरक्षणासम्भवे आततायिवधमात्मरक्षणार्थं कुर्वतोऽनपराधत्वाद्राजदण्डाभावमात्रपरमर्थशास्त्रत्वात् दुर्बलम् इत्युदाहरणमर्थशास्त्रधर्मशास्त्रयोर्विरोधस्याहुः ।

अत्र विज्ञानेश्वरः । दोषाभावमाततायिवधे प्रतिपादयतां "गुरुं वा" इत्यादिवचसां विध्यन्तरशेषत्वादपिशब्दवाशब्दादीनां विधिशक्तिप्रतिबन्धकानां श्रवणाच्च न स्वार्थपरत्वम् । किन्तु—

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।

इत्युपक्रम्य—

आत्मनश्च परित्राणे दक्षिणानां च सङ्गरे ।
स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति ॥ ।( मनु० ८।३४९ )

आत्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां च रक्षणे युद्धे च स्त्रीविप्रानुग्रहनिमित्तं चाततायिनमकूटशस्त्रेण घ्नन् न दोषभागिति दण्डाभाव-

( १ ) असिविषाग्नीनां द्वन्द्वं कृत्वोद्यतशब्देन बहुव्रीहिः ।

मुक्त्वा तदर्थवादोऽयमुच्यते "गुरुं वा" इत्यादिः। गुर्वादीनत्यन्तावध्यानप्याततायिनो घ्नतो न दोषः किमुत तदन्यानिति कैमुतिकन्यायेन स्तुतिप्रतीतेर्न गुर्वादीनां वध्यत्वप्रतीतिः । स्वार्थपरत्व एषां वचसां "नाततायिवधे दोषोऽन्यत्र गोब्राह्मणात्" इति सुमन्तुवचनविरोधश्च । यच्च—

आचार्यं च प्रवक्तारं मातरं पितरं गुरुम् ।
न हिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः ॥ (४।१६२)

इति मनुवचनम् । तदपि ब्राह्मणादिहननस्य वचनान्तरैरेव निषिद्धत्वादाततायिनामपि तेषां वधो न कार्य इत्यर्थकत्व एवार्थवदिति तद्विरोधोऽपि गुर्वाद्याततायिवधस्य दोषाजनकत्वे ।

ननु "गुरुं वा" इत्यादिवचसां त्वन्मते स्तुतिपरत्वेनाततायिवधदोषाभावप्रतिपादकत्वादप्रसक्तदोषाभावप्रतिप्रसववैयर्थ्यमित्यनाततायिनामेव तेषां वधे दोषातिशयप्रतिपादनार्थत्वेन मानवस्यार्थवत्त्वमिति न तद्विरोध इति चेत्, मैवम् । यस्य मते तेषां वचनानामाततायिवधे दोषाभावप्रतिपादकत्वं तं प्रति प्रतिप्रसवार्थत्वापादने विज्ञानेश्वरतात्पर्यात् । तर्हि तस्य भवन्मते दोषातिशयार्थत्वावश्यम्भावात्तन्मतेऽपि तथैवास्तु क्व विरोध इति चेत्, भ्रान्तोऽसि । उभयत्र(१) गुर्वाद्युपादाने विरोधप्रसक्तेरपरिहार्यत्वात् । विज्ञानेश्वरमते त्वर्थवादकल्प्ययोरन्यगत्यसम्भवे हिंसानभिसन्धिनात्मरक्षणे प्रमादोपजातगुर्वाद्याततायिभिन्नाततायिवधे राजदण्डाभावलघुप्रायश्चित्तयोर्गुर्वादिविषये अपवादार्थं मनुवचनमित्यदोषः ।

वस्तुतस्तु "शस्त्रं द्विजातिभिर्ग्राह्यम्" इत्यनेनोक्तस्याततायिवधे दोषाभावस्य प्रायश्चित्तराजदण्डाभावयोश्चाचार्यादिविषयेऽपवादार्थं मानवम् । आततायिवधे दोषाभावश्च पलायनादिना केनापि प्रकारान्तरेणात्मरक्षणासम्भवे बोध्यः । अन्यथा वचनस्यादृष्टार्थत्वं हिंसादोषप्रतिपादकशास्त्रस्याततायिदोषेऽत्यन्तबाधश्चेत्युभयमप्यन्याय्यमापद्येत । गुर्वादिविषयकदोषाभावप्रतिपादकार्थवादस्य चानाततायिगुर्वादिवधापेक्षयाततायितद्वधे दोषाल्पत्वप्रायश्चित्ताल्पत्वे राजदण्डाभावश्चेत्यालम्बनानि स्तुत्युपयोगिगुणवाद इति ।

अत्र भट्टभवदेवः—

स्वाध्यायिनं कुले जातं हन्यादेवाततायिनम् ।
न तेन ब्रह्महा सः स्यान्मन्युस्तं मन्युमृच्छति ॥

---

( १ ) मन्मते विज्ञानेश्वरमते च ।

इतिवसिष्ठवचनात्तदेकवाक्यतया वाशब्दादिश्रवणेऽपि गुर्वादिवाक्यानां प्रतिप्रसवविधित्वमेव न त्वर्थवादत्वम् । नच सुमन्तुवचनेन "आततायिवधे न दोषोऽन्यत्र गोब्राह्मणात्" इत्यनेन विरोधः । सूत्रच्छेदापरिज्ञानात् । तथाहि सूत्रत्रयमिदम् । आततायिवधे नेत्येकम् । दोषोऽन्यत्रेत्यपरम् । गोब्राह्मणात् स्नातः प्रायश्चित्तं कुर्य्यादित्यन्यत् । तत्र ब्रह्मवधप्रायश्चित्तमुक्त्वा यस्तैः सम्बन्धं कुर्य्यात्तस्याप्येतदेव प्रायश्चित्तमित्यभिधाय सुमन्तुराह—आततायिवधे नेति । आततायिनो ब्राह्मणस्य वधे कृते न प्रायश्चित्तमिति प्रथमस्य सूत्रस्यार्थः । दोषोऽन्यत्र=आततायिव्यतिरिक्ते दोष इति द्वितीयस्य । गोब्राह्मणात् स्नातः प्रायश्चित्तं कुर्य्यादिति प्रायश्चित्ताङ्गस्नानविधायकम् ।

तत्र गोहेतुकं स्नानं व्यास आह—

श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु नित्यशः ।
अभिषेकः समस्तेषां गवां शृङ्गोदकस्य च ॥ इति ।

ब्राह्मणशब्देनात्र विधायकं वाक्यमुच्यते । तद्धेतुकं स्नानमघमर्षणादिजपादिपूर्वकम् । द्वन्द्वैकवद्भावश्च गोब्राह्मणादिति । तेन गोहेतुकब्राह्मणहेतुकस्नानाभ्यां प्रायश्चित्ताधिकारी भवति न स्नानमात्रेणेति तृतीयस्येति । यदपि भविष्यपुराणवचनम्—

हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगम् ।
कामतोऽपि चरेद्वीर ! द्वादशाब्दाख्यमुत्तमम् ॥ इति,

तदपि नाततायिवधविषयम् । प्रहारशब्दस्य वधानभिधायकत्वात् । तेनायमर्थः । यश्चक्षुराद्यवयवानां प्रकर्षेण हरणे प्रवृत्तस्तद्वधेऽपि कामतोऽपि द्वादशवार्षिकमेव प्रायश्चित्तमित्यर्थ" इत्याह ।

तदयुक्तम् । "आचार्य्यं च" इत्यस्य मानवस्योक्तयुक्तिबलादाततायाचार्य्यादिवधे दोषप्रतिप्रसवार्थत्वस्योपपादितत्वात्तदेकमूलतया सुमन्तुवचनस्य मिताक्षरोक्तच्छेदेनैव व्याख्यातुमर्हत्वात् । त्वदुक्तच्छेदे दोषोऽन्यत्रेत्यस्य वैयर्थ्यापत्तेश्च । गोब्राह्मणादित्यस्य स्नानहेतुत्वे पञ्चमीति व्याख्याने गोशब्दस्यावयविवाचकस्याऽवयवशृङ्गलक्षणाद्वारा तदुदकलक्षणायां लक्षितलक्षणापत्तेश्च । गोः स्नानाहेतुत्वात् । ब्राह्मणस्य ज्ञापकहेतुत्वाद्गोश्च कारकहेतुत्वस्य क्लिष्टस्य ग्रहणाद्वैरूप्यादिदोषप्रसङ्गाच्च । यदपि भविष्यपुराणीयवचनव्याख्यानं तत्त्वत्यन्तबहिर्मुद्रम् । ताडनादिवधपर्य्यन्ते देहपीडने रूढस्य प्रहरतेश्चक्षुराद्यवयवप्रकर्षहरणे योगग्रहणस्य रथकारनयविपरीतत्वात्(१) । ( पू० मी० अ०६ पा०१

(१) तत्र हि "वर्षासु रथकार आदधीत" इत्यत्र रथकारपदेन रथं करोतीति व्युत्पत्त्या

अधि०१२) किञ्च। चक्षुराद्यवयवोद्धरणप्रवृत्तब्राह्मणवधे कामकृतेऽपि द्वादशाब्दमेव ब्राह्मणवधप्रायश्चित्तं नतु कामकृताऽन्यब्रह्मवधवत्प्रायश्चित्तद्वैगुण्यं मरणान्तिकं वेत्यस्यैतद्वचनादिसंहितस्य प्रायश्चित्तह्रासप्रयोजकदोषाल्पत्वस्याततायित्वमेव निमित्तमन्यासम्भवाच्छस्त्रपाणित्वेनाततायित्वस्यैव सत्त्वाच्च। तथाच नाततायिविषयमिदमित्यसम्बन्धम्।

आततायिन्यदोषोऽन्यत्र गोब्राह्मणात्। गोब्राह्मणं यदा हन्यात् तदा प्रायश्चित्तं कुर्य्यात्।

क्षिण्वानमपि गोविप्रं न हन्याद्वै कदाचन।

इत्याभ्यां संवर्त्तभविष्यवचनाभ्यां विरोधस्य सर्वथा दुष्परिहरत्वाच्च। विध्यन्तरशेषभूतस्य विधिशक्तिप्रतिबन्धकापिशब्दादिमतो गुर्वादिवाक्यप्रतिप्रसवविधित्वस्याभ्युपगन्तुमशक्यत्वाच्च। नच विध्यशेषभूतानां वसिष्ठादिवचसामर्थवादत्वमसम्भवीति "गुरुं वा" इत्यादीनामपि नार्थवादत्वं विध्यन्तरशेषत्वात्, तेषामर्थवादत्वेऽपि वास्मदभिप्रेतार्थसिद्धेर्वचनान्तरैः परतन्त्रैरुरीकृतत्वान्न क्षतिरिति वाच्यम्। यतस्तेषामपि गोब्राह्मणाद्याततायिवधदोषप्रतिपादकबहुतरवचनान्तरविरोधाद्दोषाल्पत्वप्रतिपादकतैव तदेकमूलकतालाभायोचिता। अन्यथा दुष्परिहरत्वाद्विरोधस्येत्यस्तु विस्तरः।

शूलपाणिस्तु—

नाततायिवधे हन्ता किल्बिषं प्राप्नुयात् क्वचित्।
विनाशार्थिनमायान्तं घातयन्नापराध्नुयात्॥

इति बृहस्पतिवचनम्–आततायिवधस्यादोषताप्रमाणत्वेनोपन्यस्य किल्बिषाभावः प्रायश्चित्तनिषेधार्थः अपराधाभावस्तु दण्डनिषेधार्थ इति च व्याख्याय यतः "सर्वत आत्मानं गोपायेत्" इति श्रुतिमूलकमिदमतः पलायनादिनाप्यात्मरक्षणासम्भवपरमिति तत्तात्पर्य्यमुपवर्ण्य "गुरुं वा" इत्यादिमन्वादिवचनान्यपि तदुपष्टम्भकतया प्रदर्श्य "आततायिन्यदोष" इत्यादिसंवर्त्तवचनं "क्षिण्वानम्"इत्यादि भविष्यवचनं च पूर्वोक्तं तद्विरोधित्वेनाशङ्क्य व्यवस्थामेवमुक्तवान्। हन्त्रपेक्षया तपोविद्या-

---

विप्रादिस्त्रैवर्णिको ग्राह्य इति पूर्वपक्षयित्वा योगाद्रूढेर्बलीयस्त्वेन "माहिष्येण करण्यां तु रथकारः प्रजायते" इति स्मृतेः, वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः, शूद्रायां वैश्यादुत्पन्ना करणी तस्यां माहिष्यादुत्पन्नः सङ्करजातिविशेषो रूढया ग्राह्यः तस्याधानकालो वर्षतुरभिधीयतेऽनेन वाक्येन। एवं प्रकृतेऽपि न रूढित्यागेन योगार्थस्वीकार उचित इत्याशयः।

जातिकुलैरुत्कृष्टो ब्राह्मणगुर्वादिराततायी न वध्यः । समोऽपकृष्टश्च वध्यः । तथा च कात्यायनः—

आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः ।
वधस्तत्र तु नैव स्यात् पापं हीनवधे पुनः ॥ इति ।

अत एव गीतायामुक्तम्—

पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः । इति ।

एतान्=भीष्मादीनस्मत्तोऽत्यन्तोत्कृष्टानाततायिनोऽपि हत्वाऽस्मान् पापमाश्रयेदेवेत्यर्थः । उत्कृष्टाततायिहननान्निवृत्तौ फलमप्युक्तं बृहस्पतिना—

आततायिनमुत्कृष्टं (१)वृत्तस्वाध्यायसंयुतम् ।
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत् ॥ इति ।

तेनोत्कृष्टाततायिवधनिवृत्तौ तद्वधप्रसक्तप्रत्यवायपरिहारोऽश्वमेधफलं च संयोगपृथक्त्वनयात्(२) ( अ० ४ । पा० ३ अधि० ३ ) । यद्यपि "गुरुं बहुश्रुतं हन्यात्" इति श्रूयते गुरोश्च शिष्यापेक्षयोत्कृष्टत्वमेवेति तत्र व्यवस्थेयं दुरवस्था । तथापि गुरोरपि सकाशात् कुलविद्यातपःप्रभृतिभिर्गुणैः शिष्यस्याप्युत्कर्षः सम्भवतीति सुस्थैव तत्रापि व्यवस्थेयम् । गौरत्वाततायित्वाविशेषेणावध्यो विरोधिवचनाभावात् । एतेषां चाततायिताप्रयोजकव्यापारगोचरवर्त्तमानप्रवृत्तिकानामेव हन्तव्यानामप्याततायिनां हनने दोषाभावो न तु निवृत्तव्यापारकाणामपि ।

उद्यतानां तु पापानां हन्तुर्दोषो न विद्यते ।
निवृत्तानां तथारम्भाद् ग्रहणं न वधः स्मृतः ॥

इति कात्यायनवचनादिति ।

तदपि न क्षोदक्षमम् । तथाहि "न हिंस्यात्"इति निषेधावधारितस्य दोषस्य "शस्त्रं द्विजातिभिः" इत्यादिना आततायिविषये ऽपवादमभिधाय तदर्थवादत्वेन "गुरुं वा" इत्याद्युक्त्वा मनुसुमन्तुसम्वर्त्तभविष्यादिवचनैर्गोब्राह्मणादिविषये तं प्रतिप्रसूय चरितार्थेषु सर्ववचनेषु कात्यायनीयम्-"आततायिनि चोत्कृष्टे" इत्यादिवचोऽपि मन्वादिवचनोपात्ता-

---

( १ ) तप इति पाठान्तरम् ।

( २ ) "दध्नेन्द्रिय कामस्य जुहुयात्" इत्यग्निहोत्रप्रकरणे श्रूयते। तत्र विहितस्य दध्नः काम्यत्वेन नित्याग्निहोत्रे न दधि प्रयोक्तव्यं किन्तु द्रव्यान्तरमेवेत्याशङ्क्य समाहितम् "दध्ना जुहुयात्"इति वाक्यान्तरेण कामसंयोगमनुपन्यस्य नित्यहोमसंयोगेन दधिविधानात् नित्याग्निहोत्रेऽपि दधि द्रव्यम् । एकस्यापि दधिद्रव्यस्य वाक्यद्वयेन काम्यत्वं नित्यत्वं चाविरुद्धम् । एवमत्रापि ।

चार्य्यत्वब्राह्मणत्वाद्युत्कर्षमेवादाय तदेकार्थकमेवोचितं न तु तेषामुत्कृष्टाचार्य्यादिविषयकतया सङ्कोचकम्। "तपःस्वाध्यायजन्मत" इत्यनेनापि ब्राह्मणत्वादिकृतोत्कर्षस्यैवोपलक्षणात्। किञ्चाततायिवधे दोषाभावस्य स्वोत्कर्षमात्रेणापवादस्तवाभिमतः, गीतस्थितस्यैतत्पदस्य तदुपष्टम्भकत्वमधमवर्णावध्यत्वमुत्तमवर्णाततायिनो वदतः। तथा च सामान्यतो ब्राह्मणत्वादिपुरस्कारेण तदपवादकवाक्यानामानर्थक्यमेव स्यात्। अस्योपसंहारविषयत्वात्। यत्र हि मित्रविन्दावत् द्वयोरर्थवत्त्वं तत्र सामान्यस्य विशेष उपसंहारः स्वीक्रियते। अनुत्कृष्टतद्वधे त्वया दोषाभावस्यैवाभ्युपेतत्वात्। "गुरुं वा" इत्यादिबहुवचसां प्रतिप्रसवविधित्वेन त्वयाभ्युपेतानां कात्यायनीयैकवचोऽनुरोधेनोत्कृष्टमात्रेणोपलक्षणत्वमानर्थक्यापरपर्य्याय एव। यद्वा गोत्वब्राह्मणत्वादिनिमित्तप्रतिप्रसवे कृते कात्यायनीयमुत्कर्षनिमित्तदोषातिशयप्रतिपादकं भविष्यतीति समस्तवचनसामञ्जस्यसम्भवे वचनस्वरसभङ्गाङ्गीकरणं भक्त्याङ्गीकरणमेव। उत्कृष्टवधनिवृत्तौ फलातिशयोऽप्यस्तु। संयोगपृथक्त्वात्। (अ४ पा०३ अधि०३) तत्राप्यश्वमेधपदमन्यानर्थक्यप्रसङ्गादविवक्षितमथवा तत्र श्रुतं ब्रह्महत्यातरणं तज्जन्यपापक्षयरूपमात्रवधनिवृत्तौ तज्जन्यपापानुत्पत्तितादात्म्येनोपचर्य्यते। फलपदं तु पक्षेऽस्मिन् न समञ्जसं निषिद्धनिवृत्तौ पापानुत्पत्तेः फलत्वाभावादिति प्राच्यमेव व्याख्यानं साधीयः। तारतम्येन वाश्वमेधफलमत्रापि भवतीति नान्यानर्थक्यमिति समाधेयम्। किञ्च। आततायिब्राह्मणादिवधस्यादोषताप्रतिपादकतया तवाभिमतेषु कात्यायनदेवलादिवचनेषु "अपि वेदान्तगं "भ्रूणमपि" इत्यादीनामुत्कर्षप्रतिपादकत्वात् कथमुत्कर्षदोषपरं कात्यायनीयम् "आततायिनि चोत्कृष्ट" इति वचस्तद्विरोधसमाधानसहं स्यात्। यच्च देवलवचनं भवतोदाहृतम्—

उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम्।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्॥ इति।

भ्रूणः=उत्तमब्राह्मणविशेषः। दोषप्रदर्शनं नियमार्थमिति व्याख्यातं च। तदत्यसम्बद्धम्। न ह्याततायिहनने दोषः कस्यापि सम्मतः। किन्तु तद्धनने दोषाभावमात्रम्। तस्मादन्यथात्मरक्षणासम्भवे तदहनने स्वहत्यैव भ्रूणहत्या प्रसज्यत इत्यात्मरक्षणविधिप्राप्तानुवादमात्रमेतदिति व्याख्येयम्। तस्मात् "आततायिनि चोत्कृष्ट" इत्यादिकात्यायनवचनमस्मदुक्तरीत्या सुमन्तुसंवर्त्तादिवचःसमानार्थतयोत्कर्षप्रयुक्तदोषातिशयपरतया वा वर्णनीयम्। न तु विरोधे व्यवस्थापकतयेत्यलमतिदूरं गत्वा।

मम तु प्रतिभाति । सत्यपि "गुरुं वा" इत्यादीनां प्रतिप्रसवविधित्वे न तेषामर्थशास्त्रत्वम् । अदृष्टदोषाभावस्याप्यदृष्टत्वेन दृष्टार्थत्वाभावात् । न चात्मरक्षणमात्रार्थत्वेन । तथा सति प्रायश्चित्तप्रसङ्गात् । न चेष्टापत्तिः । "न तेन ब्रह्महा भवेत्" । "आततायिन्यदोषोऽन्यत्र गोब्राह्मणात् । गोब्राह्मणं यदा हन्यात् तदा प्रायश्चित्तं कुर्य्यात्" "पापमेवाश्रयेदस्मान्" इत्यादिषु पापतदभावयोश्च स्पष्टमवगमात् । तस्मात् सर्वमतेऽप्यर्थधर्मशास्त्रविरोधोदाहरणमिदमित्यसङ्गतमेवेत्यलं प्रसक्तानुप्रसक्तविचारप्रपञ्चेन । प्रकृतमनुसरामः ।

व्यवहारदर्शनकालमाह कात्यायनः—

सभास्थानेषु पूर्व्वाह्णे कार्य्याणां निर्णयं नृपः ।
कुर्य्याच्छास्त्रप्रणीतेन मार्गेणामित्रकर्षणः ॥
दिवसस्याष्टमं भागं मुक्त्वा भागत्रयं तु यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ॥ इति ।

अत्र सभास्थानेष्वित्यादिसर्वमनुवादः । कात्यायनेनैव वचनान्तरैर्विहितत्वात् । पूर्वाह्णमात्रं विधेयम् । तदपि दृष्टार्थम् । तदा बुद्धिप्रसादात् कार्य्यान्तराव्यापृतत्वाच्च । तत्र विशेषो "दिवसस्याष्टमं भागम्" इत्यादिनोक्तः । अष्टमो भागः=प्रथमप्रहरार्द्धम् । भागत्रयं तदुत्तरमावर्त्तनात् प्राक्तनम् । अन्यथा पूर्व्वाह्णविधिविरोधात् । प्रथमप्रहरार्द्धत्यागोऽपि नित्यहोमादिबाधपरिहारौपायिकतया दृष्टार्थ एव ।

अत्र वर्ज्यास्तिथीराह संवर्त्तः—

चतुर्दशी त्वमावास्या पौर्णमासी तथाष्टमी ।
तिथिष्वासु न पश्येत्तु व्यवहारं विचक्षणः ॥ इति ।

एतत्प्रतिषेधस्त्वदृष्टार्थ एव । दृष्टासम्भवात् । भोजनाश्रितदिगादिप्रतिषेधवत् । स्पष्टशास्त्रानुपलम्भे तु देशव्यवहारानुरोध्येव निर्णयः कार्य्य इत्यप्याह—

स एव,

तस्माच्छास्त्रानुसारेण राजा कार्य्याणि साधयेत् ।
वाक्याभावे तु सर्वेषां देशदृष्टमतं नयेत् ॥ इति ।

अत्र पूर्व्वार्द्धमनुवादः । उत्तरार्द्धं तु न्यायमूलकम् ।

मनुः—

जातिजानपदान्धर्म्मान् श्रेणिधर्म्मांस्तथैव च ।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपालयेत् ॥ (८।४१)

जातिजानपदान्=जातिप्रयुक्तान् देशप्रयुक्तांश्च धर्मान् । श्रेण्य=एककर्म्मा-

पजीविनो वणिक्कृषीबलादयः। स्वधर्मं=राजप्रवर्त्तितं धर्मम्। मदनरत्ने तु स्वधर्मं=दुष्टदण्डनरूपमिति व्याख्यातम्। तदनुवादमात्रत्वापत्तेर्हेयम्। कुलधर्मलक्षणमभिहितम्—

कात्यायनेन,

गोत्रस्थितिस्तु या तेषां क्रमादायाति धर्मतः।
कुलधर्मं तु तं प्राहुः पालयेत्तं तथैव तु ॥ इति।

बृहस्पतिः—

देशजातिकुलानां च ये धर्माः प्राक् प्रवर्त्तिताः।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ॥
जनापरक्तिर्भवति बलं कोशश्च नश्यति।
उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ॥
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः।
मत्स्यादाश्च नराः सर्वे व्यभिचाररताः स्त्रियः ॥
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः।
(१)खशजाताः प्रगृह्णन्ति भ्रातृभार्य्यामभर्तृकाम् ॥
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ॥ इति।

सर्वे इत्यनेन स्मृतिविरोध उक्तः। पूर्वे इति कल्पतरौ पाठः। तत्र पूर्वदेश इत्यर्थः। दमो=दण्डः। यत्तु स्मृत्यन्तरेष्वेतत्कर्मकरणे प्रायश्चित्तदण्डस्मरणं तदेतद्वचनानुपात्तदेशविषयमिति मदनरत्नाकरः। वयं तु प्रजाप्रक्षोभादिदृष्टदोषकथनाद्राज्ञा तत्र दण्डो न कार्य्य एव। प्रायश्चित्ताभावस्तु व्यवहारविषयः। परलोकशुद्ध्यर्थं प्रायश्चित्तं भवेदित्येवेति न स्मृत्यन्तरविरोधः। तत्तद्देशाव्यापकश्रुतिस्मृतिविरुद्धाचरणे व्यवहारप्रतिबन्धिका शक्तिस्तज्जन्यपापस्य नास्ति नरकजनिकास्त्येव। उपक्रमपर्य्यालोचनादेतावदर्थकतयैव चैतद्वचनोपपत्तौ सर्वथा दोषाभावकल्पनस्यानुचितत्वात्। अत एव आपस्तम्बेनोक्तम्—

देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम् इति।
येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः।
त एव तैर्न दुष्येयुराचारा नेतरे पुनः ॥ इति।

न दुष्येयुः अव्यवहार्य्या राजदण्ड्याश्च न भवेयुरित्यर्थः। अन्यथैतयोरेव वचनयोः परस्परविरोधो दुष्परिहरः स्यादिति ब्रूमः।

यानि तु वचनानि—

व्यासः,

---

(१) वंशजाता इत्यपि पाठः।

वणिक्शिल्पिप्रभृतिषु कृषिरङ्गोपजीविषु ।
अशक्यो निर्णयो ह्यन्यैस्तदीयैरेव कारयेत् ॥

बृहस्पतिः—

कीनाशाः कारुकाः शिल्पिकुशीदिश्रेणिनर्त्तकाः ।
लिङ्गिनस्तस्कराः कुर्य्युः स्वेन धर्मेण निर्णयम् ॥

कीनाशाः=कर्षकाः । कारुकाः=वर्धक्यादयः । शिल्पिनश्चित्रकारादयः । कुशीदिनो=वार्धुषिकाः । लिङ्गिनः=पाशुपतप्रभृतयः ।

मनुः—

आश्रमेषु द्विजातीनां कार्ये विवदतां मिथः ।
न विब्रूयान्नृपो धर्मं चिकीर्षुर्हितमात्मनः ॥
यथार्हमेतानभ्यर्च्य ब्राह्मणैः सह पार्थिवः ।
सान्त्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत् ॥ (८।३९०।३९१)

आश्रमेषु कार्य्ये=आश्रमसम्बन्धिनि कार्य्ये । विब्रूयात्=विशिष्य ब्रूयात् । विरुद्धवचनस्य सामान्यत एव प्रतिषिद्धत्वात् । प्रशमय्य=कोपमपनीय ।

बृहस्पतिः—

तपस्विनां तु कार्य्याणि त्रैविद्यैरेव कारयेत् ।
मायायोगविदां चैव न स्वयं कोपकारणात् ॥

कोपकारणात्=तेषां कोपप्रसङ्गात् ।

कात्यायनः—

सम्यग्विज्ञानसम्पन्नेनोपदेशं प्रकल्पयेत् ।
उत्कृष्टजातिशीलानां गुर्वाचार्यतपस्विनाम् ॥

सम्यग्विज्ञानसम्पन्नेनेति तृतीयान्तं पदम् । तथा च तज्ज्ञानोत्कृष्टजातिशीलानां गुर्वाचार्य्यतपस्विनामुपदेशं प्रकल्पयेत्=कारयेत् । न स्वयमुपदेशं तेषां कुर्य्यादित्यर्थः । तानि न सर्वथा राज्ञो व्यवहारप्रदर्शनप्रतिषेधपराणि । किन्तु तत्तत्कार्य्ये वणिगादीनामभियुक्तत्वात्तान्विहाय न व्यवहारनिर्णयः करणीय इत्येवम्पराणि । यथाहुः—

अभियुक्ताश्च ये यत्र यन्निबन्धनियोजनाः ।
तत्रत्यगुणदोषाणां त एव हि विचारकाः ॥ इति ।

"तत्र तत्त्वमभियोगविशेषात् स्यात्"(अ०१पा०३सू०२७)इति जैमिनिरपि साधुशब्दाधिकरणे सूत्रयामास । अत एव—"चिकीर्षुर्हितमात्मनः" "सान्त्वेन प्रशमय्य""कोपकारणात्"इत्यादि हेतुप्रदर्शनम् । यथा तत्त्वावधारणं स्वानिष्टनिवारणं च भवति तथा कौशलेन निर्वाहनीयमित्यत्र तात्पर्य्यम् ।

इति व्यवहारदर्शनविधिः ।

## अथ प्राड्विवाकलक्षणम् ।

विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च ।
प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः ॥

इति बृहस्पतिः ।

व्यासोऽपि—

विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः ॥ इति ।

गौतमेन तु बृहस्पतिवद्योगार्थः प्राड्विवाकशब्दस्य दर्शितः । विवादे वादिप्रतिवादिनौ पृच्छतीति प्राट् ताभ्यामुक्तं सभ्यैः सह विविच्य वक्तीति विवाक इति बृहस्पतिना, व्यासेन विचारयतीत्यभिधानाद्विविनक्ति इति विवाकशब्दस्य व्युत्पत्तिरुक्ता । विवक्तीति विवाक इति गौतमेन ।

नारदहारीतौ—

यथा शल्यं भिषक्कायादुद्धरेद्यन्त्रयुक्तितः ।
प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः॥इति । (ना.स्मृ.अ.३श्लो.१६)

शल्यं च धर्मस्याधर्ममिश्रणम् ।

यथा च मनुः—

विद्धो धर्मो ह्यधर्मेण सभां यत्रोपतिष्ठते ।
शल्यं चास्य निकृन्तन्ति विद्धास्तत्र सभासदः ॥ इति । (८।१२)

अयं च राज्ञा स्वयं व्यवहारदर्शने क्रियमाणेऽस्य सहायः "सप्राड्विवाक" इति स्मरणात् । यदा तु राजा कार्यान्तरव्यग्रतया स्वास्थ्याभावेन वा स्वयं व्यवहारदर्शनासमर्थस्तदा तत्प्रतिनिधिः ।

यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम् ।
तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने ॥
सोऽस्य कार्य्याणि सम्पश्येत्सभ्यैरेव त्रिभिर्वृतः ।
सभामेव प्रविश्याग्र्यामासीनः स्थित एव सः ॥

(अ०८।श्लो०९।१०)

इति मनुवचनात् । सभ्यग्रहणादमात्यादिनिवृत्तिः । त्रिग्रहणात्सङ्ख्यान्तरनिवृत्तिः सभ्यानामिति स्मृतिचन्द्रिकाकारः । तत्त्वदृष्टार्थत्वप्रसङ्गादयुक्तमित्युपलक्षणत्वमेव न्याय्यम् ।

अपश्यता ह्यर्थवशाद्व्यवहारान्नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ (अ०२श्लो०३)

इति याज्ञवल्क्यवचनाच्च ।

यदा न कुर्य्यान्नृपतिः स्वयं कार्यविनिर्णयम् ।
तदा तत्र नियुञ्जीत ब्राह्मणं शास्त्रपारगम् ॥
दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम् ।
परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम् ॥

इति कात्यायनस्मरणाच्च । शास्त्रपारगं=बहुशास्त्राभियोगशालिनम् ।
यथा च कात्यायन एव—

एकं शास्त्रमधीयानो न विद्यात्कार्यनिर्णयम् ।
तस्माद्बह्वागमः कार्य्यो विवादेषूत्तमो नृपैः ॥ इति ।

एवंविधब्राह्मणालाभे क्षत्रियं वैश्यं वा प्रतिनिदधीत न शूद्रम् ।
तथा स एव—

यत्र विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥

मनुः—

जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः ।
धर्मप्रवक्ता नृपतेर्नतु शूद्रः कथञ्चन ॥
यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम् ।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥ (८।२०।२१)

व्यासः—

द्विजान्विहाय यः पश्येत्कार्य्याणि वृषलैः सह ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशश्च नश्यति ॥

इदं वचनं स्मृतिचन्द्रिकायाममात्यादिस्थानेऽपि शूद्रं वर्जयेत् किमुत धर्मनिर्णय इत्येवम्परमुक्तम् । दोषातिशयकीर्त्तनात् । कल्पतर्वादिषु तु प्रकरणाद्व्यवहारदर्शन एव शूद्रवर्जकत्वेन लिखितम् । अयं च प्रतिषेधोऽदृष्टार्थ एव । राष्ट्रक्षोभादेरदृष्टद्वारकफलस्यैव सङ्कीर्त्तनात् । चण्डेश्वरेण तु शूद्रस्य धर्मज्ञानेऽपि वेदाविरोधप्रतिसन्धानविरहात्तत्प्रतिसन्धानस्य च सम्यङ्निर्णयोपायत्वात् त्याग इति युक्तिरप्युक्ता । सा वणिगादिष्वप्यतिप्रसक्तेत्यन्वाचयमात्रम् । एते च सर्वे व्यवहारासम्बद्धा विधिप्रतिषेधा अभिषिक्तक्षत्रियाधिकारिकास्तत्स्थानापन्नान्याधिकारिकाश्च । प्राड्विवाकादयस्त्वर्थार्थितया ऋत्विक् स्थानीयाः । "स प्राड्विवाक" इत्यादिना तेषां गुणभावावगमान्नियोगोक्तेश्च ।

राजाभिषेकसंयुक्तो ब्राह्मणो वा बहुश्रुतः ।
धर्म्मासनगतः पश्येद्व्यवहारानतुल्बणः ॥

इति प्रजापतिवचनात् । अत्र राजशब्दोऽवेष्ट्यधिकरणन्यायेन (अ०२

पा०३ अधि०२) क्षत्रियजातिवचनः। अभिषेकसंयुक्त इति वचनात्। स्मृत्यन्तरेऽप्यभिषिक्तक्षत्रियं प्रक्रम्य तदभिधानान्नानाभिषिक्तक्षत्रियस्य नाधिकारः। अतश्च तत्प्रयुक्तशुभाशुभफलयोस्तद्गामितैव। प्राड्विवाकादीनां तु प्राक् प्रदर्शितेभ्यः "अन्यायेनापि तं यान्तम्" इत्यादिवाक्येभ्यो राज्ञाऽनिवारणे परं दृष्टादृष्टदोषभागिता। अनियुक्तानां तु न तत्रापीत्यादि मिताक्षरादौ व्यक्तम्। ब्राह्मणो वेत्यनुकल्पत्वाभिप्रायको वाशब्दो न तुल्यकक्षाधिकारपरः। अनुल्बणः=अनुद्धतः। सभापतिश्च नृपतिरेव। "दुर्गमध्ये गृहं कुर्य्यात्" इत्यादिना बृहस्पत्यादिभिः सभानिर्म्माणतद्रक्षणादेस्तत्र सभ्योपवेशनादेश्च तं प्रत्येव विधानात्।

अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकं चैव गच्छति॥ (मनु०८।१२८)
अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा।
नादण्ड्यो नाम राज्ञोऽस्ति धर्म्माद्विचलितः स्वकात्॥
(या०१।३५८)

इत्यादिभिर्नित्यकामाधिकारयोस्तस्यैव ग्रहणात्। प्रजापालनाधिकाराच्च।

## अथ सभ्याः।

तत्र योगीश्वरः—

श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः।
राज्ञा सभासदः कार्य्या रिपौ मित्रे च ये समाः॥ इति।(२।२)

श्रुतेन=मीमांसाव्याकरणादिश्रवणेन अध्ययनेन च वेदाध्ययनेन सम्पन्नाः। धर्मज्ञाः सत्यवादिनः=सत्यवदनशीलाः। रिपौ मित्रे च ये समाः=द्वेषरागशून्याः। एवम्विधाः धर्मशास्त्रज्ञाः सभासदः=सभायां सदसि यथा सीदन्ति उपविशन्ति तथा दानमानसत्कारै राज्ञा कर्त्तव्याः। सभ्यत्वेन वरीतव्या इत्यर्थः। अतस्तेषामुपादेयत्वात् "स्वाध्यायोऽध्येतव्यः" "यूपं छिनत्ति" "पुरोहितस्तं प्रकुर्व्वीत" इत्यादिवत्सत्यपि कर्मत्वेऽनुद्देश्यत्वात् तद्गतैकत्ववद्बहुत्वं विवक्षितम्। तच्च यद्यपि कपिञ्जलनयेन [अ०११ पा०१ अधि०८) त्रित्वमात्रेणापि चरितार्थं तथापि स्मृत्यन्तरोक्तबहुत्वविकल्पपरम्।

तथाच बृहस्पतिः—

लोकवेदाङ्गधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा॥ इति।

मनुना तु त्रय एवोक्ताः—

यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः । इति । (८।११)

अत्र त्रिभ्योऽन्यूनाः सप्तभ्योऽधिकाश्च न कार्य्या इत्यत्र तात्पर्यम् । सङ्ख्यावैषम्ये तु 'भूयोऽल्पविरोधे भूयसां स्यात् स्वधर्म्मत्वम्' इति न्यायेन विप्रतिपत्तावधिकसङ्ख्यावचनमादरणीयं गुणसाम्ये । तद्वैषम्ये तु 'शतमप्यन्धानां पन्थानं न पश्यति' इति न्यायेन गुणवत्तरवचनमेवेति प्रदर्शनार्थम् ।

यत्तु—

चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ।

सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः ॥ (१।९)

इति योगीश्वरेण विषमसङ्ख्यत्वमपि बहुत्वमपि चानादृतम् । तत्तु पूर्वोक्तानां धर्मकारकज्ञापकहेतूनां सन्देहनिर्णयविषयं, प्रक्रमात् । व्यवहारविषये तु त्र्यवराणां विषमसङ्ख्यानामेव सभ्यत्वं विशेषविधानादित्यवसेयम् । एते च ब्राह्मणा एव । मनुबृहस्पतिभ्यां विप्रपदोपादानात् ।

स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः ॥

धर्म्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥

इति द्विजोत्तमपदस्य च कात्यायनेनोपादानात् ।

नारदः—

राजा तु धार्मिकान् सभ्यान्नियुञ्ज्यात्सुपरीक्षितान् ।

व्यवहारधुरां वोढुं ये शक्ताः पुङ्गवा इव ॥

धर्मशास्त्रेषु कुशलाः कुलीनाः सत्यवादिनः ।

समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥ इति ।

(अ० १ श्लो० ४४।४५)

पुङ्गवा इवेति स्मृतिचन्द्रिकायां पाठः । मदनरत्ने तु सद्गवा इति पठित्वा सद्गवा उत्तमवृषभा इति व्याख्यातम् । कल्पतरावपि सद्गवा इत्येव पाठः । "सब्राह्मणपुरोहितः" "ससभ्य" इति पूर्वोदाहृतकात्यायनवचने ब्राह्मणानां सभ्यानां च भेददर्शनान्नियुक्तानियुक्तविशेषेण गोबलीवर्दन्यायेन सभ्यानां ब्राह्मणानां च राजसहायत्वं व्यहारदर्शनेऽवगन्तव्यम् ।

याज्ञवल्क्यस्यापि—

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।

श्रुताध्ययनसम्पन्ना—

इत्यादि वदतो भेद एवाभिप्रेतः । न च श्रुताध्ययनसम्पन्ना इत्यादि पूर्ववाक्यविहितब्राह्मणानुवादेन विशेषणविधानमात्रमिति युक्तम् ।

तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्यभावासम्भवात् । तात्पर्य्यग्रत्या विशेषणविधिर्न शब्दरीत्येति चेत्, न । विद्वद्भिरित्यनेन श्रुतेत्थादेः पुनरुक्तत्वप्रसङ्गात् कात्यायनसंवादलाभाच्च । भेदकं तु नियुक्तानां राज्ञोऽन्यथाकरणे निवारणमावश्यकम् । "अन्यायेनापि तं यान्तम्" इति पूर्वोदाहृतकात्यायनवचनेनानिवारणे दोषप्रतिपादनात् । अनियुक्तानां त्ववचनान्यथावचनयोरेव दोषो न तु राजानिवारणे ।

अनियुक्तो नियुक्तो वा धर्मज्ञो वक्तुमर्हति ।
दैवीं वाचं स वदति यः शास्त्रमुपजीवति ॥

इति वसिष्ठोक्तेः ।

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन्विब्रुवन् वापि नरो भवति किल्बिषी ॥ (८।१३)

इति मनूक्तेश्च । नियुक्तेषु 'सभा वा न प्रवेष्टव्या' इत्यसङ्गतेः । नियोगस्वीकारे सभाप्रवेशस्यावश्यकत्वादनियुक्तविषयमेवैतन्मनुवचनम् । यत्तु नारदेनोक्तम्—

नानियुक्तेन वक्तव्यं व्यवहारेषु किञ्चन ।
नियुक्तेन तु वक्तव्यमपक्षपतितं वचः ॥ इति । (अ०२श्लो०१)

तत्त्वनङ्गीकृतसभाप्रवेशो यदृच्छया कार्यान्तरवशाद्वा य आगतस्तादृशानियुक्तविषयं बोध्यम् । अन्यथा मन्वादिवचनाविरोधात् । शान्तिकपौष्टिकाद्यर्थमिव व्यवहारदर्शनार्थं पुरोहितोऽपि राज्ञाधिकर्त्तव्य इत्याह व्यासः—

राजा पुरोहितं कुर्य्यादुदीर्णं ब्राह्मणं हितम् ।
श्रुताध्ययनसम्पन्नमलुब्धं सत्यवादिनम् ॥ इति ।

उदीर्णम्=उद्युक्तम् । हितमित्यनेन सभ्यापेक्षयाप्यस्योच्छृङ्खलप्रवृत्तिकराजानिवारणेऽधिको दोषस्तेन प्रसह्यापि तन्निवारणमनेनावश्यं कार्य्यमिति सूचितम् । अत एव वशिष्ठेन राजापेक्षयापि दण्डव्यत्यये तस्य प्रायश्चित्तमाधिकमभिहितम्—

दण्ड्योत्सर्गे राजैकरात्रमुपवसेत् त्रिरात्रं पुरोहितः कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजा । इति ।

पुरोहितमिति चैकत्वं विवक्षितम् । 'यूपं छिनत्ति' 'भार्य्यामुद्वहेत्' इत्यादिवदुपादेयगतत्वात् ।

## अथ सभ्यानां बलाबलम् ।

याज्ञवल्क्यः—

नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ इति ।(२।३०)

नृपेण=राज्ञा । अधिकृताः=व्यवहारदर्शने नियुक्ताः । पूगाः=समूहाः भिन्नजातीनां भिन्नवृत्तीनामेकस्थानवासिनां ग्रामनगरादिस्थानाम् । श्रेणयो=नानाजातीनामेकजातीयकर्मोपजीविनां सङ्घाताः । हेडाबुकताम्बूलिककुविन्दचर्मकारादीनाम् । कुलानि=ज्ञातिसम्बन्धिबन्धूनां समुदायः । एतेषां यत् पूर्वं पूर्वं पाठक्रमेण प्रथमावगतं तत्तत् गुरु बलवत् ज्ञेयम् । नृणाम्=व्यवहारिणाम् । व्यवहारविधौ=व्यवहारनिर्णये कार्य्ये। उत्तरोत्तरनिर्णीतो व्यवहारः कुदृष्टबुद्ध्यार्थिप्रत्यर्थिनोरन्यतरस्यापरितोषे नृपाधिकृतपर्य्यन्तं परावर्त्तते । न तु पूर्वकृत उत्तरोत्तरनिकटे इत्यर्थः । नारदेन पुनर्नृपाधिकृतनिर्णीतो नृपसविधे परावर्त्तत इत्युक्तम् ।

कुलानि श्रेणयश्चैव गणश्चाधिकृता नृपः ।
प्रतिष्ठा व्यवहाराणां पूर्वेषामुत्तरोत्तरम्॥ इति। (अ०१श्लो०७)

अत्र नृपग्रहणं प्राड्विवाकोपलक्षणम् । नृपाधिकृतापेक्षया तस्याधिकत्वात् । तथाच नृपाधिकृतकृतः प्राड्विवाकसविधे, तत्कृतश्च नृपसविधे परावर्त्तत इत्यर्थः । तत्र नृपगमने सोत्तरसभ्येन राज्ञा पूर्वैः सह सपणव्यवहारे निर्णीयमाने यदि कुदृष्टवादी पराजितस्तदा द्विगुणमसौ दण्ड्यः। यदि जयति तदा पूर्वसभ्या दण्ड्या यथाशास्त्रम्। तच्च वक्ष्यते।

ननु पूगादीनां व्यवहारद्रष्टृत्वमेवासम्भावि । कुतस्त्यं बलाबलम् । तथा हि राजनियोगेन वा व्यवहारद्रष्टृत्वं तेषां स्वातन्त्र्येण वा । नाद्यः। सहायत्वेन प्रतिनिधित्वेन च प्राड्विवाकस्य, पुरोहितामात्यसभ्यानां च सहायत्वेनैव नियोगविधानात् । न द्वितीयः । प्रजापालनाधिकृतानामेव व्यवहारदर्शनाधिकारबोधनादन्येषां स्वातन्त्र्यासम्भवात् ।

अथ पूर्व्वोपन्यस्तैः "वणिक्शिल्पिप्रभृतिषु" इत्यादिभिर्व्यासबृहस्पत्यादिवचनैः पूर्व्वोपपादितरीत्या सहायत्वेन नियोगावगमात् वणिगादिव्यवहारद्रष्टृत्वं पूगादीनां राजनियोगेनैवेति मतम्, तन्न । तथा सति राजप्राड्विवाकाभिन्नानां तन्नैरपेक्ष्येण द्रष्टृत्वाभावात्सर्वव्यवहारद्रष्टृत्वं 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन तयोरेवेति कुलादिदृष्टो व्यवहारः परावर्त्तत इत्यनुपपन्नम् । तद्द्रष्टृत्वाभावात् । "शूद्रं यत्नेन वर्जयेत्" इति निषेधात् पूगादीनां च प्रायः शूद्रतदधमप्रतिलोमरूपत्वेन(१) प्रतिनिधितयापि केवलानां तद्द्रष्टृत्वाभावादिति ।

अत्रोच्यते । मास्तु तेषां व्यवहारदर्शने कैवल्यम् । तथापि वणिगादिव्यवहारे तेषामभियोगाद्राजादीनामपि तत्र तत्प्रत्ययेन निर्णायकत्वात्

(१) शूद्रतद्धर्मेति पाठान्तरम् ।

तत्कृतप्राधान्यमादाय तत्कृतत्वव्यपदेशसम्भवात् कुदृष्टबुद्ध्या परावृत्य पुनर्व्यवहारप्रवर्त्तनाय बलाबलं तेषामनेन वचनेनोच्यते । अन्यथास्य वचनस्य निर्विषयतापद्येत । वस्तुतस्तु । "शूद्रं यत्नेन वर्जयेत्" इत्यनेन प्रतिषिद्धप्रतिनिधिभावानामपि पूगादीनां पूगादिव्यवहारे प्रतिप्रसवः प्रतिनिधिभावस्य व्यासादिवचनैरभियोगाविशेषात् क्रियत इति प्राड्विवाकवत् केवलयमपि वक्तुं शक्यत इति न किञ्चिदनुपपन्नम् । बृहस्पतिस्त्वमुमेवार्थं स्फुटयति ।

तथा चाह—

राज्ञो ये विदिताः सम्यक् कुलश्रेणिगणादयः ।
साहसन्यायवर्ज्यानि कुर्य्युः कार्य्याणि ते नृणाम् ॥
कुलश्रेणिगणाध्यक्षाः प्रोक्तनिर्णयकारिणः ।
येषामग्रे निश्चितस्य प्रतिष्ठा तूत्तरोत्तरा ॥
विचार्य्य श्रेणिभिः कार्य्यं कुलैर्यन्न विचारितम् ।
गणैश्च श्रेण्यविख्यातं गणाज्ञातं नियुक्तकैः ॥
कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षोऽधिकः कृतः ।
सर्वेषामधिको राजा धर्म्यं यत्नेन निश्चितम् ॥
उत्तमाधममध्यानां विवादानां विचारणात् ।
उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः ॥ इति ।

कुलादिपदार्था व्याख्याताः । गणशब्दः पूगपर्य्यायः । आदिपदेन सभ्यादिग्रहणम् । नियुक्तकाः=सभ्याः । साहसाख्यं व्यवहारपदम् । युक्तिश्चात्रेयम्-कुलादीनां ज्ञात्यादिरूपाणां दाक्षिण्यादिनान्यथा दर्शनमपि सम्भाव्यत इति कुदृष्टत्वोद्भावकवचनेन राजादीनामसम्भवः । श्रेणीनामुदासीनतया ततो बलवत्ता । पूगानां त्वेकस्थानवासमात्रसम्बन्धेऽपि भिन्नजातितया भिन्नवृत्तितया च ततोऽपि मिथोऽनपेक्षत्वादौदास्याद्बलवत्त्वम् । नृपाधिकृतानां तु ततोऽपि निःसम्बन्धतया राज्ञा परीक्ष्याधिकृतानां राजभयादपि पक्षपातदाक्षिण्याद्यसम्भव इति पूगेभ्यो बलवत्तरत्वम्, प्राड्विवाकस्य पुरोहितामात्यानां च सुतरां प्रागुक्तहेतुद्वयादाधिक्यम् । नृपस्य साक्षादेव प्रजापालनाधिकाराद्विपक्षबाधकीभूतदोषाधिक्यात् "अन्यायं कुरुते यदि पतिः कस्तं निरोद्धुं क्षम" इति न्यायेन प्रजाप्रक्षोभादिदृष्टदृष्टदोषभयादवश्यमपक्षपातिता सम्भवतीति सर्वतो बलवत्तरत्वम् । बुद्धितारतम्यमपि बृहस्पतिवचने स्पष्टमिति ।

अथ केषाञ्चित् सभ्यभिन्नानामपि सभावस्थानं निरूप्यते ।

कात्यायनः—

कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः ।
वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम् ॥

अधिष्ठितं सद इति प्रक्रमात् । कुलभूतैः वृद्धैरित्यर्थः । तेषामुपयोगश्चोक्तस्तेनैव ।

श्रोतारो वणिजस्तत्र कर्त्तव्याः कार्यदर्शिनः । इति ।

गणकलेखकसाध्यपालाख्यराजपुरुषाणामपि सभावस्थानमाह कार्यकथनमुखेन बृहस्पतिः—

नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ ।
हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश ॥
एतद्दशाङ्गं करणं यस्यामध्यास्य पार्थिवः ।
न्यायान् पश्येत्कृतमतिः सा सभाऽध्वरसम्मिता ॥
वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्य्यपरीक्षकाः ॥
स्मृतिर्विनिर्णयं ब्रूते जयदानं दमं तथा ।
शपथार्थे हिरण्याग्नी अम्बु तृषितक्षुब्धयोः ॥
गणको गणयेदर्थं लिखेन्न्यायं च लेखकः ।
प्रत्यर्थिसभ्यानयनं साक्षिणां च स्वपूरुषः ॥
कुर्य्यादलग्नकौ रक्षेदर्थिप्रत्यर्थिनौ सदा ।
एषां मूर्धा नृपोऽङ्गानां मुखं चाधिकृतः स्मृतः ॥
बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणकलेखकौ ।
हेमाग्न्यम्बु दृशौ हृच्च पादौ स्वपुरुषस्तथा ॥ इति ।

अत्राधिकृताध्यक्षशब्दाभ्यां प्राड्विवाको गृह्यते । एतत् करणं=सभारूपं शरीरं दशाङ्गमित्यर्थः । यस्यां=सभायां शरीरतुल्यायां पार्थिवः क्षेत्रज्ञ इव अध्यास्य=अधिष्ठानं कृत्वा । अनेन क्षेत्रज्ञः शरीरमिव साङ्गां सभां राजाधिष्ठायान्तर्य्यामिवत् सर्वचरितानि पश्यंस्तदनुरूपस्य फलस्य भोक्ता दाता च भवतीति सूचितम् ।

स्वपुरुषलक्षणं बृहस्पतिरेवाह—

आकारणे रक्षणे च साक्ष्यर्थिप्रतिवादिनाम् ।
सभ्याधीनः सत्यवादी कर्त्तव्यस्तु स्वपूरुषः ॥
अयं च साध्यपालनामा शूद्र एव ।

तथा च व्यासः—

साध्यपालस्तु कर्त्तव्यो राज्ञा साध्यस्य साधकः ।
क्रमायातो दृढः शूद्रः सभ्यानां च मते स्थितः ॥ इति ।

गणकलेखकौ चेदृग्गुणयुतौ कर्त्तव्यावित्याह—
बृहस्पतिरेव,

शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची।
नानालिपिज्ञौ कर्त्तव्यौ राज्ञा गणकलेखकौ ॥

व्यासोऽपि—

त्रिस्कन्धज्योतिषाभिज्ञं स्फुटप्रत्ययकारकम्।
श्रुताध्ययनसम्पन्नं गणकं कारयेन्नृपः ॥
स्फुटलेखं नियुञ्जीत शब्दलाक्षणिकं शुचिम्।
स्फुटाक्षरं जितक्रोधमलुब्धं सत्यवादिनम् ॥

त्रिस्कन्धं=होरागणितसंहिताख्यत्रिभेदयुक्तं यत् ज्योतिःशास्त्रं तद्वेदिनम्। श्रुताध्ययनसम्पन्नमित्युक्तेर्गणको द्विजातिस्तत्साहचर्य्याल्लेखकोऽपि। नृपः शास्तेति यदुक्तं तदर्थदण्डवधदण्डयो राजकर्तृकत्वनियमार्थम्। वाग्दण्डधिग्दण्डौ तु प्राड्विवाकेनापि कार्य्यौ। दण्डप्राप्तधने वध्यवधे च राज्ञ एवाधिकारात्। वाग्दण्डधिग्दण्डयोस्तु दमनमात्रार्थत्वादनियमः। तथा च—

वादनिर्णयकृद्राजा ब्राह्मणश्च बहुश्रुतः।

इत्यभिधायोक्तं तेनैव,

धिग्दण्डस्त्वथ वाग्दण्डो विप्रायत्तौ तु तौ स्मृतौ।
अर्थदण्डवधावुक्तौ राजायत्तावुभावपि ॥ इति।

प्रतिष्ठिताप्रतिष्ठितसभास्थैस्तु सभ्यैर्निर्णयमात्रं कृत्वोपरमितव्यम्। पूर्ववचनात् क्वचिदपि दण्डे तेषामनधिकारात्। सर्वरञ्जकः सभास्तारोऽपि व्यासेनोक्तः—

अर्थिप्रत्यर्थिनौ सभ्यांल्लेखकप्रेक्षकांश्च यः।
धर्मवाक्यै रञ्जयति स सभास्तारतामियात् ॥

अयं च चातुर्वर्ण्ये यः कश्चित्। विशेषानभिधानात्। स्मृतिचन्द्रिकाकारमते तु "शूद्रं यत्नेन वर्जयेत्" इति यत्नग्रहणाद्दोषातिशयकीर्त्तनाच्च त्रैवर्णिक एव।

## अथादेयानादेयाख्यव्यवहारविवेकः।

याज्ञवल्क्यः—

मत्तोन्मत्तार्त्तव्यसनिबालभीतादियोजितः।
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति ॥ (२।३२)

मत्तो=मदनीयद्रव्येण। उन्मादेन वातपित्तश्लेष्मसन्निपातग्रहसम्भवेनोपसृष्ट उन्मत्तः। आर्त=व्याधिविकलः। व्यसनमिष्टवियोगानिष्टलम्ब-

न्धजनितं दुःखं तद्वान् व्यसनी। बालोऽप्राप्तव्यवहारः। भीतो=भयाकुलः। आदिग्रहणं चित्तविक्षेपकारणानामन्येषामप्युपसङ्ग्रहार्थम्। एतैः योजितः=कृतो निर्णीत इति यावत्। एतैः सह योजित इति वा। एते यत्रार्थिप्रत्यर्थिभावमापन्ना इत्यर्थः। तथा असम्बद्धकृतोऽपि=अर्थिप्रत्यर्थिसम्बन्धरहितैस्तदीयचेष्टितानभिज्ञैः कृतो निर्णीतस्तैः सह कृतो वा। व्यवहारो न सिद्ध्यति=कृतोऽपि निवर्त्तते। प्रवृत्तश्च तादृशैः सह निर्णयत्वेन नोपादेय इत्यर्थः। न चासम्बद्धत्वमुदासीनत्वं सभ्यानां गुण एव। अनुदासीनेषूपाधिसम्भवात्। अत एव "रिपौ मित्रे च ये समा" इत्युक्तमिति वाच्यम्। असम्बद्धपदस्य देशादिसम्बन्धराहित्यपरत्वात्। व्यवहारनिर्णयस्य च देशाचाराद्यनुरोधित्वात्। तथा च तदनभिज्ञनिर्णीतस्तदनभिज्ञार्थिप्रत्यर्थिको वेत्यर्थः पर्यवस्यति। द्वितीयव्याख्याने तु सम्बन्धाभावनिश्चये संशयाभावेन तादृशव्यवहारस्यानुपादेयत्वौचित्यात्।

पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः॥

इत्यस्याप्ययमर्थः। पुरराष्ट्रविरुद्धो=यत्र नगरे राष्ट्रे च या व्यवस्था पुरातनी तद्विरोधापादको व्यवहारो नादेयः। पौरजानपदक्षोभापादकत्वात्। केनचिन्निमित्तेन प्राचीनोऽपि यो राज्ञा स्वराष्ट्रे प्रतिषिद्धः सोऽपि राजाज्ञाभङ्गप्रसङ्गान्नाङ्गीकर्तव्य इति।

यत्तु स्मरन्ति—

गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः।
विरोधे तु मिथस्तेषां व्यवहारो न सिद्ध्यति॥ इति।

तन्न गुरुशिष्यादीनामन्योन्यमात्यन्तिकव्यवहारानुपादानपरं न भवति। तेषामपि धनिकाधमर्णत्वादिना व्यवहारनिर्वृत्तेरप्रत्यूहत्वात्। नच गुरुशिष्यत्वपितृपुत्रत्वादिप्रयुक्तव्यवहारानादेयतापरमिदमिति वाच्यम्। तादृशस्याप्यनादेयत्वे निर्णयाभावप्रसङ्गेन युक्तिविरोधात्। नचाप्रसक्त्यानुवादमात्रमनादेयत्वाभिधानमिति युक्तम्। प्रसक्तेः सत्त्वात्। तथा हि—

भार्य्या पुत्रश्च दासश्च शिष्यो भ्राता सहोदरः।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम्॥

शिष्यशिष्टिरवधेनाशक्तौ वेणुविदलाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्यः।

इत्यादिभिर्मनुगौतमादिवचनैः शिष्यस्य शासनप्रकारविशेषनियमा- स्तदतिक्रमेण गुरुर्यदि महता दण्डेनोत्तमाङ्गे शिष्यं कोपावेशवशात्ता- डयति तदा स्मृत्याचारव्यपेतमार्गेण गुरुणा धर्षितः शिष्यो वैयात्याद् धर्माधिकरणं प्रविशति चेत्तद्दण्डपारुष्यरूपं व्यवहारपदं न भवतीति वक्तुमनर्हम्। तथा दायभागप्रकरणे वक्ष्यमाणात् "भूर्य्या पितामहो- पात्ता" इत्यादिवचनात् पितामहोपार्जितभूम्यादौ पितापुत्रयोः स्वा- म्यसाम्ये यदि पितामहो विषमविभागादि चिकीर्षति तदा पितापुत्रयो- र्दायभागाख्यविवादपदमादाय व्यवहारः प्रसज्यमानो नापह्नोतुं शक्यः। तथा—

दुर्भिक्षे धर्मकार्य्ये च व्याधौ सम्प्रतिरोधके। (याज्ञ०२।१४७)
गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति॥

इति वचनात् दुर्भिक्षादिनिमित्तं विनैव यदि स्त्रीधनं भर्त्ता गृही- त्वा व्ययीकरोति तथा च याच्यमानो विद्यमानधनोऽपि शाठ्यान्न प्रत्यर्पयति तदृणादानपदमादाय जायापत्योरपि व्यवहारप्रवृत्तिः केन निरोद्धुं शक्या। एवं स्त्रीपुंधर्म्माख्यविवादपदोपादानेन तु तयोरेव व्य- वहार आवश्यकः। तस्यानन्यविषयत्वात्। अष्टादशव्यवहारपदान्तर्गणना मन्वादिस्मृतिषून्मत्तप्रलपितमेव स्यात्। स्वामिभृत्ययोस्तु व्यवहारो वेत- नादाननिरूपणे वक्ष्यते। गर्भदासादीनधिकृत्य च—

यश्चैषां स्वामिनं कश्चिन्मोचयेत् प्राणसंशयात्।
दासत्वात् स विमुच्येत पुत्रभागं लभेत च॥ (व्य०प०५।३०)

इति नारदोक्तेस्तादृशानां तेषां दास्यादमोचने पुत्रभागादाने च स्वा- मिना सह विवादो दुर्वारः। तस्मादिदं वचनं गुर्वादिभिः सह शिष्यादीनां व्यवहारकरणे लोकद्वये न श्रेय इह निन्दावहत्वादमुत्र नरकजनकत्वा- दित्येतत्परमेव। राजादिभिस्तु नायमुचितो व्यवहारो लोकद्वयहानि- करत्वादिति निवार्यमाणा अपि शिष्यादयो न परितुष्यन्ति चेत्तदा तेषां यथाशास्त्रं निर्णयकरणमदोष एव। गुर्वादिभिः सह व्यवहारः शि- ष्यादीनामनादेयो राज्ञेत्यभिधानात् पुत्राद्यनिवारणे परं दृष्टादृष्टदोष इति ध्येयम्।

गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ।
एतेषां समवेतानां व्यवहारो न विद्यते॥

इति मदनरत्नधृतबृहस्पतिवचनमप्येतदभिप्रायकमेव। मदनरत्नकल्पतरु-

रत्नाकरेषु तु राजा यथाकथञ्चिदर्थमाकलय्य विवादोपशमं कुर्यात्, नतु प्रतिज्ञोत्तरलेखनपूर्वकं विचारं कुर्य्यादिति व्याख्यातम् । तदसत् । कथञ्चिदर्थानाकलने चतुष्पाद्व्यवहाराप्रवर्त्तनस्यावश्यकत्वात् । पूर्वप्रदर्शिततात्पर्यवर्णनमन्तरा गत्यभावात् । यच्च—

एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च ।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥

इति नारदवचनम् । तस्यापि भिन्नार्थैरनेकैरेकस्य युगपद्व्यवहारो नादेय इत्यर्थः ।

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः । (याज्ञ०२।१८७)

एकं घ्नतां बहूनां च—

इत्यादिस्मरणाद्गणद्रव्यहारिण एकस्य बहुभिस्ताडितस्य वा गणेन ताडयितृभिश्च सहैकार्थे युगपदपि व्यवहारस्य युक्तत्वात् । भिन्नार्थैरपि क्रमेणापि व्यवहारादर्शनेन तत्तदर्थानिर्णयप्रसङ्गात् । प्रतिज्ञादोषा अपि वक्ष्यमाणास्तादृग्व्यवहारानादेयत्व एव पर्य्यवस्यन्ति ।

## अथ सदृष्टकसभापतेः कार्यं निरूप्यते ।

तत्रावेदयितुः प्रश्नप्रकारमाह—

कात्यायनः,

काले कार्य्यार्थिनं पृच्छेत् प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा माभैषीर्ब्रूहि मानव ! ॥
केन कस्मिन् कदा कस्मात् पृच्छेदेवं सभागतम् । इति ।

एवं पृष्टः कार्यं यथाऽऽवेदयेत्तं प्रकारमाह—

याज्ञवल्क्यः,

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ इति । (२।५)

चेत् इत्यनेन यदि केनचिन्निमित्तेन स नावेदयेत्तर्हि न बलाद्वादयेदित्युक्तम् ।

तथा च मनुः—

नोत्पादयेत् स्वयं कार्यं राजा वाप्यस्य पूरुषः । इति । (८।४३)

पितामहोऽपि—

नतु पश्येत् समुत्प्रेक्ष्य स्वयं वा पुरुषेण वा । इति ।

नारदोऽपि—

नतु राजा वशित्वेन धनलोभेन वा पुनः ।
उत्पादयेत्तु कार्य्याणि नराणामविवादिनाम् ॥ इति ।

तथोत्पन्नमपि कार्य्यं कार्यिणा तत्सम्बन्धिना वाऽनिवेदितं कथञ्चिदवगम्यापि न राजादिभिर्बलाद्वादनीयमित्यथाह—

मनुः,

नच प्रापितमन्येन ग्रसेदर्थं कथञ्चन । इति । (८।४३)

अन्येन=असम्बद्धेन । कथञ्चन=रागलोभादिना । अर्थम्=कार्य्यम् । ग्रसेत्= स्ववशं कुर्य्यात् ।

अत एव पितामहः—

न रागेण न लोभेन न क्रोधेन ग्रसेन्नृपः ।
परैरप्रापितानर्थान्नचापि स्वमनीषया ॥ इति ।

परैः=कार्यितत्संबद्धैः । कार्यिसम्बद्धाः पुत्रभ्रात्रादयः ।

यो न भ्राता नच पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥ (अ०२श्लो०२३)

इति नारदवचनात् ।

अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥

इति कात्यायनवचनाच्च । पितामहोऽमुमर्थं स्पष्टमाह—

पिता माता सुहृद्वापि बन्धुः सम्बन्धिनोऽपि वा ।
यदि कुर्य्युरुपस्थानं वादं तत्र प्रवर्त्तयेत् ॥
यः कश्चित्कारयेत्किञ्चिन्नियोगात् येन केनचित् ।
तत्तेनैव कृतं ज्ञेयमनिवर्त्यं हि तत् स्मृतम् ॥ इति ।

अनिवेदितानां दानापवादमाह—

स एव,

छलानि चापराधांश्च पदानि नृपतेस्तथा ।
स्वयमेतानि गृह्णीयान्नृपस्त्वावेदकैर्विना ॥ इति ।

छलान्याह स एव—

पथिभग्नोपलाक्षेपी प्राकारोपरिलङ्घकः ।
निपानस्य विनाशी च तथा चायतनस्य च ॥
परिखापूरकश्चैव राजच्छिद्रप्रकाशकः ।
अन्तःपुरं वासगृहं भाण्डागारं महानसम् ॥
प्रविशत्यनियुक्तो यो भोजनं च निरीक्षते ।
विण्मूत्रश्लेष्मवातानां क्षेप्ता कामान्नृपाग्रतः ॥
पर्य्यङ्कासनबन्धी चाप्यग्रस्थाननिरोधकः ।
राज्ञोऽतिरिक्तवेषं च विधृतः प्रविशेत्तु यः ॥

यश्चापद्वारेण विशेद्वेलायां तथैव च ।
शय्यासने पादुके च शयनासनरोहणे ॥
राजन्यासन्नशयने यस्तिष्ठति समीपतः ।
राज्ञो विद्विष्टसेवी चाप्यदत्ते विहितासनः ॥
वस्त्राभरणयोश्चैव सुवर्णपरिधायकः ।
स्वयंग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्तु यः ॥
अनियुक्तः प्रभाषी च नृपाक्रोशक एव च ।
एकवासास्तथाभ्यक्तो मुक्तकेशोऽवगुण्ठितः ॥
विचित्रिताङ्गः स्रग्वी च परीधानविधूनकः ।
शिरःप्रच्छादकश्चैव च्छिद्रान्वेषणतत्परः ॥
आसङ्गी मुक्तकेशश्च घ्राणकर्णाक्षिदर्शकः ।
दन्तोल्लेखनकश्चैव कर्णनासाविशोधकः ।
छलान्येतानि पञ्चाशद्भवन्ति नृपसन्निधौ ॥ इति ।

राज्ञः शय्यायां शयनं तदीयासनोपवेशनं तत्पादुकारोहणमिति त्रीणि छलानि । वस्त्राभरणयोश्चैवेत्यत्रापि स्वयंग्राहेण परिधायक इति योज्यम् । परिधायकपदं समासान्तर्गतमपि बुद्ध्या निष्कर्षणीयम् । स्मृतिचन्द्रिकाकारस्तु वस्त्राभरणयोश्चेत्यत्रादत्तग्राहक इति शेषमाह । तच्चेयम् । पूर्वव्याख्यानेनोपपत्तौ शेषाध्याहारस्यायुक्तत्वात् । मुक्तकेश इति द्विःपाठो संयतकेशमुण्डितकेशयोः समावेशार्थः । अपराधानाह—

नारदः,

आज्ञालङ्घनकर्त्तारः स्त्रीवधो वर्णसङ्करः ।
परस्त्रीगमनं चौर्य्यं गर्भश्चैव पतिं विना ॥
वाक्पारुष्यमवाच्याय दण्डपारुष्यमेव च ।
गर्भस्य पातनं चैवेत्यपराधा दशैव तु ॥ इति ।

पदान्याह पितामहः—

उत्कृत्ती शस्यघाती चाप्यग्निदश्च तथैव तु ।
विध्वंसकः कुमार्य्याश्च निधानस्योपभोजकः ॥
सेतुकण्टकभेत्ता च क्षेत्रसञ्चरकस्तथा ।
आरामच्छेदकश्चैव गरदश्च तथैव च ॥
राज्ञो द्रोहप्रकर्त्ता च तन्मुद्राभेदकस्तथा ।
तन्मन्त्रस्य प्रभेत्ता च बद्धस्य च विमोचकः ॥
भोगदण्डौ च गृह्णाति दानं विक्रयमेव च ।
पटहाघोषणाच्छादी द्रव्यमस्वामिकं च यत् ॥

राजावलीढं द्रव्यं च यच्चैवाङ्गविनाशनम् ।
द्वाविंशतिपदान्याहुर्नृपज्ञेयानि पण्डिताः ॥ इति ।

एतानि छलान्यपराधपदानि च राजाऽनावेदितान्यपि स्वयं कथञ्चित् ज्ञात्वा विचारयेत् । यदा तु स्वयं ज्ञातुमशक्तस्तदा स्तोभकसूचकद्वारा ज्ञात्वा विचारयेत् ।

स्तोभकसूचकस्वरूपमुक्तम्—

कात्यायनेन,

शास्त्रेण निन्दितं त्वर्थमुख्यो राज्ञा प्रचोदितः ।
आवेदयति यत्पूर्वं स्तोभकः स उदाहृतः ॥
नृपेण विनियुक्तो यः परदोषानवेक्षणे ।
नृपस्य सूचयेज्ज्ञात्वा सूचकः स उदाहृतः ॥ इति ।

शास्त्रेण निन्दितं छलादिकम् । अर्थो मुख्यः प्रयोजनं यस्य धनलाभप्रयोजनक इति यावत् । राजनियोगानपेक्ष एव यः परापराधं राज्ञो निवेदयति स स्तोभकः । यस्तु तन्नियोगेन निवेदयाति स सूचक इत्यनयोर्भेदः॥ आवेदकेन चैवम्विधेन नावेदनं कर्त्तव्यमित्याहोशना—

सशस्त्रोऽनुत्तरीयश्च मुक्तकेशः सहासनः ।
वाहनस्थोऽथ वा स्रग्वी वदन् दण्डमवाप्नुयात् ॥ इति ।

मुक्तकच्छ इति माधवीयपाठः । विनीतवेषो वदेदितितात्पर्य्यम् । तदाऽऽवेदकवचनं लेखकः फलकादिषु राजाद्याज्ञया लिखेदित्याह—

नारदः,

(१)रागादिना यदेकेन कोपितः करणे वदेत् ।
तदोमि(२)ति लिखेत्सर्वं लेखकः फलकादिषु॥इति । व्य०प०श्लो०१८)

करणे=धर्माधिकरणे । ओमित्यनेन यथावेदितं तथैव लिखेदित्युक्तम् ।

लिखनानन्तरकृत्यमाह—

कात्यायनः,

एवम्पृष्टः स यत् ब्रूयात् ससभ्यैर्ब्राह्मणैः सह ।
विचार्य कार्य्यं न्याय्यं चेदाह्वानार्थमतः परम् ॥
मुद्रां वा निक्षिपेत् तत्र पुरुषं वा समादिशेत् ॥ इति ।

न्याय्यं=न्यायादनपेतम् । मया जन्मान्तरेऽस्मै दत्तमृणं तन्न प्रत्यर्पयति इत्यादिवद्विचारायोग्यं यन्न भवतीत्यर्थः । तत्र=तस्मिन्नावेदके=पुरुषं । साध्यपालनामानम् । आह्वानार्थम्=अभियुक्तस्येत्यर्थात् ।

---

(१) रागादीनामितिपाठो मुद्रितनारदस्मृतौ ।
(२) तदादौ तु इति पाठान्तरम् ।

तथा च बृहस्पतिः—

यस्याभियोगं कुरुते तत्त्वेनाशङ्कयाऽथवा ।
तमेवाह्वानयेद्राजा मुद्रया पुरुषेण वा ॥

उत्तरदाने तस्यैवाधिकारादितिभावः ।

कात्यायनः—

अधिकारोऽभियुक्तस्य नेतरस्यास्त्यसङ्गतेः । इति ।

इतरस्य=अभियुक्ततदेकार्थभिन्नस्य । असङ्गतेः=असम्बन्धात् । अभियुक्तानामपि केषाञ्चिदनाह्वानमाह—

स एव,

अकल्पबालस्थविरविषमस्थक्रियाकुलान् ।
कार्य्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ॥
मत्तोन्मत्तप्रमत्तार्त्तभृत्यान्नाह्वानयेन्नृपः ॥

अकल्पो=व्याधितः । विषमस्थः=सङ्कटापन्नः । क्रियाकुलो=नित्यनैमित्तिककर्मकरणव्यग्रः । कार्य्यातिपाती=यस्य तदानीमागच्छतो गुरुतरकार्य्यहानिः । व्यसनी=इष्टवियोगादिजन्यशोकवान् । मत्तो=मदनीयसेवनेन च्युतमतिः । उन्मत्तो=ग्रहाद्याविष्टः । प्रमत्तः=तदानीं सर्वत्रानवधानवान् । आर्तो विषादवान् । भृत्यग्रहणमस्वतन्त्रोपलक्षणम् ।

अत एव—

न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः ॥

इत्यत्रास्वतन्त्रस्त्रीणामाह्वानं प्रतिषिध्य स्वतन्त्राणां तासामाह्वानमाह—

स एव,

तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥ इति ।

नारदः—

निर्वेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथान्येन राजकार्योद्यतस्तथा ॥
गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः ।
शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे ॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती ।
विषमस्थाश्च नासेध्या नचैतानाह्वयेन्नृपः ॥ इति । (अ० १ श्लो० ५२।५३।५४)

निर्वेष्टुकामो=विवाहे उन्मुखः । एते च कालान्तरे आह्वातव्याः । यदा तु तत्कालाह्वानमावश्यकं तदा पुत्रादयस्तत्प्रतिनिधयः ।

इदमाह बृहस्पतिः—

अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम् ।
पूर्वोत्तरं वदेत् बन्धुर्नियुक्तोऽन्योऽथवा नरः ॥

बन्धुः=पुत्रादिः । तस्य परार्थवादित्वाभात् । नियुक्तश्च तस्यादेव । प्रतिनिध्याह्वानेन यदि न निर्वाहः कालातिपातासहत्वं च यत्र च प्रतिनिधिकरणप्रतिषेधस्तत्र यथाकथञ्चिदकल्पाद्याह्वानमाह—

स एव,

कालं देशं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्पादीनपि शनैर्यानैराह्वानयेन्नृपः ॥
ज्ञात्वाऽभियोगं येऽपि स्युर्वने प्रव्राजितादयः ।
तानप्याह्वापयेद्राजा गुरुकार्य्येष्वकोपयन् ॥

गुरुकार्येषु आह्वापयेदिति सम्बन्धः । निमित्तसप्तमी चेयम् । गुरुकार्यनिमित्तमाह्वापयेदित्यर्थः । अकोपयन्=सान्त्वयन् । प्रतिनिधिप्रतिषेधं क्वचिदाह—

कात्यायनः,

ब्रह्महत्यासुरापाने स्तेये गुर्वङ्गनागमे ।
अन्येषु चातिपापेषु प्रतिवादी न दीयते ॥
मनुष्यमारणे स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दातव्यः कर्त्ता तु विवदेत् स्वयम् ॥ इति ।

पुनः स्तेयग्रहणं सर्वथा तत्र प्रतिनिधिप्रतिषेधार्थमिति मदनरत्नाकरः । पूर्वं स्तेयग्रहणं ब्रह्महत्यादिसन्दंशात् सुवर्णस्तेयपरमिति तु वयम् । प्रतिवादी=वादिप्रतिवादिनोः प्रतिनिधिरिदशेषु गुरुकार्येषु न ग्राह्य इत्यर्थः।

राजाह्वानमतिक्रामतो दण्डो—

बृहस्पतिनोक्तः,

आहूतो यत्र नागच्छेद् दर्पाद्बन्धुबलान्वितः ।
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ।

अभियोगभेदेन दण्डभेदस्तु कात्यायनेनोक्तः—

आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥
हीने कर्म्मणि पञ्चाशत् मध्यमे तु शतावरः ।
गुरुकार्य्येषु दण्डः स्यान्नित्यं पञ्चशतावरः ॥

गुरुकार्य्येषु नित्यं पञ्चाशतावर इति विशेषणादापन्नानागमने दण्डो नास्तीति कथितम् ।

व्यासेन तु स्पष्टमुक्तम्—

परानीकहते देशे दुर्भिक्षव्याधिपीडिते ।
कुर्वीत पुनराह्वानं दण्डं न परिकल्पयेत् ॥

आपन्मात्रमत्रागमनासम्भवहेतुभूतं विवक्षितम् । आवेदनाय जिगमिषता कृतावेदनेन वा कार्य्यान्तरवैयग्र्यादिना राजाह्वानविलम्बे राजशपथादिना प्रतिवादिनः प्रतिरोधश्च आसेधापरपर्य्यायः कार्य इत्याह—

कात्यायनः,

उत्पादयति यो हिंसां देयं वा न प्रयच्छति ।
याचमानाय दौःशील्यादाकृष्योऽसौ नृपाज्ञया ॥
आवेद्य तु नृपे कार्य्यमसन्दिग्धे प्रतिश्रुते ।
तदासेधं प्रयुञ्जीत यावदाह्वानदर्शनम् ॥ इति ।

प्रतिश्रुते=विचार्यत्वेन निश्चिते प्रतिज्ञाते च ।

नारदोऽपि—

वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥ इति । (अ०१श्लो०४७)

वक्तव्ये=निर्णीतव्ये ।

आसेधस्य चातुर्विध्यमाह स एव—

स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा ।
चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत् ॥ (अ०१श्लो०४८)

स्थानासेधो=यावन्निर्णयमस्मात् स्थानात्पदमपि न चलितव्यमित्यादिरूपः । कालासेधः=एतावन्तं कालं कार्यान्तरं न करणीयमनिर्णीयाऽमुं व्यवहारमितीदृशः । निर्णयावधि विदेशगमनं न कार्यं त्वयेत्येवंविधः प्रवासासेधः । देशकालावधिरहितो निर्णयमात्रावधिकः स्नानादिकर्मनिरोधः कर्म्मासेधः ।

क्वचिदासेधनिषेधस्तेनैवोक्तः—

नदीसन्तारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ॥ (अ०१श्लो०४९)

आसिद्धस्यापराधाभावमुखेन निषेध उक्तः । दुर्देशेति माधवीयपाठो दुर्देशा दुरवस्थेति तस्यार्थः । अत एवासेधानर्हासेध एव प्रत्युत दण्ड उक्तः कात्यायनेन—

आसेधयंस्त्वनासेध्यं राज्ञा शास्य इति स्थितिः । इति ।

नारदोऽपि—

यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वासनादिभिः।
आसेधयेदनासेध्यं स दण्ड्यो न त्वतिक्रमन्॥(१)

स एव—

आसेधकाल आसिद्ध आसेधं योऽतिवर्त्तते।
स विनेयोऽन्यथाकुर्वन् नासेद्धा दण्डभाग्भवेत्॥ (अ१श्लो०५१)

कात्यायनः—

आसेधयोग्य आसिद्ध उत्क्रामन् दण्डमर्हति। इति।

अनासेध्या उक्तास्तेनैव—

वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिताः।
विषमस्थाश्च ते सर्वे नासेध्याः कार्य्यसाधकैः॥
व्याध्यार्त्ता व्यसनस्थाश्च यजमानास्तथैव च॥ इति।

"निर्वेष्टुकाम" इत्याद्याह्वाननिषेधप्रसङ्गेन अनासेधकमपि नारदवचनं प्रागलेखि।

बृहस्पतिरपि—

शास्त्रोद्वाहोद्यतो रोगी शोकार्त्तोन्मत्तबालकाः।
मत्तो वृद्धोऽभियुक्तश्च नृपकार्योद्यतो व्रती॥
आसन्ने सैनिकः सङ्ख्ये कर्षको वापसङ्ग्रहे।
विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च॥ इति।

सङ्ख्ये=युद्धे। वापसङ्ग्रह इत्येकवद्भावो द्वन्द्वे। तथा च बीजवापे तत्सङ्ग्रहे चेत्यर्थः। स्त्रियः सनाथाश्चेत्ययमपि द्वन्द्वः। स्त्रियः कुलस्त्रियः। अन्यासामाह्वानवदासेधेऽप्यविरोधात्। सनाथाः=परतन्त्राः भृत्यादयः स्वाम्याद्यनुमतिमन्तरेण नासेध्याः। स्त्रिया सह रहसि स्थिताः स्त्रीसनाथास्तत्काले नासेध्या इति तु पौरस्त्याः। आसेधस्य कालान्तरेऽपि सम्भवादनुचितदेशकालावस्थास्वासेधकृतासेध्यपीडातिशयप्रसक्तौ वा नासेधः कार्य्यस्तादृशासेधे चासेद्धा दण्ड्यो नासेध्यस्तदनतिक्रमकरणात्। यथोचितासेधे तदतिक्रमे स दण्ड्य इति सकलवचनतात्पर्यम्। अत एवार्थसिद्धानामपि केषाञ्चिदासेधानासेधनिमित्तानां प्रपञ्चनम्। राजपुरुषाय च साध्यपालनामकायाह्वायकद्वारा भृतिर्दापनीया देशकालाद्यनुसारेणेत्याह—

(१) न दृश्यते मुद्रितनारदस्मृतौ।

कात्यायनः—

एकाहद्व्यहाद्यपेक्षं देशकालाद्यपेक्षया ।
दूताय साधिते कार्ये तेन भक्तं प्रदापयेत् ॥
देशकालवयःशक्त्याद्यपेक्षं भोजनं स्मृतम् ।
आकारकस्य सर्वत्र इति तत्त्वविदो विदुः ॥ इति ।

आकारकस्य=आह्वानकर्त्तुः ।

अभियोक्त्रादीनामुक्तिक्रमः कात्यायनेनोक्तः—

तत्राभियोक्ता प्राग्ब्रूयादभियुक्तस्त्वनन्तरम् ।
तयोरन्ते सदस्यास्तु प्राड्विवाकस्ततः परम् ॥ इति ।

सभ्यप्राड्विवाकयोरिदं पश्चादभिधानमनुयोगादिव्यतिरिक्तप्रत्याकलितादिविषयकवचनपरमनुयोगादीनां प्रागेव तत्कर्त्तव्यत्वादित्यवधेयम् । प्राग्ब्रूयात्=प्रतिज्ञां वदेदित्यर्थः । अभियुक्तस्त्वनन्तरमुत्तरं ब्रूयादिति । वादिप्रतिवादिनोर्धर्माधिकरणं प्राप्तयोः प्रतिभूः ससभ्येन सभापतिना ग्राह्य इत्याह--

याज्ञवल्क्यः,

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये । (अ०२श्लो०१०)

उभयोः=अर्थिप्रत्यर्थिनोः, प्रतिभूः=तत्स्थाने प्रतिभवति तद्वद्भवतीति प्रतिभूर्लग्नकः, कार्यनिर्णये=निर्णयकार्ये साधितफलधनदाने पराजयनिमित्तदण्डदाने जिताद्राजग्राह्यभागदाने च, समर्थः=शक्तो ग्राह्यो व्यवहारद्रष्ट्रा ससभ्येनेत्यर्थः । आहिताग्न्यादिषु पाठात्कार्यशब्दस्य परनिपातार्हस्यापि पूर्वनिपात इति विज्ञानेश्वरः । "नासिकास्तनयोर्ध्माधेटोः" (३।२।२९) इत्यादिसूत्रप्रयोगात्पूर्वनिपातशास्त्रानित्यत्वज्ञापनात् । "तुल्यास्यप्रयत्नं सवर्णम्" (१।१।९) । इत्यादिसूत्रे प्रारम्भो यत्नस्य प्रयत्न इति वदता श्रीमता भगवता महाभाष्यकारेण षष्ठीसमासे षष्ठ्यन्तस्यापि क्वचित्परनिपातज्ञापनाद्वा कार्यशब्दस्य परनिपातार्हस्यापि पूर्वनिपात इति मदनरत्नकारः । तत्त्वनुशासनाभावे ज्ञापकानुसरणमन्यथातिप्रसङ्गादित्ययुक्तम् । केचित्प्रतिभुवो न ग्राह्या इत्याह—

कात्यायनः,

न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा ।
विरुद्धो दण्डितश्चैव संशयस्थो न कुत्रचित् ॥
नैव रिक्थी न रिक्तश्च न चैवात्यन्तवासिनः ।
राजकार्यनियुक्ताश्च येच प्रव्रजिता नराः ॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ।
नाविज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति ॥

रिक्थी=भ्रात्रादिः। रिक्तो=निर्धनः। अत्यन्तवासिनो=नैष्ठिकब्रह्मचारिण इति मिताक्षरादिषु। अन्यत्र वासिन इति पठित्वा देशान्तरवासिन इति मदनरत्ने व्याख्यातम्। अविज्ञातो=विशेषतोऽपरिचितः।

याज्ञवल्क्यः--

भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम्॥ (अ०२श्लो०५२)

नारदः—

साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम्॥ (दाय०प्र०श्लो०३९)

इदमपि दृष्टार्थम्। तथा प्रतिभूभेदात्। तत्कार्यं च ऋणादानप्रस्तावे वक्ष्यते। प्रतिभुवो यद्यलाभोऽर्थिप्रत्यर्थिनोरन्यतरस्य तदा किं कार्यमित्यपेक्षित आह—

कात्यायनः,

अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्तु वादिनः।
स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम्॥

भृत्याय=राजपुरुषाय रक्षकाय साध्यपालाख्याय।
अत्रैकत्वमविवक्षितम्। वादिन इत्युपलक्षणं प्रतिवादिनोऽपि।

## अथ व्यवहारपादाः प्रतिज्ञादयः प्रस्तूयन्ते।

ते चत्वारः।

परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु।
वाक्यन्यायाद्व्यवस्थानं व्यवहार उदाहृतः॥
भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते॥ इति वचनात्।

बृहस्पतिः—

भाषापादोत्तरपादौ क्रियापादस्तथैव च।
प्रत्याकलितपादश्च व्यवहारश्चतुष्पदः॥ इति।

कात्यायनोऽपि—

पूर्वपक्षश्चोत्तरं च प्रत्याकलितमेव च।
क्रियापादश्च तेनायं चतुष्पात्समुदाहृतः॥

बृहस्पतिः—

मिथ्यायां चतुरः पादाः प्रत्यवस्कन्दने तथा।
प्राङ्न्याये च स तु ज्ञेयो द्विपात्सम्प्रतिपत्तिषु॥

तृतीयतुरीयपादयोः सम्प्रतिप्रस्तावसम्भवात् द्विपात्त्वमिति । अत्र विज्ञानयोगिना—"साध्यसिद्धिः ।

तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा । ( २।८ )

इति योगीश्वरोक्तेर्जयपराजयावधारणं तल्लक्षणं चतुर्थपादः" इत्यभिधायोत्तराभिधानानन्तरं "सभ्यानामर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादित्यादिपरामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानुक्तेर्व्यवहर्तृसम्बन्धाभावाच्च न व्यवहारपादत्वम्" इत्युक्तम् । अपरार्कस्तु साध्यसिद्धिपदेन प्रत्याकलितमेव व्याचख्यौ । यदाह—"अत्र च सिद्धिशब्देन सभ्यानामर्थिप्रत्यर्थी जयपराजयावधारणापायभूतप्रमाणस्येदं शास्त्रतः प्राप्नोतीति विचारकाणां परामर्शः प्रत्याकलितादिशब्दवाच्य उच्यते सिद्धिफलत्वात्" इति । प्रागुदाहृतं कात्यायनवचनं च तत्र संवादितवान् ।

पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरस्तथा ।

क्रियापादस्तृतीयस्तु चतुर्थो निर्णयस्तथा ॥

इति बृहस्पतिवचनस्थं निर्णयफलकपरामर्शरूपप्रत्याकलितपरमेव निर्णयपदमुपचारादित्याह । इतरथा पूर्वोदाहृततद्वचनविरोधः स्यात् ।

तत्र (१)प्रतिज्ञावादी कः स्यादित्यपेक्षिते—

नारदः—

राज्ञे कुर्य्यात् पूर्वमावेदनं यस्तस्य ज्ञेयः पूर्ववादो विधिज्ञैः । इति ।

( अ०२श्लो०३८ )

पूर्ववादः=प्रतिज्ञा । पूर्वावेदकस्यैव प्रतिज्ञावादितेत्यस्यापवादमाह—

स एव,

यस्य वाभ्यधिका पीडा कार्य्यं वाभ्यधिकं भवेत् ।

तस्यार्थिवादो दातव्यो न यः पूर्वं निवेदयेत् ॥ इति ।

अर्थिवादः=प्रतिज्ञा ।

बृहस्पतिः—

अहंपूर्विकयायातावर्थिप्रत्यर्थिनौ तथा ।

वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य च ॥ इति ।

मनुरपि—

अर्थानर्थावुभौ बुद्ध्वा धर्माधर्मौ च केवलौ ।

वर्णक्रमेण सर्वाणि पश्येत्कार्य्याणि कार्यिणाम् ॥ (८।२४)

ब्राह्मणादीनां युगपद्धर्म्माधिकरणं प्राप्तानां वर्णानुक्रमेण ब्राह्मण-

(१) पूर्ववादी इति पाठान्तरम् ।

स्यादौ ततः क्षत्रियस्येत्येवमादिक्रमेण चतुष्पाद्व्यवहारः प्रवर्त्तनीयो राज्ञा। पीडाधिक्यकार्य्यगौरवे चेदर्थिप्रत्यर्थिनोरन्यतरस्य तदा न पूर्वावेदनक्रमो नापि वर्णक्रमः। यदा तु सर्वे सवर्णास्तदा आवेदनक्रमः। युगपदावेदने समानवर्णत्वे समानपीडत्वे च ससभ्यसभापतीच्छयेति निर्गलितोऽर्थः।

प्रतिज्ञालक्षणमाह याज्ञवल्क्यः—

प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना।
समामासतदर्द्धाहर्नामजात्यादिचिह्नितम्॥ (अ०२श्लो०६)

अर्थ्यत इत्यर्थः साध्यः सोऽस्यास्तीत्यर्थी तद्विपरीतः प्रत्यर्थी तस्य अग्रतः पुरतो लेख्यं लेखनीयं ससभ्येन सभापतिना। यथावेदितं=पूर्वावेदनमनतिक्रम्य। येन प्रकारेणावेदनसमये स्ववचनं लेखितं तथैव प्रत्यर्थिसमक्षमपि न पुनरन्यथा। तथासत्यन्यवादित्वेन व्यवहारस्य भङ्गप्रसङ्गात्। अन्यवादीत्यादि हीनलक्षणे वक्ष्यते। प्रागेवार्थिना स्वप्रतिज्ञातार्थस्य लिखितत्वादधुना लेखनमनर्थकमित्याशङ्कानिरासायाह—समामासेति। संवत्सरमासपक्षतिथिवारार्थिप्रत्यर्थिनामतदीयजातिभिरादिशब्दोपात्तैश्च द्रव्यसङ्ख्यातज्जातिऋणग्रहणादिस्थानवेलाक्षमालिङ्गादिभिर्यथोपयोगं चिह्नितमिति। कार्य्यमात्रमावेदनकाले लिखितमधुनोपयुक्तविशेषणसहितं लिख्यते इति नानर्थक्यमिति भावः।

आदिशब्दग्राह्याणि च कात्यायन आह—

निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा।
वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः॥
साध्यं प्रमाणं द्रव्यं च सङ्ख्यां नाम तथात्मनः।
राज्ञां च क्रमशो नाम निवासं साध्यनाम च॥
क्रमात्पितॄणां नामानि पीडामाहर्तृदायकौ।
क्षमालिङ्गानि चान्यानि पक्षं सङ्कल्प्य कीर्त्तयेत्॥ इति।

काले=धनप्रयोगादिकालः। वर्षं=पत्रलिखनकालीनं, मासपक्षातिथयोऽपि। सन्ध्यावन्दनादिक्रियोपलक्षितः कालो वेला। प्रदेशः=क्षेत्रादिस्थलविशेषः। विषयोऽन्तर्वेद्यादिदेशः। स्थानं=विवादास्पदीभूतं गृहादि ग्रामादि। आकृतिरवयवसंस्थानविशेषः। वयस्तारुण्यादि। प्रमाणं=निवर्त्तनप्रस्थादि। आत्मनो राज्ञां च नाम क्षेत्रादिभोगकालीनम्। बहुवचनं तदीयपित्रादिप्राप्त्यर्थम्। निवासो=निकटगृहादिः। पितरोऽर्थिप्रत्यर्थिनोः। पीडा=प्रतिभूप्रभृतीनां धनिकादिकृता। आहर्त्ता=प्रतिग्रहादिविषयवस्तुनि

आनेता । दायको=दातृविक्रेत्रादिः । क्षमालिङ्गानि=आत्मीयधनादेः परोपभोगाद्यपराधसहनचिह्नानि । अन्यत् सुबोधम् ।

सङ्ग्रहकारोऽपि—

अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् ।
साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥
प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम् ।
सङ्क्षिप्तं निखिलार्थं च देशकालाविरोधि च ॥
वर्षर्त्तुमासपक्षाहोबेलादेशप्रदेशवत् ।(१)
स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥
साध्यप्रमाणसङ्ख्यावदात्मप्रत्यर्थिनामवत् ।
परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥
क्षमालिङ्गात्मपीड़ावत् कथिताहर्तृदायकम् ।
यदावेदयते राज्ञे तद्भाषेत्यभिधीयते ॥ इति ।

अर्थवत=प्रयोजनवत् । धर्म्मसंयुक्तम्=अल्पाक्षरप्रभूतार्थत्वादिगुणयुक्तम् । परिपूर्णम्=अध्याहाराद्यनपेक्षम् । अनाकुलम्=असन्दिग्धाक्षरम् । साध्यवत्=साधनीयार्थयुतम् । वाचकपदम्=गौणलाक्षणिकपदरहितम् । प्रकृतार्थानुबन्धि=प्रागावेदितार्थेन सह संवादि । प्रसिद्धं=लोकप्रसिद्ध्यनतिक्रान्तम् । अविरुद्धम्=पुरराष्ट्रप्राड्विवाकराजाद्यविरुद्धम् पूर्वापराविरुद्धं व्यावहारिकधर्म्माविरुद्धं च । निश्चितं=संशयरहितम् । साधनक्षमम्=साधनार्हम् । सङ्क्षिप्तं=शब्दाडम्बरशून्यम् । निखिलार्थं=निरवशेषवक्तव्यार्थप्रतिपादकम् । देशकालविरोधि=मध्यदेशीयकमुकक्षेत्रं शरत्कालीनाम्रफलसहस्रं च मदीयमपहृतमित्यादिदेशकालविरोधविधुरम् । परात्मनोः प्रतिवादिवादिनोर्ये पूर्वजाः पित्रादयस्त्रयः अनेके राजानः क्षेत्रादिभुक्तिकालीनास्तेषां नामभिः अङ्कितं युक्तम् । अत्रार्थवत्त्वादीनि देशकालाविरोधित्वमर्थिनाम चेति सर्वत्र भाषायामवश्यम्भावीनि । तैर्विना साध्यनिर्देशासिद्धेः । वर्षादीनि तु यत्र यावन्त्युपयुज्यन्ते तत्र तावन्त्येव निवे-

---

(१) वर्षमासपक्षाः प्रसिद्धाः । अहः=प्रतिपदादिः, वारो दिनं च । बेला=प्रातरादिः, मुहूर्तरूपा च । देशो=मध्यदेशादिः । प्रदेशः=क्षेत्रादेः स्थलविशेषः । स्थानं=वाराणस्यादि । आवसथो=ग्रामादिः, हट्टरूपस्थलविशेषो वा । साध्याख्या=विवादास्पदीभूतवस्तुनाम । जातिः=ब्राह्मणत्वादिः । आकारो=गवाश्वादिगतो वर्णादिविशेषः, गृहक्षेत्रादेः संस्थानविशेषश्च । वयः=गवादेर्वयःपरिमाणं बाल्याद्यवस्थाविशेषः, साध्यप्रमाणसंख्यावत्=साध्यस्य क्षेत्रादेः प्रमाणं निवर्तनादिकम् , संख्या रूपकादीनाम् । कथिताहर्तृदायकम्=कथितौ आहर्तृदायकौ यस्मिन् वचने तत् । आहर्ता=प्रतिग्रहादिना अधिगन्ता, दायको=दाता ।

शनीयानि न सर्वाणि। सर्वत्र अदृष्टार्थत्वप्रसङ्गात्। तत्र वर्षादीनां कालानां वृद्धिधनद्वैगुण्यादिविवादे प्रतिग्रहक्रयादिपौर्वापर्य्यवादे चोपयोगः। देशप्रदेशस्थानानामाहर्तृदायकयोरात्मादिपूर्वजराजादिनाम्नां च स्थावरक्षेत्रादिविवादेषु। साध्याख्याजात्याकारवयसां चौर्य्यास्वामिविक्रियादिविवादेषु। प्रमाणसङ्ख्ययोर्मेयतुलितादिद्रव्यविवादे चौर्य्यादिविवादे च। क्षमालिङ्गानामुपेक्षितपरोक्षभुज्यमानभूम्यादिविवादे। आत्मपीडाया ऋणिकप्रतिभ्वादिविवादे। एवमन्यदप्युन्नेयम्। अत एवाशयादाह—

कात्यायनः,

देशश्चैव तथा स्थानं सन्निवेशस्तथैव च।
जातिः संज्ञाधिवासश्च प्रमाणं क्षेत्रनाम च॥
पितृपैतामहं चैव पूर्वराजानुकीर्तनम्।
स्थावरेषु विवादेषु दशैतानि निवेशयेत्॥ इति।

एतेषां तत्रोपयोगित्वात्।

हारीतोऽपि--

आसनं शयनं यानं ताम्रं कांस्यं मनोमयम्।
धान्यमश्ममयं यच्च द्विपदं च चतुष्पदम्॥
मणिमुक्ताप्रवालानि हीरका रूप्यकाञ्चनम्।
यदि द्रव्यसमूहः स्यात् सङ्ख्या कार्य्या तदैव तु॥
यस्मिन्देशे च यद् द्रव्यं येन मानेन मीयते।
तेन तस्मिंस्तदा सङ्ख्या कर्त्तव्या व्यवहारिभिः॥ इति।

मानसङ्ख्याशब्दावत्रान्योन्योपलक्षणम्। अत्रैतावद्विवक्षितम्। यत्र यावदुपयुज्यते तत्र तावन्निवेश्यं भाषापत्रे। अन्यथा साध्यनिर्देशस्यापूर्वत्वात् पक्षाभासतापत्तेरधिकनिवेशाददृष्टार्थतापत्तेरिति।

कात्यायनोऽर्थत एवाह--

देशकालविहीनश्च द्रव्यसङ्ख्याविवर्जितः।
क्रियामानविहीनश्च पक्षो नादेय इष्यते॥

क्रिया=प्रमाणम्। मानः=साध्यपरिमाणम्। यद्यपि पूर्वोक्तपक्षलक्षणरहितानां पक्षाभासत्वमर्थसिद्धं तथापि नारदादिभिः स्पष्टार्थं प्रपञ्चितम्।

तत्र नारदः—

अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम्।
लेख्यं हीनाधिकं भ्रष्टं भाषादोषा उदहृताः। (अ०२ श्लो०८)

। एतान् स एव विवृतवान्।

(१)अर्थे साधारणेऽप्येकोऽसम्बन्धोऽथानियुक्तकः ।
लेखयेद्यत्तु भाषायामन्यार्थं तं विदुर्बुधाः ॥

गणकार्यमेको वा यद्यसम्बन्धी तदनियुक्तो वा लेखयेद्यस्यां भाषायामित्यर्थः ।

ब्रह्महायमिति द्वेषात् क्रोधाद्वापि वदेत्तु यः ।
साध्यं च मोचयेत्पश्चादर्थहीनां तु तां विदुः ॥

प्रागुक्तं साध्यं वादिना यस्यां त्यज्यते सा भाषार्थहीनेत्यर्थः ।

गणिते तुलिते मेये तथा क्षेत्रगृहादिषु ।
यत्र संख्या न निर्दिष्टा सा प्रमाणविवर्जिता ॥

सङ्ख्यानं सङ्ख्येति व्युत्पत्त्या सङ्ख्याशब्देन गणतोलनमानानां परिग्रहः ।

विद्यया प्राप्तमर्थार्थं लब्धं क्रीतं क्रमागतम् ।
न त्वेवं लिख्यते यत्र सा भाषा स्यादनागमा ॥
समा मासस्तथा पक्षस्तिथिर्वारस्तथैव च ।
यत्रैतानि न लिख्यन्ते लेख्यहीनां तु तां विदुः ॥

अवश्यं यद्यत्र पूर्वोक्तरीत्या लेख्यं तद्रहिता लेख्यहीनेत्यर्थः ।

लेखयित्वा तु तां भाषामनिर्दिष्टे तथोत्तरे ।
निर्दिशेत् साक्षिणः पूर्वमधिकां तां विनिर्दिशेत् ॥

साक्षिण इति प्रमाणोपलक्षणम् । व्युत्क्रमादत्राधिक्यं तेनाप्राप्तकालता फलिता ।

यत्र स्यात्तु यथापूर्वं निर्दिष्टं पूर्ववादिना ।
सन्दिग्धमेव लेख्येन भ्रष्टां भाषां तु तां विदुः ॥

उभयं पूर्वमितिपाठे पक्षद्वयमपि प्रतिज्ञावादिनैव निर्दिष्टं स्यादित्यर्थः ।

कात्यायनः—

अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥

अप्रसिद्धमाह बृहस्पतिः—

न केनचित् कृतो यस्तु सोऽप्रसिद्ध उदाहृतः । इति ।

यथा फालसहस्रकृष्टक्षेत्रमपहृतमिति । 'मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि अप्रसिद्धम्' इत्याह विज्ञानेश्वरः । बृहस्पतिना त्विदमसाध्योदाहरणमुक्तं तच्च वक्ष्यते । निराबाधं=निरुपद्रवम् । अस्मन्मन्दिरे दीप्यमानदीपकप्रकाशेनायं स्वमन्दिरे व्यवहरतीति प्रभृति । निरर्थम्=

(१) मुद्रितनारदस्मृतौ तु एतत्स्थाने 'लब्धव्यं येन यद्यस्मात्स तस्मात्तदवाप्नुयात्' । इत्यादिरूपेणान्यार्थत्वादिलक्षणबोधकानि पद्यान्युपलभ्यन्ते नैतानि ।

अभिधेयहीनं मदीयं कचटतपं जबगडदशं गृहीत्वा न ददातीत्यादि विज्ञानयोगी। बृहस्पतिवचनात्त्वन्यथा निरर्थकपदार्थः प्रतीयते।

यथाह—

स्वल्पापराधः स्वल्पार्थो निरर्थक इतिस्मृतः। इति।

एतस्योदाहरणं स्मृतिचन्द्रिकायाम्—'अहमनेन सस्मितमीक्षितः' 'मामकी शिक्षा तेनापहृता' इत्यादि। निष्प्रयोजनम्=यथा 'अयं देवदत्तोऽस्मद्गृहसन्निधौ सुस्वरमधीते' इत्यादि मिताक्षरास्मृतिचन्द्रिकयोरुदाहृतम्। बृहस्पतिना तथैव लक्षितम्।

कार्य्यबाधाविहीनस्तु विज्ञेयो निष्प्रयोजनः। इति।

स एव प्रकारान्तरेणापि निरर्थनिष्प्रयोजनौ लक्षितवान्।

कुसीदाद्यैः पदैर्हीनो व्यवहारो निरर्थकः।
वाक्पारुष्यादिभिश्चैव विज्ञेयो निष्प्रयोजनः॥

कुसीदमृणदानं तत्प्रभृतिभिश्चतुर्दशभिरर्थविषयव्यवहारैर्हीनो निरर्थकः। वाक्पारुष्यादिभिर्हिंसात्मकैश्चतुर्भिर्हीनो निष्प्रयोजन इत्यर्थः। अष्टादशपदाविषयः पक्षो दुष्ट इत्याशयः।

असाध्यविरुद्धावाह स एव—

ममानेन प्रदातव्यं शशशृङ्गकृतं धनुः।
असम्भाव्यमसाध्यं तं पक्षमाहुर्मनीषिणः॥
यस्मिन्नावेदिते पक्षे प्राड्विवाकेऽथ राजनि।
पुरराष्ट्रे विरोधः स्याद्विरुद्धः सोऽभिधीयते॥ इति।

मिताक्षरायामसाध्यविरुद्धावन्यथोक्तौ। देवदत्तेनाहं सभ्रूभङ्गमुपहसित इत्याद्यसाध्यम्। साधनासम्भवात्। अल्पकालत्वान्न साक्ष्यादिसम्भवो, लिखितं दूरतः,अल्पत्वान्न दिव्यमिति। मूकेनाहं शप्त इत्यादि विरुद्धमिति। पुरराष्ट्रादिविरुद्धमपि विरुद्धपदेन व्याख्याय। "राज्ञा विवर्जित" इत्यादिस्मृत्यन्तरं च तदर्थतयोदाहृतम्। तच्च पूर्वमस्माभिरनादेयव्यवहारनिरूपणे लिखितम्। अन्येऽपि पक्षाभासाः स्मृतिचन्द्रिकोदाहृतवचनोक्ता ज्ञेयाः।

यथा—

भिन्नक्रमो व्युत्क्रमार्थः प्रकीर्णार्थो निरर्थकः।
अतीतकालो विद्विष्टः पक्षोऽनादेय इष्यते॥
यथास्थानानिवेशेन नैव पक्षार्थकल्पना।
शस्यते तेन पक्षः स भिन्नक्रम उदाहृतः॥

व्यत्यस्ताक्षरसन्निवेशो भिन्नक्रम इति यावत्। व्युत्क्रमार्थो=व्यवहितान्वयेनार्थाबोधकः। प्रकीर्णार्थोऽसङ्कलितार्थः।

मूलमर्थं परित्यज्य तद्गुणो यत्र लिख्यते ।
निरर्थकः स वै पक्षो भूतसाधनवर्जितः ॥
भूतकालमतिक्रान्तं द्रव्यं यत्र हि लिख्यते ।
अतीतकालः पक्षोऽसौ प्रमाणे सत्यपि स्मृतः ॥
यस्मिन् पक्षे द्विधा साध्यं भिन्नकालविमर्शनम् ।
विमृष्यते क्रियाभेदात्स पक्षो द्विष्ट उच्यते ॥

भूतसाधनं=मूलभूतं साधनं तेन वर्जितः । भूतकालः=साध्यकालः । अन्यानपि पक्षाभासानाह—

स एव,

अन्याक्षरनिवेशेन अन्यार्थगमनेन च ।
आकुलं तु भवेल्लेख्यं क्रिया चैवाकुला भवेत् ॥
साधनं सह साध्येन निर्दिष्टं यत्र लेखयेत् ।
उक्तक्रमविहीनत्वात् सोऽपि पक्षो न सिद्ध्यति ॥
विरुद्धश्चाविरुद्धश्च द्वावप्यर्थौ निवेशितौ ।
एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत् ॥
परस्परविरुद्धानि यः पदानि निवेशयेत् ।
विरुद्धपदसङ्कीर्णा भाषा तस्य न सिद्ध्यति ॥ इति ।

यत्तु—

पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः ।
अनेकपदसङ्कीर्णः पूर्वपक्षो न सिद्ध्यति ॥

इति स्मरणम् । तस्यायमर्थः। राज्ञा विवर्जितो=राजत्यक्तशुल्कादिविषयकः। ऋणादानादिपदमिश्रितस्तु क्रियाभेदेन युगपन्न सिद्ध्यतीति । 'मदीया रूपका इयन्तोऽनया वृद्ध्यानेन गृहीताः' 'सुवर्णं चेयदस्य हस्ते मया निक्षिप्तम्' 'अयमिदं मदीयक्षेत्रमपहरति' इत्यनेकपदविषयस्यापि पक्षस्य क्रमेणाप्यनुपादेयत्वे तत्त्वनिर्णयाभावप्रसङ्गेन युक्तिविरोधात् ।

बहुप्रतिज्ञं यत्कार्यं व्यवहारेषु निश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥

इति कात्यायनवचनविरोधाच्च । तस्माद्युगपत् पक्षाभासतेत्येव रमणीयम् । अनेकवस्तुसङ्कीर्णस्यापक्षत्वं त्वसम्बद्धम् । हिरण्यं रूपकं वासांसि वानेन मत्तो वृद्ध्या गृहीतान्यस्य हस्ते मया निःक्षिप्तान्यनेनापहृतानि वेत्येकस्मिन्नपि पदे युगपदपीदृशपक्षोपन्यासस्यादुष्टत्वात् । साध्यं च विधिमुखेन प्रतिषेधमुखेन वा पक्षे निक्षेपणीयमित्याह—

कात्यायनः,

न्यायं स्वं यच्छते कर्तुमन्यायं वा करोत्ययम् ।
न लेखयति यस्त्वेवं तस्य पक्षो न सिद्ध्यति ॥ इति ।

न्यायं स्वमित्यनेन ममैतावद्धनमादाय न ददातीत्यादिप्रतिषेधमुखतोपलक्षिता । अन्यायं वेत्यनेन ममेदमपहरतीत्यादि विधिमुखता प्रदर्शिता ।

बृहस्पतिरपि—

प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥ इति ।

प्रतिज्ञादोषैः=अप्रसिद्धार्थोपन्यासादिभिर्मुक्तं रहितम् । ते च दर्शिताः प्राक् । साध्यं=साधनार्हम् । प्रत्यर्थिधर्मविशिष्टधर्मिवचनमिति यावत् । सत्कारणान्वितं=स्फुटदोषरहितहेतुसहितम । निश्चितं=सन्देहाजनकवाक्यरचनायुक्तं नतु स्वयमेव निश्चितम् । विप्रतिपत्तावर्थनिश्चयाभावात् । लोकसिद्धं=व्यावहारिकधर्माविरुद्धम् ।

अत एव मनुः—

सत्या न भाषा भवति यद्यपि स्यात् प्रतिष्ठिता ।
बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात् ॥ (अ०८श्लो०१६४)

प्रतिष्ठिता=अप्रसिद्धत्वादिदोषनिर्मुक्ता, भाषा=प्रतिज्ञा, व्यावहारिकधर्मविरुद्धा चेत् सत्या=ग्राह्या न भवति राजादीनामित्यर्थः । भवदेवस्तु यत्र श्रुतमात्र एव सति लोकानां सम्प्रत्ययस्तल्लोकसिद्धं तेन निर्धनकृतो लक्षादिसङ्ख्यधनाक्षेपो न पक्ष इति व्याचख्यौ । तत् बाधरूपप्रतिज्ञादोषवत्त्वेनैव तादृशपक्षस्य निराकरणात् प्रतिज्ञादोषनिर्मुक्तामित्यनेनैव गतार्थम् ।

अयं च पक्षः प्राक् पाण्डुलेख्यं भूमिफलकादौ कारयित्वा शोधितः पश्चात्पत्रे लेखनीयः ।

तथा च बृहस्पतिः—

अधिकाञ्छातयेदर्थान् न्यूनांश्च परिपूरयेत् ।
भूमौ निवेशयेत्तावद्यावदर्थो विनिश्चितः ॥

शातयेत्=उद्धरेत् । भूमाविति पाण्डुलेख्ययोग्याधारोपलक्षणम् ।

अत एवाह—

स एव,

पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥ इति ।

स्वभावोक्तं=न भयाद्युपाधिनोक्तम् ।

व्यासोऽपि—

पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत् ।
ऊनाधिकं तु संशोध्य पश्चात्पत्रे निवेशयेत् ॥

शोधनं चोत्तरयोग्यतावधि विधेयम् । न ततः परम् । अनवस्थापत्तेरदृष्टार्थतापाताच्च ।

तथा च नारदः—

शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥(ना०स्मृ०नोपलब्धम्)

अवष्टब्धस्य=उत्तरयोग्यस्य । यस्त्वर्थ्यप्रगल्भत्वात् पक्षदोषगुणहानादानाभ्यां शोधयितुमशक्तस्तस्य वक्तव्यार्थं निर्धार्य्य सभ्यैरेव संशोधनीयः ।

यथाह बृहस्पतिः—

अभियोक्ताऽप्रगल्भत्वाद्वक्तुं नोत्सहते यदा ।
सभ्यैस्तु शोधनं तस्य कार्य्यमर्थानुरूपतः ॥ इति ।

यदि भाषामशोधयित्वैवोत्तरं दापयन्ति सभ्यास्तदा 'रागाल्लोभाद्भयाद्वा' इत्याद्युक्तदण्डेन सभ्यान् दण्डयित्वा पुनः प्रतिज्ञालेनपूर्वकं व्यवहारः प्रवर्त्तनीयो राज्ञेति तात्पर्यम् ।

यदा त्वर्थिप्रत्यर्थिनोर्लेखनापाटवाद्राजकीयलेखकद्वारा तौ भाषोत्तरे लेखयतः । स चान्यतरपक्षपातेनान्यथा लिखत्यन्यतरत् । तदा स राज्ञा चौरवद्दण्ड्य इत्याह—

कात्यायनः,

अन्यदुक्तं लिखेदन्यद्योऽर्थिप्रत्यर्थिनां वचः ।
चौरवत्त्रासयेत्तं तु धार्मिकः पृथिवीपतिः ॥ इति ।

अत्र त्रासयेदित्युक्तेस्त्रासनमात्रं विधीयत इति नाशङ्कनीयम् । चौरवदिति दृष्टान्तासङ्गतेः । तस्माद्दण्डकृतस्त्रासनविशेषो लक्षणया विधीयते । तत्प्रयोजनं पुनस्तादृशकार्ये वृत्तिनिरोधः । स्मृतितत्त्वे तु चौरवच्छासयेदित्येव पठितम् । एवमुक्तलक्षणः पक्षश्चतुर्विधः ।

तथाच बृहस्पतिः—

शङ्काभियोगस्तत्त्वं च लभ्येऽर्थेऽभ्यर्थनं तथा ।
वृत्ते वादे पुनर्न्यायः पक्षो ज्ञेयश्चतुर्विधः ॥
चतुर्विधः पूर्वपक्षः प्रतिपक्षस्तथैव च ।
चतुर्धा निर्णयः प्रोक्तः कैश्चिदष्टविधः स्मृतः ।
भ्रान्तिः शङ्का समुद्दिष्टा तत्त्वं (१)तत्त्वार्थदर्शनम् ।
लभ्येऽर्थेऽभ्यर्थनं मोहस्तथा वृत्ते पुनः क्रिया ॥ इति ।

---

(१) नष्टार्थदर्शनमिति पाठान्तरम् ।

नारदः—

सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता ।
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत् ॥ (अ०१श्लो० ६)

उत्तरः=उत्कृष्टो विजयीति यावत् । यद्यपि न्यायाख्यपञ्चावयववाक्यान्तर्गतं प्रतिज्ञास्वरूपं साध्यधर्मविशिष्टधर्मिवचनमात्रं, तथाप्यत्र "सत्कारणान्वितम्" इत्युक्तत्वात् सहेतुकसाध्यधर्मविशिष्टधर्मिवचनं प्रतिज्ञेति गम्यते । हेतोश्च पक्षभूताऽधमर्णादिनिष्ठत्वं तदनङ्गीकृतं क्रियापादेन सिद्ध्यतीति ध्येयम् । तथा सति स्थापनानुमानप्रयोग एव प्रतिज्ञा । प्रतिस्थापनानुमानप्रयोग एव चोत्तरमत्र पर्यवस्यति । अतएव स्मृत्युक्ता उभयाभासा यथायथमर्थान्तरमप्यननुयोज्यानुयोगासिद्ध्यादि निग्रहस्थानहेत्वाभासादिष्वेव पर्यवस्यन्ति । ततश्च त्वं शतं मह्यं धारयसि ऋणत्वेन मत्तो गृहीततावद्धनत्वादिति भाषाशरीरम् । न धारयाम्यगृहीतत्वात् प्रतिदत्तत्वाद्वेत्याद्युत्तरशरीरम् । अत्र च न साधुशब्दनियमस्तदनभिज्ञानामप्यर्थिप्रत्यर्थित्वदर्शनात् । बोधकैस्तु येषां ये शब्दाः प्रसिद्धास्तैरेव भाषादि लेखनीयम् । प्रतिवादिसभ्यादीनां तदनभिज्ञत्वे भाषाद्वयाद्यभिज्ञैस्ते बोधनीया इत्याद्यूह्यम् । अत एव विष्णुधर्मेऽध्यापनेऽपि साधुशब्दनियमानादर उक्तः ।

संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः ।
देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतः ॥ इति ।

इति प्रतिज्ञापादो निरूपितः ।

---

## अथोत्तरपादो निरूप्यते ।

तत्र निर्दोषायां भाषायां निश्चिततदर्थेन प्रत्यर्थिनोत्तरं देयम् ।

तथा च बृहस्पतिः—

विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशोधिते ।
प्रतिज्ञार्थे स्थिरीभूते लेखयेदुत्तरं ततः ॥ इति ।

विनिश्चिते=संशयरहितज्ञानगोचरीकृतार्थे । विशोधितेऽत एव स्थिरीभूते । लेखयेदिति वाचयेदित्यस्याप्युपलक्षणम् । वाचनपूर्वकत्वाल्लेखनस्य । इदं चार्थिसन्निधावेव लेखनीयमित्याह—

याज्ञवल्क्यः,

श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ । ( अ० २ श्लो०७ )

श्रुतो भाषार्थो येन प्रत्यर्थिना सः श्रुतार्थस्तस्येति कर्त्तरि षष्ठी । तेन लेख्यमित्यर्थः । पूर्वावेदकोऽर्थी । पूर्वपक्षादुत्तरत्र उपन्यस्यत इत्युत्तरं पूर्वपक्षोपमर्दकमुच्यते ।

यथाहतुर्नारदप्रजापती—

पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥ इति ।

पक्षस्य व्यापकं=निराकरणसमर्थम् । सारं=न्याय्यम् । असन्दिग्धं=सन्देहजनकनानार्थादिशब्दरहितम् । अनाकुलं=पूर्वापराविरुद्धम् । अव्याख्यागम्यम्=अप्रसिद्धदेशभाषाभिधानेनाप्रसिद्धार्थपददुःश्लिष्टविभक्तिसमासव्यवहितयोजनाव्यवधारणकल्पनाविपरिणामसाध्याहाराभिधानेन(१) वा यत् क्लिष्टव्याख्यानेन दुर्गमार्थं न भवति ।

हारीतोऽपि—

पूर्वपक्षार्थसम्बद्धमनेकार्थमनाकुलम् ।
अनल्पमव्यस्तपदं व्यापकं नातिभूरि च ॥
सारभूतमसन्दिग्धं स्वपक्षैकान्तसम्भवम् ।
अर्थिश्रव्यमगूढार्थं देयमुत्तरमीदृशम् ॥ इति ।

अनेकार्थम्=अनेके ऽर्था उपयुक्ता विशेषणादयो यत्र तत्तथा । न त्वनेकार्थपदयुक्तम् । तस्य सन्दिग्धत्वेन दुष्टत्वात् । अनाकुलम्=उक्तार्थम् । उपयुक्तशब्दैरन्यूनमनल्पम् । अव्यस्तानि व्यत्यासयोजनानपेक्षाणि पदानि यत्र तदव्यस्तपदम् । व्यापकं=परिपूर्णार्थम् । नातिभूरि=अनुपयोगिविस्तररहितम् । सारत्वासन्दिग्धत्वे व्याख्याते । स्वपक्षैकान्तसम्भवम्=स्वपरिगृहीतपक्ष एवैकान्तेन नियमेन सम्भवति न कथञ्चिदपि पक्षान्तरकक्षामवगाहते तत् । अन्यद्व्यक्तार्थम् ।

शाठ्यदर्पादिभिर्यदोत्तरं न ददाति प्रतिवादी तदा कथञ्चित् सभ्यप्राड्विवाकेन राज्ञा उत्तरं दापनीयमित्याह—

बृहस्पतिः,

पूर्वपक्षे यथार्थं तु न दद्यादुत्तरं तु यः ।
प्रत्यर्थी दापनीयः स्यात् सामादिभिरुपक्रमैः ॥

---

(१) अप्रसिद्धार्थेति । अप्रसिद्धार्थपदम्=अप्रसिद्धार्थपदप्रयोगः । दुःश्लिष्टौ दुःसम्बन्धौ दुष्टाविति यावत्, यौ विभक्तिसमासौ तौ, व्यवहितयोजना=व्यवहितान्वयः, व्यवधारणकल्पना=निश्चयरहितकल्पना, विपरिणामो=वचनादिविपरिणामः, अध्याहारेण सह वर्तत इति साध्याहारं साकाङ्क्षम् । ते च तच्च तानि । तैरभिधानं कथनं तेनेत्यर्थः ।

प्रियपूर्वं वचः साम भेदस्तूभयदर्शनम् ।
अर्थापकर्षणं दण्डस्ताडनं बन्धनं तथा ॥
उभयैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ॥
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ।
उभयैः=मृदुभिस्तीव्रैश्चोपायैरित्यर्थः ।

कात्यायनः—

यथार्थमुत्तरं दद्यादयच्छन्तं च दापयेत् ।
मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ॥
उत्तरान्तर्गतं वापि तद्ग्राह्यमुभयोरपि ।

मोहादिवशात् पूर्ववादिना प्रागनुक्तमपि उत्तरान्तर्गतम्=उत्तराभिधानसमय एव प्रोच्यमानम् , उभयोः=उत्तरवादिव्यवहारदर्शिनोः, ग्राह्यं=ग्रहणार्हं भवतीत्यर्थः । उत्तरलेखनोत्तरं तु न ग्राह्यमित्यर्थसिद्धमपि स्पष्टार्थमाह—

स एव,

उभयोर्लिखिते वाच्ये प्रारब्धे कार्य्यनिर्णये ।
अयुक्तं तत्र यो ब्रूयात् तस्मादर्थात् स हीयते ॥ इति ।

अथोत्तरभेदाः ।

तत्र कात्यायनः—

सत्यं मिथ्योत्तरं चैव प्रत्यवस्कन्दनं तथा ।
पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥ इति ।
सत्यं=सम्प्रतिपत्तिः । प्रत्यवस्कन्दनम्=कारणोत्तरम् ।

व्यासः—

साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ।

यथा रूपकशतं मह्यं धारयसीत्युक्ते सत्यं धारयामि दास्यामीति च । यद्यपि भाषार्थस्यानिराकरणादनुत्तरत्वमस्याभाति । तथाप्यभियोक्त्रा साध्यतयोपन्यस्तस्य सिद्धत्वोपन्यासात् साध्यत्वनिराकरणादुत्तरत्वमस्यावसेयम् । तथा च स्मरणम् ।

अनुक्त्वा कारणं यत्र पक्षं वादी प्रपद्यते ।
प्रतिपत्तिस्तु सा ज्ञेया कारणे दूषणं पृथक् ॥

कारणं=परोक्तहेतुदूषणम् । वादी=प्रत्यर्थी । कारणे=कारणोत्तरे । पृथक्दूषणं भवेदित्यर्थः । नचास्याः सिद्धसाधनत्वेन सदुत्तरत्वे पूर्ववादिनो निग्रहस्थानं स्यादिति शङ्क्यम् । इष्टापत्तेः । पराजयेऽपि पूर्ववादिनो दण्डः परं न भवति । अपराधाभावात् । वाचस्पतिस्तु तत्त्वनिर्णिनीषुकथायाः

सिद्धसाधनस्यादोषत्वान्न निग्रहोऽपीत्याह । न चैवं धर्माधिकरणप्रवेशपक्षलिखने पूर्ववादिनो वृथेति वाच्यम् । प्राग्विप्रतिपन्नस्यानुतापवतः प्रत्यर्थिनः पश्चादपि सम्प्रतिपत्तिसम्भवात् । सन्धिकरणोत्तरमिव । सन्धिकरणं च निरूपयिष्यते ।

मिथ्योत्तरं तु न धारयामीत्यादि । यथाह—

कात्यायनः,

अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् ।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥ इति ।

व्यासोऽपि—

मिथ्या स्यात् साध्यनिह्नुतिः । इति ।

साध्यस्य=सहेतुकसाध्यस्य शब्दतोऽर्थतो वा निह्नवो मिथ्योत्तरमित्यर्थः । केवलसाध्यनिह्नवस्य सम्प्रतिपत्तिभिन्नोत्तरान्तरेष्वपि प्रसङ्गादिति वाचस्पतिः । तच्चिन्त्यम् । सहेतुकसाध्यनिह्नवस्य तत्रापि सम्भवात् । तस्मादपह्नवमात्रं कारणाद्यसम्वलितं मिथ्योत्तरम् । कारणप्राङ्न्यायसम्वलितं तूत्तरान्तरमिति वयम् । एतच्च मिथ्योत्तरं चतुर्विधम् ।

मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः ।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम् ॥

इति व्यासस्मरणात् । अत्र च मिथ्यैतदिति कण्ठतोऽपह्नवो न जानामीत्यादिरर्थतः । अत एवाह—

कात्यायनः,

श्रुत्वा भाषार्थमन्यस्तु यदि तं प्रतिषेधति ।
अर्थतः शब्दतो वापि मिथ्या तज्ज्ञेयमुत्तरम् ॥ इति ।

अत्र वाचस्पतिः—भाषार्थस्य सहेतुसाध्यस्य मिथ्योत्तरेण निह्नवेऽपि हेत्वपह्नवांश एव स्वरूपासिद्धिरूपस्थापनादोषः । साध्यापह्नवांशस्तु कारणोत्तरादिव्यवच्छेदकतयाऽत्रान्तर्भाव्यते । तथा हि । गृहीतत्वाद्धारणे भाषावादिना साध्य उपन्यस्ते कालदेशविशेषागर्भायां तस्यां 'मया न गृहीतम्' इति हेत्वभावः शब्देनैवोच्यते । कालविशेषगर्भायां तु 'तदा नाहं जात' इत्यर्थात्, देशविशेषगर्भायामपि 'तदा तत्राहं नासम्' इत्यर्थादेव । सर्वस्यामपि तस्यां 'न जानामि' इत्यनेनार्थादेव हेत्वभावप्रतिपादनम् । अत एवार्थिकभाषाप्रतिषेधस्त्रिविधः सापदेशमिथ्योत्तरम् । आद्यस्तु केवलमिथ्योत्तरमिति । न चैवं ग्रहणास्कन्दनयोरसन्निधानाजन्मनोरेव प्रतिपाद्यतास्तु किमार्थिकाग्रहणपर्यन्ततात्पर्येणेति वाच्यम् । यद्यपि तदा जातस्तत्र संश्च तथापि न गृह्णाति तादृशां सर्वेषां ग्रहणाभाववतः

सन्निधानजन्ममात्रस्य ग्रहणाव्याप्यत्वाद्व्यापकत्वाभावात् व्याप्यग्रहणाभावासिद्धेस्तत्कालीनजन्माभावसन्निधानाभावयोरेव ग्रहणाभावसाधकता। न ह्यनुत्पन्नो गृह्णात्यसन्निहितो वेति सम्भवतीति तात्पर्य्यम्। तत्तात्पर्यावश्यम्भवात्। अत एव सर्वस्मिन्नपि मिथ्योत्तरे स्थापकस्य ग्रहणस्थापनाय क्रियोपन्यास इत्याह।

तत्तुच्छम्। साध्यानालिङ्गितहेत्वभावमात्रोपन्यासेऽर्थान्तरस्वापातात्। हेतुत्वस्य साध्यनिरूपितत्वेन तदभावमुखेन साध्याभावव्यवस्थान एव स्थापनाद्दूषाणासम्भवात्। उत्तरान्तरव्यवच्छेदमात्रस्यादृष्टार्थतापत्तेश्च। यत्र तु पूर्ववादिनः पित्रर्णादिग्रहणहेतुकधारणादिप्रतिज्ञा तत्राज्ञानद्वारकः साक्षाद्वा तदपह्नवो मिथ्योत्तरम्। तत्कालाजन्मतद्देशाऽसन्निधानयोरेतदीययोस्तदीयग्रहणाभावासाधकत्वात्। अत एव प्रकाशस्वामिकृये नाष्टिकेनादत्तत्वादिकमपि प्रमापणीयमित्यभियुक्तस्मरणमपि सङ्गच्छते। अन्यथा दूषणदत्तत्वाद्यनुपन्यासाददत्तत्वादिप्रमापणमधिकं स्यात्। तेन तत्प्रतिपादने दत्तत्वादेर्नाष्टिकोक्ततत्स्वत्वास्कन्दकत्वादस्य प्रत्यवस्कन्दनरूपत्वात्तस्यैव तत्साधनापत्तौ 'मिथ्या क्रिया पूर्ववाद' इति विरुद्ध्येत। इष्टापत्तावुच्यमानायां मिथ्योत्तरभेदत्वोक्तिविरोधात्।

प्रत्यवस्कन्दनं नाम 'सत्यं गृहीतं, परंतु प्रतिदत्तं प्रतिग्रहलब्धं वा' इत्यादि।

यथाह नारदः—

अर्थिना लेखितो योऽर्थः प्रत्यर्थी यदि तं तथा।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं स्मृतम्॥ इति।

( नार० स्मृ० नोपलब्धम् )

प्रपद्य=स्वीकृत्य। यद्यपि भाषार्थस्य न सर्वांशस्वीकारोऽत्र। सम्प्रतिपत्तित्वापत्तेः। कारणोक्त्यानर्थक्यापाताच्च। तथा च ग्रहणेन धारणम्। तेन च प्रत्यर्पणीयत्वे साध्यत्वेन प्रतिज्ञातेन ग्रहणांशमभ्युपेत्य प्रतिदानेन प्रतिग्रहादिना वाऽधारणं प्रत्यर्पणीयत्वाभावं प्रत्यर्थी साधयति। मिथ्योत्तरादत एवास्य भेदः। तत्र भाषार्थस्य सर्वस्यापह्नवादत्र त्वेकदेशानपह्नवात्। प्राङ्न्याये तु यथायथमुभयसम्भव इति ततोऽपि भेदः। एतच्च तत्र विवक्ष्यामः। यत्तु प्राङ्न्यायो धार्यमाणत्वादिसामान्याभावज्ञापकः। कारणोत्तरं तु तद्व्यक्तसञ्ज्ञापकमिति तयोर्भेद इति वाचस्पतिनोक्तम्। तत्तुच्छम्। प्राङ्न्यायेनापि कारणमुखेनोभयोरपि ज्ञापनसम्भवात्। तस्मादस्मदुक्तमेव भेदकं ज्यायः। त्रिविधं चैतत्। स्थापनावि-

कबलं तत्समबलवत् तदूनबलं चेति । उदाहृतमेवाधिकबलम् । तत्र हि मह्यमयं शतस्य धारयः प्रतिदेयतया मत्तो गृहीततावद्धनत्वादित्यादि भाषायां निर्यातनादिस्थले व्यभिचारवारणायेदानीन्तनधारणाद्यर्थापत्तिगम्यमपरिशोधितत्वादिविशेषणमर्थिनोऽवश्यं हृदिस्थमास्थेयम् । तथा च प्रतिदानाद्युपन्यासे न तदसिद्धिः प्रत्यर्थिनोक्ता भवतीति ध्येयम् ।

कात्यायनोऽपि स्पष्टमाचष्टे—

अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा
प्रपद्य कारणं ब्रूयादाधर्यं भृगुरब्रवीत् ॥ इति ।

आधर्यम्=अधरत्वं दुर्बलत्वमिति यावत् । पूर्वपक्षस्येति शेषः । पूर्वपक्षदौर्बल्य उत्तरस्य प्राबल्यमर्थत उक्तम् ।

अत एव नारदः—

आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् ।
विवादे साक्षिणस्तत्र प्रष्टव्याः पूर्ववादिनः ॥ ( ऋणा० प्र० श्लो० १६४ )

अत्र साक्षिग्रहणं प्रमाणमात्रोपलक्षणम् ।

प्रदीपकृतस्तु धार्यमाणत्वे कारणं=गृहीतत्वं प्रपद्य ब्रूयात् परिशोधनादिकमिति शेषः । अपरिशोधितत्वादिकं च स्थापनाहेतुविशेषणं कण्ठरवेण ज्ञेयमित्याहुः । तन्न । व्यवहितयोजनाध्याहारयोर्विना कारणमनुचितत्वात् । कारणं प्रपद्येत्यन्वये तमित्यस्य साकाङ्क्षत्वेनानन्वयप्रसङ्गाच्च ।

अन्ये तु प्रपद्य=स्थापनाहेतुमभ्युपेत्य यत्तद्विपरीतवचनं तत्कारणोत्तरमिति त्रितयपरमेवेदं वचनमिति वदन्ति ।

अत्राधिकसमबलकारणोत्तरयोः स्थापनाया आधर्यासम्भवेनैतद्वाक्यस्य त्रितयविषयत्वायोग इति वाचस्पत्युक्तं दूषणं कारणोत्तरस्य त्रैविध्यं तदुक्तं खण्डयद्भिरनुपदमेवोद्धरिष्यते । समबलम्—'इयं भूर्मदीया क्रमागतत्वात्' इत्येकेन भाषितेऽपरोऽपि तदेवोत्तरयति सत्प्रतिपक्षरीत्येति । दुर्बलं कारणोत्तरं तु 'मयेयं विंशतिवर्षावधि भूमिरमुकस्वामिकाहिता' इतिभाषायां स्वामिनैव पञ्चवर्षावधि मय्याहितत्वान्मदीयेति सत्प्रतिपक्षरीत्योत्तारितम् । "आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा" इति वचनादिदं दुर्बलम् । अत्र चाधिकबले प्रतिवादिनः प्रमाणोपन्यासाधिकारः प्रबलत्वसाधनाय । अन्ययोस्तु पूर्ववादिन एव ।

गुरावभिहिते हेतौ प्रतिवादिक्रिया भवेत् ।
दुर्बले वादिनः प्रोक्ता तुल्यैः पूर्वक्रियैव च ॥ इति स्मरणात् ।

कारणात् पूर्वपक्षोऽपि उत्तरत्वं प्रपद्यते ।
अतः क्रिया सदा प्रोक्ता पूर्वपक्षप्रसाधिनी ॥ इति,

कारणात्=बलवत्त्वात् । उत्तरत्वमुत्तमत्वम् । पूर्वपक्षबलवत्त्वहेतुकां पूर्ववादिनः क्रियां प्रतिपादयता कात्यायनेनोत्तरस्यापि बलवत्त्व उत्तरवादिनः क्रियेत्युक्तं भवति । इदं वाचस्पतिमिश्रोक्तं व्यवहारतत्वकाराभ्युपेतं च कारणोत्तरत्रैविध्यमयुक्तम् । वचनानारूढत्वाद् युक्त्यभावाच्च । तथा हि "अर्थिना लेखित"इत्यादि नारदवाक्यस्याधिकबलकारणोत्तरविषयत्वे न किञ्चिद्बीजमस्ति । प्रत्युत तस्य तन्मात्रविषयत्वे त्रितयसाधारणकारणोत्तरस्वरूपाभिधायकवचनात्तत्सामान्यस्वरूपाज्ञानप्रसङ्गः । भवताप्येतस्य त्रितयसाधारण्याभ्युपगमाच्च । समानबलोनबलविषयवचनान्तराभावाच्च ।

यच्चोच्यते कात्यायनीये"अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा। प्रपद्य कारणं" इत्यादि वाक्ये, नारदीये वा "आधर्यं पूर्वपक्षस्य" इत्यादि वाक्ये तावदाधर्यशब्दोपादानात्समोनबलकारणोत्तरे विषयीभवितुमर्हे । तदेकवाक्यतया "अर्थिना लेखितो योऽर्थः प्रत्यर्थी" इत्यपि नारदवाक्यमधिकबलकारणोत्तरविषयमेवेति । तदबुद्धिपूर्वकम् । तथा सति नारदीयमेव वचनद्वयमनर्थकं प्रसज्यत इति सामान्यविशेषविषयत्वमेव तस्याभ्युपगन्तव्यत् । अस्त्वेवं तथा सति सामान्यलक्षणानभिधानदोषोऽपि प्रतिक्षिप्तः । आधर्येऽपि तव वचनयोस्तूक्तयुक्त्योनबलमात्रविषयत्वम्। समबलातिबलयोस्त्वाधर्य्याभावात्तदाक्षिप्तं लक्षणान्तरमूह्यामिति सर्वं सुस्थमिति चेत् , न । आधर्य्यमुपमर्दकत्वं वाद्युपन्यस्तग्रहणाङ्गीकारेणाधारणादिकारणप्रतिदानाद्युपन्यासे तस्यैव साध्यत्वाविर्भावे तदुक्तग्रहणधारणयोः प्रमाणोपन्यासानपेक्षत्वमेव । इदमेवाभिप्रेत्य कल्पतरौ लक्ष्मीधरोऽप्याह—"आधर्य्यं प्रमाणानर्हत्वं पूर्वपक्षस्येत्यर्थ" इति । अत एव "कारणे प्रतिवादिनि"इति सामान्यत एव कारणोत्तरे प्रतिवादिन एव क्रिया वक्ष्यते । तेन यत् त्रितयसाधारणत्वमस्य वचसोऽन्यमतमुपन्यस्याधर्य्योक्तिविरोधाद्दूषितम् । तदप्ययुक्तम् ।

वस्तुतस्तु प्रमाणोपन्यासे तत्सामीचीन्यासामीचीन्यकृतं त्रैविध्यमुत्तरान्तरेऽपि पारमार्थिकं सम्भवत्येवेति कारणोत्तरमात्रे तदभिधानमनर्हम् । ततः पूर्वं तत्रापि दुर्ज्ञेयम् । स्वस्वाभिमानेन तु पक्षोत्तरयोः सार्वत्रिकमधिकबलवत्त्वमेव । अन्यथा विवादाप्रवृत्तिप्रसक्तेः । प्रमाणोक्तिप्रत्याकलितयोस्तद्विवेचनार्थयोरत एवोपयोगोऽन्यथाधिकबलकारणोत्तरे तयोरनुपयोगादाद्विपात्त्वप्रसङ्गः सम्प्रतिपत्तिवत् । "गुरो

वभिहिते हेतौ’ इत्यादेस्तु स्मरणस्य न कारणोत्तरत्रैविध्येन क्रियाव्यवस्थापकत्वम् । “कारणे प्रतिवादिनि” इति सामान्यवचनसङ्कोचस्य निर्युक्तिकस्य प्रसक्तेः । किन्तु मिथ्याद्युत्तरत्रैविध्येन । तथाहि— गुरौ पूर्वपक्षोक्तहेत्वभ्युपगमेन कारणोत्तरे कारणोपन्यासात् प्राङ्न्याये च तदुपन्यासात्तयोः साध्यत्वाविर्भावे वाद्युक्तसाध्ये साध्यत्वतिरोधानात् प्रतिवादिनः क्रिया । दुर्बले तूत्तरे मिथ्याख्ये भावरूपत्वेन भावप्रमाणाभावमात्रेण सिद्धे साध्यत्वानर्हे वादिसाध्यस्य साध्यत्वातिरोधानात्तस्य क्रिया । तुल्ये द्वयोरपि भावसाधकयोरर्थिप्रत्यर्थिनोः पूर्वं ममेदमिति वदतोरन्यतरस्येत्यर्थः । इदं च “साक्षिषूभयतः सत्सु” इत्यादिवचनं व्याचक्षाणा निपुणतरमुपपादयिष्यामः । “कारणात् पूर्वपक्षोऽपि” इति कात्यायनीयं तु प्रामाणिकत्वनिबन्धनपूर्वपक्षस्योत्तमत्वं प्रतिपादयद्यत्र पूर्ववादिनः क्रिया वाक्यान्तरेणोक्ता तद्विषयत्वेनाप्युपपद्यते इति न किञ्चिदेतत् । अत एव मिताक्षराकल्पतरुरत्नाकरमदनरत्नस्मृतिचन्द्रिकाकारादिभिरिदमुपेक्षितम् ।

प्राङ्न्यायलक्षणमाह हारीतः—

अस्मिन्नर्थे ममानेन वादः पूर्वमभूत्तदा ।
जितोऽयमिति चेद् ब्रूयात् प्राङ्न्यायः स्यात्तदुत्तरम् ॥

कात्यायनबृहस्पती—

आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायश्च स उच्यते ॥ इति ।

अतः प्राङ्न्यायपदमन्वर्थम् । प्राङ्न्यायस्य च प्रागवस्थायां मिथ्याकारणान्यतरोत्तरोपादानेनैव व्यवहारप्रवृत्तिरिति प्राङ्न्यायसाधने तदेव सिद्धं भवति इति सम्भवति धार्यमाणत्वादिसामान्याभावतद्ध्वंसोभयज्ञापकता प्राङ्न्यायस्येति मिथ्याकारणोत्तराभ्यामस्य भेदः । त्रिप्रकारश्च प्राङ्न्यायः । तथा च—

कात्यायनः,

विभावयामि कुलिकैः साक्षिभिर्लिखितेन वा ।
जितश्चैव मयायं प्राक् प्राङ्न्यायस्त्रिप्रकारकः ॥

कुलिकैरिति प्राकृतव्यवहारदर्शिनामुपलक्षणम् ।

इत्युत्तरभेदाः ।

अथोत्तराभासाः ।

यद्यप्युत्तरलक्षणराहित्यादेवोत्तराभासत्वमर्थसिद्धं भवतीति नोत्तराभासाः पृथग्वाच्याः । योगीश्वरादिभिरत एव नोक्ताः । तथापि स्पष्टी-

करणाय कैश्चिदुक्ताः।

तथा च मिताक्षराधृतवचनम्।

सन्दिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च।
पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरं भवेत्॥
यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम्।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये॥

एतच्च तत्रैवोदाहरणनिष्ठतया व्याख्यातम्। सुवर्णशतमनेन गृहीतमिति उक्ते सत्यं गृहीतं सुवर्णशतं माषकशतं चेत्येवं सन्दिग्धमुत्तरं भवेदिति। प्रकृतादन्यत्सुवर्णशताभियोगे पणशतं धारयामीति। अत्यल्पं=सुवर्णशताभियोगे पञ्च धारयामीति। सुवर्णशताभियोगे पञ्चशतानि धारयामीत्यतिभूरि। पक्षैकदेशव्यापि=हिरण्यवस्त्राभियोगे हिरण्यं गृहीतमित्येतावन्मात्राभिधानम्। व्यस्तपदं=पदान्तरेणाभियोगे पदान्तरमादायोत्तरम्। यथा मदीयमेतावद्धनं धारयतीत्यभियोगेऽनेनाहं ताडित इत्यादि। अव्यापि=देशस्थानादिभाषाविशेषणाव्यापि। यथा मध्यदेशे वाराणस्यां पूर्वदिगवस्थितं मदीयमनेन क्षेत्रमपहृतमित्यभियोगे न क्षेत्रमपहृतमिति। निगूढार्थं=मह्यं सुवर्णशतं धारयतीत्यभियोगे किमहमेवास्मै धारयामीति। अत्र ध्वनिना प्राड्विवाकः सभ्यो वा अर्थी वान्यस्मै कस्मैचिद्धारयतीत्यादिसूचनसम्भवान्निगूढार्थमिदम्। पूर्वापरविरुद्धमाकुलम्। यथा सुवर्णशतं मह्यं धारयतीत्यभियोगे धारयामि परन्तु गृहीतमेव नेति, गृहीतं परन्तु न धारयामीति वा कारणाद्युपन्यासमधारणादावकृत्वैवोत्तरम्। व्याख्यागम्यम्=दुःश्लिष्टसमासाध्याहारादिसापेक्षत्वेनानुमेयार्थम्। यथा सुवर्णशतविषये पितृकृतर्णाभियोगे गृहीतशतवचनात् सुवर्णानां पितुर्न जानामीति। अत्र गृहीतशतसुवर्णस्य पितुर्वचनात्सुवर्णानां शतं गृहीतमिति न जानामीत्यर्थविवक्षायामश्लिष्टसमर्थसमासाध्याहारादिसापेक्षत्वादुक्तिकृतस्वाभिमतार्थपरव्याख्यावगम्यार्थम्। असारम्=न्यायविरुद्धम्। यथा सुवर्णशतमनेन मत्तो वृद्ध्या गृहीतं तस्य वृद्धिरेव दत्ता न मूलमित्यभियोगे सत्यं वृद्धिर्मया दत्ता मूलं तु न गृहीतमिति। अत्र क्वचित्पूर्वपक्षानिराकरणात् क्वचिदसम्बद्धार्थत्वात् क्वापि विलम्बितार्थप्रत्यायकत्वाद्यथायथमनुत्तरत्वमवसेयम्। यद्यप्युदाहृतमसारं पूर्वापरविरोध एव पर्यवस्यति। तथापि क्वचित्साक्षात् क्वचिन्न्यायविरोधात्तथात्वमिति भेदकं द्रष्टव्यम्। स्मृतिचन्द्रिकाकारस्तु काकदन्तसद्भावोत्तरमिष्यत इति। कात्यायनवचनं च तत्र संवादितवान्।

काकस्य दन्ता नो सन्ति सन्तीत्यादि यदुत्तरम् ।
असारमिति तत्तेन समं नोत्तरमिष्यते ॥ इति ।

कात्यायनेनान्येऽप्युत्तराभसा उक्ताः—

अप्रसिद्धं विरुद्धं यदत्यल्पमतिभूरि च ।
सन्दिग्धासम्भवाव्यक्तमन्यार्थं चातिदोषवत् ॥
यद्व्यस्तपदमव्यापि निगूढार्थं तथाकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥ इति ।

एतान् स्वयमेव स व्याचष्टे—

चिह्नाकारसहस्रं तु समयं चाविजानता ।
भाषान्तरेण वा प्रोक्तमप्रसिद्धं तदुत्तरम् ॥
प्रतिदत्तं मया बाल्ये प्रतिदत्तं मया नहि ।
यदेवमाह विज्ञेयं विरुद्धं तदिहोत्तरम् ॥
जितः पुरा मया चायमस्मिन्नर्थे विवक्षिते ।
पुरा मयाऽयमिति यत्तदूनं चोत्तरं स्मृतम् ॥
गृहीतमिति वाच्ये तु कार्यं ते न कृतं मया ।
पुरा गृहीतं यद्द्रव्यमित्येतदतिभूरि तु ॥
देयं मयेति वक्तव्ये मया देयमितीदृशम् ॥
सन्दिग्धमुत्तरं ज्ञेयं व्यवहारे बुधैः सदा ॥

मयादेयमित्यत्राकारप्रश्लेषस्यापि सम्भवात्सन्दिग्धमिदम् । असम्भवम-स्माभिर्देयं धनमस्मत्प्रपौत्रपुत्रेण दत्तमित्येवमादि । अव्यक्तं=सुखेन यद-क्षराण्येव निर्णेतुमशक्यानि । एतावुत्तराभासावुद्दिष्टावपि स्पष्टाविति तेन न लक्षितौ ।

बलाबलेन चैतेन साहसं स्थापितं पुरा ।
अनुक्तमेतन्मन्यन्ते तदन्यार्थमितीरितम् ॥

एतेन च बलेन=प्राबल्येन अबलेन=दौर्बल्येन च पुरा साहसं=मनु-ष्यमारणादि स्थापितं=कृत्वा गोपितमिति यावत् । इत्यादि प्रकृतानुप-योगित्वादन्यार्थमित्यर्थः । व्यस्तपदं=पदान्तरेणाभियोगे कृते पदान्तरस-ङ्क्रमेणोत्तरमिति सोदाहरणं मिताक्षरायां व्याख्यातम् । तत्प्रागेवोक्तम् । स्मृति-चन्द्रिकायां तु पूर्वपक्षानिश्चयात् प्रागुच्यमानं सर्वमेवोत्तरं व्यस्तपदमिति व्याख्यातम् । व्यस्तं पदं स्थानमुपन्यासावसरो यस्येति व्युत्पत्तेः । भवदेवेन तु यदव्यस्तपदव्यापीति पाठं लिखित्वाऽनन्वितार्थपदव्याप्तमिति व्याख्यातं व्यवहारतिलके । तत्तु दोषान्तरसङ्करादयुक्तमिति प्राच्यमेव व्याख्याद्वयमनुसन्धेयम् । उत्तरमित्येकवचनाद् याज्ञवल्कीयाद्युत्तरस-

ङ्करादप्युत्तराभासत्वं सूचितम् । कात्यायनादिभिः स्पष्टमुक्तम् ।

पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ।
मिथ्या चैवैकदेशे च सङ्करात्तदनुत्तरम् ॥ इति ।

सङ्करादनुत्तरत्वे बीजं कात्यायनेनैवोक्तम्—

नचैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
नचार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥ इति ।

मिथ्याकारणोत्तरयोः सङ्करेऽर्थिप्रत्यर्थिनोर्द्वयोरेकस्मिन् व्यवहारे क्रियोपन्यासः प्रसज्यते ।

मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि ।

इति स्मरणात् । मिथ्या=मिथ्योत्तरे, पूर्ववादे क्रिया=अर्थिनः क्रियोपन्यास इत्यर्थः । यथा–'सुवर्णशतं रूपकशतं चानेन गृहीतम्'इत्यभियोगे 'सुवर्णशतं न गृहीतं रूपकशतं तु गृहीतं किन्तु प्रतिदत्तं प्रतिग्रहलब्धम्'इत्यादि । द्वयोरेकक्रियोपन्यासाभावे च व्यवहारघटकभेदे व्यवहारद्वयप्रसक्तावेकसमाप्तावेव व्यवहारान्तरप्रवर्त्तनौचित्याद्युगपद्व्यवहारासम्भवरूपा युक्तिर्बीजम् । अत एव तस्य तस्यांशस्य तत्प्रमाणमात्रसाध्यत्वे क्रमेणोत्तरत्वमेवेति क्रमिकं व्यवहारद्वयं तयोरेव प्रवर्त्तनीयमित्युक्तं मिताक्षरास्मृतिचन्द्रिकादिग्रन्थेषु । कारणप्राङ्न्यायसङ्करे तु प्रत्यर्थिन एव क्रियाद्वयं प्रसज्यते । "कारणे प्रतिवादिनि" "प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम्" इति स्मरणात् । यथा पूर्वोदाहरण एव यद्येवं ब्रूयात् 'सुवर्णशतं गृहीतं प्रतिदत्तं रूपकशते तु प्रागयं व्यवहारमार्गेण मया पराजित' इति । अत्र यद्यप्येकस्यैव प्रमाणद्वयोपन्यासस्तथापि प्रागुक्तया युक्त्या युगपद्व्यवहारासम्भव एवोनुत्तरत्वे बीजमतोऽत्रापि क्रमिकव्यवहारप्रवृत्तिरिष्टैव । कारणोत्तरे साक्षिलेख्यादिभिस्तद्विभावनीयम् । प्राङ्न्याये तु तद्दर्शिभिर्जयपत्रेण वेति क्रम आवश्यकः । एवमुत्तरत्रयसङ्करेऽपि । यथानेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं प्रतिदत्तं च रूपकशतं न गृहीतं वस्त्रविषये प्राक् पराजित इति । अत्र द्वयोः क्रिया एकस्य क्रियाद्वयमिति द्वयमप्यनुत्तरत्वे बीजम् । सम्प्रतिपत्तौ क्रियाभावाच्चतुःसङ्करो नोदाहार्यः । सङ्करसम्भवमात्रेण तु मिताक्षराकारेण "एवं चतुःसङ्करेऽपि"इत्युक्तम् । अत एवाग्रे "यत्र सम्प्रतिपत्तेरुत्तरान्तरेण सङ्करस्तत्रोत्तरान्तरोपादानेन व्यवहारः प्रवर्त्तनीयः। सम्प्रतिपत्तौ क्रियाभावात्"इति तेनैवोक्तम् । सङ्करस्थले क्रमिकव्यवहार आवश्यकः।क्रमोऽर्थिप्रत्यर्थिसभ्यानामन्यतरेच्छया बोध्यः। यत्र तु प्रभूता

र्थविषयत्वमन्यतरोत्तरस्य बलवत्तरत्वं वा व्यवहाराकरणेऽन्यतरस्य पीडातिरेकादिकं वा प्राप्तेर्विनिगमकमस्ति तत्र तदुत्तरोपादानेनैव प्रथमो व्यवहारः प्रवर्त्तनीय इत्याह—

हारीतः,

यत्प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम् ।
उत्तरं तत्र तज्ज्ञेयमसङ्कीर्णमतोऽन्यथा ॥

असङ्कीर्णं=सङ्करप्रयुक्तव्यवहारयौगपद्यासम्भवदोषाभावात् । अतोऽन्यथा सङ्कीर्णमिति शेषः । तेन तत्रेच्छाक्रमेण व्यवहारक्रम इति भावः । सङ्करादनुत्तरत्वे प्रागुक्तयुक्तिरनेन सूचिता । अत एव—

मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं वापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥

इत्युक्त्वा तदुक्तं हारीतेन । उदाहरणं तु यथा 'सुवर्णं रूपकशतं वस्त्राणि च गृहीत्वायं न प्रयच्छति' इत्यभियोगे 'सुवर्णं रूपकशतं च न गृहीतं वस्त्राणि गृहीतानि प्रतिदत्तानि' इत्युत्तरम् । अत्र मिथ्योत्तरस्य प्रभूतार्थविषयत्वात् तदुपादाय क्रियार्थिनः प्रथमं व्यवहारो द्रष्टव्यः । पश्चाद्वस्त्रविषये कारणोत्तरमादाय प्रत्यर्थिक्रियाऽवलम्बनो व्यवहारः । एवं मिथ्याप्राङ्न्यायसङ्करेऽपि बोध्यम् । सम्प्रतिपत्तिर्यदि सुवर्णादौ तत्र क्रियाफलाभावादल्पविषयमप्युत्तरान्तरमादायैव व्यवहारो भवति । एवं तुल्यार्थविषयत्वेऽप्युत्तरयोर्यत्र प्रथमदृष्टे फलं तदुत्तरावलम्बनेन व्यवहारो द्रष्टव्यः । तथाचोक्तम्—"यत्र वा स्यात्क्रियाफलम्" इति ।

अहंपूर्विकया यातावर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य च ॥ इति बृहस्पतिः ।

अत्र वाचस्पतिमिश्राः । भिन्नभिन्नावच्छेदेन कारणादिसंस्पर्शि सङ्करादनुत्तरमिति "पक्षैकदेशे यत्सत्यम्" इत्यादिवाक्यार्थ एव न सम्भवति । अवच्छेदभेदेन साङ्कर्य्यस्यैवाऽभावात् । किन्तु पक्षस्यैकदेशे विषये यदुत्तरं सङ्कीर्य्यते न तदनुत्तरम् । शेषमेकदेशपदद्वयमनुवादः । यथा शतं न गृहीतं गृहीतमपि परिशोधितं वा न धारयाम्येवेत्यादि । यत्तु शताभियोगे 'पञ्चाशत् परिशोधिताः पञ्चविंशतिस्तु नैव गृहीता पञ्चविंशतिस्तु धार्य्यन्ते देया' इत्युत्तरम् । यच्च वस्तुभेदेन प्रागुदाहृतं, तत्र "यत्प्रभूतार्थविषयम" इति वचनात् कारणोत्तरमादाय प्रथमं विचारः कार्य्यः । पश्चात् पञ्चविंशतिरपन्हुता अर्थिप्रमाणेन वा साध्या प्रत्यर्थिप्रमाणेन वा साध्या । नचैवं "नचैकस्मिन्" इत्येतद्वचनविरोधः । न्यायमूलकत्वेनैतद्वचनस्य लब्धार्थप्रमाणपरिग्रहाबाधकत्वात् । सति च

निर्णयप्रमाणे तदंशसंशयस्यावश्यनिरस्यत्वात् । न च "यत्प्रभूतार्थविषयम्" इत्येतद्वचनबलादेव लब्धार्थप्रमाणग्राह्यता । तथा सत्येतत्स्मृतीनां श्रुतिमूलकतापत्तेः । न चेष्टापत्तिः । असम्भवन्मूलान्तरत्वस्यैव श्रुतिमूलकत्वप्रयोजकत्वात् । यूपहस्त्यादिस्मृतौ तथा सिद्धान्तवचनात् । अत्र च न्यायमूलकत्वस्यैव सम्भवात् । न च तादृशविषयासम्भव एव 'न चैकस्मिन्निति' वचनस्य मूलमिति युक्तम् । बहुशो विषयदर्शनात् । न चेदृशमुत्तरं न देयमित्युपदेशार्थमिदम् । यथावस्थितार्थकथनस्य निषेद्धुमशक्तेः । विज्ञा एव विवदन्ते न त्वज्ञा इत्यपि वक्तुमशक्यम् । न चात एव ते पर्य्यनुयोज्याः । "छलं निरस्य भूतेन व्यवहारान्नयेन्नृप" इति वचनात्तादृशामपि तत्त्वतो बोध्यत्वात् । नच वचनादेवास्योत्तरस्य हेयता । वचनस्यादृष्टार्थतापत्तेः ।

अपि च शतं न गृहीतमित्यस्य नाग्रहणमात्रमर्थः । शतपदानर्थक्यप्रसङ्गात् । नापि शताग्रहणम् । विशेषनिषेधे शेषाभ्यनुज्ञापत्तेः । नापि शतपदं पक्षप्राप्तानुवादः । एवं सत्येकदेशस्य गृहीतत्वविभावनादेव स्थापको "निह्नुते लिखितेनैकमिति" वचनादेतावद्धनं निरपवादमेव लभेतेत्यनिष्टापादकमेवेदमुत्तरं स्यात् । "मिथ्या कारणयोर्वापि" इत्यादि वचनमप्येवं नेयम् । तस्माद्यावत्प्रकृतविषयः संशयोऽनुवर्त्तते निर्णायकं च प्रमाणं लभ्यते तावद्विचारणीयमिति परमार्थः । भवदेवप्रदीपादयोऽप्येवम् । तस्मादस्मदुक्त एव "पक्षैकदेशे यत्सत्यम्" इत्यादेरर्थ इति ।

तदेतद्वागाडम्बरमात्रान्नार्थक्षोदक्षमम् । तथाहि । मिताक्षरायुक्तरीत्या दृष्टार्थतयैव सकलवचनस्वरसाभङ्गसम्भवात् । "नचैकस्मिन्" इत्यादिवचनपर्यालोचनया युगपदनुत्तरत्वस्यैवास्य वर्णितत्वात् । क्रमिकोत्तरत्वस्य सर्वैरपीष्टत्वात् । नचायौगपद्यमेव निर्बीजम् । युगपद्व्यवहारासम्भवस्यैतादृशि विषये उपपादितत्वात् । व्यवहारस्य चतुष्पात्त्वात् । क्रियारूपपादभेदे साध्यभेदेन भाषारूपपादभेदे चातद्घटिते व्यवहारभेदप्रसङ्गस्य सचेतसा दुरपह्नवत्वात् । किञ्च । भवदुक्तरीत्या न्यायाभासमूलकतया "नचैकस्मिन्" इत्यादेरप्रामाण्यप्रसङ्गः । यच्चैकदेशपदस्यैकविषयपरत्ववर्णनमेकदेशपदद्वयस्य चानुवादत्वप्रतिपादनम् । तदतिमन्दम् । एकदेशपदे रूढित्यागप्रसङ्गात् । सम्भवत्यस्मदर्थेनार्थवत्त्वे निरर्थकानुवादस्यानर्थक्यापरपर्य्यायस्याभ्युपगमानौचित्याच्च । यच्चैकविषयसङ्कर उदाहृतम् । तदपि सन्दिग्धादिदोषसङ्कीर्णमसाधारण्येनैतद्वचनाविषयतानर्हमिति समस्तवचनानर्थक्यम् । यदप्युक्तम्—असम्भवन्मूलान्तरत्वस्य श्रुतिमूलकत्वे प्रयोजकत्वमिति । तदपि मीमांसानध्ययन-

निबन्धनम् । न ह्यसम्भवन्मूलकत्वमष्टकादिस्मृतीनां श्रुतिमूलकत्वे प्रयोजकम् । तथा सति तुलापुरुषादिस्मृतीनां लोभादिमूलकत्वस्य सुतरां सम्भवाच्छ्रुतिमूलकत्वाभावप्रसङ्गः । यथाहुः—

वार्तिककाराः,

रागद्वेषमदोन्मादप्रमादालस्यलुब्धताः ।
क्व वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतवः ॥ इति ।

यूपहस्त्यादिस्मृतिषु मुक्तकत्वेनाप्तप्रणीतत्वानवधारणान्मूलभूतश्रुत्यकल्पनम् । कर्तृसामान्याभावादिति भाष्याभिमताप्रामाण्ये मूलयुक्तिः । हेतुदर्शनं तदुपष्टम्भकमन्वाचयमात्रमिति तत्रैव व्याचक्षाणैः क्षुण्णमाकरे । वार्तिककाराणां तु दृढतरवैदिकं परिग्रहीतुं प्रामाण्यमेव तासामभिमतमित्यपि तदभियोगभाजां न दुर्लभम् । यद्यपि अपित्रेत्याद्यसम्भवदुक्तिकस्वकपोलकल्पितविकल्पजालमुद्भाव्य खण्डितं, तदपि प्रस्तुतप्रतीपम् । तादृशोत्तरस्य सर्वैरभ्युपगन्तव्यत्वात् । शतग्रहणाभावस्य तदर्थस्यादुष्टत्वाच्च । अयमत्र सकलवचनसन्दर्भसमाधानानिष्कृष्टोऽर्थः । क्रिया=लिखितादिप्रमाणरूपा प्रत्यवस्कन्दने प्राङ्न्याये च प्रत्यर्थिन एव भवति । मिथ्योत्तरे चार्थिन एव । सम्प्रतिपत्तौ न कस्यापीति व्युत्पादयिष्यते । एवं च सत्येन यत्रेतरेषां त्रयाणामुत्तराणां सङ्करस्तत्र प्रत्यर्थिनः कारणप्राङ्न्यायसाधनाय प्रमाणद्वयमर्थिनश्च स्वसाध्यसाधनायैकं प्रमाणं प्राप्नोति । यत्र कारणप्राङ्न्याययोस्तत्र प्रत्यर्थिनः प्रमाणद्वयम् । यत्र पुनर्मिथ्याकारणयोर्मिथ्याप्राङ्न्याययोर्वा तत्रार्थिप्रत्यर्थिनोरेकैकं प्रमाणम् । न च यथाप्राप्तमेवाऽस्त्विति वाच्यम् । प्रमाणं हि साध्यसिद्ध्यर्थम् । एकस्मिन् व्यवहारे चैकमेव साध्यमेकस्यैवोचितम् । तेन तत्र नोभयोः प्रमाणमेकमेकस्य वा प्रमाणद्वयं भवितुमर्हम् । उभयोः साध्याभावादेकसाध्यस्य चैकेनैव प्रमाणेन सिद्धावितरवैयर्थ्यात् । तस्मात् युक्तमुक्तम्—"सङ्करात्तदनुत्तरम्" इति । तथा च सर्वत्र पक्षव्यापकमेवोत्तरं देयं दापनीयं च । यत्र पुनः सर्वथा तथाविधमुत्तरं न लभ्यते किन्त्वेकैकांशव्यापकमेवोत्तरम् । तत्र नानोत्तरवशेन नानाप्रतिज्ञाः कृत्वा क्रमेणैकैकप्रतिज्ञायामेकैकोत्तरोपादानेन व्यवहारः प्रवर्त्तनीयोऽन्यथा तत्र निर्णयाभावप्रसङ्गः । स चानुचितः । "छलं निरस्य" इत्यादिवचनात् । "सङ्करात्तदनुत्तरम्" इति हेतूपादानादुक्तविधया सङ्करे निराकृते स्यादेवोत्तरत्वमित्यभिप्रायः । एतदेव व्यतिरेकमुखेनोक्तम्—

यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् ।

उत्तरं तत्र तज्ज्ञेयमसङ्कीर्णमतोऽन्यथा ॥ इति ।

अतोऽन्यथा=यौगपद्ये सङ्कीर्णं स्यादिति प्रागेव व्याख्यातम् । पक्षव्यापकानेकोत्तरविकल्पे तु न जातुचित्सङ्करावसरः । तस्मान्न क्वापि सङ्करे सदुत्तरत्वमिति ।

अथ क्रियापादः ।

तत्र तदुपयोगि प्रत्याकलितं प्रथमं निरूप्यते । विज्ञानयोगिना तस्य व्यवहारपादत्वानभ्युपगमेऽपि क्रियादानोपयोगित्वाभ्युपगमात् । अन्यैस्तु व्यवहारपादत्वस्यैव स्वीकारात् । क्रियापादप्रागभावस्तूभयसम्मतः । प्रत्याकलितं नाम भाषोत्तरयोरर्थिप्रत्यर्थिभ्यां लेखितयोः क्रियोपन्यासनमनयोर्मध्ये कस्य स्यात्का चास्मिन् पदे क्रिया स्यात् हीनवादी वानयोर्मध्ये क इत्यादिः ससभ्यप्राड्विवाकस्य सभापतेः सभ्यस्य प्राड्विवाकस्य वा परामर्श उच्यते ।

तथा च बृहस्पतिः ।

ये तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना ।
कलयित्वोत्तरं सभ्यैर्दातव्यैकस्य वादिनः ॥

करणे=धर्माधिकरणे । ये तिष्ठन्ति=वादिनः प्रतिवादिनश्च । तेषामुत्तरं मिथ्यादिचतुर्भेदं, कलयित्वा=विचार्य्य, एतदुत्तरे कस्य क्रियोपन्यास उचित इति निर्धार्य्य, विभाव्यते साध्यमनयेति विभावना क्रियाप्रमाणमिति यावत् । एकस्य वादिनः=अर्थिप्रत्यर्थ्यन्यतरस्य । सभ्यैर्दातव्या=उपन्यसनीयत्वेनाज्ञापयितव्येत्यर्थः ।

कात्यायनोऽपि—

लिखिते शोधिते सम्यक् सति निर्दोष उत्तरे ।
अर्थिप्रत्यर्थिनोर्वापि क्रियाकरणमिष्यते ॥

क्रियाकरणं=क्रियोपन्यासः । पुनर्बृहस्पतिः—

श्रुत्वा पूर्वोत्तरं सभ्यैर्निर्दिष्टा यस्य भावना ।
विभावयेत्प्रतिज्ञातं सोऽखिलं लिखितादिना ॥

विभाव्यते साध्यते साध्यमनयेति विभावना क्रियैव । पूर्वोत्तरं=पूर्वपक्षमुत्तरं चेत्यर्थः । द्वन्द्वैकवद्भावः । निर्दिष्टा=ब्रूहीत्युपदिष्टा । कस्मिन्नुत्तरे कस्य क्रिया क्रियारहितं च किमुत्तरमित्यपेक्षायामाह—

व्यासः,

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥

प्राङ्न्यायकारणोत्तरयोः प्राङ्न्याये कारणे च साधितेऽर्थिसाध्यस्य

ग्रहणस्य धारणासाधकत्वाद्यर्थं साधनं प्रत्यर्थिनाऽभ्युपगमाच्चेति तत्रैव साध्यत्वाविर्भावात्तदुपन्यासकारिण एव प्रत्यर्थिनः प्रमाणोपन्यासस्तत्साधनायोचितः । अर्थिसम्बन्धविरहप्रत्यर्थिसम्बन्धयोर्द्वयोरपि तेनैव निर्णयात् । मिथ्योत्तरे तु वादिनः प्रमाणदुर्भिक्षं यदि प्रतिज्ञातेऽर्थे, प्रमाणाभावादेव प्रत्यर्थ्यभिमतोऽर्थिप्रतिज्ञातसाध्यहेत्वभावः सिध्यतीति तत्परिहाराय भावाभावयोर्भावस्यैव साध्यत्वौचित्याच्चार्थिन एव क्रिया । सम्प्रतिपत्तौ तु न कस्यापि साध्यमस्तीति निरर्थकत्वात् क्रियैव नास्तीत्यर्थः ।

बृहस्पतिः—

प्रतिज्ञां भावयेद्वादी प्रत्यर्थी कारणं तथा ।
प्राग्वृत्तवादिविजयं जयपत्रेण भावयेत् ॥ इति ।

प्राग्वृत्तं=प्राङ्न्यायः । प्रतिज्ञां=प्रतिज्ञातार्थम् । इदं च परिशेषान्मिथ्योत्तरविषयम् । जयपत्रेणेति प्राङ्न्यायदर्शिप्रभृत्युपलक्षणम् ।

मनुः—

अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि ।
अभियोक्ता दिशेद्देशं कारणं वान्यदुद्दिशेत् ॥ (८।५२)

दिशति कथयति यथादृष्टमर्थमिति देशः साक्षी । मेधातिथिस्तु ऋणादिप्रयोगदेशवर्त्तिनः साक्षिणो देशशब्देन लक्ष्यन्त इत्याह । अन्यत्कारणं=प्रमाणं साक्षिभिन्नं लेख्यादि । मेधातिथिना तु 'करणं वा समुद्दिशेत्' इति पठित्वा करणशब्दः प्रमाणसामान्यवाचकोऽपि गोबलीवर्दन्यायेन साक्षिभिन्नकरणमाचष्टे । पृथगुपादानात् । कारणं वा समुद्दिशेदिति पाठेऽप्ययमेवार्थ इत्युक्तम् । यत्र मिथ्याप्रत्यवस्कन्दनयोः कृत्स्नपक्षव्यापिता यथा कश्चिच्छृङ्गग्राहिकया कञ्चिदभियुङ्क्ते 'मदीयेयं गौरमुकस्मिन् काले नष्टास्य गृहेऽद्य दृष्टा' इति । तत्राभियुक्त उत्तरयति-मिथ्यैतत् । यतः । एतत्प्रदर्शितनाशकालात्प्रागेवास्या मद्गृहेऽवस्थितत्वादिति । इदं तावत्पक्षप्रतिक्षेपक्षममित्यनुत्तरत्वानर्हम् । कारणोपन्यासान्न शुद्धमिथ्योत्तरम् । एकदेशाभ्युपगमाभावाच्च "अर्थिना लेखितो योऽर्थ" इत्यादि प्रागुक्तप्रत्यवस्कन्दनलक्षणं नास्कन्दति । साध्यभेदाय प्रतिज्ञाभेदापादकत्वाभावाच्च न "पक्षैकदेशे यत्सत्यम्" इत्युक्तसङ्करवद्युगपद्व्यवहारासम्भवकृतं युगपदनुत्तरम् । तस्मात्सकारणं मिथ्योत्तरमेवेदम् । अन्यतरसाधनेनापि विवादपर्यवसानात् । अत्र "मिथ्या क्रिया पूर्ववाद" इति वचनात् "कारणे प्रतिवादिनि" इति वचनाच्चान्यतरस्य यथारुचि क्रियोपन्यास इति भाति यद्यपि, तथापि

"मिथ्या क्रिया" इत्यादेः शुद्धमिथ्याविषयत्वेनैतद्विषयत्वाभावात्। "कारणे प्रतिवादिनि" इति वचनात् प्रतिवादिन एवात्र क्रिया। नचास्यापि शुद्धप्रत्यवस्कन्दनविषयत्वादेतद्विषयत्वाऽभावप्रसङ्गे न कस्यापि क्रिया प्राप्नोतीति निर्णयप्रतिबन्ध एवेति वाच्यम्। यतः प्रसिद्धप्रत्यवस्कन्दनेऽपि ग्रहणाद्यभ्युपगमेन प्रतिदानादिकारणोत्तरतैवास्यासम्भाविनीति वाच्यम्। एकदेशाभ्युपगमस्य प्रायिकत्वात्। कारणोपन्यासस्यैवोत्तरान्तरासङ्कीर्णतया तल्लक्षणत्वावश्यम्भावात्। एवं कृत्स्नपक्षव्यापि सप्राङ्न्यायं मिथ्योत्तरमपि द्रष्टव्यम्। यथा प्राक्तनाभियोग एव यद्येवं प्रतिवदति—मिथ्यैतत्, यतः प्रागयमस्मिन्नभियोगे मया व्यवहारमार्गेण पराजित इति। अत्रापि "प्राङ्न्यायकारणोक्तौ" इत्यादि प्राक्प्रदर्शितवचनात्प्रत्यर्थिन एव क्रियोपन्यासः। प्राङ्न्यायसिद्धौ प्रतिज्ञायाः प्रकटमेव मिथ्यात्वपर्यवसानादस्य शुद्धप्राङ्न्यायविषयत्वासम्भवादेतादृशप्राङ्न्यायविषयताया अप्यवर्जनीयत्वात्। पक्षप्रतिक्षेपक्षमस्यास्य प्राग्वदेवानुत्तरत्वानर्हत्वात्। यत्र तु कारणप्राङ्न्याययोः कृत्स्नपक्षव्यापितयैकोत्तरत्वं तत्र प्राङ्न्याय एव साधनीयः। कारणसाधनस्य तदन्तर्भूतत्वात्। यथा रूपकशतमनेन मामकं गृहीतमित्यभियुक्तः प्रतिवदति सत्यं गृहीतं प्रतिदत्तत्वादिदानीमस्मै न धारयामि। अस्मिन्नेवार्थे प्रागमुनाहमभियुक्तश्चतुष्पाद्व्यवहाररीत्यामुं पराजितवानिति।

इदानीं हीनपरिज्ञानोपायः।

तत्र मनुः,—

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च॥ (८।२५)

स्वरो=विकृतो गद्गदत्वादिः। वर्णोऽस्वाभाविकः कृष्णत्वादिः। इङ्गितं=स्वेदवेपथुरोमाञ्चादि। आकारो=विकृतो भ्रूवक्रिमादिः। चक्षुः=कातरम्। चेष्टितं=वृथा स्थानात् स्थानान्तरगमनादि।

याज्ञवल्क्यः—

देशाद्देशान्तरं याति सृक्किणी परिलेढि च।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः।
अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्त्तितः॥

(अ०२श्लो०१३।१४-१५)

मनोवाक्कायकर्मभिर्यः स्वभावाद्विकृतिं गच्छति न भयादिनिमित्तमसावभियोगे साक्ष्ये वा दुष्टः परिकीर्त्तितः । मनःप्रभृतिविकृतीरेव विविच्य दर्शयति । देशाद्देशान्तरं याति=नचैकत्रावतिष्ठते । सृक्विणी=ओष्ठ-प्रान्तौ । परिलेढि=जिह्वया पुनः पुनः परिघट्टयतीति कर्मणो विकृतिः । अस्य ललाटं स्विद्यते=स्वेदबिन्दुवृन्दाङ्कितं भवति । मुखं वैवर्ण्यं=वर्णान्यत्वं पाण्डुत्वकृशत्वादि एति=प्राप्नातीति कायस्य । परिशुष्यत्स्खलद्वाक्यः=परि-शुष्यत् सगद्गदं स्खलत् व्यत्यस्तपदवर्णं वाक्यं यस्य सः । बहु=अनुपयुक्तं, विरुद्धं=पूर्वापरविरोधवत् भाषत इति वाचः । परोक्तां वाचं प्रति-वचनदानेन चक्षुश्च परस्य प्रतिवीक्षणेन न पूजयति नाभिनन्दतीति मनोविकृतेर्लिङ्गम् । परकीयमनोविकृतेरप्रत्यक्षत्वात् । तथा ओष्ठौ निर्भुजति वक्रयत्युपर्यधोभावेन चालयतीति कायस्यैव विकृतिः ।

मनुरपि—

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकारैश्च ज्ञायतेऽन्तर्गतं मनः ॥ (८।२६)

कात्यायनः—

आकारेङ्गितचेष्टाभिस्तस्य भावं विभावयेत् ।
प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते ॥
कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषाभिमर्षणम् ।
भूलेखनं स्थानहानिस्तिर्यगूर्ध्वनिरीक्षणम् ॥
स्वरभेदश्च दुष्टस्य चिह्नमाहुर्मनीषिणः ।

प्रतिवादिशब्देन परस्परप्रतिपक्षवादित्वादुभयोर्ग्रहणम् । अभिमर्षणं=जिह्वयोष्ठप्रान्तावलेहनम् । द्वन्द्वैकवद्भावः ।

श्रीरामायणे—

आकारं छाद्यमानोऽपि न शक्यो विनिगूहितुम् ।
बलाद्धि विवृणोत्येष भावमन्तर्गतं नृणाम् ॥

अनेन च पराजयसम्भावनामात्रं प्रतिपाद्यते । तस्य च फलं क्रियादिपरामर्शे सभ्यादीनामत्यवधानेन व्यवहारशेषविचारः । न चैतावता पराजयनिश्चयो साक्ष्यनिर्णयो वा । नैसर्गिकनैमित्तिकविकारयोर्वैलक्षण्यस्य विवेक्तुमशक्यत्वात् । यद्यपि कोऽपि निपुणतममतिर्विवेक्तुं शक्नुयात् तथापि न पराजयनिमित्तमसाक्षित्वनिबन्धनं वा दण्डादिकार्यं सम्भवति । न हि निपुणभिषगभियोगमूलकमरणनिश्चयेऽपि मृतकार्यमार्याः समाचरन्ति ।

योगीश्वरः—

सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत् ।
न चाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः ॥ (अ०२श्लो०१६)

सन्दिग्धम्=अधमर्णादिभिरनभ्युपगतमर्थं यः स्वतन्त्रः=प्रमाणनिरपेक्ष एव साधयेदासेधादिना राजादिभ्यो ऽनिवेद्यैव तस्माज्जिघृक्षति तदुपरि दण्डाद्यापादयति वा स हीनो दण्ड्यश्च भवति । न परं प्रकृतार्थहानिमाप्नोति प्रत्युत स्वातन्त्र्यनिबन्धनं राजदण्डमपि दातुमर्हति । यश्च स्वयमभ्युपेतं साधनेन वा साधितं याच्यमानो निष्पतेत्=पलायेत सोऽपि तथा दण्ड्यः साधितं धनं च दाप्यः । यश्चाभियुक्तो राज्ञा चाहूतः सदसि न किञ्चिद्वदति स प्रकृतार्थहानिं दण्डं च प्राप्नोति । प्रकरणात् (१)दुष्टपरिज्ञानमेव माभूदिति दण्ड्यग्रहणम् । दण्ड्योऽपि "शास्योऽप्यर्थान्न हीयते" स्वार्थान्न हीयते इति अर्थादहीनत्वदर्शनादत्र तन्माभूदिति हीनग्रहणम् ।

नारदोऽपि—

अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः ।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः ॥ (अ०२श्लो०३३)
अन्यवादी तथा हीनः स एव विवृताननः । (ना०स्मृ०न लब्धम्)
पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः ।
वादसङ्क्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥ (अ०२।२४)

कात्यायनेनापि—

श्रावयित्वा यदा कार्यं त्यजेदन्यद्वदेदसौ ।
अन्यपक्षाश्रयस्तेन कृतो वादी स हीयते ॥ इति ।

यश्च कश्चिदभियुज्य नाहमेनमभियुञ्ज इत्येवं विरुद्धमभिदधीत सोऽप्यन्यवादितया हीन इत्याह—

स एव,

न मयाऽभिहितं कार्यमभियुज्य परं वदेत् ।
विब्रुवंश्च भवेदेवं हीनं तमपि निर्दिशेत् ॥ इति ।

तथा पत्रे लिखितं पूर्वपक्षमप्यन्यथा कुर्वन्नन्यवादितया हीन इत्याह—

स एव,

लेखयित्वा तु यो वाक्यमूनं वाऽभ्यधिकं पुनः ।
वदेद्वादी स हीयते नाभियोगं तु सोऽर्हति ॥

(१) अभियोगे च साक्ष्ये वा दुष्टः स परिकीर्तितः । इत्युक्तरूपादित्यर्थः ।

अभियोगं=पूर्वपक्षं नार्हति=वादित्वयोग्यो न भवतीत्यर्थः। क्रियाद्वेषिणोऽनुपस्थातुश्च हीनतायास्तेनैव विवरणं कृतम् ।

सभ्याश्च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः ।
तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते ॥
आह्वानादनुपस्थानात् सद्य एव स हीयते । इति ।

निरुत्तरतया हीनमप्याह स एव—

ब्रूहीत्युक्तोऽपि न ब्रूयात् सद्यस्तद्धनमर्हति ।
द्वितीयेऽहनि दुर्बुद्धेर्विद्यात्तस्य पराजयम् ॥

पराजयं=पराजयचिन्हं हीनताम् ।

अत एव हारीतः—

सापदेशं हरेत्कालमब्रुवंश्चापि संसदि ।
उक्त्वा वचो विब्रुवंश्च हीयमानस्य लक्षणम् ॥

सापदेशं=सव्याजम् ।

यथाह कात्यायनः—

व्याजेनैव तु यत्रासौ दीर्घकालमतिक्रमेत् ।
सापदेशं तु तद्विद्याद्वादहानिकरं स्मृतम् ॥ इति ।

आहूतप्रपलायी=अभियोगपरिहारार्थमाह्वानबुद्ध्या प्रच्छन्नचारी । एतेषामुत्तरोत्तरस्य हीनता गुर्वीति ज्ञापयितुं "हीनः पञ्चविध" इत्युक्तम् । न परिसङ्ख्यार्थम् । अन्येषामपि हीनत्वस्मरणात्। हीनतागुरुत्वज्ञापनं दण्डभूयस्त्वार्थम् । तच्चोक्तं कात्यायनेन—

अन्यवादी पणान् पञ्च क्रियाद्वेषी पणान्दश ।
नोपस्थाता दश द्वे च षोडशैव निरुत्तरः ॥
आहूतप्रपलायी च पणान्दाप्यस्तु विंशतिम् ।

अत्रापि विशेष उक्तस्तेनैव—

त्रिराहूतमनायातमाहूतप्रपलायिनम् ।
पञ्चरात्रमतिक्रान्तं विनयेत्तं महीपतिः ॥ इति ।

कात्यायनेनैव प्रकारान्तरेणापि हीन उक्तः—

श्रावितव्यवहाराणामेकं यत्र प्रभेदयेत् ।
वादिनं लोभयेच्चैव हीनं तमपि निर्दिशेत् ॥

श्रावितव्यवहाराणां सभ्यादीनां मध्ये एकमपि यः प्रभेदयेत्=अन्यद्वारानुरोधाद्युत्पादनेनेत्यर्थः ।

बृहस्पतिरपि—

भयं कुर्वति भेदं वा भीषणं वा निरोधनम् ।

१०

एतानि वादिनो यस्य व्यवहारे स हीयते ॥

भयादीनि व्यस्तसमस्तानि येन कृतानि स हीयत इत्यर्थः । भयं कुर्वति=करोति । भीषणम् अन्यमुखेन भयोत्पादनमिति शेषः ।

मनुरपि—

अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः । (अ०८)
यश्चाधरोत्तरानर्थान् विगीतान्नावबुध्यते ॥ (५३)
अपदिश्यापदेशं च पुनर्यस्त्वपधावति ।
सम्यक् प्रणिहितं चार्थं पृष्टः सन्नाभिनन्दति ॥ (५४)
असम्भाष्ये साक्षिभिश्च देशे सम्भाषते मिथः ।
निरुच्यमानं प्रश्नं च नेच्छेद्यश्चापि निष्पतेत् ॥ (५५)
ब्रूहीत्युक्तश्च न ब्रूयादुक्तं च न विभावयेत् ।
न च पूर्वापरं विद्यात्तस्मदर्थात् स हीयते ॥ (५६)
(१)ज्ञातारः सन्ति मेत्युक्त्वा दिशेत्युक्तो दिशेन्न यः ।
धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत् ॥ (५७)

अदेश्यम्=अनुपयोगासभ्यत्वादिना निर्देशानर्हं दिशति=कथयति यः । यश्च कथितमपि न मयेदमुक्तमित्यपलपति । यश्च अधरोत्तरानर्थान् पूर्वापराभिहितान् विगीतान् विरुद्धांस्तत्त्वेन नावबुध्यते । यश्चापदेशं व्याजं पीडादिकम् अपदिश्योद्भाव्य अपधावति अपसरति सभातः । यश्च सम्यक् प्रणिहितं सम्यक्प्रणिधानेनाकलितमपि परोक्तमर्थं पृष्टः सन्नाभिनन्दति=अनुवादप्रत्युत्तरदानादिना नाद्रियते । मेधातिथिस्त्वदेशमिति पठित्वा भाषावादिलिखितदेशभिन्नमसम्भावितं वा देशम् । यद्वा "अभियोक्ता दिशेद्देशम्" इत्यत्रेव देशशब्देन साक्षिणो व्याख्याय साक्षिनिर्देशकाले असम्भावितसाक्षिणो निर्दिशतीति व्याचख्यौ । यश्च ज्ञातारः साक्षिणो मदुक्तेऽर्थे सन्तीति सभायामुक्त्वा के ते वदेत्युक्तो न वदेत्तान् । अत्र मा=मां ज्ञातारः यथार्थवाद्यहमिति जानानाः साक्षिण इति यावत् । द्वितीयैकवचनान्तस्यास्मच्छब्दस्य "त्वामौ द्वितीयायाः" (अ० ८ पा०१सू०२३) इत्यनेन मामित्यस्य मा इत्यादेशः । ननु मे इति षष्ठ्यन्तमेतत् । "न लोकाव्ययनिष्ठाखलर्थतृनाम्" (अ० २ पा० ३ सू० ६९) इति तन्निषेधात् । तेन मेति सन्धिरपि समाहित इति मेधातिथिः । आचार्यास्तु व्याकरणाधिकरणे सन्धिकरणमत्रापशब्द इतिपूर्वपक्षप्रसङ्गेन वदन्तः षष्ठ्यन्ततामेवास्य मन्यन्ते । मे सन्तीति सम्बन्धान्न "तृनाम्" इति

---

(१) साक्षिण इत्यपि पाठः ।

सम्बन्धप्रयुक्तषष्ठीप्रतिषेधावकाश इति तेषामभिसन्धिः । सन्ति ज्ञातार इत्युक्तेति कल्पतरुलिखितपाठस्त्वनाकर एवाचार्य्यमेधातिथिभ्यामधृतत्वादिति ध्येयम् । सिद्धान्ते त्वाचार्य्याणां छान्दसत्वमत्र समाधिरभिमतः । एतैः कारणैर्व्यस्तैः समस्तैर्वा वादिप्रतिवादिनोरन्यतरं हीनं निर्दिशेदित्यर्थः । हीनवादितया दण्डार्हतामात्रं न प्रकृतार्थहानिरिति प्रमादपरिहारार्थमेवायं प्रपञ्चः । "छलं निरस्य" इत्यादिवचनात् । अत एव—

नारदोऽपि,

सर्वेष्वर्थविवादेषु वाक्छले नावसीदति ।
परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते ॥ इति ।
(अ० २ श्लो० २५)

अस्यार्थः । अर्थविवादेषु सर्वेषु वाक्छले प्रमादाभिधाने पूर्वप्रपञ्चितेऽपि नावसीदति प्रकृतादर्थान्न हीयते । अत्रोदाहरणमात्रं परस्त्रीत्यादि । एतेषु प्रमादाभिधानेऽपि शास्यो दण्ड्योऽपि यथा न प्रकृतार्थाद्धीयते एवं सर्वेष्वर्थविवादेष्वित्यर्थः। अन्यथा परस्त्रीत्यादेरानर्थक्यमेव भवेत् । अर्थविवादोपादानान्मन्युकृतेषु प्रकृतार्थादपि हीयत इत्यर्थादुक्तं भवति। यथा 'अहमनेन शिरसि ताड़ित' इत्यावेद्य भाषादिसमये 'हस्तेन पादे ताडित' इति वदन् दण्ड्यः पराजितश्च भवति । मन्युकृतावेशदशावशादेव ताड़नादिकमयमस्मिन्नारोप्यावेदितवान् धर्म्माधिकरण इति प्रतीतेः । अत एव—

दोषानुरूपं स ग्राह्यः पुनर्वादो न विद्यते ।

इति बार्हस्पत्यः पुनर्वादनिषेधोऽपि मन्युकृतव्यवहारविषय एव । ग्राह्यो दण्डमित्यर्थात् ।

असम्भाष्ये=सम्भाषणानर्हे विजन इति यावत् । नेच्छेत्=श्रुतमप्यश्रुतवत्कुर्य्यात् । राजकार्य्यादिव्याजमुत्पाद्य ग्रामान्तरं गच्छेत् । ब्रूहीत्यादि गतार्थम् । अत्रादेशमित्यादौ च ब्रूहीत्यादौ च "बहुकृत्वोऽपि पथ्यं वदितव्यम्" इति शाबरभाष्योक्तरीत्यास्मिन् प्रकरणे पुनरुक्तिर्न दोष इति भगवान्मेधातिथिराह । क्वचिदर्थविवादेऽप्यर्थहानिः "सन्दिग्धार्थम्" इत्यनेन दर्शिता ।

नारदोऽप्याह—

अनिवेद्य तु यो राज्ञे सन्दिग्धेऽर्थे प्रवर्तते ।
प्रसह्य स विनेयः स्यात्स चास्यार्थो न सिध्यति ॥ (अ०१श्लो०४६)

प्रवर्त्तते=साधयति बलादिनेत्यर्थः ।

बृहस्पतिरपि—

आहूतप्रपलायी च मौनी साक्षिपराजितः ।
स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः ॥

साक्षिपराजितः साक्षिवचनाद्यः पराजितः । स्ववाक्यप्रतिपन्नः सम्प्रतिपत्युत्तरदाता । अनयोर्दृष्टान्तत्वेनोपादानम् । यथाऽनयोरविप्रतिपन्नार्थहानिस्तथान्ययोरपीत्यर्थः । अत्राप्युत्तरोत्तरहीनताधिक्यप्रतिपादनार्थं चतुर्विधग्रहणम् । न परिसङ्ख्यार्थम् । अन्यथान्येषां तत्कथनं विरुध्येत । कस्मिन् कदा हीनकार्य्यमित्यत्र कालावधिरुक्तस्तेनैव—

प्रपलायी त्रिपक्षेण मौनकृत्सप्तभिर्दिनैः ।
साक्षिभिन्नस्तत्क्षणेन प्रतिपन्नश्च हीयते ॥ इति ।

साक्षिभिन्नस्तत्पराजितः । यश्च सामान्यतः साक्षिणो निर्दिश्य पश्चाद्विशिष्यानिर्दिशन्मनुना "ज्ञातार" इत्यनेन हीनतयोक्तस्तत्रापि कालावधिं बृहस्पतिरेवाह—

साक्षिणस्तु समुद्दिश्य यस्तु तान्न विवादयेत् ।
त्रिंशद्रात्रात् त्रिपक्षाद्वा तस्य हानिः प्रजायते ॥ इति ।

दैविकराजिकान्तराये त्ववध्यतिक्रमेऽपि न दोष इत्यप्याह—

स एव,

आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयम् ।
नोपस्थितो यदा कश्चिच्छलं तत्र न कारयेत् ॥
दैवराजकृतो दोषस्तस्मिन् काले यदा भवेत् ।
अवधित्यागमात्रेण न भवेत् स पराजितः ॥ इति ।

आचारकरणे=व्यवहारकरणे । छलं तत्र न कारयेदिति वदता यत्र वचनेनार्थहानिः प्रतिपादिता तत्रैव पुनर्विवादाभावोऽन्यत्र तु हीनतानिमित्तं दण्डं कृत्वा पुनर्वादः प्रवर्त्तनीय एवेति सूचितम् । यत आह—

कात्यायनः,

पलायनानुत्तरत्वादन्यपक्षाश्रयेण वा ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य च ॥

स्ववाक्यजितस्येति प्रकृतार्थहानिनिमित्तोपलक्षणम् । तेनैव विवृतमिदम् ।

यो हीनाच्चिह्नेन जितस्तस्योद्धारं विदुर्बुधाः ।
स्ववाक्यहीनो यस्तु स्यात् तस्योद्धारो न विद्यते ॥ इति ।

उद्धारः=पुनर्व्यवहारः । अत्रापि स्ववाक्यहीन इति प्रकृतार्थहानिनिमित्तोपलक्षणम् । विवादमुपक्रम्य राजानं वञ्चयित्वाऽन्योन्यं यौ वादिप्र-

तिवादिनौ स्वयमेव विवादान्निवर्त्तेते तयोरुभयोरपि दण्ड्यत्वमाह—
बृहस्पतिः,

पूर्वोत्तरे सन्निविष्टे विचारे सम्प्रवर्त्तिते ।
प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमम् ॥

मिथ इत्यनेन राज्ञो निवेदनमकृत्वैवाऽन्योन्यमित्युक्ते राजवञ्चन-मवगम्यते ।

कात्यायनस्तु स्पष्टमाह—

आवेद्य प्रग्टहीतार्थं प्रशमं यान्ति ये मिथः ।
सर्वे द्विगुणदण्डाः स्युर्विप्रलम्भान्नृपस्य ते ॥ इति ।

द्विगुणो दण्डस्तु पराजयनिमित्तदण्डापेक्षया । नतु विवादास्पदी-भूतद्रव्यापेक्षया । अद्रव्यविवादेष्वव्याप्तेः । राज्ञे निवेद्याऽन्योन्यरुच्या राजानुरोधेनैव वा सन्धिकरणे तु न दण्ड इत्यर्थात् सिद्धम् । स्फुटीकृतं बृहस्पतिना,

पूर्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्यनिर्णये ।
द्वयोरुत्तरयोः सन्धिः स्यादयःखण्डयोरिव ॥
साक्षिसभ्यविकल्पस्तु भवेत्तत्रोभयोरपि ।
दोलायमानौ यौ सन्धिं कुर्यातां तौ विचक्षणौ ॥
प्रमाणसमता यत्र भेदः शास्त्रचरित्रयोः ।
तत्र राजाज्ञया सन्धिरुभयोरपि शस्यते ॥
धर्मार्थोपग्रहः कीर्त्तिर्भवेत्साम्येन भूभृतः ।
न क्लिश्यन्ते साक्षिसभ्या वैरं च विनिवर्त्तते ॥
निग्रहानुग्रहं दण्डं धर्मं प्राप्य यशोऽयशः ।
विग्रहाज्जायते नृणां पुनर्दोषस्तथैव च ॥
तस्मात्कुलगणाध्यक्षधर्मज्ञाः समदृष्टयः ।
अद्वेषलोभाद्यद्ब्रूयुस्तत्कर्त्तव्यं विजानता ॥ इति ।

साक्षिसभ्यविकल्प इति । उभयोरप्यर्थिप्रत्यर्थिनोः किमेते वक्ष्यन्तीति साक्षिसभ्यविषयको विकल्पो भवेत् । तत्र=कार्य्यनिर्णये दोलायमानौ सन्देहदोलारूढौ यावर्थिप्रत्यर्थिनौ सन्धिं कुर्य्यातां, तौ विचक्षणौ=च-तुरौ पराजयजनिताप्रतिष्ठादितिरोधानादित्यर्थ इति कल्पतरुः । रत्नाकरस्तु साक्षिणां सभ्यानां च विकल्पः परस्परविरोध इत्याह । प्रमाणसमतेति । यत्र सभ्यानां वादिद्वयपक्षे प्रमाणसाम्यं प्रतिभाति । यत्र च शास्त्रचरि-त्रयोर्भेदः शास्त्रे शास्त्रान्तरेण चरित्रे व्यवहारे चरित्रान्तरेण भेदो विप्रतिपत्तिर्नतु शास्त्रव्यवहारयोः परस्परं भेद इति व्याख्यानम् । धर्म-

शास्त्रविरोधे व्यवहारस्यार्थशास्त्रत्वेन दुर्बलत्वात् तत्र राजाज्ञया सन्धिः कार्यत्वेन प्रशस्यते। धर्म्मार्थोपग्रहादिहेतुत्वात्। निग्रहानुग्रहाद्व्यवस्थानिवर्त्तकत्वाच्च। तस्मादित्यादिना राजाज्ञैव केवलं न सन्धिहेतुः कुलगणाध्यक्षादिवचोऽपि राजवञ्चनयेति प्रतिपाद्यते। एतच्च प्रत्याकलितं सभ्यैरवश्यमादर्त्तव्यमित्याह—

नारदः,

प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः।
सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः॥ (क्र०प्र०श्लो०६८)

अस्यार्थः स्मृतिचन्द्रिकाकारेणैवमुक्तः। अव्यवस्थितैः प्रमाणैः प्रमाणानि प्रमाणकर्त्तारः प्रमाणशब्देन लक्ष्यन्ते। ते सीदन्ति=विनश्यन्ति निर्णयं नाप्नुवन्ति। अतः प्रत्याकलनकौशलेन प्रमाणज्ञैः सभ्यैर्यत्नतस्तानि प्रमाणानि परिपाल्यानि यथा व्यवस्थादुःस्थितानि न भवन्ति तथा विवेचनीयानीत्यर्थ इति। वयं तु अव्यवस्थितैर्मूलशैथिल्यादिना दुःस्थितैः प्रमाणैः=प्रमाणानुग्राहकैस्तर्कैः प्रमाणानि=साक्ष्यादीनि सीदन्ति=निर्णयाक्षमाणि भवन्ति। हि=यतः। अतः प्रमाणज्ञैः प्रमाणानि यत्नतः परिपाल्यानि=सत्तर्कपरिशुद्ध्यनुग्रहेण तत्त्वनिर्णयफलानि कार्य्याणीति व्याचक्ष्महे। अनयोश्च व्याख्यानयोस्तारतम्यं तत्त्वविद्भिर्विवेचनीयम्। इदं च प्रत्याकलितं व्यवहर्त्तृसम्बन्धाभावाद्व्यवहारदर्शिमात्रकर्त्तृकत्वान्न व्यवहारपादचतुष्टयान्तर्भूतमिति मिताक्षराकारस्य सम्मतम्। न त्वनुपादेयम्। एतदन्तरेण तृतीयक्रियापादानवतारात्। यथाह—"उत्तराभिधानानन्तरमर्थिप्रत्यर्थिनोः कस्य क्रिया का वा क्रियेति परामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानाद्व्यवहर्त्तृसम्बन्धाभावाच्च न व्यवहारपादत्वम्" इति।

अपरार्कस्तु। साध्यसिद्धिपदेन जयपराजयावधारणलक्षणं प्रत्याकलितं योगीश्वरवचने लक्षणया गृह्यत इति वदन् क्रियोपन्यासोत्तरकालीनविचारस्य सभ्यैः क्रियमाणस्य प्रत्याकलितरूपतामभिप्रैति। सम्प्रतिपत्त्युत्तरेण क्रियापादेनापि जयपराजयावधारणलक्षणप्रत्याकलितपाद इति द्विपात्त्वमेवेति ब्रुवाणो वाचस्पतिरपि तदेवानुबध्नाति।

कल्पतरुस्मृतिचन्द्रिकाकारौ मिताक्षराकारवदेवोत्तरलेखनानन्तरभावितानां हीनपरिज्ञानसन्धिकरणक्रियादानानां क्रियापादप्राग्भाविनां प्रत्याकलितत्वमभिहितवन्तौ। व्यवहारोपयोगित्वाद् बृहस्पत्यादिवचनानां प्रागस्मल्लिखितानामनुरोधाच्च व्यवहारपादत्वं परं तदनभ्युपगतमभ्युपगतवन्तौ। क्रियापादप्राग्भावित्वमेव तु तस्य युक्तम्। "ये तु तिष्ठन्ति

करण" इत्यादिवचनात् । व्यवहारपादत्वमस्तु न वेत्यन्यदेतत् ।

यत्तु साध्यसिद्धेर्व्यवहारफलत्वान्न व्यवहारपादत्वं युक्तमिति । तन्न । व्यवहारभावनायाः फलापवर्गिण्याः फलनिरूप्यत्वेन फलस्य तदंशत्वेन तत्पादत्वे बाधकाभावात् । अत एव त्र्यंशा भावनेति मीमांसकानामुद्घोषः ।

तात्पर्य्यपरिशुद्धावुदयनाचार्यास्तु प्रमाणोपन्यासमेव प्रत्याकलितमभिमन्यन्ते । तदाहुः—"यद्यपि परीक्षायां न वादिप्रतिवादिनौ स्तः । पृच्छोपक्रममात्रेण द्वितीयोपयोगात् । सम्भवेऽपि तयोर्विषयोपस्थापनमात्रपर्य्यवसानात् स्थेयस्यैव परीक्षकत्वम् । तथापि पूर्वपक्षोत्तरपक्षप्रत्याकलितनिष्कर्षभेदेन चतुष्पाद्व्यवहारपूर्वप्रवर्त्तनात् फलतो न कश्चिद्विशेषः । एककर्त्तृकत्वेऽपि तावत एव व्यापारकलापस्य विचारे विद्यमानत्वात् । तस्मादप्यनिपुणो देशकस्तथापि देश्यं सावगममेव" इति ।

वस्तुतस्तु न प्रमाणोपन्यासस्तेषां प्रत्याकलितत्वेनाभिप्रेतः । किन्तु सभिककृतः प्रमाणोपष्टम्भकतर्कादिपरामर्श एव । यतो न शास्त्रीयकथायां व्यवहारवत्पूर्वपक्षोत्तरपक्षौ स्वाभिमतसहेतुकसाध्यनिर्देशमात्रपरौ किन्तु पूर्वपक्षिणा कण्टकोद्धारोत्तरपक्षदूषणपुरःसरं स्वपक्षे स्थिरीकृते सिद्धान्तवादिना तदुभयप्रतिक्षेपेण स्वपक्षसाधकप्रमाणकप्रमाणप्रथमप्रख्यापनं क्रियते । ततः स्थेयैस्तदुभयविवेकाख्यप्रत्याकलितेन निष्कर्ष एकतरपक्षानिर्द्धारणरूपः क्रियते । तावता कथासमाप्तिर्वादे । जल्पवितण्डयोस्तु सभिकादीनामुत्तरोऽपि व्यापारो विद्यत इत्यादि लक्षणमाकरे । अत्र तु साक्ष्यादिविलक्षणं मानमुत्तरभेदेन नियतं प्रागुपन्यासानर्हमिति न पूर्वोत्तरपादान्तर्गतिस्तस्य । अत एवात्र प्रत्याकलितस्यात्रोत्तरे कस्य क्रियेत्यादि विमर्शस्य स्थेयकृतस्य प्राच्यत्वं प्रमाणोपन्यासात् । तत्र तु प्रतीच्यत्वमेव स्थेयकृतप्रमाणसाध्वसाधुताविवेकरूपता चेत्यस्तु विस्तरः । एवं प्रत्याकलितमाकलितम् ।

अधुना क्रियापादो विविच्यते ।

तत्र कात्यायनः—

वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम् ।
तत्साध्यं साधनं येन तत्साध्यं साध्यतेऽखिलम् ॥
सारभूतं पदं मुक्त्वा निःसाराणि बहून्यपि ।
संसाधयेत् क्रियां यां तु तां जह्यात्सारवर्जिताम् ॥

पक्षद्वयं साधयेद्या तां जह्याद्दूरतः क्रियाम् ।
क्रियां बलवतीं मुक्त्वा दुर्बलं योऽवलम्बते ।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात् क्रियाम् ॥ इति ।

ताम्=बलवतीम् । तेन प्रागेव प्रबलं प्रमाणमुद्भाव्यम् । दुर्बलप्रमाणालम्बनेन पराजितस्य पश्चात्प्रबलप्रमाणोपन्यासावसरो नास्तीत्यर्थः । अत एवाह—

नारदः,

निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत्॥इति।(अ०१श्लो०६२)

निर्णिक्ते=शोधिते । अन्यतरजयपराजयान्यतरावधारणं प्रापित इति यावत् । पूर्वमेव दुर्बलप्रबलसकलप्रमाणोपन्यासे कृते तु सर्वप्रमाणानुसारेण "छलं निरस्य" इत्यभिधानात् पश्चादुद्भावितं कृत्रिमत्वादिशङ्काकलङ्कितमित्यनुपादेयमेवेत्यर्थः । अत एव पूर्ववाक्येऽपि मुक्त्वेति पुनरिति चोक्तम् ।

स एव यथा—

पक्वेषु धान्येषु यथा निष्फलाः प्रावृषो गुणाः ।
निर्णिक्तव्यवहाराणां प्रमाणमफलं तथा ॥ इति । (अ०१श्लो०६३)

उत्तरे पत्रानिवेशिते साध्यसिद्धेः साधनाय तत्साधननिर्देशं कः कुर्यादित्यपेक्षिते—

याज्ञवल्क्य आह,

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् । (अ०१श्लो०७)

तत=उत्तरालिखनानन्तरम् । अर्थी अर्थ्यत इत्यर्थः साध्यं सोऽस्याऽस्तीत्यर्थी साध्यवान् । सद्य=एवाविलम्बेन । प्रतिज्ञातस्य=प्रतिज्ञाविषयस्य अर्थस्य=साध्यस्य साधनम् । साध्यतेऽनेनेति साधनं=प्रमाणं साक्ष्यादि लौकिकमलौकिकं वा । लेखयेत्=लेखकद्वारा । स्वयं वा लिखेदित्यपि द्रष्टव्यम् । दृष्टार्थत्वात् । अत्र सद्य इति वदन्नुत्तराभिधाने कालविलम्बनमप्यनुमन्यते । तच्च विशेषपरिभाषायां विवक्ष्यते । अर्थी लेखयेदित्यनेन सम्प्रतिपत्तौ न कस्याप्यर्थित्वमिति न कोऽपि साधनं लेखयेदिति पादद्वयेनैव व्यवहारनिर्वाहः । तथाचोक्तम्-द्विपात् सम्प्रतिपत्तिस्तिष्ठति । मिथ्योत्तरे पूर्ववादिन एवार्थित्वात् स एव साधनं लेखयेत् । कारणोत्तरप्राङ्न्यायोत्तरयोस्तु प्रत्यर्थ्येव साध्यवान् । कारणप्राङ्न्याययोस्तस्यैव साध्यत्वादिति स एव लेखयेदित्युक्तं

भवति । तेन—

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥
मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि ।
प्राङ्न्यायेऽपि तथैव स्यात्प्रतिपत्तौ न सा भवेत् ॥

इति व्यासादिस्मृत्युक्तोऽर्थोऽर्थिपदेन सङ्क्षेपतः सर्व एवोक्तो भवति । अत्र चण्डेश्वरः—

साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ (या०२।१२)

इत्यत्र सद्यो विवादयेत्=उत्तरं दापयेदित्यनेन प्रत्यर्थिपक्षस्य लिखने विलम्बप्राप्तौ साहसादिषु तत्पक्षमपि सद्य एव लेखयेदिति योऽपवादः स यदि प्राग्भाषावादिपक्षलिखने विलम्बोक्त्यार्थप्राप्तः प्रत्यर्थिपक्षलिखनविलम्बः स्यात् तदैव घटते नान्यथेत्येतद्वाक्यव्याख्याने यदर्थिपदेन प्रत्यवस्कन्दनप्राङ्न्याययोः प्रत्यर्थ्येवार्थी जात इति स एव साधनं लेखयेदिति प्रत्यर्थिनोऽपि ग्रहणमिति मिताक्षराकारेण व्याख्यातम् । तत् पूर्वापरविरोधान्मन्दमित्याह । तदतिसाहसम् । भाषोत्तरवादिपक्षमात्रलेखनपरत्वं यद्यनयोर्वाक्ययोस्तर्हि साधनपदानन्वये समासानुपपत्तेः सन्दर्भविरोधाच्च । साधनलेखनस्यैवोत्तरलिखनोत्तरमाकाङ्क्षितत्वात् । साहसादिष्वप्युत्तरभेदव्यवहारभेदव्यवस्थया द्वयोरपि पूर्ववाक्योपात्तसाधनलेखनसद्यस्त्वार्थाक्षिप्तोत्तरलेखनविलम्बापवादोपपत्तेः । न चोत्तरलेखनं सर्वत्र प्रत्यर्थिन एवेति तद्विलम्बानुमतिविमर्श्योस्तं प्रत्येव प्रतिपादनमर्हमिति वाच्यम् । एतावतापि क्रियोपन्यासप्रतिपादकवचनस्यार्थिपदेन भाषावादिमात्रग्रहणाग्रहे नियामकाभावात् । प्रत्युत "मिथ्याक्रिया" इत्यादिवचनार्थसङ्ग्रहाय द्वयोरपि ग्रहणमर्थिपदेनेत्यस्यैव युक्तत्वात् । एवं सति मिताक्षरायां पूर्वापरविरोधापादनमज्ञानविलसितमेवेत्यास्तां तावत् ।

बृहस्पतिः—

द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैकानेकधा भिन्ना मुनिभिस्तत्त्ववादिभिः ॥
साक्षिलेख्यानुमानं च त्रिविधा मानुषी क्रिया ।

साक्षिलेख्यानुमानमिति द्वन्द्वैकवद्भावः ।

साक्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम् ।
अनुमानं तु द्विविधं नवधा दैविकी क्रिया ॥

इदं सङ्ख्याभिधानं न नियमाय भेदान्तराणामपि प्रमाणप्रकरणे वक्ष्यमाणत्वात् ।

कात्यायनः—

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं विदुः ।
लेशोद्देशस्तु युक्तिः स्याद्दिव्यानीह विषादयः ॥

लेशोऽन्यथानुपपन्नो धर्मस्तस्योद्देशो विमर्शो युक्तिरित्यर्थः ।

पूर्वपादेऽपि लिखिते यथाऽक्षरमशेषतः ।
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत् ॥

पूर्वपादो=भाषा लिखिते=पूर्वपक्षतया लिखितम् उत्तरमिति यावत् । तृतीयपादः=प्रत्याकलिताख्यः तस्मिन् सति क्रियया=प्रमाणेन प्रतिपादयेत् साध्यमितिशेषः । भाषोत्तरप्रत्याकलिताख्यपादत्रये सति क्रियया स्वकार्य्यमर्थी साधयेदिति तात्पर्य्यार्थः । कार्य्यक्रियाशब्दौ व्याचष्टे व्यासः—

कार्य्यं हि साध्यमित्युक्तं साधनं तु क्रियोच्यते ।
द्विभेदा सा पुनर्ज्ञेया मानुषी दैविकी तथा ॥ इति ।

साधनं=प्रमाणम् । प्रत्याकलितस्य तृतीयव्यवहारपादत्वमभ्युपगच्छता स्मृतिचन्द्रिकाकारेणैवमिदं वचो व्याख्यातम् । मिताक्षराकारमते तु तृतीयपादक्रिययेति संमुख एवार्थः । 'साक्षी द्वादशभेद' इत्यादि प्रमाणप्रकरणे प्रपञ्चयिष्यामः ।

याज्ञवल्क्यः—

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ इति । (२।२२)

दिव्येष्वन्यतममित्यर्थः ।

कात्यायनः—

यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्नतु दैवीं क्रियां नृपः ॥
यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या नतु पूर्णापि दैविकी वदतां नृणाम् ॥

एकदेशप्राप्ता=साध्यैकदेशविषया । अत्र यद्येको वादी मानुषीं साक्ष्याद्यन्यतमां क्रियां स्वपक्षसाधकतयोपन्यस्यति अन्यस्तु तत्प्रतिपक्षतया दैविकीम्, तदार्थादितरवादिपक्षसिद्ध्यसिद्ध्योः सुलभत्वेन न दिव्यापेक्षेति प्रथमवचनार्थः । एवमेकोऽपि वादी साध्यानेकत्वे साध्यैकदेशमपि यदि प्रमाणेन साधयति तदैकदेशविभावितन्यायेनैकदेशान्तर-

स्यापि सिद्धेर्वक्ष्यमाणत्वान्न दिव्यावसर इति द्वितीयवाक्यार्थः । दिव्यस्वरूपप्रमाणयोरागमैकगम्यत्वान्मानुषप्रमाणासम्भव एव दिव्यस्य प्रामाण्यमिति मुनिवचननिचयपर्य्यालोचनयावगम्यते । अन्यान्यपि क्वचित् क्वचित्केषाञ्चित् प्रमाणानां प्राधान्याभिप्रायेण व्यवस्थापकानि वचनान्यृषीणाम् । यथा—

क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥
इति कात्यायनः ।

पितामहः—

स्थावरेषु विवादेषु दिव्यानि परिवर्ज्जयेत् ।
साक्षिभिर्लिखितेनाथ भुक्त्या वैतान् प्रसाधयेत् ॥

इदमपि साक्ष्यादिसुभिक्षं स्थावरविषयाविवादेषु सुलभमतस्तत्सम्भवान्वेषणमेव कार्यमित्येवम्परम् । न सर्वथा दिव्यपरिहारपरम् । सर्वथा साक्ष्याद्यसम्भवेऽपि दिव्याग्रहणे निर्णयाभावप्रसङ्गात् ।

कात्यायनः—

दत्तादत्तेषु भृत्यानां स्वामिना निर्णये सति ।
विक्रीयादानसम्बन्धे क्रीत्वा धनमनिच्छति ॥
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं नच लेख्यकम् ॥
पूगश्रेणीगणादीनां या स्थितिः परिकीर्त्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥
द्वारमार्गक्रियाभोगजलवाहादिषु क्रिया ।
भुक्तिरेव तु गुर्वी स्यान्न दिव्यं नच साक्षिणः ।

दत्तादत्ते=प्रतिश्रुत्याप्रदाने दत्त्वा पुनः प्रत्यावृत्य ग्रहणे वा । दत्ताप्रदानिके विवादपद इति यावत् । भृत्यानामित्यादिना वेतनादाने । विक्रीयादानेत्यादिना क्रयविक्रयानुशये । इतरद् व्यक्तम् । दत्तादत्तादिषु वृद्धानां लिखितकरणाप्रसिद्धेर्भुक्तेश्चासम्भवात् साक्षिणश्चैतादृशि विषये सुलभत्वान्मानुषप्रमाणसम्भवे च दिव्यासम्भवात् न दिव्यं न च लेख्यकम् इत्युक्तम् । पूगादीनां संविदि तु बहुकर्तृकायां लिखितं विना न निर्वाहः सर्वेषां व्यवहर्तृत्वान्नोदासीनसाक्षिसम्भवो मानुषसत्त्वे च दिव्यानवकाश इत्यभिसन्धायाभिहितं न दिव्यं न च साक्षिण इति । द्वारमार्गादिष्वपि गमनागमनादिरूपभोगस्यैव परं भावाल्लेख्यस्य चाप्रसिद्धेर्मानुषाभाव एव च दिव्यावकाशान्न दिव्यमित्यादि भुक्तिरेव तु

गुर्वीति चोक्तम् । एवं सर्ववचनानि विवेचनीयानि । अत एव—

अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे ।
न्यासापह्नवने चैव दिव्या सम्भवति क्रिया ॥ (अ०२श्लो०३०)

इति नारदेन सम्भवतीत्युक्तम् ।

स एव—

यदा साक्षी न विद्येत विवादे वदतां नृणाम् ।
तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः ॥
स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि ।
एष एव विधिर्दृष्टः सर्वार्थापह्नवेषु च ॥ इति ।

कात्यायनः—

गूढसाहसिकानां तु प्राप्तं दिव्यैः परीक्षणम् ।
युक्तिलेशेङ्गिताकारवाक्चक्षुश्चेष्टितैर्नृणाम् ॥
अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत् ।
दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत् ॥

बृहस्पतिः—

मणिमुक्ताप्रबालानां कूटकृन्न्यासहारकः ।
हिंसकोऽन्याङ्गनासेवी परीक्ष्यः शपथैः सदा ॥
महापापाभिशापेषु निक्षेपहरणे तथा ।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥
चिरन्तनोपांशुकृताचिरनष्टेषु साक्षिषु ।
प्रदुष्टेषु समानेषु दिव्यैः कार्यं विशोधयेत् ॥

अत्र सत्स्वपि साक्षिषु इत्यनेनैतादृशि विषये साक्षिण एव तावन्न सम्भवन्ति । सम्भवन्तोऽपि वा कथञ्चित्कूटतया प्रायः प्रदुष्टा इति विवक्षितं नतु यथाश्रुतम् । चिरन्तनकृते उपांशुकृते=रहसि कृत इत्यनेन लेख्याद्यसम्भवमेवोपलक्षयति । अत एवाग्रे चिरनष्टेषु प्रदुष्टेषु समानेषु इत्यनेनासाक्षिवन्निमित्तान्युपलक्षितवान् ।

व्यासः—

प्रथमे यत्र भिद्यन्ते साक्षिणश्च तथाऽपरे ।
परेभ्यश्च तथाचान्ये तं वादं शपथैर्नयेत् ॥

भिद्यन्ते=विप्रतिपद्यन्ते ।

कात्यायनः—

समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत् ।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु ॥

दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः ।

साक्षिषु विद्यमानेष्वपि तत्र दोषावष्टम्भेन दिव्यमालम्बत इत्यर्थः । समत्वं साक्षिणां यत्रेति । यत्रोभाभ्यां भाषावादिभ्यामुपन्यस्तानां साक्षिणां गुणतः सङ्ख्यातश्च तुल्यत्वमित्यर्थः ।

व्यासः—

न मयैतत्कृतं लेख्यं कूटमेतेन कारितम् ।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥

लेख्यदोषोद्भावनेन लेख्ये निर्णयाक्षमे तदारूढसाक्षिषु सुतरां दण्डापूपिकन्यायेन दोषोद्भावनान्मानुषासम्भवे दिव्येन निर्णयः कार्य्य इत्यर्थः ।

प्रजापतिः—

यन्नामगोत्रैर्यल्लेख्यं तुल्यं लेख्यं क्वचिद्भवेत् ।
अगृहीतधने तत्र कार्य्यो दिव्येन निर्णयः ॥

मूललेख्येन नामगोत्रैस्तुल्यं लेख्यान्तरविपरीतार्थं यदा तदा तदप्रमाणीकृत्य दिव्येन निर्णयः कार्य्य इत्यर्थः ।

कात्यायनः—

यत्र स्यात्सोपधं लेख्यं तद्राज्ञे श्रावितं यदि ।
शोधयेत्तत्तु दिव्येन राजा धर्मासनस्थितः ॥

सोपधं=छलकृतम् । यच्च मिथ्योत्तरे पूर्ववादिनः क्रियादानं नोत्तरवादिन इति प्रागुक्तं तत्र भाषावादिनो मानुषप्रमाणसम्भवादुत्तरवादिनश्च तदसम्भवान्मानुषसम्भवे च दिव्यानवसरादिति न्यायो मूलमिति । यदि तत्रापि भाषावादिनो दिव्यभिन्नप्रमाणाभावस्तदा—

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥

इति कात्यायनीयादुत्तरवादिन एव दिव्यं देयम् । पूर्वार्द्धेनार्थिनो दिव्यनिषेधात् प्रत्यर्थिनोऽर्थात्तत्सिद्धौ पुनः परार्द्धेन तद्विधानस्य 'सिद्धे सत्यारम्भो नियमाय' इति न्यायेन निषेधदार्ढ्यार्थत्वात् । प्राङ्न्यायकारणोत्तरयोः क्रियापदमुभयक्रियापरमपि मिथ्योत्तरे मानुषमात्रपरं कात्यायनीयानुरोधात् । नचैवमनुषङ्गानुपपत्तिः । तदर्थकतयोभयान्वयस्यानुषङ्गहेतुत्वं न यावदर्थकत्वस्य । विरुद्धार्थकत्वे व्यवायवत्सन्निधिबाधेनानुषङ्गस्य तुल्ययोगितानिबन्धनस्य भङ्गः । किञ्चिदर्थानन्वयेऽपि तुल्ययोगितायाः सत्वात्तदभङ्गात् । यदा तु प्रत्यर्थी सन्दिहानस्तदा तस्याधिकारनिश्चयाभावान्मानुषप्रमाणाभावेऽपि न दिव्यं किन्त्वर्थिनोऽधिकारनिश्चयादिति ध्येयम् । नच "न कश्चित्" इति कात्यायनव-

चनविरोधः। अधिकारानिश्चये तत्प्रवृत्त्यसम्भवात्। धनं धनी साधयतीति लोकप्रवादोऽपीदृग्विषयाभिप्रायक एव। यत्र विवादविषये प्रत्यर्थी सन्दिहानस्तत्र तस्योत्तरानर्हतेति व्यवहारतत्त्वलिखनं त्वतस्त्वमेव। अज्ञानरूपामिथ्योत्तरार्हत्वात्। अज्ञानस्य निश्चयाभावरूपस्य सन्देहेऽपि सम्भवात्। प्रत्यर्थिन एव सर्वत्रोत्तरकर्तृत्वाच्च। यदा तु द्वयोरपि मानुषप्रमाणाभावो दिव्यानध्यवसायश्च तदा निर्णयोपायमाह—

पितामहः,

लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः॥
निश्चेतुं ये न शक्याः स्युर्वादाः सन्दिग्धरूपिणः।
तेषां नृपः प्रमाणं स्यात्स सर्वस्य प्रभुर्यतः॥ इति।

तादृग्व्यवहारे नृपेणैवोभयापीडया स्वेच्छया काचन व्यवस्था कृत्वा देया सोभाभ्यां नातिक्रमणीयेत्यर्थः। दिव्यावान्तरभेदादि सर्वं दिव्यप्रकरणे वक्ष्यामः।

अथ निर्णयापरपर्य्यायः सिद्धिपादः।

येषां प्रत्याकलितं व्यवहारपाद इत्यभिमतं तेषां सिद्धेः फलत्वाद्व्यवहारपृथग्भावोऽन्येषां प्रत्याकलितस्य। चतुष्पात्त्वमेव तु सर्वमते व्यवहारस्य।

याज्ञवल्क्यः—

तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा। इति। (२।८)

तस्य=प्रमाणस्य सिद्धौ=निःशङ्कप्रामाण्यव्यवस्थितौ सत्यां प्रमाणोपन्यासकर्त्ता सिद्धिं=जयलक्षणामाप्नोति। अन्यथा प्रामाण्यासिद्धौ विपरीतमसिद्धिं पराजयलक्षणामाप्नोति।

नारदः—

सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता।
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत्॥ (अ०१श्लो०६)

तरन्=निर्वाहयन्। उत्तरः=उत्कृष्टो विजयीति यावत्। निर्णयप्रकारानाह—

व्यासः,

प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया।
वादिसम्प्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः॥

विवृतवानेतत्स एव—

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्

अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः ॥
देशस्थितिः पूर्वकृतां चरितं समुदाहृतम् ।
अर्थानुरूपाः शपथाः स्मृताः सत्यघटादयः ॥
तेषामभावे राजाज्ञां निर्णयं तु विदुर्बुधाः । इति ।

प्रमाणत्रयं सत्तर्कोपष्टब्धमनुमानं चरितादिचतुष्टयमित्यष्टविधहेतुकत्वान्निर्णयस्याप्यष्टविधत्वम् । यद्यपि भुक्तिरप्यनुमानमेव तथापि प्रत्याकलितकालीनं सभ्यानामनुमानमिहानुमानपदेन विवक्षितम् ।

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुःप्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णयः ॥

इति बृहस्पत्युक्तानां धर्मादीनां निर्णयहेतुत्वं प्रागेव "तत्र सत्ये स्थितो धर्म" इत्यादिना तेनैव विवृतम् । तत् प्रागेव निरूपितम् ।

स एव—

एकैको द्विविधः प्रोक्तः क्रियाभेदान्मनीषिभिः ।

क्रियभेदात्=मानुषदैविकक्रियाभेदात् । धर्मनिर्णयस्य द्वैधमाह—

स एव,

सम्यग्विचार्य्य कार्य्यं तु युक्त्या सम्परिकल्पितम् ।
परीक्षितं तु शपथैः स ज्ञेयो धर्मनिर्णयः ॥
प्रतिवादी प्रपद्येत यत्र धर्मः स निर्णयः ।
दिव्यैर्विशोधितः सम्यक् द्वितीयः स उदाहृतः ॥

प्रतिवादी प्रपद्येतेत्यस्य काकाक्षिवदुभयत्र सम्बन्धः । यत्र प्रतिवादी युक्त्या सम्यग्विचार्य सम्परिकल्पितं=निर्धारितं पुनः शपथैः पुत्रशिरःस्पर्शादिभिः परीक्षितं कार्य्यं प्रपद्येत अङ्गीकुर्य्यात् स आद्यो धर्मनिर्णयः । दिव्यैर्घटादिभिर्विशोधितः प्रतिवादी यत्र कार्य्यं प्रपद्येत स द्वितीयो धर्माख्यो निर्णय इत्यर्थः । व्यवहारनिर्णयस्यापि द्वैविध्यमाह—

स एव—

प्रमाणैर्निश्चयो यस्तु व्यवहारः स उच्यते ।
वाक्छलानुत्तरत्वेन द्वितीयः परिकीर्त्तितः ॥

प्रमाणपदेनात्र साक्षिणो लिखितं च । व्यक्त्यभिप्रायेण च बहुवचनम् । भुक्तेरनुमानत्वाद्दिव्यस्य धर्मनिर्णयान्तर्भावात् । वाक्छलानुत्तरत्वेन वाक्छलेनानुत्तरत्वेन च यो निश्चयो द्वितीयो व्यवहारः स इत्यर्थः । चरित्रनिर्णयस्यापि भेदद्वयं तेनैवाभिहितम्—

अनुमानेन निर्णीतं चरित्रमिति कीर्त्तितम् ।
देशस्थित्या द्वितीयं तु शास्त्रविद्भिरुदाहृतम् ॥

अनुमानेन=भुक्तियुक्तिस्वरूपेण यो निर्णयस्तदेकं चरित्रम् । देश-स्थित्या यो निर्णयस्तद्द्वितीयं चरित्रमित्यर्थः । राजाज्ञानिर्णयस्यापि द्विभेदताभिहिता तेनैव ।

प्रमाणसहिताद्यस्तु राजाज्ञा निर्णयः स्मृतः ।
शास्त्रसभ्यविरोधे च तथान्यः परिकीर्त्तितः ॥

प्रमाणसहिता राजाज्ञा आद्यो निर्णय इत्यन्वयः । शास्त्राणां सभ्यानां च विरोधे परस्परं विप्रविपत्तौ या राजाज्ञा स द्वितीयो राजाज्ञारूपो निर्णय इत्यर्थः । ननु शास्त्राणां सभ्यानां च विरोध एवासम्भवी स्मृत्यपेताधिकारिणां सभ्यानां दण्ड्यत्वात् । न च शास्त्राणां परस्परविरोधे सभ्यानां चेत्यर्थ इति वाच्यम् । सभ्यविरोधोपन्यासानर्थक्यात् । शास्त्रविरोधे न्यायोपलब्धशास्त्रानुसारेण निर्णयः कार्य्य इत्यस्यार्थस्य—

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ।
धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः ।
केवलं शास्त्रमाश्रित्य न कर्त्तव्यो हि निर्णयः ॥
युक्तिहीनविचारे हि धर्महानिः प्रजायते ॥

न्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्युह्य यथास्थानं गमयेत् ।

इत्यादियोगीश्वरनारदबृहस्पतिगौतमादिवचोभिर्निर्धारितत्वात् । तादृशि विषये राजाज्ञानवसरात् । अनीदृशराजाज्ञाया निषिद्धत्वाच्चेति चेत्, उच्यते । यत्र शास्त्रविरोधे बलवान्न्यायोऽन्यतरार्थविनिगमकः ससभ्यप्राड्विवाकस्य सभापतेर्न हृदयमारोहति चिरतरं मीमांसितोऽपि तादृशशास्त्रविरोधे तन्मूलके चासमाधेये सभ्यविरोधे राजकृतव्यवस्था वादिप्रतिवादिभ्यां मन्तव्येत्येतदर्थकमिदं वचनम् । अतः पितामहवचनं प्राग्लिखितं "निश्चेतुं ये न शक्याः स्युः" इत्यादि । धर्मादीनां चतुर्णां पूर्वपूर्वस्योत्तरोत्तरापेक्षया दुर्बलत्वमाह—

नारदः,

धर्मश्च व्यवहारश्च चरितं राजशासनम् ।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥ इति । (अ०१श्लो०१०)

व्यवहारस्य धर्मबाधकतामाह बृहस्पतिः—

शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयो धर्मस्तेनावहीयत ॥

शास्त्रशब्देन शास्त्रोक्तं साक्ष्यादिप्रमाणं तेन यो निर्णः क्रियते स व्यवहारः । तेन धर्मः शपथादिकृतो निर्णयोऽवहीयते बाध्यते । मानुषप्रमाणे-

सति दिव्यानवसरात । अत एवाह—

कात्यायनः,

युक्तियुक्तं तु कार्य्यं स्याद्दिव्यं यत्र विवर्जितम् ।
धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा ॥

चरित्रस्य व्यवहारबाधकतामाह बृहस्पतिः—

देशस्थित्यानुमानेन नैगमानुमतेन वा ।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते ॥

नैगमाः=पौरवणिजः । नैगमानुमतेनानुमानेनेति सम्बन्धः सामानाधिकरण्येन वाशब्दाद्देशस्थित्यपेक्षः ।

अमुमेवार्थं स्फुटयति कात्यायनः—

प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु ।
विरुद्धं नियतं प्राहुस्तं धर्मं न विचालयेत् ॥
निर्णयं तु यदा कुर्य्यात्तेन धर्मेण पार्थिवः ।
व्यवहारश्चरित्रेण तदा तेनैव बाध्यते ॥ इति ।

स्मृतिविरुद्धमपि नियतत्वान्न विचालयेद्राजा ।

राजशासनस्य चरित्रबाधकतामाह बृहस्पतिः—

विहाय चरिताचारं यत्र कुर्य्यात् पुनर्नृपः ।
निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तया ॥ इति ।

चरिताचारं=पूर्वपूर्वाचरितमाचारम् । यद्यपि "तं धर्मं न विचालयेत्"इत्युक्तमत्र तु "विहाय चरिताचारम्"इत्युच्यते । तेन विरोधः प्रतिभाति । तथापि यदि तद्विचालने पुरराष्ट्रादिक्षोभो न भवति तदा स्मृत्यादिविरुद्धत्वात्तं दूरीकृत्य स्मृत्याद्यविरुद्धो राजाज्ञया निर्णयः कार्य्य इति तात्पर्य्यम् । अत एव पुरराष्ट्रविरुद्धस्य विवादस्यानादेयत्वमुक्तं पुरराष्ट्रक्षोभापादकतया, तदनापादकतया तु स्मृत्याद्यनुरोध एव कार्य्यो राज्ञेति ।

अत एवाह कात्यायनः—

विरुद्धं न्यायतो यत्तु चरित्रं कल्प्यते बुधैः ।
एवं तत्र निरस्येत चरित्रं तु नृपाज्ञया ॥ इति ।

नृपैर्यन्न्यायविरुद्धं चरित्रं न ग्राह्यमिति कल्प्यते । तत्र नृपाज्ञया तच्चरित्रं निरस्यते बाध्यत इत्यर्थः । यथोक्तप्रकारातिरिक्तप्रकारेणैषां बाध्यबाधकताकल्पने दोषमाह—

कात्यायनः,

अनेन विधिना युक्तं बाधकं यद्यदुत्तरम् ।
अन्यथाबाधनं यत्र तत्र धर्मो विहन्यते ॥ इति ।

इति निर्णयपादः ।

अथ पुनर्न्यायः ।

पुनर्न्यायः यद्यपि निर्णयानन्तरं जयपत्रे दत्ते पराजितस्य दण्डार्हत्वं तथापि यदि स पराजितमपि स्वमपराजितमेव मनुते पूर्वव्यवहारे कुदृष्टबुद्ध्या तर्हि द्विगुणदण्डमभ्युपगमय्य राज्ञा सभ्यान्तरोपादानेन पुनर्व्यवहारस्तदीयो द्रष्टव्य इत्याह—

नारदः,

तीरितं चानुशिष्टं च यो मन्येत विधर्मतः ।
द्विगुणं दण्डमादाय पुनस्तत्कार्यमुद्धरेत् ॥ (२।६४)

तीरितं=समापितं निर्णयपर्यन्तं प्रापितमिति यावत् । 'पारतीर कर्मसमाप्तौ" इत्यस्य निष्ठान्तं रूपम् । अनुशिष्टम्=अर्थिप्रत्यर्थिनौ प्रति कथितं जयपत्रे चारोपितम् । विधर्मतो=धर्मविपरीतं कुदृष्टमिति यावत् । योऽर्थिप्रत्यर्थिनोरन्यतरो मन्येत स पराजयनिमित्तं दण्डं द्विगुणमादायाङ्गीकृत्य तत्कार्यं पुनरुद्धरेत्=चतुष्पाद्व्यवहारप्रवर्तनेन निर्णाययेत् ।

याज्ञल्क्यः—

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥
यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।
सभायां तं पुनर्जित्वा दापयेद्द्विगुणं दमम् ॥
(अ० २ श्लो० ३०५।३०६)

अस्यापवादमाह मनुः—

तीरितं चानुशिष्टं च यत्र क्वचन यद्भवेत् ।
कृतं तद्धर्मतो विद्यान्न तद्भूयो निवर्त्तयेत् ॥ (९।२३३)

धर्मतः कृतं चेत्कृतमेव विद्यादित्यर्थः ।

नारदः—

साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।
स्वचर्य्यावसितानां तु नोक्तः पौनर्भवो विधिः ॥ (अ०२श्लो०४)

साक्षिसभ्यावसन्नानां=साक्षिद्वारेण सभ्यद्वारेण वाऽवसन्नानां दूषणे साक्षिषु सभ्येषु वा दोषोद्भावने ऽन्यतरेण कृते पुनर्दर्शनं व्यवहारदर्शनं राज्ञा कार्य्यमितिशेषः । स्वचर्यावसितानां=स्वचर्यया स्वव्यापारेण

पूर्वापरविरुद्धभाषणादिना ऽवसितानां पराजितानां तु पौनर्भवः पुनरुद्भवः पुनर्भवः पुनर्व्यवहारप्रवृत्तिरिति यावत् । तत्सम्बन्धी विधिर्नोक्तः कर्त्तव्यत्वेन नाभिहितो मुनिभिरित्यर्थः ।

बृहस्पतिः—

पलायनानुत्तरत्वादन्यपक्षाश्रयेण वा ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु ॥

वादो गृह्यते=पुनर्न्यायो भवतीत्यर्थः । स्ववाक्येन=पूर्वापरविरुद्धेनोत्तरापरिस्फूर्त्यास्कन्दितेन वा यो जितस्तस्य तु न भवतीत्यर्थः ।

बृहस्पतिकात्यायनौ—

कुलादिभिर्निश्चितेऽपि सन्तोषं न गतस्तु यः ।
विचार्य तत्कृतं राजा कुकृतं पुनरुद्धरेत् ॥

बृहस्पतिः—

निश्चित्य बहुभिः सार्द्धं ब्राह्मणैः शास्त्रपारगैः ।
दण्डयेज्जयिना सार्द्धं पूर्वसभ्यांस्तु दोषिणः ॥

जयिना=पूर्वव्यवहारजयिना ।

नारदः—

दुर्दृष्टे व्यवहारे तु सभ्यास्तं दण्डमाप्नुयुः ।
नहि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते ॥ (१।६६)

मनुः—

अमात्याः प्राड्विवाको वा ये कुर्य्युः कार्यमन्यथा ।
तत्स्वयं नृपतिः कुर्य्यात् तान् सहस्रं तु दण्डयेत् ॥ (९।२३४)

सहस्रं पणान् । दण्डव्यवहारे ऽनुक्तसङ्ख्येयायाः सङ्ख्यायाः पणगतत्वेन परिभाषितत्वात् । एतच्च दण्डनिरूपणप्रस्तावे विवेचयिष्यामः । यत्र द्विगुणदण्डः सहस्राधिकस्तत्रामात्यप्राड्विवाकयोरपि स एव । अन्यत्र सहस्रमेव । अमात्यप्राड्विवाकयोर्मुख्यत्वेन दण्डाधिक्यस्योचितत्वात् ।

इति पुनर्न्यायः ॥

निर्णयानन्तरकृत्यं तु जयिने जयपत्रदानं, पराजिताद्दण्डादानं, सपणाविवादे पणादानं, धनिने धनदापनं च ।

तथा च व्यासः—

व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः ।
जयपत्रं ततो दद्यात्परिज्ञानाय पार्थिवः ॥
पुनर्न्यायादिप्रसक्तौ प्राङ्न्यायपरिज्ञानाय ।

बृहस्पतिः—

प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य चादानाज्जयी लोकैर्निगद्यते ॥

योगीश्वरः—

सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत् ।
दण्डं च स्वपणं चैव धनिने धनमेव च ॥ (२।१८)

बृहस्पतिः—

अपराधानुरूपश्च दण्डोऽत्र परिकल्पितः । इति ।

तत्र जयपत्रप्रकारं लेख्यप्रस्तावे, दण्डपणादाने दण्डनिरूपणे, धनिने धनदानमृणादानप्रकरणे वक्ष्यामः ।

अथ सभ्यप्राड्विवाकसहितस्य सभापतेरन्यथा व्यवहारदर्शने सर्वथा दर्शनाभावे च दोषकथनम् ।

तत्रान्यथा दर्शने दोषमाह—

मनुः,

यस्त्वधर्मेण कार्य्याणि मोहात्कुर्य्यान्नराधिपः ।
अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥ (८।१७४)

कात्यायनः—

अस्वर्ग्या लोकनाशाय परानीकभयावहा ।
आयुर्वीर्यहरी राज्ञां सति वाक्ये स्वयंकृतिः ॥
तस्माच्छास्त्रानुसारेण राजा कार्य्याणि साधयेत् ।
वाक्याभावे तु सर्वेषां देशदृष्टेन सन्नयेत् ॥

अदर्शने दोषमाह महाभारते कृष्णद्वैपायनः—

अर्थिनामुपसन्नानां यस्तु नोपैति दर्शनम् ।
सुखेषु सक्तो नृपतिः स तप्येत नृगो यथा ॥ इति ।

नृगो नाम राजा ।

रामायणे वाल्मीकिः—

पौरकार्य्यं हि यो राजा न करोति समास्थितः ।
व्यक्तं स नरके घोरे पच्यते नात्र संशयः ॥ इति ।

समास्थितः=सुस्थितः । अनेन दुःस्थितस्यादर्शने न दोष इति सूचितम् । अत एवानुकल्पतया दुःस्थितस्य स्वप्रतिनिधिप्राड्विवाकनियोगः प्रागुक्तः । प्राड्विवाकस्य सभ्यानां चान्यथादर्शनादर्शनयोर्दोष इति प्रागेव प्रपञ्चितं व्यवहारदर्शनविधिविचारप्रस्तावे । सम्यग्व्यवहारदर्शने फलमप्याह—

मनुः,

कामक्रोधौ तु संयम्य(१) योऽर्थान् धर्म्मेण पश्यति ।
प्रजास्तमनुवर्त्तन्ते समुद्रमिव सिन्धवः ॥ (८।१७५)
इदं दृष्टफलम् । अदृष्टमपि फलमाह-

नारदः,

एवं पश्येत् सदा राजा व्यवहारान् समाहितः ।
वितत्येह यशो लोके प्रेत्याप्नोति त्रिविष्टपम् ॥ ( १।७४ )

बृहस्पतिः—

एवं शास्त्रोदितं राजा कुर्वन्निर्णयपालनम् ।
वितत्येह यशो लोके महेन्द्रसचिवो भवेत् ॥

फलान्तराण्यपि व्यवहारदर्शनविधिप्रस्तावेऽभिहितानि ।

अथ कृतनिवृत्तिः ।

तत्र मनुविष्णू—

यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत् ।
तत्तत्कार्य्यं निवर्त्तेत कृतं चाप्यकृतं भवेत् ॥

नारदः—

स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मन्यरातिषु ।
व्यवहारः कृतोऽप्येषु पुनः कर्त्तव्यतामियात् ॥ (अ०१श्लो०४३)

मनुनारदौ—

सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता ।
बहिश्चेद्भाष्यते धर्म्मान्नियताद्व्यावहारिकात् ॥
( म०८।१६४।ना०२।१५ )

नियताद्व्यावहारिकात्=नियतव्यावहारिकधर्मबाह्यविषया या भाषा सा यद्यपि प्रतिष्ठिता=साक्षिलेख्यादिप्रमाणवती भवति तथापि सत्या ग्राह्या न भवति । यथा पुत्राद्यन्वयोपेतं कश्चिदभियुङ्क्ते सर्वस्वं मह्यमनेन प्रतिश्रुतमिदानीं न ददातीति ।

मनुः—

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत् तत्सर्वं विनिवर्त्तयेत् ॥
बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत् ॥ (८।१६५।१६८)

(१) सन्त्यज्येतिपाठान्तरम् ।

योगः=छद्म । आधमनम्=आधीकरणम् । उपधिः=छलम् । पूर्वोत्तरार्द्धाभ्यां छलकृतसर्वव्यवहाराणां निवर्त्तनं सार्वत्रिकमित्युक्तं भवति । एवमुत्तरश्लोकेऽपि बलकृतसर्वव्यवहाराणामपि ।

योगीश्वरः—

मत्तोन्मत्तार्त्ताध्यधीनैर्बालेन स्थविरेण वा ।(१)
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति ॥ (२।३२)

अध्यधीनो=दासः । अधिकमधीन इति व्युत्पत्तेः । असम्बद्धेन=वादिप्रतिवाद्यसम्बद्धेन कृतस्तत्प्रतिनिधीभूय सम्पादितः । समासान्तर्गतमपि कृतपदं प्राक्तनतृतीयान्तैरपि बुद्ध्या निष्कृष्य सम्बन्धनीयम् ।

नारदः—

यद्बालः कुरुते कार्य्यमस्वतन्त्रस्तथैव च ।( ऋण।०प्र० )
अकृतं तदपि प्राहुः शास्त्रे शास्त्रविदो जनाः ॥ ( ३९ )
स्वतन्त्रोऽपि हि यत्कार्य्यं कुर्य्यादप्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वतन्त्रः स हेतुतः ॥ ( ४० )
कामक्रोधाभिभूतार्त्तभयव्यसनपीड़िताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥ ( ४१ )
तथा दासकृतं कार्य्यमकृतं परिचक्षते ।
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः ॥ ( २९ )
पुत्रेण च कृतं कार्य्यं यत्स्यादच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्दासः पुत्रश्च तौ समौ ॥ ( ३० )

कात्यायनः—

न क्षेत्रगृहदासानां दानाधमनविक्रियाः ।
अस्वतन्त्रकृताः सिद्धिं प्राप्नुयुर्नानुवर्णिताः ॥

नानुवर्णिताः स्वतन्त्रेण पित्रादिना नानुमताः । अनुमताः सिद्ध्येयुरेवेत्यर्थादुक्तं भवति । अत एवाह—

स एव—

प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये ।
यदि संव्यवहारास्ते कुर्वन्तो ह्यनुमोदिताः ॥
क्षेत्रादीनां तथैव स्युर्भ्राता भ्रातृसुतः सुतः ।
निसृष्टाः कार्यकरणे गुरुणा यदि गच्छता ॥
निसृष्टार्थस्तु यो यस्मिंस्तस्मिन्नर्थे प्रभुस्तु सः ।
तद्भर्त्ता तत्कृतं कार्य्यं नान्यथा कर्त्तुमर्हति ॥

(१) मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः । इति मिताक्षरादिसंमतः पाठः ।

बृहस्पतिरपि—

थः स्वामिना नियुक्तस्तु धनायव्ययपालने ।
कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥
प्रमाणं तत्कृतं सर्वं लाभालाभव्ययोदयम् ।
स्वदेशे वा विदेशे वा स्वामी तन्न विसंवदेत् ॥

अनुमत्यभावेऽपि कुटुम्बभरणार्थमस्वतन्त्रकृतमष्टगुणादिव्यवहारं स्वतन्त्रो न निवर्त्तयेदित्याह—

मनुः,

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत् ।
स्वदेशे वा विदेशे वा तं स्वामी न विचालयेत् ॥ (८।१६७)

अध्यधीनः=पुत्रभ्रातृपुत्रदासादिः ।

अथ स्वतन्त्रास्वतन्त्रलक्षणम् ।

तत्र नारदः—

स्वातन्त्र्यं तु स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ।
( ऋणा०प्र०श्लो०३१ )

तथा—

अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः ।
अस्वतन्त्रः स्मृतः शिष्य आचार्ये तु स्वतन्त्रता ॥ ( ३३ )
अस्वतन्त्राः स्त्रियः पुत्रा दासाद्याश्च परिग्रहः ।
गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ॥ ( ३४ )
बाल आषोडशाद्वर्षात् पौगण्डश्चेति शब्द्यते ।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥ ( ३५ )
जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः ।
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ॥ ( ३६ )
अभावे बीजिनो माता तदभावे तु पूर्वजः ॥ ( ३७ )

कात्यायनः—

पिताऽस्वतन्त्रः पितृमान् भ्राता भ्रातृव्य एव वा ।
कनिष्ठो वाऽविभक्तस्थो दासः कर्मकरस्तथा ॥

पितृमान् पिताप्यस्वतन्त्र इत्यर्थः । अविभक्तस्थः=अविभक्तधनः ।

हारीतः—

दानार्थे वा धनार्थे वा धर्मार्थे वा विशेषतः ।
आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति ॥

नारदः—

स्वतन्त्राः सर्व एवैते परतन्त्रेषु नित्यशः ।
अनुशिष्टौ विसर्गे च विक्रये चेश्वरा मताः ॥ (ऋणा०प्र०३८)

एते=पूर्वोक्ता राजादयः । स्वतन्त्रस्य पित्रादेरपि विषयविशेषे न
स्वातन्त्र्यमित्याह—

कात्यायनः,

सुतस्य सुतदाराणां वशित्वमनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥

एतदप्यनापदीति वक्ष्यते ।

इति सामान्यपरिभाषा ।

## अथ विशेषपरिभाषा ।

तत्र याज्ञवल्क्यः—

अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥(२।९)

अभियुज्यत इत्यभियोगोऽपराधः, ऋणं मदीयं गृहीत्वा न प्रत्यर्पय-
त्ययमित्यादिरर्थिनोपन्यस्तस्तमनिस्तीर्य्यापरिहृत्यैनमभियोक्तारं न प्रत्य-
भियोजयेत्=अपराधेन न संयोजयेत् । युगपद्व्यवहारस्य प्रतिज्ञाभेदेनास-
म्भवात् प्रत्यभियोगानर्थक्यात् इत्ययं प्रत्यर्थिनं प्रत्युपदेशोऽन्यवादि-
त्वेन हीनतापरिहारार्थः । यद्यपि प्रत्यवस्कन्दनं प्रत्यभियोगरूपमेव
तथापि स्वापराधपरिहारार्थत्वादनेन प्रतिषिध्यते । अन्येनाभियुक्तं
चानिस्तीर्णतदीयाभियोगमर्थी नाभियुञ्जीत । अन्याभियोगापेक्षयात्र
प्रत्यभियोगशब्दोऽनुवादत्वेन यथाकथञ्चिन्नेयः । अयमपि युगपद्व्य-
हारासम्भवनिबन्धनोऽर्थिनं प्रत्युपदेशः । किञ्च उक्तम्=आवेदनसमये
यदुक्तं तद्विप्रकृतिं=विरुद्धस्वभावतां न नयेत् न प्रापयेत् । यद्वस्तु यत्प्र-
कारेणावेदनसमये निवेदितं तत् तथैव भाषायां लेखनीयं नान्यथेत्य-
यमप्यर्थिन एवान्यवादित्वनिबन्धनहीनतापरिहारार्थ एवोपदेशः । यद्यपि
"यथावेदितमर्थिना" इत्यत्रैवेदमुक्तमिति पुनरुक्तमाभाति । तथापि तत्
वस्त्वन्तरावेदनप्रतिषेधकम् । इदं तु पदान्तरसंक्रमनिवारकमित्यपुनरु-
क्तता । तद्यथा–'रूपकशतं मदीयं वृद्ध्या गृहीत्वा न प्रयच्छति' इत्यावेद्य
भाषायां 'वस्त्रशतं वृद्ध्या गृहीत्वा न प्रयच्छति' इति ऋणादानपद एव व-
स्त्वन्तरगमनम् । 'रूपकशतं वृद्ध्या गृहीत्वा मदीयं न प्रयच्छति' इत्यावेद्य
भाषायां 'रूपकशतं मदीयं बलादपहृतवान्' इति तस्मिन्नेव वस्तुनि सा-

हसाख्यं विवादपदं लेखयतीति। तत्र यथाशब्दोपादानादत्र च विप्रकृतिपदोपादानात्। वस्त्वन्तरगमने ह्येकत्रैव विवादपदे प्रकारभेदमात्रं प्रकारवाचिथाल्प्रत्ययेन प्रत्याय्यते। पदान्तरसङ्क्रमे तु विरुद्धस्वभावता व्यक्तेति भावः।

"अभियोगमनिस्तीर्य्य" इत्यस्यापवादमाह स एव—

कुर्यात्प्रत्यभियोगं तु कलहे साहसेषु च। (२।१०)

कलहे=वाग्दण्डपारुष्यरूपे। साहसेषु च विषशस्त्रादिकृतप्राणिव्यापादनादिषु यदि सम्भवति प्रत्यभियोगस्तदा स्वाभियोगमनिस्तीर्य्याप्यभियोक्तारं प्रत्यभियोजयेत्।

ननु प्रतिज्ञान्तरत्वापत्तौ युगपद्व्यवहारासम्भवस्य प्रत्यभियोगप्रतिषेधवीजस्यात्रापि तौल्यात्कथं तत्प्रतिप्रसवः। प्राङ्न्यायप्रत्यवस्कन्दनयोस्तु पूर्वपक्षोपमर्दकत्वेनोत्तरलक्षणलक्षितयोः प्रत्यभियोगत्वेऽपि न प्रतिज्ञान्तरापत्त्या युगपद्व्यवहारासम्भवदोष इति वैषम्यम्। अन्यथा तयोरुत्तरत्वमेव न स्यात्। सर्वत्रैतत्प्रतिषेधग्रस्तत्वादिति चेत्, न। यद्यप्यत्रापि युगपद्व्यवहारासम्भवस्तुल्यस्तथापि न्यूनदण्डप्राप्तयेऽधिकदण्डनिवृत्तये च कलहसाहसयोः प्रत्यभियोगः सार्थकोऽन्यत्र निरर्थक इति प्रतिप्रसवोपदेशः। तथाहि—'अनेनाहं ताडितः शप्तो वा पूर्वमयं मत्प्राणव्ययाय व्यापारं कृतवान्' इत्यभियुक्तो यद्याह—'सत्यमेतत्। तथापि मत्तः पूर्वतरमयं ताडनादि मम कृतवान्' इति प्रत्यभियोगे। तस्मिंश्च साधिते दण्डाल्पत्वं प्रत्यभियोक्तुः फलम्।

तथा च नारदः—

पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः॥ इति।(व्य०प०१५।६)

विनयो=दण्डः। यदा तु युगपद्द्वयोस्ताडनादिषु प्रवृत्तिस्तत्राधिकदण्डनिवृत्तिः प्रत्यभियोगफलम्। तदप्याह—

स एव,

पारुष्ये साहसे चैव युगपत्सम्प्रवृत्तयोः।
विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोः॥ इति। (व्य०प०१५।१०)

तेनायमत्र तात्पर्यार्थः। पूर्वपक्षोपमर्दनरूपप्रत्यभियोगस्य प्रतिज्ञोत्तरत्वेन युगपद्व्यवहारासम्भवरूपदोषाभावादेवाप्रतिषिद्धत्वम्। कलहादिषु युगपद्व्यवहारासम्भवे सत्यप्यर्थवान् प्रत्यभियोगः क्रियमाणो न दुष्यति। पूर्वपक्षानुपमर्दनरूपोऽनर्थकश्च प्रत्यभियोगो न कार्य्य ऋणादानादिषु विवादपदेष्विति। यथा 'अयं मदीयमृणमियदियत्या वृद्ध्या

गृहीत्वा न प्रयच्छति' इत्यभियोगे 'मह्यमप्ययं धारयति' इति प्रत्यभियोगो न कार्य्यो निष्प्रयोजनत्वात्प्रतिज्ञान्तरत्वाच्चेति ।

इति प्रत्यभियोगनिर्णयः ।

## अथ निह्नवादिविधिर्निह्नवादिविवेचनं च ।

तत्र याज्ञवल्क्यः—

निह्नुते लिखितं नैकमेकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थो न ग्राह्यस्त्वनिवेदितः ॥ (२।२०)

नैकम्=अनेकम्। निषेधार्थकनकारसमासत्वात् "न लोपो नञ"(६।३।७३) इति नकारलोपाभावे नैकधेतिवद्रूपम्। अर्थिनाभियुक्तं सुवर्णरजतवस्त्रादि वस्तु भाषायां लिखितम् उत्तरलेखनवेलायां प्रत्यर्थी यः सर्वमेव निह्नुते=मिथ्यैतदित्यपलपति सोऽर्थिना एकदेशे=प्रतिज्ञाविषयभूतकतिपयवस्तुनि भावितो=लिखितसाक्ष्यादिप्रमाणबलादङ्गीकारितः सर्वमर्थिप्रतिज्ञातं नृपेण दाप्योऽर्थिने दापनीयः । यस्त्वर्थोऽर्थिनैव व्यामोहप्रमादादिना भाषापत्रशोधनावधि न निवेदितः पश्चान्निवेद्यते प्राक्प्रमादादिना विस्मृतं मयेदमिति । स नृपेण न ग्राह्यो नादर्त्तव्यः प्रमाणादिप्रत्याकलनेनेत्यर्थः ।

ननु—

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।

इत्यनेन विरुद्धमिदम् । तथा हि—

भूतं तत्वार्थसंयुक्तं प्रमादाभिहितं छलम ॥

इत्युक्तेः। भूतेन=वस्तुतत्त्वानुसरणेन छलं=प्रमादामर्षाद्यभिहितं निरस्य व्यवहारान्नृपो नयेत् निर्णयपर्य्यन्तं प्रापयेत् । तस्माद्यथार्थिप्रत्यर्थिनौ सत्यमेव निवेदयतः साक्ष्यादिनैरपेक्ष्येण स्वयमेव। साक्ष्यादयोऽपि शपथादिभिर्भावितास्तत्त्वमेव प्रतिपादयन्ति, तथा सलभ्येन सभापतिना यतितव्यमिति भावः। एवञ्चैकदेशस्य प्रमाणसिद्धावप्येकदेशान्तरस्य सिद्धिः कुतस्त्या। अन्यविषयप्रमाणेनान्यसिद्धेरसम्भवात्। छलप्रसक्तेर्दुर्वारत्वात्। एवं प्रमादादिविस्मृतस्य प्रामाणिकस्यार्थस्यानादरे छलं व्यक्तमेव। कात्यायनवचनविरोधश्चैवं सति। यदाह—

अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥ इति ।

साक्षिग्रहणं लेख्याद्युपलक्षणम्। अत्रापरार्कः—"अपह्नववादिनः साहस्रं यत् मिथ्योत्तरं तद्विषयं "निह्नुत" इत्यादि । यथा—यद्यर्थिना-

भियुक्तः प्रत्यर्थ्येवमुत्तरयति—'भवदभियुक्तानामर्थानां मध्ये यद्येकमपि भवान् साधयति तदा सर्वमहं दास्यामि'इति । छलोदाहरणत्वादस्य । कात्यायनवचनं त्वसावष्टम्भमिथ्योत्तरविषयम् । तेनासाधितांशेऽर्थिना प्रमाणान्तरमुपादेयम् । तदभावेऽपि साधितमात्रलाभेन सन्तोष्टव्यम् ।

अनेकार्थाभियोगे तु सर्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं यदभियुज्यते ॥

इति नारदवचोऽपि सावष्टम्भमिथ्योत्तरविषयमेव" इत्याह ।

तदनुपपन्नम । "सपणश्चेद्विवादः स्यात्" इत्यनेनास्य गतार्थतापत्तेः। ईदृशावष्टम्भस्य पणादनतिरेकात् । नच पणस्य राज्ञा ग्रहणमस्य त्वर्थिनेति भेद इति वाच्यम् । एतादृशभेदस्याप्रयोजकत्वात । स्वपणं दापयेदित्येतावन्मात्रस्यैव तदर्थत्वात् । प्रतिज्ञानुरोधित्वात् पणत्वस्य । निह्नवमात्रस्यात्र प्रतीतेः सावष्टम्भनिह्नवविषयत्वकल्पनाया अप्रामाणिकत्वाच्च । एवं नारदवाक्येऽपि । न च तत्र 'व्यपलापिना' इति विशब्दोपादानादवष्टम्भसहितनिह्नवप्रतीतिरिति वाच्यम् । अनन्यथासिद्धतात्पर्यग्राहकाभावे सावष्टम्भरूपविशेषपरत्वस्य तत्रानियतत्वात् ।

वाचस्पतिचण्डेश्वरौ त्वाहतुः—तत्रैकदेशासिद्धिरेकदेशान्तरसिद्ध्याविनाभूता । तद्विषयं योगीश्वनारदयोर्वचनं तदतिरिक्तविषयं तु कात्यायनीयमिति ।

तदप्यसत् । निह्नवोपादानवैयर्थ्यात् । अनिह्नवेऽपि तस्य युक्तियुक्तत्वात् । प्रत्यवस्कन्दनप्राङ्न्यायोत्तरयोरप्येकदेशे कारणादिसाधने तद्विनाभूतैकदेशान्तरे कारणादिसिद्धेर्दुर्वारत्वात् ।

यत्तु वाचस्पतिना अपरार्कोक्तसपणविवादविषयत्वमस्याभ्युपेत्य तदाहेत्यादिना सपणश्चेदित्यादि तत्र योगीश्वरवच एव संवादितम् । तेन स्पष्टमेव गतार्थत्वं प्रदर्शितमिति महान् प्रमादः ।

विज्ञानयोगिनस्त्वाहुः—यथा भूतानुसरणेन छलनिरासेन च व्यवहारनिर्णयो भवति तथा विधेयमिति मुख्यः कल्पः । तत्र हेतुः—

भूतमप्यनुपन्यस्तं हीयते व्यवहारतः । इति ।

तस्यायमर्थः—यतो भूतं=वस्तुतत्त्वमप्यनुपन्यस्तमकथितं वादिप्रतिवाद्यन्यतरेण साक्ष्यादिना वा । तद्व्यवहारतो=व्यवहाररीत्या हीयते । यद्यपि पश्चात् प्रमाणेन साध्यते प्रमाणं विनैव चैकदेशविभावनेन, तथापि वादिप्रतिवादिसम्बन्धित्वेन हीनं भवति । पश्चात्साक्ष्यादिना प्रमाणान्तरेण साधितमपि प्राक् प्रतिज्ञाकाले न निवेदितं चेन्न लभ्यते । तथा सर्वापह्नवकारिणा कतिपयानि वस्तूनि साक्ष्यादिभिरङ्गीकारितेनान्यान्यपि साक्षात् प्रमाणेनासाधितान्यप्यभियोक्त्रे दातव्यतया प्रतिवादिनः स-

काशाद्धीयन्त इति । तस्माद्वादिप्रतिवादिनोः साक्ष्यादिषु वा गूढा-शयताकूटकारित्वादिना यदा भूतानुसरणमशक्यं तदा चतुष्पाद्व्यव-हारमार्गेण प्रवर्त्तिते व्यवहारे भूतानुसरणाभावेऽपि सभ्यसभापते-र्दोषलेशो नास्ति । रागलोभादिभिरन्यथाशास्त्रकारित्वाभावादित्यर्थः । अत्रोदाहरणम्—"निन्हुते लिखितं नैकं" इति । एकदेशे प्रत्यर्थिनो मिथ्या-वादित्वे निश्चितेऽन्यविषयेऽपि मिथ्यावादित्वसम्भवात् । अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयेऽन्यविषयेऽपि सत्यवादित्वसम्भवादितीदृशसम्भा-वनापरनामकतर्कानुगृहीतादस्मादेव वचनात् सर्वमर्थिने प्रत्यर्थी राज्ञा दापनीयः । प्रतिज्ञाकाले चानिवेदितमिदानीमुपन्यस्यन्नेकदेशविभावन-निमित्तान्यलाभे लोभेनेदानीमुपन्यस्यतीति सम्भावनारूपतर्कानुगृहीत-मेतदेव वचनमनिवेदितस्यादापनप्रमाणमित्येतत्तर्कवाक्यानुसारेण स-सभ्येन सभापतिना निर्णये क्रियमाणे यदि सहस्रतमेऽप्यंशे वस्तुनो-ऽन्यथात्वं भवति तर्हि तस्य न दोष इति तात्पर्यम् । एतदभिप्राय-कमेव गौतमवचनम्—

न्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्यूह्य यथास्थानं गमयेदिति ।

अग्रे च तेनैवोपसंहृतं "तस्माद्राजाचार्य्यावनिन्द्यौ" इति । नचै-कदेशविभावितप्रागनिवेदितनिवेदकयोर्वादिप्रतिवादिनोर्हीनतामात्रप्रति-पादकमिदं याज्ञवल्क्यादिवचनमिति वाच्यम् । "सर्वं दाप्यो न ग्राह्यः" "देयं यदभियुज्यत" इति वचनात् । हीनतामात्रप्रतिपादनपरत्वे तद-भिधानानर्थक्यात् । कात्यायनवचने तु यत्र पित्रादिगृहीतबह्वर्थविषया-भियोगः पुत्रादेस्तद्रिक्थहरस्य क्रियते । सचाभियुक्तोऽहं तावदत्र किमपि न जानामि यावत् प्रमाणेनायं साधयति तावद्दास्यामीत्युत्त-रयति । तत्रासौ निह्नववादी न भवति । तेनैकदेशविभावितोऽपि न क्वचिदप्यसत्यवादीति पूर्वोक्ततर्कानवतारात् । तदनुगृहीतमेतद्वचनमत्र न प्रवर्त्तत इति सामान्यविषयत्वात् निह्नवोत्तरमपहायाज्ञानोत्तर ईदृशे प्रवर्त्तत इति न तेन सहास्य विरोधः । भिन्नविषयत्वात् ।

ननु—

ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।
ऊने वाभ्यधिके वार्थे प्रोक्ते साध्यं न सिध्यति ॥

अर्थिना यावानर्थो भाषायां लिखितस्ततो न्यूनेऽधिके वार्थे साक्षि-भिः प्रोक्ते सर्वमेव साध्यं न सिध्यति प्रतिज्ञाप्रमाणयोर्विसंवादादित्य-र्थकेनानेन कात्यायनवचनेन प्रत्युत साक्ष्यादिविभावितैकदेशस्याप्यसिद्धि-प्रयाति । तत्सिद्धा तदविभावितैकदेशासिद्धिर्दूरापास्ता ।

उच्यते—यत्र वादी सकलप्रतिज्ञातार्थसाधनत्वेन साक्षिलेख्यादिकमुपन्यस्यति । ततश्च न्यूनोऽधिको वार्थो विभाव्यते । तत्र कूटसम्भावनया कृत्स्नसाध्यासिद्धिः । तत्रापि निश्चितं "न सिध्यतीति" वचनात् संशयतादवस्थ्ये प्रमाणान्तरेण सम्भवता निर्णयः कार्य्यः । छलं निरस्येति नियमात् इतिकात्यायनीयस्यास्य वचनस्यार्थः । यत्र तु वाद्येवं वदति—एतावत्यंशे ममैते साक्षिणो लेख्यं चास्ति अन्यमंशमलौकिकप्रमाणेन विभावयिष्यामीति । तत्रोक्ततर्कानुगृहीतान्निन्हुत इत्यादियोगीश्वरनारदवचनादेकदेशविभावनेऽपि कृत्स्नसाध्यसिद्धेर्नालौकिकप्रमाणप्रतीक्षेति योगीश्वरवचनस्य । अज्ञानोत्तरे तु यावानंशो लौकिकेन प्रमाणेन प्रमितस्तावानेव ततो निर्धार्य्योऽन्यस्तु दिव्यात् । तदसम्भवे न सिध्यत्येव । "अनेकार्थाभियोगेऽपि" इति वचनात् । अत एवाभिप्रायात् प्रागुपन्यस्तं वचनम्—

यद्येकदेशव्याप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या तु न पूर्णापि दैविकी वदतां नृणाम् ॥

इति कात्यायनीयम् । तेन न क्वापि विरोधलेश इति ।

वयं तु 'छलं निरस्य' इत्यस्य विधेर्हेतुरयं 'भूतमप्यनुपन्यस्तं' इत्युपोद्बलकः । यतो भूतं तत्त्वमप्यनुपन्यस्तं व्यवहारतो हीयते वादिप्रतिवादिभ्यामनुपन्यस्तं प्रमाणतोऽसाधिते हीयते हानिमाप्नोति व्यवहारतो व्यवहाररीत्येति तस्यार्थः । तदुपपादनं "निह्नुते लिखितं नैकम्" इत्यादि । तस्याप्ययमर्थः । वादिनः कतिपयांशे सत्यवादिनोऽन्यांशेऽपि सत्यवादित्वसम्भवात् प्रतिवादिनश्च सर्वापह्नववादिनः कतिपयांशे मिथ्यावादित्वनिश्चयादन्यांशेऽपि तत्सम्भवात् स सर्वमर्थं नृपेणार्थिने दाप्यो दापयितुं योग्यो भवति निरुत्तरत्वात् । एव प्रागनिवेदितोऽर्थिनार्थो भूतोऽपि=प्रामाणिकोऽपि न ग्राह्यः=ग्रहणार्हो न । यदि तवायमर्थः सत्यः स्याद्भाषायामेव निवेदितः स्यादित्याक्षेपेऽर्थिनोऽपि निरुत्तरत्वात् । तस्मादुत्तरदानसमये प्रत्यर्थी राजादिभिरेवं बोधनीयो यावत्येवांशे तव मिथ्यात्वनिश्चयस्तावदेवापह्नोतव्यमन्यत्सम्प्रतिपत्तव्यम् । क्वचिदप्यंशेऽनेन भवदुपरिसाधिते तव निरुत्तरत्वापत्तेः । एवं वाद्यपि भाषासमये सावधानेन त्वया स्वीयं यावदस्ति साध्यमेतदुपरि तत्सर्वं स्मारं स्मारं लेखनीयमन्यथा तदंशे निरुत्तरता तवापद्येतेति बोधनीयः । एवं साक्षिणोऽपि प्रमादादिभ्यः प्रच्यावनीयाः। तथा सत्यनायासेन तत्त्वानुसरणं भवति । तच्चावश्यकमन्यथा दिव्या-

ना तत्त्वानुसरणं कर्त्तव्यं स्यादिति सर्वथा तत्त्वानुसरणेनैव व्यव-
पर्यवसानं विधेयमिति छलं निरस्येत्यस्यैव विधेः सर्वोऽयं शेषो
स्वतन्त्रो विधिर्येन दापनं सर्वस्य विधीयेत अनिवेदितग्रहणं वा प्रति-
ध्येत । नारदवाक्येऽपि देयं दानयोग्यमित्येवार्थः । नचैवं "दाप्य" इत्या-
नामानर्थक्यमेव स्यादिति वाच्यम् । यतो लौकिकप्रमाणावष्टम्भेनै-
व प्रतिभाति । तस्मात्तत्त्वानुसरणायान्यतरस्माद्दिशि विषये दिव्य-
ग्राह्यमित्यत्र तात्पर्यात् । कात्यायनादिवचनानामप्यत्रैव तात्पर्यम् ।
ऋणादिषु विवादेषु" इत्यतोऽप्ययमेवार्थो दृढतामुपैति । यतः प्रमाण-
विसंवादे निश्चयाभावस्ततस्तत्त्वानुसरणाय प्रमाणान्तरादर आ-
श्यक इति । अत एवाह साहसादौ प्रतिज्ञातार्थैकदेशविभावनेऽपि
कदेशे प्रमाणान्तरानुसरणम् । साहसिनो हि राजदण्डमात्रं न प्रत्यर्पणं
स्मै चित् । यद्यपि चौर्ये प्रत्यर्पणमस्ति । तथापि कतिपयचौरः सर्वं
प्यत इति लोके प्रसिद्धतरत्वाद्यदि मद्गृहात्तावदियच्चौर्येण गत-
स्य च सविधे प्रमाणप्रमितमियदस्तीति चौराभियोक्ता साधयति तदा
त एव सर्वं लभते । यदि त्वनष्टमपि कियन्नष्टसाधनावष्टम्भेन लब्धु-
पन्यस्यति तर्हि मिथ्यावादित्वान्नाष्टिक एव दण्ड्यो भवति इत्यपि लोके
सिद्धतरम् । अनेनैवाभिप्रायेणाह कात्यायनः—

साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकीर्त्तितम् ॥ इति ।

तत्त्वानुसरणं स्मृत्योर्विरोधे कथं स्यादित्यपेक्षायामाह—

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः । इति ।

व्याख्यातं चैतत्प्रागेव । अर्थशास्त्रधर्मशास्त्रयोर्विरोधे धर्मशास्त्रानु-
सरणेनैव तत्त्वानुसरणमित्याह—

अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः । इति ।

इदमपि प्रपञ्चितं प्राक् । तस्मादस्मन्मते "छलं निरस्य" इत्याद्येतदन्त-
घट्टकेन छलनिरासतत्त्वानुसरणावश्यम्भावप्रतिपादनमेवैकवाक्यतया
भ्यत इति ब्रूमः ।

इति निह्नवादिविचारः ।

## अथोत्तरदाने विलम्बाविलम्बव्यवस्था ।

तत्र योगीश्वरेण—

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।

इति क्रियोपन्यासे सद्यस्त्वं विदधतोत्तरदाने विलम्बोऽयमनुमत इति प्रतीयते ।

तदाह बृहस्पतिः—

शालीनत्वाद्भयार्त्तत्वात्प्रत्यर्थी स्मृतिविभ्रमात् ।
कालं प्रार्थयते यत्र तत्रेमं लब्धुमर्हति ॥
एकाहत्र्यहपञ्चाहसप्ताहं पक्षमेव वा ।
मासं ऋतुत्रयं वर्षं लभते शक्त्यपेक्षया ॥ इति ।

कात्यायनः—

सद्यः कृतेषु कार्य्येषु सद्य एव विवादयेत् ।
कालातीतेषु वा कालं दद्यात् प्रत्यर्थिने प्रभुः ॥

प्रभुर्विचारकः ।

श्रुत्वा लेखयतो ह्यर्थं प्रत्यर्थी कारणाद्यदि ।
कालं विवादे याचेत तस्य देयो न संशयः ॥
सद्यो वैकाहपञ्चाहौ त्र्यहं वा गुरुलाघवात् ।
लभेतासौ त्रिपक्षं वा सप्ताहं वा ऋणादिषु ॥

अत्र व्यवस्था तेनैवोक्ता—

सद्यः कृते सद्योवादः समातीते दिनं क्षिपेत् ।
षडब्दिके त्रिरात्रं तु सप्ताहं द्वादशाब्दिके ॥
विंशत्यब्दे दशाहं तु मासार्द्धं वा लभेत सः ।
मासं त्रिंशत्समातीते त्रिपक्षं परतो लभेत् ॥
कालं शक्तिं विदित्वा तु कार्य्याणां च बलाबलम् ।
अल्पं वा बहुकालं वा दद्यात्प्रत्यर्थिने प्रभुः ॥
यो वा यस्मिन् समाचारः पारम्पर्य्यक्रमागतः ।
तं प्रतीक्ष्य यथान्यायं दापयेदुत्तरं नृपः ॥
मूलं वा साक्षिणो वाथ परदेशस्थिता यदा ।
तत्कालो हि भवेत्पुंसां स्वदेशे वक्तुमागमात् ॥
दिनमासार्द्धमासं वा ऋतुः संवत्सरोऽपि वा ।
क्रियास्थित्यनुरूपस्तु देयः कालः परेण तु ॥

लेखयतः अर्थिन इति शेषः । अर्थं श्रुत्वेत्यन्वयः । काले देयो राज्ञेति शेषः । समातीते=संवत्सरातीते । यस्मिन्=देशकुलादौ । मूलशब्देन विवादास्पदीभूतधनममुष्मात्पुरुषाल्लब्धमिति वादी यं कथयति स उच्यते । तत्र विषये पुंसां मूलभूतानां साक्षिणां वा । स्वदेशे आगमात्= आगमनावधि । वक्तुम्=उत्तरं दातुं काले देयो भवेत् दातव्य इत्यर्थः ।

अत्रापवादमाह—

याज्ञवल्क्यः,

साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम् ।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥ (२।१२)

साहसं=विषशस्त्रादिभिः प्राणिव्यापादनमित्यादि सहसा=बलावष्टम्भस्तेन यत्कृतम् । गौः=दोग्ध्री । अभिशापः=पातकाभिशंसनम् । अत्ययः=प्राणधनातिपातः । द्वन्द्वैकवद्भावादेकवचनम् । स्त्रियां=कुलस्त्रियां चारित्रविषये विवादे । दास्यां स्त्रियां स्वत्वविवादे । कर्मकरणकालातिपातविषये वा विवादे । सद्य एव=प्रागुक्तकालप्रतीक्षामकृत्वैव विवादयेत्=उत्तरं दापयेत् । अन्यत्र=एतद्भिन्नऋणादिविषये विवादे काल=उत्तरदानकाल इच्छया=अर्थिसभ्यसभापतीनामनुमत्या स्मृत=उक्तो मन्वादिभिः । अत्ययो=विवादविषयीभूतवस्तुविनाश इति कल्पतरौ । साहसादिषूत्तरकालदानावलम्बेऽन्यतरस्य क्षतिरवश्यम्भाविनीति सद्य एवोत्तरलेखनम् । ऋणादिषु विलम्बेऽपि न क्षतिस्तथेति सोऽप्यनुमतः । स चैकाहादिरूपेण प्रागुक्तवचनैर्विवेचितः । यत्र तु न वाचनिकी व्यवस्था तत्रार्थ्यादीच्छयेति तात्पर्य्यम् ।

अत एवाह नारदः—

गहनत्वाद्विवादानामसामर्थ्यात् स्मृतेरपि ।
ऋणादिषु हरेत्कालं कामं तत्त्वबुभुत्सया ॥ इति । (अ०१श्लो०४४)

नारदः—

गोभूहिरण्यस्त्रीस्तेयपारुष्यात्यायिकेषु च ।
साहसेष्वभिशापे च सद्य एव विवादयेत् ॥ (१।४५)

अभिशापः=पापाभिशंसनम् । तस्य पारुष्यशब्देन ग्रहणेऽप्यादरार्थं पुनर्वचनम् । आत्ययिकं कात्ययनेनोक्तम्—

व्यपैति गौरवं यत्र विनाशस्त्याग एव वा ।
कालं तत्र न कुर्वीत कार्य्यमात्ययिकं हि तत् ॥ इति ।

अन्यत्रापि सद्य एवोत्तरदानमाह—

कात्यायनः,

धेनावनडुहि क्षेत्रे स्त्रीषु प्रजनने तथा ।
न्यासे याचितके दत्ते तथैव क्रयविक्रये ॥
कन्याया दूषणे चैव कलहे साहसे निधौ ।
उपधौ कौटसाक्ष्ये च सद्य एव विवादयेत् ॥

प्रजननमत्र विवाहः । अन्यत्र विवादासम्भवात् । उपधिः=कूटगण-

कादिकृतव्यवहारः। विनाशे त्याग इति न सामानाधिकरण्यम्। किन्तु विनाशे सति यत्र त्याग एव सम्पद्यत इत्यर्थेनैक एव विषय इति कल्पतरुरत्नाकरौ। तन्न। सतिसप्तम्यनुषङ्गयोः प्रतीतिविपरीतयोः कल्पनानुपपत्तेर्वाशब्दस्वरसाच्च पृथग्विषयताया एवौचित्यात्। वस्तुतस्तु विनाशस्त्याग एव वेति प्रथमान्त एव पाठः। तथाचायमर्थः— यत्रोत्तरदानविलम्बे सति गौरवं वस्तुनो मूल्यादिकृतं व्यपैति, वस्तुन एव वा विनाशो ध्वंसः त्यागः प्रच्यवो वा भवति, तत्रोत्तरदानकालमेकाहादिरूपं न कुर्वीत सद्य एवोत्तरं दापयेदित्यभिप्रायः।

बृहस्पतिकात्यायनौ—

साहसस्तेयपारुष्यगोऽभिशापे तथात्यये।
भूमौ विवादयेत् क्षिप्रमकालेऽपि बृहस्पतिः॥

अभिशापान्तो द्वन्द्वैकवद्भावः। अकाले=रात्र्यादावपि। बृहस्पतिरिदमाहेत्यर्थः।

इत्युत्तरदाने विलम्बाविलम्बव्यवस्था।
समाप्ता च विशेषपरिभाषा।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमल-
श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज-श्रीमन्महाराजमधुकरसाहसूनु-
श्रीमन्महाराजाधिराजचतुरुदधिजलवलयवसुन्धराहृदय-
पुण्डरीकविकाशदिनकर-
श्रीवीरसिंहदेवोद्योजित-श्रीहंसपण्डितात्मज-श्रीपरशुरामसूनु-
सकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्य-
महागजपारीन्द्रविद्वज्जनजीवातु-
श्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशे
परिभाषापरिष्काराख्यं
व्यवहारमातृकापरपर्य्यायं प्रथमप्रकरणम्॥ १॥

# अथ प्रमाणनिरूपणाख्यं द्वितीयं प्रकरणमारभ्यते ।

तत्र प्रमाणभेदप्रमाणविषयव्यवस्थे क्रियापादप्रस्तावे विविक्ते । अधुना साक्ष्यादिप्रमाणानामवान्तरभेदः प्रस्तूयते । तत्र साक्षिस्वरूपमाह—

मनुः,

समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिद्ध्यति । इति । (अ०८।श्लो०७४

समक्षदर्शनस्य साक्ष्यहेतुत्वं पाणिनिरपि स्मरति—"साक्षाद्द्रष्टरि) संज्ञायाम्" (अ०५पा०२सू०९१) इति । तत्तु व्युत्पत्तिमात्रमव्यापकत्वात् । श्रुतसाक्ष्यादीनामपि साक्षित्वव्यवहारविषयत्वात् । अत एव श्रवणादित्युपलक्षणम् । प्रमाणमात्रस्य विवादविषयप्रमाता साक्षीति विवक्षितम् । साक्षिप्रयोजनमाह—

नारदः,

सन्दिग्धेषु तु कार्य्येषु द्वयोर्विवदमानयोः ।
दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तिदर्शनम् ॥ इति । (व्य०प०१०।१४७)

दृष्टश्रुताभ्यामनुभूतत्वादित्यर्थः । यद्वा दृष्टत्वात् श्रुतत्वादनुभूतत्वाच्चेत्यर्थः । अनुभूतत्वादित्यनेन च गोवृषन्यायेन प्रमाणान्तरजन्योऽनुभवो गृह्यते । व्यक्तिदर्शनं=विवेकज्ञानम् ।

कात्यायनः—

अर्थिप्रत्यर्थिसान्निध्यादनुभूतं तु यद्भवेत् ।
तद्ग्राह्यं साक्षिणो वाक्यमन्यथा न बृहस्पतिः ॥

अर्थिप्रत्यर्थिसान्निध्यादनुभूतमिति मुख्यः कल्पः । तदसान्निध्येऽपि श्रवणादिना साक्ष्यस्य वचनान्तरैरनुमतत्वात् । तच्च साक्षिभेदनिरूपणे व्यक्तीभविष्यति ।

गौतमः—

विप्रतिपत्तौ साक्षिनिमित्ता व्यवस्थेति ।

स च साक्षी प्रथमं द्विविधः । कृतोऽकृतश्च । साक्षित्वेनार्थिप्रत्यर्थिभ्यां निरूपितः कृतः । अनिरूपितोऽकृतः । पुनश्च कृतस्य पञ्चविधत्वादकृतस्य षड्विधत्वादेकादशविधः ।

यथाह नारदः—

एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ।
कृतः पञ्चविधस्तेषां षड्विधोऽकृत उच्यते ॥ ( व्य०प०१०।१४९ )

लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च ।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः कृतः ॥ इति । (व्य०प०१०।१५०)

पञ्चानामपि कात्यायनेन स्वरूपमभिहितम्--

अर्थिना स्वयमानीतो यो लेख्ये सन्निवेश्यते ।
स साक्षी लिखितो नाम स्मारितः पत्रकादृते ॥ इति ।

स्मारितः पत्रकादृते इत्यपि विवृतं तेनैव--

यस्तु कार्य्यप्रसिद्ध्यर्थं दृष्ट्वा कार्य्यं पुनः पुन ।
स्मार्य्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते ॥

दृष्ट्वेति दर्शयित्वेत्यन्तर्भावितण्यर्थः । कार्य्यं=व्यवहारपदं दर्शयित्वा प्रमापय्य कार्यप्रसिद्ध्यर्थं=कालान्तरे व्यवहारनिर्णयसिद्ध्यर्थं पुनः पुनः स्मार्य्यते कार्य्यमेव विस्मरणनिरासाय यः स स्मारितो नाम साक्षी-त्यर्थः । यस्तु यदृच्छया प्रसङ्गादागतस्त्वमत्र साक्षी भवेति साक्षित्वेन निरूप्यते स यदृच्छाभिज्ञः । स्मारितस्यास्य च पत्रानारूढत्वेन साम्ये-पि स्वरूपभेदः स्पष्टोऽपि तेनैव विवृतः--

प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः ।
द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ ॥ इति ।

गूढमाह—

अर्थिना स्वार्थसिध्यर्थं प्रत्यर्थिवचनं स्फुटम् ।
यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते ॥ इति ।

उत्तरसाक्षिस्वरूपमाह--

साक्षिणामपि यः साक्ष्यमुपर्य्युपरि भाषते ।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ॥ इति ।

षड्विधस्याप्यकृतस्य भेदो नारदेनैव दर्शितः--

ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्य्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः ॥ (व्य०प०१०।१५१।१५२)

प्राड्विवाकग्रहणं लेखकसभ्ययोरुपलक्षणम् ।
लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः ।
नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृताः ॥

इति वचनात् । बृहस्पतिस्तु लेखितमधिकमादायैतानेव द्वादश सा-क्षिण आह--

लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ॥
यादृच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपरः ॥

नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ॥ इति ।

तल्लक्षणान्यपि कानिचिद्विलक्षणानि कानिचित्पूर्वसंवादीन्याह—स एव,

प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः ।
जातिनामाभिलिखितं येन स्वं पित्र्यमेव च ॥
निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः ।
अर्थिना च क्रियाभेदैस्तस्य कृत्वा ऋणादिकम् ॥
प्रत्यक्षं लिख्यते यस्तु लेखितः स उदाहृतः ।
कुड्यव्यवहितो यस्तु श्राव्यते ऋणिभाषितम् ॥
विनिह्नुते यथाभूतं गूढसाक्षी स कीर्त्तितः ।
आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके ॥
स्मार्यते यो मुहुश्चैव स्मारितः सोऽभिधीयते ।
विभागदाने विपणे ज्ञातिर्यत्रोपदिश्यते ॥
द्वयोः समानो धर्मज्ञः स कुल्यः परिकीर्तितः ।
अर्थिप्रत्यर्थिवचनं शृणुयात्प्रेषितस्तु यः ॥
उभयोः सम्मतः साधुर्दूतकः स उदाहृतः ।
क्रियमाणे च कर्त्तव्ये यः कश्चित्स्वयमागतः ॥
अत्र साक्षित्वमस्माकमुक्तो याद्दच्छिकस्तु सः ।
यस्तु साक्षी दिशं गच्छेत् मुमूर्षुर्वा यथाश्रुतम् ॥
अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ।
उभाभ्यां यस्य विश्वस्तं कार्य्यं वापि निवेदितम् ॥
गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ।
अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ॥
स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ।
निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ॥
अध्यक्षः सभ्यसहितः साक्षी स्यात् तत्र नान्यथा ।
दूषितं घातितं यच्च सीमायास्तु समन्ततः ॥
अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः । इति ।

लिखितलेखितयोः स्वपरलिखनमात्रभेदादेकादशद्वादशसङ्ख्ययोरविरोधः । सर्वे च यथासम्भवं दृष्टश्रुतरूपद्विविधसाक्षिभेदा ज्ञेयाः । क्रियाभेदैर्व्यवहारप्रकारभेदैः । तस्य=प्रत्यर्थिनः । ऋणादिकमित्यादिशब्दात् यथासम्भवं सर्वविवादपदनिदर्शनम् । कुड्यग्रहणं व्यवधायकोपलक्षणम् । विनिन्हुते इति भावे क्तः । निह्नवे सम्भावित इति शेषः । इत्युक्त

इतीतिशब्दाध्याहारः। दिशं=देशान्तरम्। तम्=अन्यमित्यर्थः। उभाभ्याम्=अर्थिप्रत्यर्थिभ्याम्। यस्य विश्वस्तं=यदीयो विश्वासः कृत इति सम्बन्धसामान्यविवक्षया षष्ठीं भावे क्तं चाभ्युपेत्य व्याख्येयम्। गूढचारी कार्य्यमध्यगतश्चेत्येकस्यैव संज्ञाद्वयमिति द्वादशत्वाविरोधः। दूतग्रहणं लेखकस्यापि प्रदर्शनार्थम्। "दूतकः खटिकाग्राही" इति बृहस्पतिवचनात्। ग्रामग्रहणमव्यकृतसाक्ष्युपलक्षणम्। येन योऽर्थः प्रमितस्तत्र साक्षित्वेन प्रागनिरूपितोऽपि पश्चात्साक्षित्वेन विज्ञायोपन्यस्तः पृष्टश्च सभायां साक्ष्यं दातुमर्हतीति फलितोऽर्थः। इतरथा वेतनादानादिषु लिखिताद्यसम्भवे साक्ष्यभावप्रसङ्गः। इदमेवाभिसन्धायाह—

मनुः,

यत्रानिबद्धोऽपीक्षेत शृणुयाद्वापि किञ्चन।
पृष्टस्तत्रापि तद्ब्रूयात् यथादृष्टं यथाश्रुतम्॥ (अ०८।श्लो०७६)

अनिबद्धोऽकृतः। कल्पतरुमदनरत्नयोः अर्थिक्रियां क्रियाभेदैरिति पठितम्। तत्रार्थिक्रियाम्=अर्थिव्यवहारं क्रियाभेदैः=प्रमाणविशेषैराप्तवाक्यादिभिः तस्य कृत्वा तत्सम्बन्धितयावधार्य्य ऋणादिके विवादविषये यः प्रत्यक्षं=प्रत्यर्थिसमक्षं लेख्यतेऽर्थिनेत्यर्थात् स तत्र लेखितः साक्षीति व्याख्येयम्। कालावधिरपि साक्ष्ये स्मर्य्यते—

सुदीर्घेणापि कालेन लिखितः सिद्धिमाप्नुयात्।
सञ्जानन्नात्मनो लेख्यमजानन्तं तु लेखयेत्॥

सम्यग्जानन्नात्मनो लेख्यं कुर्य्यादिति शेषः। अजानन्तं=लिप्यनभिज्ञमात्मानमन्यद्वारा साक्ष्यहमत्रेति लेखयेत्। स द्विविधोऽपि लिखितः साक्षी चिरकालेनापि सार्द्धं निर्णायकतामाप्नुयादित्यर्थः।

कात्यायनः—

अथ स्वहस्तेनारूढस्तिष्ठंश्चैकः स एव तु।
न चेत्प्रत्यभिजानीयात् तत् स्वहस्तैः प्रसाधयेत्॥

नारदः—

आष्टमाद्वत्सरात्सिद्धिः स्मारितस्येह साक्षिणः। (व्य०प०१०)
आपञ्चमात् तथा सिद्धिर्यदृच्छोपगतस्य तु॥ (१६८)
आतृतीयात् तथा वर्षात् सिद्धिर्गूढस्य साक्षिणः।
आसंवत्सरात्सिद्धिं तु वदन्त्युत्तरसाक्षिणः॥ इति। (१६९)

इदं च प्रायोवादेन। यतः स एवाह—

अथवा कालनियमो न दृष्टः साक्षिणं प्रति।
स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः॥ (१७०)

यस्य नोपहता बुद्धिः स्मृतिः श्रोत्रं च नित्यशः ।
सुदीर्घेणापि कालेन स वै साक्षित्वमर्हति ॥ ( १७१ )

ते च साक्षिणः कीदृशाः कार्य्या इत्यपेक्षयामाह—

मनुः,

यादृशा अर्थिभिः (१)कार्य्या व्यवहारेषु साक्षिणः ।
तादृशान् सम्प्रवक्ष्यामि यथा वाच्यमृतं च तैः ॥
गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयोनयः ।
अर्थ्युक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥
आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः ।
सर्वधर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत् ॥ (अ०८।६१।६२।६३)

मौलाः=प्रख्यातकुलोद्भवा इति कल्पतरुः । मूलं पूर्ववृत्तान्तस्तद्विदन्तीति मौलाः ।"तदधीते तद्वेद"(४।२।५९) इत्यणिति मदनरत्ने । वक्ष्यमाणयाज्ञवल्क्यवचनसंवादात्साक्षित्वेनैव पूर्ववृत्तान्तवेदित्वाक्षेपात्तदर्थकमौलपदानर्थक्यप्रसङ्गाच्च कल्पतरुव्याख्यानमेव सम्यक् । रत्नाकरेऽपि मौलाः कुलीना इत्येवं व्याख्यातम् । मूलं प्रतिष्ठा सा येषामस्ति ते मौलाः । अर्थकथनमेतत् । तद्धितस्तु भवार्थ एव कर्त्तव्यः । यो हि यत्र भवः सोऽपि तस्यास्तीत्यविरुद्धमिति वदन् मेधातिथिरपीममर्थमनुमन्यते । पुत्रादिप्रतिष्ठायाः पदान्तरैरेवोपादानात् । प्रतिष्ठान्तरस्य साक्षिलक्षणानुपयोगात् । अत्र क्षत्रियादिग्रहणं नात्यन्तिकब्राह्मणव्युदासपरं, किन्तु सति सम्भवेऽनेकाध्यापनाग्निहोत्रादिकार्यव्यग्रस्य तस्य न साक्षित्वम् । साक्ष्यन्तरासम्भवे तु तस्यापि साक्षित्वं भवत्येव । अतएव ब्रूहीति ब्राह्मणं पृच्छेदिति तस्यापि साक्षित्वेन प्रश्नप्रकारविधिरुपपद्यत इति ध्येयम् । अर्थ्युक्ता=अर्थिना ममैते साक्षिणः सन्तीति निर्दिष्टा नतु स्वयमेवागत्य वयमत्र साक्षिणः स्म इति वदन्तः ।

याज्ञवल्क्यः—

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः । ( अ०२ )
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः॥ ( ६८ )
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्त्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ ( ६९ )

त्र्यवराः=त्रिभ्यो न्यूना न भवन्ति परतस्तु यथेच्छं भवन्तीत्यर्थः । जातयो=मूर्धावसिक्तादयः । वर्णा=ब्राह्मणादयः । तथाच मूर्धावसिक्ता-

( १ ) अत्र धनिभिरिति पुस्तकान्तरे पाठः ।

दीनां मूर्धावसिक्तादयो ब्राह्मणादयो ब्राह्मणादीनां साक्षित्वेनोपादेयाः । असम्भवे सर्वे=सर्वजातीयाः सर्वेषु=सर्वजातीयेषु वादिप्रतिवादिषु साक्षिणो ग्राह्या इत्यर्थः ।

व्यासः--

धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः ।
श्रौतस्मार्त्तक्रियायुक्ता विगतद्वेषमत्सराः ॥
श्रोत्रिया नपराधीनाः सूरयश्चाप्रवासिनः ।
युवानः साक्षिणः कार्य्या ऋणादिषु विजानता ॥ इति ।

कात्यायनः--

प्रख्यातकुलशीलाश्च लोभमोहविवर्जिताः ।
आप्ताः शिष्टा विबुद्धा ये तेषां वाक्यमसंशयम् ॥
विभाव्यो वादिना यादृक् सदृशैरेव भावयेत् ।
नोत्कृष्टश्चावकृष्टस्तु साक्षिभिर्भावयेत्सदा ॥ इति ।

आप्ताः=यथार्थवादिनः । विबुद्धा=विवादविषयीभूतार्थज्ञानवन्तः शास्त्रार्थज्ञानवन्तश्च । "मतिबुद्धिपूजार्थेभ्यश्च" (३।२।१८८) इति कर्त्तरि क्तः । "आदिकर्मणि" (३।४।७१) इति मदनरत्ने । तेषां वाक्यमसंशयं यथा भवति तथा वादिना विभाव्योऽङ्गीकारयितव्योऽर्थात्प्रतिवादी । तत्र विशेषमाह--यादृक् प्रतिवादी तत्सदृशैस्तज्जातीयैरेव भावयेत् । वादिनेत्युपलक्षणम् । वाद्यपि प्रतिवादिना तज्जातीयैरेव विभाव्यः ।

तथा च नारदः--

श्रेणीषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः ।
बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः ॥ इति ।
(व्य०प०१०।१५५)

मनुरपि--

स्त्रीणां साक्ष्यं स्त्रियः कुर्य्युर्द्विजानां सदृशा द्विजाः ।
शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः ॥ (८।६८)

श्रेणिपुरुषाणां सत्यपि वर्गित्वे पृथङ्निर्देशो गोवृषन्यायेन । प्रयोजनं चात्राप्यभ्यर्हितत्वबोधनम् । वर्गिणश्च दर्शिताः--

कात्यायनेन,

लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथापरे ।
समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद्भृगुः ॥
दासचारणमल्लानां हस्त्यश्वायुधजीविनाम् ॥

प्रत्येकैकं समूहानां नायका वर्गिणः स्मृताः।
तेषां वादः स्ववर्गेषु वर्गिणस्तेषु साक्षिणः॥

अत्र सर्वत्र न्यूनाधिकविशेषणोपादानं न दोषाय। अनृतभाषणभीरुत्वसत्यवदनशीलत्वस्य च साक्षित्वप्रयोजकस्योपलक्षणार्थत्वात्तेषाम्। ते च साक्षिणः कियत्सङ्ख्याकाः कुत्र ग्राह्या इत्यपेक्षायामाह—

बृहस्पतिः,

नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा।
उभौ वा श्रोत्रियौ ख्यातौ नैकं पृच्छेत्कदाचन॥

लिखितादिषु स एवाह—

लिखितौ द्वौ तथा गूढौ त्रिचतुष्पञ्च लेखिताः।
यदृच्छाः स्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः॥
दूतकः खटिकाग्राही कार्य्यमध्यगतस्तथा।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च॥

खटिकाग्राही=गणकः। एक एवेत्येवकारो वाद्यपेक्षाया 'नैकं पृच्छेत्कदाचन'' इत्यनेनोक्ताया अनावश्यकत्वार्थो न नियमार्थो ऽदृष्टार्थत्वप्रसङ्गात्। "त्र्यवराः साक्षिणो ज्ञेया" इति योगीश्वरीयमप्येतदभिप्रायकमेव। लिखितादीनामुभयानुमतत्वे ग्राह्यत्वमेकस्यापीत्याह योगीश्वरः—

उभयानुमतः साक्षी भवत्येकोऽपि धर्म्मवित्।

यद्यपि श्रौतस्मार्त्तक्रियापरा धर्मप्रधाना इत्यादिविशेषणोपादानात् त्र्यवराणामपि धर्मवित्त्वं समानम्। तथापि तेषामुभयाननुमतानामपि भवत्येव साक्षित्वम्। द्वयोरेकस्य चोभयानुमत्यैवेति भेद इति मिताक्षरा।

नारदोऽपि—

उभयानुमतो यः स्याद्द्वयोर्विवदमानयोः।
(१)स साक्ष्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात्तु संसदि। (व्य०प०१०।१९२)

आप्तत्वेन राजादिभिरवधारितोऽप्येकः साक्षीत्याह—

व्यासः,

शुचिक्रियश्च धर्मज्ञः साक्षी यस्त्वनुभूतवाक्।
प्रमाणमेकोऽपि भवेत्साहसेषु विशेषतः॥ इति।

अनुभूता यथार्थत्वेन प्रमितचरा वागस्येत्यनुभूतवाक्।

कात्यायनः—

(२)अभ्यन्तरस्तु निक्षेपे साक्ष्यमेकोऽपि वाच्यते।
अर्थिना प्रहितः साक्षी भवेदेकोऽपि याचिते॥

---

(१) असाक्षिकोऽपि इति मु० ना० पाठः। (२) अभ्यन्तरस्थनिक्षेपे इति पाठान्तरम्।

याचित इति निक्षेपविशेषणम् । न्यायतौल्यादन्यत्रापीति वाचस्पतिः । मदनरत्नकारस्तु याचितम् विवाहाद्यर्थं याचितं गृहीतमाभरणादिकं याचितकमिति यावदित्याह । निक्षेपविशेषणवैयर्थ्यादयाचिते तस्मिन्नभ्यन्तरस्यैकस्यासाक्षित्वप्रसङ्गाद्व्यवहितान्वयप्रसक्तेश्चोक्तरैव व्याख्या प्रख्या । कुण्डलादिपण्यविवादे तन्निर्मातैकोऽपि साक्षीत्याह—

स एव,

संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे तत्र कीर्त्तितः ॥

इदं च बहूनामसम्भवे सत्यवादिनोर्द्वयोरेकस्य वानुमतिप्रदर्शनार्थं न नियमार्थम् । अदृष्टार्थत्वप्रसङ्गादिति ध्येयम् । उक्तलक्षणसाक्ष्यसम्भवे प्रतिषेधराहितानां साक्ष्यनुकल्पनां सूचयितुमसाक्षिणोऽपि स्मृतिषूक्ताः । उक्तलक्षणविप्रालाभेऽप्रतिषिद्धानुमत्यै श्राद्धे कतिपयप्रतिषेधवत् ।

तत्र नारदः—

असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः ।
वचनाद्दोषतो भेदात् स्वयमुक्तिर्मृतान्तरः ॥ (व्य०प०१।१५७)
श्रोत्रियाद्यास्तु वचनात् स्तेनाद्या दोषदर्शनात् ।
भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम् ॥(१)
स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत् ।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥ (व्य०प०१।१६१)
मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्राविताद्दते ।(२)
वचनादसाक्षिणः श्रोत्रियाद्यानाह—

स एव,

श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥ इति । (१।५८)

तापसा=वानप्रस्थाः । प्रव्रजितादय इत्यादिशब्देन शङ्खैनैकयोगोपात्ताः पित्रा विवदमानादयो गृह्यन्ते ।

तथाच शङ्खः—

पित्रा विवदमानगुरुकुलवासिपरिव्राजकवानप्रस्था निर्ग्रन्थाश्चासाक्षिणः । इति ।

---

(१) इदं पद्यं मु० ना० नोपलभ्यते ।

(२) अस्यार्धस्य स्थाने व्य० प० १ श्लो० ९४ अन्यत्र श्रावितायस्मात्स्वयमासन्नमृत्युना । इत्यर्धो दृश्यते ।

पित्रा विवदमाननिर्ग्रन्थयोर्दोषादप्यसाक्षित्वसम्भवे वचनादप्यसाक्षित्वे न विरोधः। दोषादसाक्षिणोऽपि तेनैव दर्शिताः—(१)

स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा।
असाक्षिणस्ते दुष्टत्वात् तेषु सत्यं न विद्यते॥ (१।१५९)

चण्डाः=कोपनाः। कितवाः=द्यूतकृतः। योगीश्वरस्त्वसाक्षित्वमात्रविवक्षया सर्वानेतानेकीकृत्याह—

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः।
रङ्गावतारिपाषण्डकूटकृद्विकलेन्द्रियाः॥
पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः॥ इति। (अ०२श्लो०७०।७१)

अत्र वृद्धग्रहणं श्रोत्रियादीनां वचनादसाक्षिणां नारदाद्युक्तानामुपलक्षणम्। स्त्रीबालादिग्रहणमन्येषामपि दोषादसाक्षिणां स्मृत्यन्तराभिहितानाम्। आद्यग्रहणाद्भेदादसाक्षिणां स्वयमुक्तेः मृतान्तरस्य च ग्रहणम्। तत्र स्त्रिया असाक्षित्वं स्त्रीकृतव्यवहारातिरिक्ते। "स्त्रीणां साक्ष्यं स्त्रियः कुर्युः" इति वचनात्। बालोऽप्राप्तव्यवहारः। वृद्धोऽशीतिकावधिः। मत्तो=मदनीयद्रव्येण। उन्मत्तो=ग्रहाद्याविष्टः। अभिशस्तको=महापातकाभिशस्तः। स्वार्थे कः। रङ्गावतारी=चारणः। पाषण्डिनो=निर्ग्रन्थप्रभृतयः। कूटकृत्=कपटलेख्यादिकारी। विकलः=श्रोत्रेन्द्रियादिदोषवान्। पतितो=निश्चितब्रह्महत्यादिः। आप्तः=सुहृत्। अर्थसम्बन्धी=विप्रतिपद्यमानार्थसम्बन्धी। सहाय=एककार्यकारी। रिपुः=शत्रुरन्यतरस्य। साहसी=बलावष्टम्भेन कार्य्यकारी। दृष्टदोषो=दृष्टासत्यवचनः। निर्द्धूतो=बन्धुभिस्त्यक्तः। भेदादसाक्षित्वं च सङ्ख्यागुणसाम्ये। अन्यथा

द्वैधे बहूनां वचनं समेषु गुणिनां वचः।
गुणिद्वैधं तु यत्र स्यात् ग्राह्या ये गुणवत्तमाः॥ (या०२।७८)
बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान्॥ (मनु०८।७३)

इति याज्ञवल्क्यमन्वादिवचनविरोधापत्तिः।

ननु—

साक्षिणां लिखितानां च निर्दिष्टानां च वादिनाम्।
तेषामेकोऽन्यथा ब्रूते भेदात्सर्वेऽप्यसाक्षिणः॥

इति कात्यायनेनैकस्यान्यथावादित्वे सर्वेषामेव भेदादसाक्षित्वमुक्तम्। तद्विरोध इति चेत्, न। त्रयाणां साक्षिणामेकस्यान्यथावादे द्वितीय-

(१) निर्दिष्ट इति पाठान्तरम्।

स्य तत्तुल्यस्य सत्प्रतिपक्षितत्वात्तृतीयस्य चैकतया तत्र साक्षितो न निर्णय इत्यत्र कात्यायनतात्पर्यात् । सत्प्रतिपक्षितावशिष्टानां त्वनेकत्वे तत एव निर्णय इत्यत्र च याज्ञवल्क्यतात्पर्य्यात् । मूलभूतन्यायविरोधेऽनयोर्वचनयोरेवमवश्यं सङ्कोच्यत्वादिति वाचस्पतिः । पञ्चषेष्वपि साक्षिष्वधिकगुणस्यैकस्याप्यन्यथावादित्वे तद्विरुद्धार्थाभिधायिनां सर्वेषामन्येषामसाक्षित्वम् । अधिकगुणस्याप्येकस्य बहुवाक्यविरुद्धाभिधानादसाक्षित्वमिति सर्वेऽपि ते न साक्षिण इति न मन्वादिविरोध इति मदनरत्नकारः ।

वयं तु गुणवत्त्वस्यैव 'शतमप्यन्धानां न पश्यति' 'एकेनापि बहूनां प्रतिबन्धाच्च' इत्यादिन्यायेन प्राधान्यात् गुणवतः साम्ये वादिनिर्दिष्टानामेकस्याप्यन्यथावादित्वे सङ्ख्याधिक्येऽपि गुणवत्तरत्वाभावे सर्वेष्वसाक्षित्वम् । "द्वैधे बहूनाम्" इत्यत्रापि विनिगमकान्तराभावे बहुत्वमेव विनिगमकमत एव सङ्ख्यानपेक्षमेव गुणवत्तमत्वमात्रं ग्राह्यवचने हेतुमाहेति ब्रूमः । स्वयमुक्तेरसाक्षित्वमपि विवृतं कात्यायनेन,

यः साक्षी नैव निर्दिष्टो नाहूतो नैव देशितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः ॥ इति ।

अयमत्र साक्षीति ज्ञानवानान्तरोऽर्थिप्रत्यर्थिनोरन्यतरः स मृतो यस्येति मृतान्तरः । तस्यासाक्षित्वमपि सहेतुकं विवृतं नारदेन—

योऽर्थस्तु श्रावितव्यः स्यात्तस्मिन्नसति चार्थिनि ।
क तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः ॥ इति । (१।१६२)

येनार्थिना प्रत्यर्थिना वा योऽर्थः स्वीयः श्रावितव्यः स्यात् श्रावणीयत्वेनाभिमतो भवेत् तस्मिन् अर्थिप्रत्यर्थिनोरन्यतरस्मिन् असति मृते प्रोषिते वाऽभिमतार्थे चानिवेदिते स साक्षित्वं क कस्मिन्नर्थे वदतु कस्य वा कृते वदत्वित्यर्थः । सामान्यतो य आवयोः कश्चिद्व्यवहारसम्बन्धोऽस्ति तत्र त्वया साक्षिणा भाव्यमित्येतावन्मात्रमुक्तं, विशिष्य च व्यवहारविषयो न तस्मै श्रावितः श्रावयिता च नास्ति स पृष्टोऽपि विशिष्य विषयाज्ञानादसाक्षीति यावत् । इदमेवाभिप्रेत्योक्तम्—"मुमूर्षुश्रावितादृते" इति । मुमूर्षुग्रहणमश्रावणप्रयोजकाभावपरम् ।

तथा च स एव—

श्रावितश्चातुरेणापि यस्त्वर्थो धर्मसंहितः ।
मृतेऽपि तत्र साक्षी स षट्सु चान्वाहितादिषु ॥ (१।९६)

इत्याह । अत्र श्रोत्रियादयो न साक्षिणः कार्यास्तेषां रागादिशून्यानां सत्यवादित्वातिशयेऽपि तपःस्वाध्यायाग्निहोत्रादिव्यासङ्गेन श्रावितार्थ-

विस्मरणसम्भवात् अतिपूज्यानां धर्माधिकरणप्रवेशाह्वानाद्यनौचित्याच्चे-त्यर्थः। अकृतास्तु तत्त्वं जानन्तो भवन्त्येव साक्षिणः। अत एवोक्तम्—"उभौ तु श्रोत्रियौ ग्राह्यौ" इत्यादि। अन्यथा सर्वथा साक्षित्वनिषेधे तद्विरोधः स्यात्। तथा च नात्र हेतुः असत्यवादित्वप्रयोजको हेतुः स्ते-नत्वादिर्नोदाहृत इत्यर्थः। वचनादित्यस्यापि साक्षित्वकरणनिषेध-कवचनादित्यर्थः।

एकोऽलुब्धस्तु साक्षी स्याद्बह्व्यः शुच्योऽपि न स्त्रियः।
स्त्रीबुद्धेरस्थिरत्वाच्च दोषैश्चान्येऽपि ये वृताः॥ (अ०८श्लो०७७)

इति मनुः। अलुब्ध एकोऽपि पुमान् साक्षी भवति। बह्व्यः शुच्यो लोभादि-दोषरहिता अपि स्त्रियः साक्षिण्यो न भवन्ति। तत्र हेतुः स्त्रीबुद्धेरिति। एको लुब्धस्त्वसाक्षीति मेधातिथिनान्याभिमतत्वेनेमं पाठमभिप्रेत्य—"अन्ये त्व-कारप्रश्लेषेणालुब्धोऽप्येको न साक्षी किं पुनर्लुब्ध इत्येवं व्याचक्षते, तदा द्वयोरभ्यनुज्ञानं भवति स्त्रियस्त्वलुब्धा बह्व्योऽपि न साक्ष्यार्हाः किमुताशुचय" इति भणितम्। तत्र अन्ये त्वित्यस्वरसबीजमेकस्य प्रागेव निरस्तत्वात् स्त्रीसाक्ष्यपर्युदासायानुवादे तु यथोक्तपाठेऽप्युप-पत्तेस्तत्र चैकस्यालुब्धस्य पुंस्त्वेन प्रतिप्रसवपूर्वकं स्त्रीणां सर्व्वथा निषेधपरत्वे सन्दर्भसामञ्जस्यमिति। अलुब्ध इत्यकारप्रश्लेषं विनैव पूर्व्वपाठ एव लुब्धश्चेदेको न साक्षी अलुब्धस्त्वेकोऽपि पुमान् साक्षीति जीमूतवाहनेनैवं व्याख्यातम्। तत्र लुब्धानां बहूनामप्यसाक्षित्वे एकपद-वैयर्थ्यमिति व्यवहारतत्त्वे दूषणमुक्तम्। तदप्युत्तरवाक्यशेषत्वादस्य न सम्यगिति द्रष्टव्यम्। शुच्य इति ङीप् छान्दसः। गुणवचनादुकारान्तादेव "वोतो गुणवचनात्"। (४।१।४४) इति तद्विधानात् "कृदिकारादक्तिन" इति वा समर्थनीयम्। अन्येऽपि=स्त्रीव्यतिरिक्ता अपि रागद्वेषादिदोषै-र्ये वृता=आक्रान्तचित्तास्तेऽपि न साक्षिणः। यद्यपि केचन दुष्टा असा-क्षितया पृथगप्युक्तास्तथापि सर्वेषां पृष्ठाकोटेन वक्तुमशक्यतयाऽनु-क्ततत्सङ्ग्रहार्थमिदमुक्तम्। अत एव मेधातिथिः—"सामान्यविशेषाभिधानं हि सर्वे ग्रन्थकारा अमन्यन्त" इत्याह।

मनुरेव—

नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः।
न दृष्टदोषाः कर्त्तव्या न व्याध्यार्त्ता न दूषिताः॥
न साक्षी नृपतिः कार्य्यो न कारुककुशीलवौ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः।
अध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत्।

न वृद्धो न शिशुर्नैको नाप्तो न विकलेन्द्रियः ॥
नार्त्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः ।
न श्रमार्त्तो न कामार्त्तो न क्रुद्धो नापि तस्करः ॥ इति ।

( अ०७श्लो०६४।६५।६६।६७ )

अत्र सर्वैर्विशेषणैरसत्यसम्भाषणाविस्मरणादिकमसाक्ष्यनिमित्त-मुपलक्ष्यते । अत एव वृद्धविकलेन्द्रियविकर्म्मकृत्तस्करादीनां गोवृषन्यायेन पुनरुपादानम् । अत्र बहवः शब्दाः स्पष्टार्थाः । अन्ये मेधातिथ्यनुसारेण विव्रियन्ते । अर्थसम्बन्धिनः=उत्तमर्णाधमर्णाद्याः । उत्तमर्णो ह्यधमर्णवचनेन पराजीयमानस्तदानीमेव रोषाविष्टोऽधमर्णाद्दणं प्रत्यादातुं प्रयतत इति तच्चित्तानुवृत्तिरधमर्णस्य तदनुगुणकौटसाक्ष्यहेतुत्वेन सम्भाव्यते । उत्तमर्णो निर्धनोऽधमर्णे स्वसाक्षितया धनं प्राप्य स्वस्मै तदर्पयिष्यतीति बुद्ध्या तदनुगुणवादी सम्भाव्यते । तथा अर्थः=प्रयोजनम् । तत्सम्बन्धिनोर्वादिप्रतिवादिनोरन्यतरस्माद्येषां स्वप्रयोजनं लिसाधयिषितं तेऽप्युपकारगन्धान्न साक्ष्यार्हा इत्यादि सर्वत्र कौटसाक्ष्यसम्भावनोन्नेया । दृष्टदोषा=अन्यत्र कृतकौटसाक्ष्याः । व्याध्यार्त्ता=वचनविसंवादापादकव्याधिपीडावन्तः । दूषिता=अभिशस्ताः । नृपतेरसाक्षित्वं कृताभिप्रायेणातो न प्राक्तननारदोक्तिविरोधः । लिङ्गस्थोऽपत्यादिः । सङ्गेभ्यो विनिर्गतः=परित्यक्तः पित्रादिगुरुजनसंसर्गात् । वृद्धानुपसेवनादस्यासत्यसम्भावना । अध्यधीनो=बन्धकीकृतः । तस्य तदाज्ञावशवर्त्तित्वात् । वक्तव्यो=निन्दास्पदम् । विकर्मकृत्=अधर्म्माभीरुः । वृद्धविकलेन्द्रिययोर्वार्द्धकस्वभावहेतुकेन्द्रियवैकल्येन भेदः । आर्त्तः=शोकेन ।

नारदोऽपि—

दासनैकृतिकाश्रद्धवृद्धस्त्रीबालचाक्रिकाः । (व्य०प०१)
मत्तोन्मत्तप्रमत्तार्त्तकितवग्रामयाजकाः ॥ (१७८)
महापथिकसामुद्रवणिक्प्रव्रजितातुराः ।
व्यङ्गैकश्रोत्रियाचारहीनक्लीबकुशीलवाः ॥ (१७९)
नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः ।
एकस्थालीसहायारिचरज्ञातिसनाभयः ॥ (१८०)
प्राग्दृष्टदोषशैलूषविषजीव्यहितुण्डिकाः ।
गरदाग्निदकीनाशशूद्रापुत्रोपपातिताः ॥ (१८१)
क्लान्तसाहसिकाश्रान्तनिर्द्धूतान्त्यावसायिनः ।
भिन्नवृत्तासमावृत्तजडतैलिकमूलिकाः । (१८२)
भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः ।

अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः ॥ (१८३)
कुनखिश्यावदच्छित्रिमित्रध्रुकशठशौण्डिकाः ।
ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः ॥ (१८४)
बधकश्चित्रकृत् शङ्खः पतितः कूटकारकः ।
कुहकः प्रत्यवसितस्तस्करो राजपूरुषः ॥ (१८५)
मनुष्यपशुमांसास्थिमधुक्षीराम्बुसर्पिषाम् ।
विक्रेता ब्राह्मणश्चैव द्विजो वार्धुषिकश्च यः । (१८६)
च्युतः स्वधर्म्मात्कुलिकः सूचको हीनसेवकः ।
पित्रा विवदमानश्च भेदकृच्चेत्यसाक्षिणः ॥ (१८७)
श्रेण्यादिषु तु वर्गेषु कश्चिच्चेद्द्वेष्यतामियात् ।
तस्य तेभ्यो न साक्ष्यं स्याद्द्वेष्टारः सर्व एव ते ॥ (१५६)

नैकृतिकः=परापकारशीलः । चाक्रिकः=तैलिकः । प्रमत्तः=सदाऽनवहितः । महापथिको=महापथगामी । सामुद्रवणिक्=वहित्रवाही । एकश्रोत्रियो=द्वयोरनुमतः । एकः श्रोत्रिय इति पृथग्वा । प्रपञ्चितं च प्रागेवैतत् । अपरार्केण तु युग्मैकेति पठित्वा युग्मौ द्वाविति व्याख्यातम् । एकस्थालीसहाय=एकपाकभोजी । सहायः=अन्यतरसाहाय्यकारीति मिश्रचण्डेश्वरौ । मदनरत्नाकरस्तु एकस्थाली सहाय इति विशेषणद्वयं पृथक्कृत्य स्थाली स्थाव्यधिकरणकः पाको लक्ष्यते स एको यस्येत्येकस्थालीति व्याचख्यौ । समासान्तविधेरनित्यत्वादेकस्थालीत्यत्र "नद्यृतश्च" (५।४।१५३) इति न कप् । अर्द्धपिप्पलीत्यादिवन्न ह्रस्व इति च समादधे । अरिचरः=भूतपूर्वः शत्रुः । "भूतपूर्वे चरट्" । (५।३।५३)कल्पतरौ त्वारिधर इति पठित्वा शस्त्रधर इति व्याख्यातम् । ज्ञातयः=सगोत्राः । सनाभयो=मातुलतत्सुतमातृष्वस्त्रीयादयः । शैलूषः=स्त्रीणां नर्तयिता । कुशीलवस्तु रङ्गोपजीवी नट इति भेदः । विषजीवी=विषक्रयजीवीति मदनरत्ने । विषवैद्य इति रत्नाकरे । अहितुण्डिकः=सर्पक्रीडोपजीवी व्यालग्राही । कीनाशः=कर्कशः क्षुद्रो वा । कृपण इति तु मदनरत्ने । उपपातित=उपपातकीति कल्पतरुः । मदनरत्ने तूपपातक इति पठितम् । उप समीपं पातकं यस्येति विगृह्य पातकयुक्त इति व्याख्यातं च । क्लान्तो=ऽतिखिन्नः । अश्रान्तोऽनवरतकर्मकारीति मदनरत्ने । अशान्त इति पठित्वाऽयोग्यकर्मकारीति रत्नाकरे । निर्धूतो=बान्धवैस्त्यक्त इति मदनरत्ने । ग्रामराजकुलश्रेण्यादिभिर्निःसारित इति रत्नाकरे । लोकभयशून्य इति भवदेवः । मूलं=विप्रलम्भस्तत्कारीति कल्पतरुः । "मूलकर्म तु कार्मणम्" इत्यमरकोशात्तत्कारीति तु युक्तम् । अपरार्केण तु पौपिक इति पठित्वा पौपिकः=पूपादिविक्रयीति व्याकृतम् ।

वर्षसूचको=वृष्टिशकुनवेदी । नक्षत्रसूचको=ज्यौतिषिकः । अघशंसी=परकीय-पापप्रकाशकः । हीनाङ्ग=उचितपरिमाणातिन्यूनाङ्गः । व्यङ्गस्तु छिन्नाङ्गुल्यादिरिति भेदः । भगवृत्तिः=भार्य्यादास्यादिसम्भोगशुल्कोपजीवी । शङ्को=वृषभनर्त्तनजीवीति मदनरत्नरत्नाकरयोः । कुहको=दाम्भिकः । प्रत्यवसितः=प्रव्रज्यादिच्युतः । कुलिको=राज्ञा व्यवहारपरिच्छेदकतया नियुक्तः । अस्य च साक्षित्वकरणे निषेधो विधिस्त्वकृतसाक्ष्य इति कल्पतरुः । मदनरत्ने तु कुलं ब्राह्मणादिगणस्तदधिकारी कुलिक इति व्याख्यातम् । सूचको=राज्ञा परदोषान्वेषणपूर्वकं स्वस्मै तन्निवेदने नियुक्तः । भेदकृत्=मित्रादिप्रीतिभङ्गकर्त्ता । श्रेण्यादिष्वित्यस्यायमर्थः । येषु श्रेण्यादिषु यस्यैकोऽपि द्वेष्यतां शत्रुतामाप्तस्तदीयविवादे तच्छ्रेण्यादिनिविष्टाः सर्व एव न साक्षिणः । तत्र हेतुर्द्वेष्टारः सर्व एव त इति । तच्छ्रेण्यन्तर्गतैकद्वेष्यनुरोधकृतवैरनिर्यातनार्थमन्यथावादित्वसम्भवात् ।

अत एव नारदः—

बालोऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूटकृत् ।
विब्रूयाद्बान्धवः स्नेहाद्वैरनिर्य्यातनादरिः॥ इति।(व्य०प०१।१९१)

कात्यायनः—

तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः ।
तद्बन्धुसुहृदो भृत्या आप्तास्ते तु न साक्षिणः ।
मातृष्वसुः सुताश्चैव पितृष्वसृसुतास्तथा ।
मातुलस्य सुताश्चैव सोदर्य्यसुतमातुलाः ॥
एते सनाभयः प्रोक्ताः साक्ष्यं तेषु न योजयेत् ।
कुल्याः सम्बन्धिनश्चैव विवाह्यो भागिनीपतिः ॥
पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा ॥

तथा बृहस्पतिः—

मातुः पिता पितृव्यश्च भार्य्याया भ्रातृमातुलौ ।
भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः ॥
परस्त्रीपानसक्तश्च कितवाः सर्वदूषकाः ।
उन्मत्तार्त्ताः साहसिका नास्तिकाश्च न साक्षिणः ॥ इति ।

अत्र मातृष्वस्रादिशब्दानां सम्बन्धिशब्दत्वादर्थिनोरन्यतरस्य एतादृशसम्बन्धिनो न साक्षिणः सम्बन्धिनि स्नेहादन्यत्र वैरसम्भवादिति ध्येयम् ।

शङ्खलिखितौ—

शुल्कगुल्माधिकृतौ दूतो वेष्टिताशिराः स्त्रियो गुरुकुलवासिनः

परिव्राजकवानप्रस्थनिर्ग्रन्थाः शङ्खव्यालग्राहिणः । इति ।

अत्राऽसाक्षिण इति प्रकृतम् । शुल्काधिकृतः=शुल्कग्रहणस्थानाधिकारी । गुल्मः=स्वस्थाननिवेशितः पदातिसमूहस्तदधिकृतः । वेष्टितशिराः= उद्धतवेषो मूर्द्धव्याध्यभिभूतो वा । इतरे प्रसिद्धा व्याख्याततराश्च । अनेन प्रपञ्चेन लोभादिकमसाक्षित्वनिमित्तमेव व्यक्तीकृतम् ।

यथाह मनुः—

लोभान्मोहाद्भयात्क्रोधान्मैत्र्यात्कामात्तथैव च ।
अज्ञानाद्बालभावाच्च साक्षी वितथ उच्यते ॥ इति । (अ०८श्लो०११८)

असाक्षित्वेनोक्तानां क्वचित्प्रतिप्रसवमाह—

नारदः,

आसाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः ।
कार्य्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥ (व्य०प०१।११८)
स्त्रियाप्यसम्भवे कार्य्यं बालेन स्थविरेण वा ।
शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥ (म०८।७०)

मनुरप्येवमेव द्वितीयं वचनं पठितवान् । इदं चासत्यवादित्वानिश्चयाभावे साक्ष्यन्तरस्य तद्गुणविशिष्टस्यासम्भवे बोध्यम् ।

स्त्रीसङ्ग्रहणादिषु योगीश्वरः—

सर्वः साक्षी सङ्ग्रहणे चौर्यपारुष्यसाहसे । (२।७२)

अत्र च—

मनुष्यमारणं चौर्य्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥

इति वचनात् स्त्रीसङ्ग्रहादीनां सत्यपि साहसत्वे बलानवष्टम्भेन क्रियमाणानां तेषामसाहसत्वात् तत्सङ्ग्रहार्थं ततः पृथगुपादानम् ।

उशना—

दासोऽन्धो बधिरः कुष्ठी स्त्री बालस्थविरादयः ।
एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो मताः ॥

अनभिसम्बन्धाः=विवादगोचरीभूतार्थासम्बन्धिनः । अपक्षपातिन इति मदनरत्ने ।

मनुनारदौ—

साहसेषु च सर्वेषु स्तेयसङ्ग्रहणेषु च ।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥
(मनु०८।७२ना०व्य०१।१८९)

मनुः—

अनुभावी तु यः कश्चित्कुर्य्यात्साक्ष्यं विवादिनाम् ।
अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि वात्यये ॥ (८।६९)

अनुभावी=तदर्थानुभवशीलः । यत्तु—

ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु ।
साहसात्ययिके चापि परीक्षा कुत्रचित्स्मृता ॥

इति परीक्षाभिधानम् । तदस्पष्टासत्यवादिदोषविषयम् । अत एव "कुत्रचित्" इत्युक्तम् । अस्मिंश्च प्रघट्टके प्रकटदोषानभिषङ्गे क्वाचित्कविसंवादादिदोषपुरस्कारेण साहसादिसाक्षिता न कक्षीकरणीयेत्यत्र तात्पर्य्यम् । अत एव विज्ञानयोगिनोक्तम्—"दोषादसाक्षिणो भेदादसाक्षिणः स्वयमुक्तिश्चात्रापि न साक्षिणो भवन्ति सत्याभावादिति हेतोरनपगमात्" इति । अपरार्कोऽपि—"सर्वः साक्षी न तु गुणवानेवेत्यर्थः । दोषवांस्तत्रापि परिहरणीय एव । वक्तृदोषाणां वचनाप्रामाण्यहेतुत्वात्" इत्याह । तस्यापि सर्वदोषाभावे न तात्पर्य्यम् । प्रतिप्रसवानुपपत्तेः । यत्तु केनचिदुक्तं साक्षिगुणदोषप्रतिप्रसवा यथाश्रुता एव ग्राह्या अन्यथा तत्र तत्र तत्तद्विशेषणोपादानमनर्थकमुपलक्षणं वा प्रसज्येतेति । तद्बालिश्यम् । न्यायमूलकत्वात्तेषां तदविरोधेनैव नेयत्वात् । अत एव न्यूनाधिकविशेषणोपादानमविरुद्धम् । अदृष्टार्थत्वे ताद्विरोधो दुष्परिहरः स्यात् । एवमन्यतरेण साक्षिषूपन्यस्तेष्वसत्सु तद्दोषेष्वपरस्योपन्यस्तेऽसदुद्भावने दण्ड इत्याह—

बृहस्पतिः—

साक्षिणो हि समुद्दिष्टान् सत्स्वदोषेषु दूषयेत् ।
अदुष्टान् दूषयन्वादी तत्समं दण्डमर्हति ॥

तत्समं=विवादविषयसममिति बहवः । तदर्थाविषयविवादेष्वव्यापकमिति तत्समं=कूटसाक्षिदण्डसममिति व्याख्येयम् । साक्षिदूषणेऽन्यतरेणोद्भाविते प्रत्यक्षेषु बाल्यादिदूषणेषु तेनैव निर्णयः । अयोग्येषु लोकप्रसिद्ध्यादिना न साक्ष्यन्तरेण । अनवस्थापत्तेः ।

तथा च व्यासः—

सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनात् ॥
अन्यैस्तु साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम् ।
अनवस्था भवेद्दोषस्तेषामप्यन्यसम्भवात् ॥ इति ।

असाध्यं=लोकादिसिद्धत्वात्साधनानर्हम् । यत इति हेतुगर्भमिति । दोष-

वर्जनात्=अनवस्थादोषाभावादित्यर्थः । यद्यपि लोकसभ्यप्रसिद्धिरपि साक्षिप्रसिद्धिरेव पर्य्यवस्यति । तथापि तत्र साक्षित्वोद्भावनानपेक्षत्वान्नानवस्था । अत एवातिगूढवादिप्रतिवादिमात्रविदितदूषणसाधनमन्यतरेणालौकिकप्रमाणेन क्रियमाणं न दुष्यतीत्यभिप्रायः । न च साक्षिदूषणविभावनं व्यवहारान्तरत्वादयुक्तमिति वाच्यम् । प्रकृतोपयोगित्वेनार्थान्तरत्वानापत्तेः । कात्यायनः स्फुटमेतदेवाह—

प्रत्यर्थिनार्थिना वापि साक्षिदूषणसाधने ।
प्रस्तुतार्थोपयोगित्वाद्व्यवहारान्तरं न च ॥ इति ।

अविद्यमानदोषोद्भावनेऽर्थिप्रत्यर्थिनोर्वैकल्पिकौ हानिदण्डौ । अन्यतराज्ञाता राज्ञा सभ्यैरेव वा ज्ञाताः साक्षिदोषास्तदा तैरेव साक्षित्वेनोपादेया इति—

स एवाह,

नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्यः स्यात्साध्यार्थाद्वापि हीयते ॥
प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥ इति ।

ये गूढाः=प्रत्यर्थिना न ज्ञातास्ते काले=साक्षिवादात्पूर्वकाले कार्य्या इति शेषः । शास्त्रप्रदर्शनात्=दुष्टानां शास्त्रे साक्षित्वेनानुपादेयत्वदर्शनात् । छलं निरस्येति च छलनिरासस्यावश्यकत्वादिति तात्पर्य्यार्थः । साक्षिभिरुक्ते साक्ष्ये दोषोद्भावनं तेषां न कार्य्यमित्याह—

बृहस्पतिः,

लेख्यदोषास्तु ये केचित्साक्षिणां चैव ये स्मृताः ।
वादकाले तु वक्तव्याः पश्चादुक्तान्न दूषयेत् ॥

न दूषयेत्=दोषत्वेन नोपादद्यात्ससभ्यो राजेत्यर्थात् । पश्चादुक्तौ दण्डमप्याह—

कात्यायनः,

उक्तेऽर्थे साक्षिणो यस्तु दूषयेत्प्रागदूषितान् ।
न च तत्कारणं ब्रूयात् प्राप्नुयात्पूर्वसाहसम् ॥

तच्च दण्डनिरूपणप्रस्तावे विवेचयिष्यामः । अन्यतरोद्भाविता दोषाः स्वीकार्यास्तैरेव यः साक्ष्युद्भावयितानेन वा परिहरणीया इत्याहतुः व्यासबृहस्पती—

साक्षिदोषाः प्रवक्तव्याः संसदि प्रतिवादिना ।
पत्रेऽभिलिखितान्सर्वान् वाच्याः प्रत्युत्तरं तु ते ॥

लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः ।
तस्य कार्यं न सिध्येत यावत्तन्न विशोधयेत् ॥

पत्रेऽभिलिखितान् सर्वान् दोषान् प्रति साक्षिण उत्तरं=परिहारं वाच्याः वाचनीया इति पूर्ववचनार्थः । यस्य साक्षिणो लेख्यं वा यदुद्भावितं परेण दूषितं स यावत्तन विशोधयेत् तद्दोषरहितं न कुर्यात्तावत्तत्र प्रमाणाभासत्वसंभावनया तेन प्रमाणेन तस्य तत्कार्यं न सिद्ध्येदिति द्वितीयवचनार्थः । इदं च सभाक्षोभादिना साक्षिणां स्वदोषपरिहाराक्षमतायां द्रष्टव्यम् । तदिति [तच्च] लेख्यं च [ते च] साक्षिणश्चेति द्वन्द्वे "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" ( १।२।६९ ) इति नपुंसकैकशेषैकवद्भावौ ।

अन्यतरः साक्षिदोषमुद्भाव्य यदि तं भावयितुं न शक्नोति तदा स दण्ड्यः । साधिते तु दोषे त्याज्यः । अर्थ्यपि प्रमाणान्तरमनुपन्यस्यन् पराजीयत इत्येतदाह—

व्यासः,

असाधयन्दमं दाप्यो दूषणं साक्षिणां स्फुटम् ।
भाविते साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥
जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षिसभ्येष्ववस्थितः ॥ इति ।

विनयं=दण्डम् । स= वादी । मदनरत्ने तु सविनयं=विनयः शिक्षा तत्सहितं यथा तथा दाप्यो विवादविषयीभूतधनमिति शेष इति व्याख्यातम् । तत् जित इत्यनेनैव साधितधनदानस्यार्थसिद्धत्वेन निरर्थकाध्याहारदोषापत्तेः क्लिष्टत्वाच्चोपेक्ष्यम् ।

यस्तु विवादविषयीभूतार्थानभिज्ञान् विपरीताभिज्ञान्वा भयलोभादिप्रदर्शनेन स्वानुकूलं वादयति तस्य दण्डमाह—

कात्यायनः,

येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः ।
गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः ॥ इति ।

सर्वस्वमिति गुरुलघ्वपराधानुसारेण दण्डतारतम्योपलक्षणम् । निर्विषयं=विवादविषयीभूतार्थशून्यम् । ततः=कूटसाक्ष्यकरणात् । साक्षिदोषानुद्भावनेऽपि ससभ्येन सभापतिनैवैते परीक्ष्योपादेयाः ।

तथाच कात्यायनः—

उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम् ।

बृहस्पतिरपि—

उपस्थिताः परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिः ॥ इति ।

स्वरवर्णेङ्गितानि मनुयोगीश्वरोक्तानि हीननिरूपणे विवृतानि ।

नारदोऽप्याह—

यस्त्वात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते । ( व्य०प०१ )
स्थानात् स्थानान्तरं गच्छेदेकैकं चानुधावति ॥ ( १९३ )
कासत्यकस्माच्च भृशमभीक्ष्णं निःश्वसित्यपि ।
विलिखत्यवनीं पद्भ्यां बाहू वासश्च धूनयेत् ॥ ( १९४ )
भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा ।
शोषमागच्छतश्चोष्ठावूर्ध्वं तिर्यङ्निरीक्षते ॥ ( १९५ )
त्वरमाण इवाबद्धमपृष्टो बहु भाषते ।
कूटसाक्षी स विज्ञेयस्तं पापं विनयेद्भृशम् ॥ ( १९६ )

अबद्धम् =असम्बद्धम् । विनयेत् =शिक्षयेद्यथा कौटसाक्ष्याद्बिभेतीत्यर्थः । न तु दण्डयेदित्यर्थः । प्राकृतिकवैकारिकविकारविवेकस्य दुःशकत्वात् । सम्भावनामात्रेण च दण्डनस्यान्याय्यत्वादिति युक्तम् । मदनरत्ने त्वाविद्धमिति पठित्वा आकुलमिति व्याख्यातम् ।

शङ्खलिखितावपि—

मन्त्रिभिः शास्त्रसामर्थ्यात् दुष्टलक्षणं ग्राह्यम् । तिर्यक्प्रेक्षते समन्तादेवावलोकयति अकस्मान्मूत्रं पुरीषं विसृजति देशाद्देशं गच्छति पाणिना पाणिं पीडयति नखान्निकृन्तति मुखमस्य विवर्णतामेति प्रस्विद्यति चास्य ललाटं न चक्षुर्नच वाचं प्रतिपूजयत्यकस्माद्ददाति प्रशंसति पुनः पुनरन्यमपवदति बहिर्निरीक्षते शस्त्रं परामृशति शिरः प्रकम्पयत्योष्ठौ निर्भुजति सृक्किणी परिलेढि अतिविस्मितः कर्मस्व महत्स्वपि भ्रुवौ संहरति तूष्णीं ध्यायति पूर्वोत्तरविरुद्धं व्याहरति एवमादिदुष्टलक्षणं क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिशीलात् ॥ इति ।

अकस्मादिति तूष्णीमिति च यथायोगमनेकत्र सम्बन्धनीम् । अन्यत्र प्रकृतिशीलादिति । प्रकृत्या स्वभावात् शीलं तिर्यक्प्रेक्षणादिधर्म्मो यस्य स तथोक्तस्ततोऽन्यत्रैतानि दुष्टक्रुद्धलक्षणानि । एतेन अवान्तरवैलक्षण्यस्य दुर्ज्ञेयत्वादत्यवधानेन परीक्ष्य वस्तुतत्त्वानुसरणं करणीयमिति सूचितम् ।

एवं गुणवत्तया दोषाभाववत्तया च परीक्षितान् साक्षिणो विवादास्पदीभूतमर्थं पृच्छेदित्याह—

कात्यायनः,

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
उदङ्मुखान् प्राङ्मुखान् वा पूर्वाह्णे वा शुचिः शुचीन् ॥
सभान्तः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिनानेन सान्त्वयन् ॥
यद्द्वयोरनयोर्वेत्थ कार्य्येऽस्मिंश्चेष्टितं मिथः ।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता ॥

अर्थिप्रत्यर्थिसन्निधिवद्द्रव्याश्वादिगोचराविवादेषु केषु चित्तत्सान्निध्यमपेक्षितव्यमित्यप्याह—

स एव,

अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च सन्निधौ ।
प्रत्यक्षं वादयेत्साक्ष्यं न परोक्षे कथञ्चन ॥
अर्थस्योपरि कर्त्तव्यं तयोरपि विना क्वचित् ।
चतुष्पादेषु धर्म्मोऽयं द्विपादस्थावरेषु च ॥
तौल्यं गणिममेयानामभावेऽपि हि वादयेत् ।
क्रियाकारेषु सर्वेषु साक्षित्वं न त्वतोऽन्यथा ॥

तयोः=वादिनोर्विनापीति सम्बन्धमात्रविवक्षया षष्ठी । अपिशब्दात् कैमुतिकन्यायेन तदुभयसन्निधाने न तात्पर्य्यम् । किन्तु साध्यार्थसान्निध्यावश्यकतायाम् । यद्वोभयासान्निधिः प्रत्यर्थ्यसान्निध्यानुमत्यर्थः । तेन कथञ्चित्प्रत्यर्थ्यसन्निधानेऽपि साक्षिप्रश्ने न दोषः । क्वचिदित्यस्यैव विवरणं चतुष्पादेष्वित्यादि । तौल्यम्=तोलनार्हं सुवर्णादि । गणिमम्=गणनार्हं वराटकादि मेयं=मानार्हं गोधूमादि । अभावेऽपि=साध्यार्थसान्निध्याभावेऽपि । क्रियाकारा व्यवहारास्तेषु ।

बधरूपविवादपदे साक्षिणः शिवलिङ्गप्रातिमादिसन्निधाने प्रष्टव्या इत्यप्याह—

स एव,

बधे च प्राणिनां साक्ष्यं वादयेच्छिवसन्निधौ ।
तदभावे तु चिह्नस्य नान्यथैव प्रवादयेत् ॥

चिह्नस्य=बधचिह्नस्याभियोज्यसम्बधिनोऽभावे तत्=साक्ष्यं वादयेत् । अन्यथा=तत्सद्भावे नैव वादयेत्साक्ष्यम् । बधचिह्नेनैव निर्णयसम्भवादित्युत्तरार्द्धार्थोऽनुवाद्यः । विधेयस्तु पूर्वार्धार्थः । स तु स्पष्ट एव । उपस्थापिताः साक्षिणोऽविलम्बेन प्रष्टव्या इत्यप्युक्तम्—

तेनैव,

न कालहरणं कार्य्यं राज्ञा साक्षिप्रभाषणे ।
महान्दोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः ॥

ते च साक्षिणः शपथपूर्वकं प्रष्टव्या इत्याह नारदः—

आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान् विदिताचारान् विज्ञातार्थान् पृथक् पृथक् ॥ इति ।
( व्य०प०१।१९८ )

तच्च साक्ष्यं क्वचिद्विषये मिलितैर्वक्तव्यं क्वचित्प्रत्येकम् इत्याह—

वशिष्ठः,

समवेतैस्तु यद्दृष्टं वक्तव्यं तु तथैव तत् ।
विभिन्नैरेव यत्कार्य्यं वक्तव्यं तत् पृथक् पृथक् ॥
भिन्नकाले तु यत्कार्य्यं विज्ञातं यत्र साक्षिभिः ।
एकैकं वादयेत् तत्र विधिरेष प्रकीर्त्तितः ॥

यत्कार्य्यं दृष्टमित्यनुषङ्गः । यत्तु गौतमेनोक्तम्—

नासमवेताः पृष्टाः प्रब्रूयुरिति ।

तदपि वशिष्ठोक्तसमवेतसाक्ष्यविषयम् । हरदत्तस्तु नासमेवतापृष्टाः प्रब्रूयुरिति पाठं धृत्वा समवेता अपृष्टाश्च न ब्रूयुरिति व्याचख्यौ । पूर्वपाठस्तु मिताक्षराकारधृतः सम्यगिति ।

धर्म्मोपबृंहितैरधर्म्मगर्हावचनैस्तेऽनृतभाषणाद्भीषणीया इत्याह—

नारदः,

पौराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्त्तनैः ।
अनृतस्यापवादैश्च भृशमुत्त्रासयेदिमान् ॥ ( व्य०प०१।२०० )

शपथे च विशेषो दर्शितो मनुना—

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ इति । ( ८।११३ )

अन्यथा ब्रुवतस्ते सत्यं नङ्क्ष्यतीति ब्राह्मणे शपथो देयः । क्षत्रिये वाहनायुधानि ते विफलतामेष्यन्तीति । वैश्ये गोबीजकाञ्चनानि तवापचयमुपयास्यन्तीति । शूद्रेऽन्यथा वादिनस्तव सर्वाणि पातकानि भविष्यन्तीत्यर्थः ।

ब्राह्मणविशेषस्यापवादं स एवाह —

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥ इति । ( ८।१०२ )

विप्रग्रहणं क्षत्रियवैश्ययोरपि तद्वृत्तिजीविनोरुपलक्षणम्। उपाधेस्तुल्यत्वात् विशेषान्तरानुक्तेश्च। साक्षिणां श्रावणं विधाय श्रावणीयमाह—

याज्ञवल्क्यः, ( अ०२ )

साक्षिणः श्रावयेद्वादिप्रतिवादिसमीपगान् ।
ये पातककृतां लोका महापातकिनां तथा ॥ ( ७३ )
अग्निदानां च ये लोका येच स्त्रीबालघातिनाम् ।
स तान् सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् ॥ ( ७४ )
सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् ।
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥ ( ७५ )

"शूद्रं सर्वैस्तु पातकैः" इति मानवसंवादात् पातकश्रावणं शूद्रविषयकमिति मिताक्षराकारापरार्कौ । शपथदानश्रवणविधिभेदान्मानवे च शपथदान एव तन्नियमादस्य सर्वविषयतां तु युक्तामुत्पश्यामः । तत्र "प्राड्विवाकोऽनुयुञ्जीत"इत्यादिसार्द्धश्लोकः कात्यानीयः पूर्वलिखित एव।

मनुरपि ( अ०८ )

सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्त्तिं वागेषा ब्रह्मपूजिता ॥ ( ८१ )
साक्ष्येऽनृतं वदन् साक्षी पाशैर्बध्येत वारुणैः ।
विवशः शतमाजातीस्तस्मात् साक्ष्ये वदेदृतम् ॥ ( ८२ )
सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते ।
तस्मात् सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥ ( ८३ )
आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः ।
मावमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम् ॥ ( ८४ )
मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः ।
तांस्तु देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः ॥ ( ८५ )
द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः ।
रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ॥ ( ८६ )

आजातीः=आजननानि जन्मानीतियावत् ।

बृहस्पतिरपि—

आजन्मनश्चामरणात् सुकृतं यदुपार्जितम् ।
तत् सर्वं नाशमायाति अनृतस्य तु शंसनात् ॥

वशिष्ठोऽपि—

अथ चेदनृतं ब्रूयात् सर्वतो मिथ्यलक्षणम् ।
मृतो नरकमायाति तिर्य्यग्गच्छत्यसंशयम् ॥

शूकरो दश वर्षाणि दश वर्षाणि गर्दभः ।
श्वा चैव दश वर्षाणि भासो वर्षाणि विंशतिः ॥
कृमिकीटपतङ्गेषु चत्वारिंशत्तथैव च ।
मृगस्तु दश वर्षाणि जायते मानवस्ततः ॥
मानुष्यं तु यदाप्नोति मूकोऽन्धस्तु भवेद्धि सः ।
पामरो जायते पश्चात् स परित्यक्तबान्धवः ॥
पङ्ग्वन्धबधिरो मूकः कुष्ठी नग्नः पिपासितः ।
बुभुक्षितः शत्रुगृहे भिक्षते भार्यया सह ॥
ज्ञात्वैताननृते दोषान् ज्ञात्वा सत्ये च सद्गुणान् ।
श्रेयस्करमिहान्यत्र सत्यं साक्ष्ये वदेदतः ॥

बौधायनः—

त्रीनेवच पितॄन् हन्ति त्रीनेव प्रपितामहान् ।
सप्त जातानजातांश्च साक्षी साक्ष्यं मृषा ब्रुवन् ।

मनुनारदौ— ( म०अ०८।ना०व्य०प०१ )

यावतो बान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन् ।
तावन्तः सङ्ख्यया तस्मिन् शृणु सौम्यानुपूर्वशः ॥
( म०९७ना०२०७ )
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ( म०९८ना०२०८ )
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदीः ॥ (म०९९ना०२०९)
अप्सु भूमिवदित्याहुः स्त्रीणां भोगेऽथ मैथुने ।
अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥ ( म०१०० )
पशुवत्क्षौद्रघृतयोर्यानेषु च तथाऽनुयात् ।
गोवद्रजतवस्त्रेषु धान्ये ब्रह्मणि चैव हि ॥ ( म०१०१ )
एतान्दोषानवेक्ष्य त्वं सर्वाननृतभाषणे ।
यथाश्रुतं यथा दृष्टं सत्यमेवाञ्जसा वद ॥ ( म०१०२ )

अब्जेषु रत्नेषु=मुक्ताफलादिषु । ब्रह्मणि=वेदे । अत्र हरदत्तेन "क्षुद्रपश्वनृते दश हन्ति गोऽश्वपुरुषभूमिषु दशगुणोत्तरम्" इति गौतमवचनव्याख्याने मनुवचः "पञ्च पश्वनृते हन्ति" इत्याद्युपन्यस्य पञ्चसङ्ख्याहननदोषोत्पन्नक्षुद्रपशुविषय इति गौतमवचोविरोधं परिहृत्य यद्विषयमनृतसाक्ष्यं दत्तं तत्तत्प्राणिनां दशादिसङ्ख्यकानां हनने यो दोषस्तमाप्नोति । भूम्यनृते तु यदीया भूमिस्तज्जातीयलक्षहननदोषः सर्वप्राणि-

हननदोषो वेति व्याख्यातम्। तत्तु "यावतो बान्धवान्" इति मानवोपक्रमानालोचननिबन्धनमित्युपेक्ष्यम्। तस्मात् साक्षिसम्बन्धिपित्रादिगतसङ्ख्यापरतयैव व्याख्यानं सूचितम्। गौतमीयमपि मानवसंवादेनैव व्याख्येयमेकमूलकल्पनालाघवाय। 'त्रीनेव च पितॄन् हन्ति' इत्यादि बौधायनादिवचनसंवादोऽप्येवम्। यस्तु जानन्नपि दौरात्म्यात् साक्षित्वमेव नाङ्गीकुरुते। तं प्रत्याह—

योगीश्वरः,

न ददातीह यः साक्ष्यं जानन्नपि नराधमः।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि॥ (२।७७)

पृष्टाः साक्षिणो येन विधिना ब्रूयुस्तमाह—

बृहस्पतिः,

विहायोपानदुष्णीषं दक्षिणं पाणिमुद्धरन्।
हिरण्यगोशकृद्दर्भान् समादाय ऋतं वदेत्॥ इति।

साक्ष्यभिहितस्य वचनस्य परीक्षाविधानमप्याह—

बृहस्पतिः,

देशकालवयोजातिसंज्ञाद्रव्यप्रमाणतः।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत्॥

तत्र नारदः— (व्य०प०१)

निर्दिष्टेष्वर्थजातेषु साक्षी चेत् साक्ष्यमागतः।
न ब्रूयादक्षरसमं न तन्निगदितं भवेत्॥ (२३२)
देशकालवयोद्रव्यप्रमाणाकृतिजातिषु।
यत्र विप्रतिपत्तिः स्यात् साक्ष्यं तदपि कुत्सितम्॥ (२३३)
ऊनमप्यधिकं वापि प्रब्रूयुर्यत्र साक्षिणः।
तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः॥ इति। (२३४)

न चाधिकाभिधानमसम्भवि वादितः प्रतिवादितो वाऽश्रुतेऽदृष्टे वानुभवमूलकसंस्काराभावेनास्मृततत्प्रतिपादनासम्भवादिति वाच्यम्। करणापाटवादिना श्रुतिदृष्ट्योरुभयोरपि सम्भवात्। अत एव भ्रान्तिमूलत्वेन प्रामाण्यात्। तत्=उक्तमपि अनुक्तमित्युक्तम्। नच तथाप्यूनाभिधाने कुत उक्तिः साक्षिवचनात्तावतः सिद्धावेकदेशविभावितन्यायेनान्यांशस्यापि सिद्धेर्जयफलकतया न्यूनतोक्तेरदुष्टत्वादिति वाच्यम्। प्रतिज्ञातसकलसाध्यसाधकतयोद्दिष्टेषु न्यूनमभिहितवत्सु न तन्न्यायावसर इति प्रागावेदितत्वात्। साक्ष्यमङ्गीकृत्य श्रावणविधिना श्रावितश्चेन्नाभिधत्ते तदा किं कर्त्तव्यमित्यपेक्षिते आह

याज्ञवल्क्यः—

अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम् ।
राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि ॥ (२।७६)

सर्वं=सवृद्धिकम् । सदशबन्धकम्=राजदेयदशमांशसहितम् । राज्ञे दशमांशदानमृणादानप्रस्तावे वक्ष्यते । षट्चत्वारिंशकेऽहनि इत्यभिधानात्ततोऽर्वाग्वदन् न दाप्यः । तदपि व्याध्याद्युपद्रवराहित्ये ।

यदाह मनुः—

त्रिपक्षादब्रुवन् साक्ष्यमृणादिषु नरोऽगदः ।
तदृणं प्राप्नुयात् सर्वं दशबन्धं च सर्वशः ॥ इति । (८।१०७)

अगद इति राजदैवोपद्रवविरहस्याप्युपलक्षणम् । साक्षिवचनाज्जयपराजयव्यवस्थां स्पष्टमाह—

योगीश्वरः,

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवं तस्य पराजयः ॥ इति । ( २।७९ )

उत्तरार्धापवादमुखेन कूटसाक्षिण आह स एव—

उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥ इति । (२।८०)

अन्यथा=अन्यतरप्रतिज्ञातार्थविपरीतम् । यद्यप्यर्थिप्रत्यर्थिसभ्यसभापतिभिः परीक्षितसाक्षिगुणलक्षितसाक्षिवचनानन्तरं प्रमाणान्तरान्वेषणमेवानर्हम् । अनवस्थाप्रसङ्गात्, "निर्णिक्ते व्यवहारे" इत्यादिप्रागुक्तनारदवचनविरोधाच्च । तथापि वादिप्रतिवाद्यन्यतरस्य स्वोक्तार्थे अन्तरात्मसाक्षितया तद्विसंवादिवचनसाक्षिषु यदि दोषाध्यवसायस्तदा प्रमाणान्तरान्वेषणं वारयितुमशक्यम् । अत एव तदा दिव्येनान्यतरेण स्वसाध्ये साधिते साक्षिणः कूटत्वेन दण्ड्या इति वक्ष्यते । अर्थविसंवादिनि चक्षुरादौ स्पष्टदोषादर्शनेऽपि यथा तज्जनितज्ञानाप्रामाण्यमेव दोषकल्पकं तथाऽत्रापि ।

यथाहुः—

(१)यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्यय इति ।

---

( १ ) यस्य च=सम्प्रत्ययस्य करणं=चक्षुरादिकं दुष्टं=काचकामलादिदोषयुक्तं, यत्र च='इदं रजतम्' इत्यादिज्ञानविषये, मिथ्येति प्रत्ययः='नेदं रजतम्' इति बाधकप्रत्ययः, स एव=द्विविधः प्रत्ययो ज्ञानरूपोऽसमीचीन इति गौतमोक्तेरस्या अर्थः ।

अत एव साक्षिपरीक्षातिरेकेण तद्वाक्यपरीक्षोपदेशोऽपि घटते ।

साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत् । इति ।

कात्यायनोऽप्याह--

यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनम् ।

शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोऽर्थ इति स्थितिः ॥ इति ।

क्रिया=साक्षिरूपा "नार्थसम्बन्धिनो नाप्ता" इत्याद्युक्तसाक्षिदोषराहित्यलक्षणाद् "गृहिणः पुत्रिण" इत्याद्युक्तसाक्षिगुणसाहित्यलक्षणाच्च न्यायाद्यदा शुद्धा=परीक्षिता भवति तदा तद्वाक्यस्य=साक्षिवाक्यस्य शोधनं कार्यमिति शेषः । वाक्यशुद्धिश्चार्थाविसंवाद एव । "सत्येन शुद्ध्यते वाक्यम्" इति स्मरणात् । एवं क्रियावाक्याभ्यामुभाभ्यां शुद्धाभ्यां सकाशात् यः शुद्धः साधुत्वगतोऽर्थः स शुद्धः=तात्त्विक इति स्थितिः=मर्य्यादा इति कात्यायनवचनार्थः । कारणदोषबाधकप्रत्ययप्रत्यासे(१) तथाभूत एवार्थ इति तात्पर्य्यम् । नारदवचनं तु जयावधारणोत्तरं न प्रमाणान्तरपरिग्रह इत्येतत्परम् । निर्णिक्तपदोपादानात् । ततः प्रागुक्तप्रमाणान्तराऽन्वेषणे न क्षतिरिति न तद्विरोधः । एवञ्च सति यदि दत्तनिगदेभ्यः साक्षिभ्योऽन्ये गुणवत्तमा द्विगुणा वा पूर्वनिर्दिष्टा असन्निहिताः सन्ति तदा त एव प्रमाणीकर्तव्याः । तदभावे पूर्वानिर्दिष्टा अपि साक्षिणो वादिना वादनीया न दिव्यमप्यवलम्बनीयम् ।

सम्भवे साक्षिणां प्राज्ञो दैविकीं वर्जयेत् क्रियाम् ।

इति वचनात् । यदा तु तदसम्भवस्तदा दिव्यमप्यवलम्बनीयम् । "सम्भव" इति वचनात् । यदि दिव्येऽपि वादिनोऽपरितोषस्तदा प्रमाणान्तरस्यावाचनिकत्वात्सभ्यैः समापनीयो व्यवहारः । यदि तु वाद्युद्भावितसाक्षिभिस्तदनुगुणेऽभिहिते प्रत्यर्थिन एव स्वप्रत्ययविसंवादेन तेषु दोषाध्यवसायस्तदा प्रत्यर्थिनः क्रियावसराभावाद्दैविकराजिकयोर्महाव्यसनयोः सप्ताहाभ्यन्तरोपनिपातेन ते परीक्षणीयाः । यथाह—

मनुः,

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।

रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥ इति । (८।१०८)

दमं=कौटसाक्ष्यप्रयुक्तं दण्डम् । असति सप्ताहाभ्यन्तरव्यसनोपनिपाते प्रत्यर्थिना तावता सन्तोष्टव्यं दिव्यं वा सत्याध्यवसायमवलम्बनीयमित्यर्थसिद्धम् ।

---

(१) निरासे इत्यर्थः । तथाभूत इति अवितथ इत्यर्थः ।

यत्तु कैश्चित् "उक्तेऽपि" इत्यादिवचनमर्थिनिर्दिष्टसाक्षिभिस्तदनुगुणेऽभिहितेऽपि प्रत्यर्थिना यद्यन्ये ततो गुणवत्तमा द्विगुणा वान्यथा वाद्यन्ते तदा पूर्ववादिनः साक्षिणः कूटा इति व्याख्यातम्। तदयुक्तम्। किमिदं मिथ्योत्तरविषयं कारणाद्युत्तरविषयं वा। नाद्यः। तत्र प्रत्यर्थिनः क्रियोपन्यासानवसरात्। अभाववादित्वात्। अभावस्य च भावज्ञानसापेक्षत्वात्। भावाभावयोर्भावस्यैव साध्यतौचित्यात्। अत एव मिथ्योक्तौ पूर्ववादी क्रियां निर्दिशेत् इत्युक्तम्। "नचैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः" इति वचनादेकस्मिन् व्यवहारेऽर्थिप्रत्यर्थिनोर्द्वयोः क्रियोपन्यासानुपपत्तेश्च। न द्वितीयः। "ततोऽर्थी लेखयेत्" इत्यनेन पौनरुक्त्यात्। अर्थ्यत इत्यर्थः साध्यं सोऽस्यास्तीत्यर्थी साध्यवान् प्रतिज्ञातार्थसाधनं साध्यतयोपन्यस्तस्यार्थस्य साधनं=प्रमाणं लेखयेदिति। प्राङ्न्यायकारणोत्तरयोश्च तयोरेव साध्यत्वात् प्रत्यर्थ्येवार्थी सम्पन्न इति स एव क्रियां निर्दिशेदिति। स्पष्टीकृतश्चायमर्थः स्मृत्यन्तरे--

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्॥ इति।

"उक्तेऽपि" इत्यादिसङ्गतेश्च। प्राङ्न्यायादौ हि तस्यैव साक्षिण इति अन्ये इत्यसङ्गतमेव भवेत्।

अन्ये तु यत्र द्वावपि भावप्रतिज्ञावादिनौ। तावपि द्विविधौ। कौचित्पूर्वोत्तरकालभेदेन प्रतिजानाते। एको वदति इदं क्षेत्रं मया पूर्वं प्रतिग्रहादिना लब्ध्वा कियत्कालं भुक्त्वा देशान्तरं सकुटुम्बेन गतम्। अन्यस्तु वदति--सत्यमनेन पूर्वं प्रतिग्रहादिना लब्धं परं तु पश्चादित एव राज्ञा क्रीत्वा मह्यं दत्तमन्येन वास्मात्प्रतिगृह्य क्रीत्वा वा मह्यं दत्तमित्यादि। कौचित्तु पूर्वोत्तरकालभेदं विनैव वदतः। तत्र प्रथमौ

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः॥(२।१७)

इत्यस्य याज्ञवल्क्यवचनस्य विषयौ। पूर्वकालं ममेदमिति यो वदति स पूर्ववादी तस्य साक्षिणः प्रमाणतयाङ्गीकार्य्याः। तदीयस्वत्वानपगमेऽन्यस्य प्रतिग्रहादिस्वत्वोपायासम्भवादिति तत्रोपपत्तिः। तस्य क्रयादिना स्वत्वापगमेऽन्येनोपन्यस्ते तत्पक्षोऽधरीभूत इत्युत्तरकालं ममेदमिति यो वदति स उत्तरवादी तस्य साक्षिणोऽङ्गीकार्य्याः पूर्ववादिस्वत्वस्य सापवादत्वात् इति मिताक्षराकारोक्ततदर्थात्। न तु पूर्वं यो निवेदयति स पूर्ववादी प्राङ्न्यायकारणोत्तराभ्यां तत्पक्षेऽधरीभूत उत्तरवादिनः प्रतिवादिन इति व्याख्येयम्। "ततोऽर्थी लेखयेत्" इत्यनेनै-

वास्यार्थस्योक्त्या पौनरुक्त्यापत्तेः।"नचैकस्मिन्" इत्यादिनिषेधाद्वादिद्वयस्य क्रियोपन्यासानुपपत्तेश्च।

यत्त्वत्रापरार्केणोक्तम्—'सम्भवत्येव क्वचित्प्रत्यवस्कन्दनप्राङ्न्यायोत्तरवत्यपि न्याये वादिद्वयस्य क्रियोपन्यासावसरो यत्र प्रतिवादी—'सत्यं त्वदीयमृणं धारितवानहं किन्तु प्रत्यर्पितवान्' इत्युत्तरयति। तत्र वादी चेत्प्रत्युत्तरयति—'सत्यं त्वयार्पितं तत्तु प्रयोगान्तरे नास्मिन् प्रयोग' इति। तदा तत्साधनाय द्वयोरपि साक्ष्युपन्याससम्भवः। परस्परोपमर्दकत्वेन युगपद्व्यवहारासम्भवस्यैकविवादे द्वयोः क्रियानिषेधबीजस्याभावात्। एवं प्रतिवादिना प्राङ्न्यायोत्तरे दत्ते यदि वादी तदेव वदति 'न्यायान्तरे त्वया अहं पराजितो नास्मिन्न्याय' इति। तदापि पूर्वोक्तरीत्या द्वयोः साक्षिसम्भवः। तत्राग्रसाक्षिसत्त्वे पूर्ववादिनः साक्षिणः प्रथमं स्वीकार्य्याः। प्राग्वादिनो निरुत्तरीभावेन पूर्वपक्षेऽधरीभूते उत्तरवादिनः प्रत्यवस्कन्दनप्राङ्न्यायसाधकसाक्षिण इति न विरोध इति।

तत्रापि वक्तव्यम्। तादृशविषयेऽपि प्रत्यवस्कन्दनप्राङ्न्याययोरसाध्यतया प्राग्वादिन एवार्थिद्रढिम्नि जाते तस्य निरुत्तरतायां तु प्रत्यर्थिन एवेति द्वेधापि "ततोऽर्थी लेखयेत्" इत्यनेन गतार्थतास्य नापैति। मिताक्षराव्याख्याने तु द्वयोरपि भाववादितयार्थित्वसाम्ये "ततोऽर्थी लेखयेत्" इत्येतद्वचनाविषयत्वात्कस्यात्र क्रियेत्यपेक्षायामेतद्वचनारम्भो घटते। तथाच मिताक्षरायामुक्तम्—"एतस्य च सर्वव्यवहारविलक्षणत्वाद्भेदेनोपन्यास" इति। नारदेन तु स्पष्टमेवायमर्थ उक्तः।

मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि।
प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेत्॥

इत्युक्त्वा—

द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु।
पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः॥(व्य०प०१श्लो०१६४)

इत्यभिधानात्। द्वितीयौ(१) तु "उक्तेऽपि" इत्यस्य वचनस्य विषयौ। पूर्वोत्तरवादिनोः समगुणेषु समसङ्ख्येषु च साक्षिषु सत्सु पूर्ववादिनः साक्षिणोऽभ्युपेयाः। यदा तूत्तरवादिनो गुणवत्तमा द्विगुणा वा तद्विपरीतमभिदधति तदा त एव। पूर्ववादिनस्तु साक्षिणः कूटा विज्ञेया इति च तदर्थः। एवं च नाभावस्य साध्यतापत्तिर्द्वयोरपि भाववादित्वात् चतुर्विधोत्तरविलक्षणत्वाच्च। नात्र "मिथ्या क्रिया पूर्ववादे"

(१) पूर्वोत्तरकालभेदं विनैव वादिनौ।

इत्याद्युक्ता क्रियाव्यवस्था। यथा चात एव तत्रैकस्य वादिनः क्रियाप्रतिषेधो न प्रवर्तते तथा ममापि द्वयोः क्रियाप्रतिषेध इति वदन्ति।

तदप्यापातमनोहरम्। "उक्तेऽपि" इत्यादिवचनादेतावतोऽर्थस्य शब्दतः प्रकरणादर्थाद्वाऽनवगमात्। "साक्षिषूभयतः सत्सु" इत्यस्य योगीश्वरवचनस्य "द्वयोर्विवदतोः" इत्यादि नारदवचनस्य च पूर्वोपपादितरीत्या पूर्वापरकालालिङ्गितभाषावादिविषयत्वे तदनालिङ्गितविषयस्यास्य तदपवादत्वासम्भवाच्च। नचान्यमते(१) अपरार्कादिमतवत्तयोरपि वादिविषयत्वमेवास्त्विति वाच्यम्। तस्योक्तदूषणत्वात्। ईदृश्यपि विषये वादिप्रतिवाद्यन्यतरस्योक्तौ मिथ्यात्वकारणान्यतरपर्य्यवसानावश्यम्भावे चतुर्विधोत्तरविलक्षणत्वासम्भवाच्च। द्वयोरपि भाववादितयार्थित्वसाम्यमेव केवलं व्यवहारान्तरवैलक्षण्यमस्य, विधाचतुष्कभिन्नविधोत्तरासम्भवाच्च।

ननु कात्यायनेनाप्युपन्यस्तसाक्षिभिस्तदनुगुणेऽभिहिते प्रत्यर्थी यदि ततो गुणवत्तमान् बहून्वाऽन्यथा वादयति तदा वादिनः साक्षिणः कूटा इति स्फुटमुक्तम्।

यथाह—

यत्र वै भावितं कार्य्यं साक्षिभिर्वादिना भवेत्।
प्रतिवादी यदा तत्र वादयेत्कार्य्यमन्यथा।
बहुभिस्तत्कुलीनैर्वा कूटाः स्युः पूर्वसाक्षिणः॥ इति।

तत् कार्यमिति सम्बन्धः। बहुभिरिति पूर्वसाक्ष्यपेक्षया बहुत्वम्। कुलीनैरित्यनेन तदपेक्षया गुणवत्तरत्वं विवक्षितम्। अपरार्कमदनरत्नकाराभ्यामेतत्संवादादेव योगीश्वरवचोऽपि "उक्तेऽपि" इत्यादिकमेतदर्थकतयैव व्याख्यातम्। न च कथमेकविवादे द्वयोः क्रियेति वाच्यम्। यतस्तुल्यवदुभयोर्मास्तु क्रियाप्राप्तिर्युगपद्व्यवहारासम्भवात्। यदा शास्त्रतः प्राप्तक्रियेणैव क्रियोपन्यासे कृते परेण तद्दूषणायैव क्रियान्तरमुपन्यस्यते तदा को दोषः। अनवस्थाप्रसङ्गस्तु सङ्ख्यागुणसाम्ये न तु वैषम्ये। तेन जयावधारणात्प्राग्यथैकस्य क्रियाद्वयमेवं द्वयोरपि क्रियाद्वये न विरोध इत्यपरार्केण समाहितमिति।

उच्यते। अस्तु वचनात् कात्यायनीयादेवमपि। योगीश्वरवचस्तु "ततोऽर्थी लेखयेत्" इति तद्वचस्यैव सर्वस्यार्थस्य सङ्ग्रहसम्भवादगतार्थविज्ञानयोगिव्याख्ययैव सङ्गच्छते। साधनपदेन साधनक्षममेवोच्यते। प्रतिवादिना तस्मिन्नाभासीकृते साधनत्वमेव तस्याप्यमत-

(१) अन्ये तु इत्यादिना पूर्वोपक्षिप्तमते इत्यर्थः।

मिति तेनैव तदर्थलाभात्। अत एवाह—

स एव,

तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा। इति।

कूटसाक्षिणो दण्डार्हाः प्रायश्चित्तार्हाश्च। तथाच—

याज्ञवल्क्यः,

पृथक् पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा।
विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः॥ (२८१)

नारदः—

अवीचिनरके कल्पं वसेयुः कूटसाक्षिणः।

बृहस्पतिः—

कूटसभ्यः कूटसाक्षी ब्रह्महा च समाः स्मृताः॥

मनुस्तु—

उक्त्वा चैवानृतं साक्ष्ये कृत्वा च स्त्रीसुहृद्वधम्॥ (११।८८)

इत्यादिना कूटसाक्षिणां ब्रह्महत्याप्रायश्चित्तमाह। तत्तत्रैव विवेचयिष्यामः। दण्डस्त्वत्र विविच्यते। विवादात्=तत्पराजयनिमित्तदण्डात्। न तु विवादास्पदीभूताद्धनात्। अधनव्यवहारेष्वव्याप्तेः। कूटकृत्=यो लोभभयादिप्रदर्शनेन साक्षिणः कूटान् करोति। न तु सुवर्णादिकूटकृदत्र गृह्यते। अप्रकृतत्वात्। विवास्यो=राष्ट्रात्। एतच्च लोभादिकारणविशेषाज्ञाने ऽनभ्यासे च बोध्यम्। लोभादौ ज्ञातेऽभ्यासे तु मनूक्तम्—

लोभात्सहस्रं दण्ड्यः स्यात् मोहात्पूर्वं तु साहसम्।
भया(१)द्वे मध्यमो दण्डो मैत्र्यात्पूर्वं चतुर्गुणम्॥
कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्।
अज्ञानाद्वे शते पूर्णे बालिश्याच्छतमेव तु॥ इति। (८।१२०।१२१)

तत्र मोहो=विपर्ययज्ञानम्। अज्ञानमस्फुटज्ञानम्। तात्कालिको भ्रम इति कल्पतरुः। बालिश्यं=ज्ञानानुत्पाद इति तेषां भेदः। स्फुटमन्यत्। पौरस्त्यनिबन्धेषु रत्नाकरादिषु बालभावबालिस्यपदार्थत्वेन यौवनोन्मेषप्राप्तो मद इति व्याख्यातम्। तदशब्दार्थत्वात् सन्दर्भविरोधाच्चोपेक्ष्यम्। सहस्रादिसङ्ख्येयाश्च ताम्रिकाः पणाः। व्यवहारविषये तथैव परिभाषणात् इति मिताक्षराकारः।

आहात्रापरार्कः—नेयं व्यवस्था युक्ता। लोभादिनिमित्तकमेव हि कौटसाक्ष्यमुपन्यस्तं मनुना। नच सम्भवत्यन्यत्तन्निमित्तम्।

---

(१) द्वौ मध्यमौ दण्डौ इति कुल्लूकभट्टसम्मतः पाठः।

यथाह सः—

लोभान्मोहाद्भयान्मैत्र्यात् कामात् क्रोधात्तथैव च।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते॥ (८।११८)

अज्ञानं=किञ्चिज्ज्ञानम्। बालभावो=अपरिणतत्वम्। तस्माद्योगीश्वरोक्तो दण्डः स्वल्पापराधेऽनभ्यासे च ज्ञेयः। गुर्वपराधे अभ्यासे च मनूक्त इति व्याख्या व्यवस्था इति।

तत्रेदं वाच्यम्। लोभादौ सहस्रादिदण्डस्य मानवस्य विवादपराजयहेतुकद्विगुणदण्डाद्याज्ञवल्क्यीयान्नाधिक्यनियमो येन गुर्वपराधविषयताभ्यासविषयता वा कल्पेत। क्वचिद्वैपरीत्यस्यापि सम्भवात्। नच कौटसाक्ष्ये लोभाद्यतिरिक्तकारणासम्भवात् मनुनापि तावतामेव परिगणनाच्च न कारणभेदे कृता व्यवस्था सुस्थेति वाच्यम्। वस्तुतो हेत्वन्तरासम्भवे तु हेतुविशेषापरिज्ञानतज्ज्ञानयोः सम्भवात् तत्कृतव्यवस्थायामदोषात्। अत एव मिताक्षरायां लोभादिति विशेषज्ञानाज्ञाने एव व्यवस्थापकत्वेनोक्ते न तु लोभादितद्भिन्नहेतुसत्त्वासत्त्वे। या तु मिताक्षराकृताभ्यासानभ्यासकृता व्यवस्थोक्ता सा क्वचित् तथापि सम्भवतीत्याशयेन। ज्ञानाज्ञानकृतैव तु तात्त्विकी। अत एव मदनरत्नकृतापि सैवादृता।

तथा मनुरेव—

कौटसाक्ष्यं तु कुर्वाणांस्त्रीन् वर्णान् धार्म्मिको नृपः।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत्॥ (८।१२३)

ब्राह्मणभिन्नान् त्रीन्=क्षत्रियादीन् प्रागुक्तदण्डेन दण्डयित्वा प्रवासयेत्=मारयेत्। प्रपूर्वस्य वसतेरर्थशास्त्रे मारणे प्रयोगात्, प्रवासनमप्यपराधानुरोधेनोष्ठच्छेदजिह्वाच्छेदप्राणवियोजनरूपं वेदितव्यम्। ब्राह्मणं विवासयेत्=विवासनमपि राष्ट्रान्निष्कासनम्। विगतवासा विवासास्तं करोतीति व्युत्पत्त्या नग्नीकरणम्। वसत्यस्मिन् वासो गृहं तद्वियुक्तं करोतीति व्युत्पत्त्या गृहभङ्गकरणं वा। कौटसाक्ष्यविषयानुसारेण गुणागुणद्रव्यानुबन्धानुसारेण चार्थदण्डसाहित्यं यथायथं विज्ञेयम्। दण्डयित्वेत्यंशस्यात्राप्यनुषङ्गात्। एतच्चाभ्यासविषयम्। कुर्वाणानिति वर्त्तमाननिर्देशात्। न च वर्त्तमाननिर्देशादतीतादिव्यावृत्तिमात्रं व्यवसीयते न त्वभ्यास इति वाच्यम्। तद्व्यावृत्तेरनुपयोगात्। प्रत्युत कौटसाक्ष्यमभ्यासेन कृत्वोपरतस्य पश्चादेतद्दण्डाभावप्रसङ्गात्। तस्मात्कौटसाक्ष्यमत्यजत इत्यर्थकतयाभ्यासावगतिः। न च दण्डयित्वेत्यस्यात्रानुषङ्गे प्रमाणाभावात्तुशब्दवशाच्च विवासनमेव कूटसा-

क्षित्वाभ्यासकारिणो ब्राह्मणस्य दण्डो न त्वर्थदण्ड इति वाच्यम्।

न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्। (मनु० ८।३८०)

न शारीरो दण्डो ब्राह्मणस्य।

इत्यादिवचनैः शारीरदण्डनिषेधात्। अर्थदण्डस्याप्यभावे स्वल्पविषयेऽपि कौटसाक्ष्याभ्यासे निर्वासननग्नीकरणगृहभङ्गादिप्रसङ्गात्। दण्डाभावस्य चाप्रसक्तेः। तत्र तत्रार्थदण्डस्य ब्राह्मणविषयस्यापि वक्ष्यमाणत्वाच्च। तुशब्दस्तु प्रधानविषयप्रवासनक्रियामात्राद्यभिप्रायकत्वेनाप्यविरुद्धः।

याज्ञवल्क्यः—

यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत्॥ (२।८२)

यः साक्ष्यमङ्गीकृत्य अन्यैः साक्षिभिः सह साक्ष्यं श्रावितः सन् निगदसमये तमोगुणेनावृतो रागद्वेषाद्याक्रान्तचित्तस्तत्साक्ष्यमन्येभ्यो निह्नुते नाहमत्र साक्ष्यं स्वीकरोमीति प्रकाशयति। यथा तेप्येतदनुरोधात्तन्न स्वीकुर्वते कूटतां वा कुर्वन्ति, स विवादपराजयनिमित्तकदण्डापेक्षयाष्टगुणदण्डं दाप्योऽपराधमहत्त्वात्। अन्येभ्य इति "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" (१।४।३४) इत्यनेन सम्प्रदानसंज्ञायां चतुर्थी। तेन पूर्वोक्तार्थलाभः। ब्राह्मणं तु तथा कुर्वाणं विवासयेत्। विवासनं च व्याख्यातरीत्या देशनिर्वासननग्नीकरणगृहभङ्गान्यतमरूपमनुबन्धाद्यपेक्षया व्यस्तसमस्तविधया ज्ञेयम्। यत्तु मिताक्षराकृता अष्टगुणदण्डदानासमर्थमिति व्याख्यातम्। तत्प्रधानक्रियानिरूपितवैलक्षण्यप्रतिपादकतुशब्दविरोधादुपेक्ष्यम्। नचैवमल्पविषयेऽपि विवासनमदण्डता वा प्रसज्येतेति वाच्यम्। वचनोपात्तविषयस्यैव दण्डस्य युक्तत्वात्। अत एवाह—

नारदः,

श्रावयित्वा ततोऽन्येभ्यः साक्षित्वं यो विनिह्नुते।
स विनेयो भृशतरं कूटसाक्ष्यधिको हि सः॥ इति।

(व्य० प० १ श्लो० १९७)

तथा चापरार्कोऽपि—'ब्राह्मणश्चेदेवंविधस्तं विवासयेन्नतु दण्डयेत्' इत्येवं व्याचख्यौ। क्षत्रियादीनां तु दण्डदानासामर्थ्ये स्वजात्युचितकर्मकरणनिगडबन्धनकारागृहनिरोधनादि तावद्द्रव्यसमीकरणानुरूपं बोध्यम्। सर्वेषामपि निह्नवकारित्वे समानदोषत्वात्सर्वेऽपि प्रत्येकमष्टगुणं दण्ड्याः।

प्रागन्यथोक्त्वा पुनरन्यथोक्तौ कात्यायन आह—

उक्तान्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विताः ।

अनुबन्धादितारतम्येनात्र दण्डतारतम्यं कल्प्यम् । अन्यतरेणोपन्यस्ताः साक्षिणोऽन्येन यदि रहसि संवाद्यन्तेऽन्यद्वारेण भेद्यन्ते वा तदा प्रकृतार्थहानिस्तस्येत्याह—

नारदः,

न परेण समुद्दिष्टमुपेयात्साक्षिणं रहः ।
भेदयेच्चैव नान्येन हीयेतैवं समाचरन् ॥ इति ।

( व्य० प० १ श्लो० १६४ )

साक्षिणामवचनानृतवचने प्रतिषिद्धे क्वचित् तत्प्रतिप्रसवमाह—

याज्ञवल्क्यः,

वर्णिनां तु बधो यत्र तत्र साक्ष्यनृतं वदेत् । इति । ( २।८३ )

साक्षिणा सत्ये उक्ते यत्र वर्णवतां ब्राह्मणादीनां राजदण्डरूपो बध आपद्यते तत्र बधप्रयोजकताख्यमहादोषपरिहाराय साक्ष्यनृतं वदेत् । सत्यं न वदेदित्यर्थः । तथा चावचनानृतवचनयोर्द्वयोरप्यभ्यनुज्ञा लभ्यते । शङ्काभियोगादिस्थले साक्षिसत्यवचनेन यद्यभियुक्तस्य बधः प्रसज्यतेऽभियोक्तुश्च शङ्काभियोगकारित्वाच्च तत्प्रसक्तिस्तत्रानृतवचनाभ्यनुज्ञा । तत्त्वाभियोगादौ च सत्यासत्यवचने यत्रान्यतरबधप्रसक्तिरपरिहार्य्या तत्र तूष्णीम्भावोऽभ्यनुज्ञायते । यदि तु राजा कथञ्चिदव्यकथनं नानुमन्यते तदाऽसाक्षिता सम्पादनीयेत्यर्थसिद्धम् । तदसम्भवे सत्यमेवाभिधेयम् । वर्णिवधप्रयोजकत्वदोषापरिहारेऽनृतवचनदोषस्वीकारस्यानुचितत्वात्प्रायश्चित्तद्वयप्रसक्तेर्वर्णिबधप्रायश्चित्तं परं यथाशास्त्रमादरणीयमिति विज्ञानयोगिनः ।

मनुरपि—

शूद्रविट्क्षत्रविप्राणां यत्रर्त्तोक्तौ भवेद्वधः ।
तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते ॥ इति । ( ८।१०४ )

इदमपि योगीश्वरवचनवद्विशिष्टाभावपरतया व्याख्येयम् । अवचनानृतवचनाभ्यनुज्ञालाभाय । सत्याद्विशिष्यत इत्यस्यायमर्थः । ब्राह्मणादिबधप्रयोजकतानिबन्धनाधिकदोषपरिहारायावचनानृतवचनप्रयुक्ताल्पदोषस्वीकार उचित एवेति प्रशंसार्थम् । यद्यपि

न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम् ।
राष्ट्रादेनं बहिः कुर्य्यात्समग्रधनमक्षतम् ॥
न ब्राह्मणबधाद्भूयानधर्मो विद्यते क्वचित् ।

तस्मादस्य वधं राजा मनसापि न चिन्तयेत् ॥ (८।३८०।३८१)

इत्यादिमन्वादिवाक्यैर्ब्राह्मणवधदण्डनिषेधाद्विप्रग्रहणमनर्हम् , तथापि तस्य वधस्थानीयदण्डप्रसक्तेस्तत्परिहारायैवावचनानृतवचनाभ्यनुज्ञा।

तथाच मनुः—

मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते।

इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥ इति। (२।३७९।)

स्मृत्यन्तरेऽपि—

ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनं तथा।

ललाटे चाङ्ककरणं प्रयाणं गर्दभेन च ॥ इति।

न च वधशब्देनार्थद्वयपरिग्रहे वैरूप्यम्। निमित्तांशपातिनि तत्प्रसक्तावपि विधिविषयस्याप्रसक्तेः। यद्वा—

गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान्।

प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥ (८।१०२)

इति मानवात्तेषां शूद्रवद्वधाभ्यनुज्ञाप्रतीतेस्तत्परं विप्रग्रहणम। तथा च वधपदमुभयत्र मुख्यार्थकमेव। अयं त्वपरोक्तसमाधिरनुपादेयः। तस्य मानवस्य प्रकरणाच्छपथपरत्वेन दण्डाविषयत्वाभावात्। "सर्वपापेष्वपि स्थितम्। तस्मादस्य वधं राजा मनसापि न चिन्तयेत्" इत्यादिश्रवणाद्विप्रवधमात्रस्यैव परिहरणीयत्वप्रतीतेश्च। अथवा यत्र क्रोधाद्यावेशवशेनातिक्रम्य निषेधं विप्रस्यापि राज्ञा म्लेच्छादिना वा वधदण्डः कर्त्तव्य इति सम्भावना तत्रैवेदमस्तु। यथाकथञ्चित्प्रसक्त्युपजीवकत्वादस्य, राज्ञोऽस्तु परं दोषः। पापीयसस्तु क्षत्रियादेर्वधप्रसक्तावपि नोभयाभ्यनुज्ञेत्याह—

गौतमः,

नानृतवचने दोषो जीवतश्चेत्तदधीनं न तु पापीयसो जीवनमिति।

नचैवमवचनानृतवचनयोरभ्यनुज्ञानात्प्रत्यवाय एव तत्र सर्वथा नास्तीति मन्तव्यम्। प्रायश्चित्तस्मरणात्।

तथा च याज्ञवल्क्यः—

तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः। इति। (२।८३)

मनुरपि—

वाग्दैवतैश्च चरुभिर्यजेरंस्ते सरस्वतीम।

अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् ॥

कूष्माण्डैर्वापि जुहुयात् घृतमग्नौ यथाविधि।

उदित्यृचा वा वारुण्या ऽग्न्यृचेनाऽब्दैवतेन वा ॥ इति ॥ (८।१०५।१०६)

ते इति प्रक्रमाज्जुहुयादिति छान्दसो वचनव्यत्ययः। उदुत्तमञ्चेति पाठे उदुत्तमं वरुणपाशेति ऋक्। तादित्यृचेति पाठे तत्त्वायामि ब्रह्मणेति वारुणी ज्ञेया। न चाभ्यनुज्ञावचःसार्थक्याय प्रत्यवायाभावकल्पनमावश्यकमिति प्रायश्चित्तविधानं नैमित्तिकक्षामवत्यादिवत् पुंश्चलीवानरदंशादिनिमित्तकद्वादशरात्रादिवद्वेति वाच्यम्। "तत्पावनाय" "एनसस्तस्य कुर्वाणा निष्कृतिं पराम्" इत्यस्य वैयर्थ्यापत्तेः। न चैवं प्रतिप्रसववैयर्थ्यम्। यतोऽनृतवचनप्रतिषेधो द्विविधः पुरुषमात्रसाधारणः साक्ष्यप्रयुक्तश्च। तत्र साक्ष्यप्रयुक्तप्रतिषेधनिबन्धनप्रत्यवायस्य प्रतिप्रसवादभावो नतु साधारणनिबन्धनप्रत्यवायस्यापीति प्रायश्चित्तविधिबलात् कल्प्यते। यद्यपि भूयसः साक्ष्यनृतप्रभवप्रत्यवायस्यापगमेऽल्पस्यानृतमात्रप्रभवस्य तस्याभावोऽप्यविनाभावादानुषङ्गिकोऽवश्यम्भावी। ब्रह्मवधसुरापानादिप्रभवप्रत्यवायनाशकद्वादशाब्दादिनाऽवगोरणाघ्राणादिप्रभवतन्नाशवत्। तथाप्यत्राभ्यनुज्ञायाः प्रायश्चित्तविरुद्धयोरुभयोरपि सार्थक्याय भूयो निवृत्तयोरप्यानुषङ्गिकोऽप्यविनाभूतोऽपि स्वल्पोऽपि न निवर्त्तत इति गम्यते। अत्र चरुरिति योगीश्वरवचन एकवचनाद्दैवतैक्याच्च मानवे चरुभिरिति बहुवचनं कर्तृबहुत्वन्यायप्राप्तबहुत्वानुवादकम्। द्विजग्रहणान्न शूद्रस्यैतत्प्रायश्चित्तं किन्त्वन्यत्।

तथा च विष्णुः—

तत्पावनाय कूष्माण्डीभिर्द्विजोऽग्निं जुहुयात्। शूद्रश्चैकाहिकं गोदशकस्य ग्रासं दद्यादिति।

ऐकाहिकम्=एकाहभक्षणपर्याप्तम्। वयं तु "तत्पावनाय" "अनृतस्यैनसस्तस्य" इत्यादियोगीश्वरमन्वादिवचनेषु तच्छब्दोपादानात् साक्ष्यनृतपातकमेव गृह्यते। तन्निरसनायैवेदं प्रायश्चित्तम्। नच तस्याभ्यनुज्ञावचनेनाभावावगमात् कथमेतदिति वाच्यम्। वर्णिवधदोषापेक्षया साक्षिवितथवचनदोषस्याल्पस्य सह्यतेति "तद्धि सत्याद्विशिष्यते" इति वाक्यशेषपर्यालोचनेन तस्य तात्पर्यात्। अत एवावचने दोषपरिहारोऽप्यनेन प्रायश्चित्तेन। सामान्यतः साक्षिभिन्नस्यावचनदोषाभावात्। नच "अब्रुवन्विब्रुवन्वापि" इति वचनमवचने सामान्यतो दोषप्रतिपादकमिति वाच्यम्। तस्य प्रकरणात् 'सभा वान प्रवेष्टव्या' इति वाक्यशेषाच्च सभ्यपरत्वात्। अत एव साक्षिणां पृथग्वचने दोषवचनं सफलम्। नच साक्षिणामवचनानृतवचनयोर्दोषाधिक्यादिदमल्पप्रायश्चित्तमनुचितमिति वाच्यम्। अभ्यनुज्ञाविधेरस्मिन्विषयेऽल्पदोषपर-

त्वस्योक्तत्वात् । एतेन भूयोदोषनिवृत्तावल्पदोषनिवृत्तिरविनाभावाद्न्यत्र तु विधिद्वयसाफल्याय न तथेत्यपि कल्पनीयम् । ततश्च वर्णिवधप्रसक्तौ साक्षिणोऽप्यनृतवचनावचनयोर्वधप्रयोजकतादोषापेक्षयाल्पो दोषस्तत्र चेदं प्रायश्चित्तं तेन च ततोऽप्यल्पः सामान्यानृतवचनप्रतिषेधातिक्रमनिबन्धनो दोषः सुतरामुपैतीति तात्पर्यमिति ब्रूमः ।

इति साक्षिनिरूपणम् ।

## अथ लेख्यं निरूप्यते ।

तत्र बृहस्पतिः—

साक्षिणामेष निर्दिष्टः सङ्ख्यालक्षणनिश्चयः ।
लिखितस्याधुना वच्मि विधानमनुपूर्वशः ॥
षाण्मासिकेऽपि समये भ्रान्तिः सञ्जायते नृणाम् ।
धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥
राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा ।
लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनः ॥
भागदानक्रियाधानसंविद्दासऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥

मरीचिरपि—

स्थावरे विक्रयाधाने विभागे दान एव च ।
लिखितेनाप्नुयात् सिद्धिमविसंवादमेव च ॥

भागो=विभागः । आधानमाधीकरणम् । संवित्=समयः । आधिशब्देन विशुद्धाधिग्रहणम् । भागपत्रादीनां लक्षणमाह—

बृहस्पतिः,

भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम् ।
विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥
भूमिं दत्त्वा तु यत्पत्रं कुर्याच्चन्द्रार्ककालिकम् ।
अनाच्छेद्यमनाहार्य्यं दानलेख्यं तु तद्विदुः ॥
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥
जङ्गमं स्थावरं बन्धं दत्त्वा लेख्यं करोति यत् ।
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तदुच्यते ॥
ग्रामो देशश्च यत्कुर्यात् मतलेख्यं परस्परम् ।
राजाविरोधि धर्म्मार्थं संवित्पत्रं वदन्ति तत् ॥

वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यः ।
कर्म्माणि ते करिष्यामि दासपत्रं तदुच्यते ॥
धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्याच्च कारयेत् ।
उद्धारपत्रं तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥ इति ।

विशुद्धिपत्रमुक्तं कात्यायनेन—
अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते जनैः ।
विशुद्धिपत्रकं देयं तेभ्यः साक्षिसमन्वितम् ॥

सन्धिपत्रमप्याह स एव—
उत्तमेषु समस्तेषु अभिशापे समागते ।
वृत्तानुवादलेख्यं यत् तज्ज्ञेयं सन्धिपत्रकम् ॥

अन्वाधिपत्रमाह प्रजापतिः—
धनी धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदाधिलिखितं पूर्वं चास्य समर्पयेत् ॥

पूर्वमाधिपत्रम् । सीमापत्रमप्याह—

कात्यायनः,

सीमाविवादे निर्णीते सीमापत्रं विधीयते । इति ।

ऋणशोधने कृते ऋणपत्रनाशादौ सति प्राप्तिपत्रमुत्तमर्णेनाधमर्णाय देयमित्याह—

याज्ञवल्क्यः,

दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत् । ( अ० २ श्लो ९४ )

अत्र लौकिकं सप्तविधलेख्यं स्वकृतान्यकृतभेदेन द्विविधं नारदेनोक्तम्—
लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा ।

स्वकृते साक्ष्यनियमोऽन्यकृते तन्नियम इत्याहोत्तरार्द्धेन—

स एव,

असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥ इति ।
(व्य० प० २ श्लो० १३५)

असाक्षिमत्साक्षिमदपीत्यर्थः ।

तथा च याज्ञवल्क्यः—
विनापि साक्षिभिर्लेख्यं स्वहस्तालिखितं च यत् ।
तत्प्रमाणं स्मृतं सर्वं बलोपधिकृतादृते ॥ इति । ( २।८९ )

अपिशब्दात्प्रागुक्तसाक्षिमदपि । बलोपधिकृतपर्युदासः सर्वलेख्यविषयो न स्वकृतमात्रविषयः ।

तथा च मनुः—

बलाद्भुक्तं बलाद्दत्तं बलाद्यच्चापि लेखितम्।
सर्वान् बलकृतानर्थानकृतान्मनुरब्रवीत्॥ (७।१६८)

नारदोऽपि—

मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत्।
तदप्रमाणं लिखितं भयोपधिकृतं तथा॥ इति। (२।१३७)

अन्यकृते विशेषान्तरमाह योगीश्वरः—

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम्।
लेख्यं तु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम्॥
समामासतदर्द्धाहर्नामजातिस्वगोत्रकैः।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम्॥ (२।८४।८५)

धनिकनामपूर्वकमित्यनेनोत्तमर्णनामोपरि लेख्यमधमर्णनाम तदध इत्यर्थः। एतच्चर्णपत्रादिविषयमन्यत्रासम्भवात्। समामासादि यथासम्भवमन्यत्रापि। सब्रह्मचारिकं बह्वृचादिशाखाप्रयुक्तगुणनाम बह्वृचः कठ इत्यादि।

वशिष्ठोऽपि—

कालं निवेश्य राजानं स्थानं निवसनं तथा।
दायकं ग्राहकं चैव पितृनाम्ना च संयुतम्॥
जातिं गोत्रं च शाखां च द्रव्यमाधिं ससङ्ख्यकम्।
वृद्धिं ग्राहकहस्तं च विदितार्थौ च साक्षिणौ॥

स्थानं=जनपदः। निवसनं=पुरग्रामादिकम्। ग्राहकोऽधमर्णः। ग्राहकहस्तनिवेशनप्रकारमाह—

योगीश्वरः,

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम्॥ इति। (२।८६)

साक्षिणावित्यनेन द्वयोरभ्यनुज्ञानात् त्र्यवरत्वनियमो नात्रेत्युक्तमेकस्तु न भवत्येवेति। अत्र साक्षिलेखकस्वहस्तचिह्नं कार्य्यमित्यप्याह—

स एव,

साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम्।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः॥
उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत्॥ (२।८७।८८)

समा इत्यनेन गुणसाम्यं सङ्ख्यासाम्यं च वैषम्यानियमाय विवक्षितम् । असमा इत्यकारप्रश्लेषस्तु वैषम्यस्य सामान्यत एव साक्षिषु प्राप्तेर्नोपादेयः । ऋणिसाक्षिणोः सर्वथा लिप्यनभिज्ञत्वे—

नारद आह,

आलिपिज्ञ ऋणी यः स्यात्स्वमतं स तु लेखयेत् ।
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपतः ॥ इति ।

"त्रिविधं राजशासनम्" इत्युक्तं त्रैविध्यं विविनक्ति—

बृहस्पतिः,

दत्त्वा भूम्यादिकं राजा ताम्रपट्टे पटेऽथ वा ।
शासनं कारयेद्धर्म्यं स्थानवंश्यादिसंयुतम् ॥
मातापित्रोरात्मनश्च पुण्यायामुकसूनवे ।
दत्तं मयामुकायाद्य दानं सब्रह्मचारिणे ।
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम् ।
अनाच्छेद्यमनाहार्य्यं सर्वभागविवर्जितम् ॥
दातुः पालयितुः स्वर्ग्यं हर्त्तुर्नरकमेव च ।
षष्टिवर्षसहस्राणि दानोच्छेदफलं लिखेत् ॥
ज्ञातं मयेति लिखितं सन्धिविग्रहलेखकैः ।
समुद्रं वर्षमासादिधनाध्यक्षाक्षरान्वितम् ॥
एवंविधं राजकृतं शासनं समुदाहृतम् ।
देशादिकं यस्य राजा लिखितेन प्रयच्छति ॥
सेवाशौर्य्यादिना तुष्टः प्रसादलिखितं तथा ।
पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥

सब्रह्मचारिणे=अमुकशाखाध्यायिने । सर्वभागविवर्जितम्=सकलराजपुरुषादिदेयांशरहितम् ।

योगीश्वरः शासनमाह— (अ० १)

भूमिं दत्त्वा निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥ (३१८)
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥ (३१९)
प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ।
स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरम् ॥ इति । (३२०)

इयति पर्णक्रमुकभारादावियन्ति पर्णक्रमुकादीन्यस्मै देयानीति

राज्ञो नियतदानाज्ञा निबन्धः। कारयेत् सन्धिविग्रहाद्यधिकारिद्वारेत्यर्थात्। तथा च व्यासः—

राज्ञा तु स्वयमुद्दिष्टः सन्धिविग्रहलेखकः।
ताम्रपट्टे पटे वापि प्रलिखेद्राजशासनम्॥ इति।

प्रतिगृह्यत इति प्रतिग्रहो भूम्यादिस्तत्परीमाणं प्रतिग्रहपरीमाणम्। उपसर्गस्य दीर्घो बाहुलकः। दीयत इति दानम्=भूम्यादि तस्य च्छेदः= क्षेत्रादेर्मर्य्यादा तदुपवर्णनं=तन्निर्देशम्। आत्मवंश्यादीनभिलेखयेत्यन्वयः। इदं च साधुशब्दैरेव लेखनीयं न लौकिकवत्सदनियमः। तथा च सङ्ग्रहकारः—

राजस्वहस्तचिह्नेन राजादेशेन संयुतम्।
युक्तं राजाभिधानेन मण्डितं राजमुद्रया॥
सुलिप्यनपशब्दोक्तिसम्पूर्णाविरवाक्षरम्।
शासनं राजदत्तं स्यात् सन्धिविग्रहलेखकैः॥

अन्तिमपदोत्तरं लिखितमिति शेषः। तस्मान्निव लौकिके देशभाषादिप्रतिषेधो नेत्याह--
नारदः,

देशाचाराविरुद्धं यद्व्यक्ताधिविधिलक्षणम्।
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम्॥ इति॥

(व्य० प० १ श्लो० १३६)

शासने राज्ञा स्वहस्तेनैव स्वसम्मतं लेख्यमित्यप्याह—
व्यासः,

सन्निवेशं प्रमाणं च स्वहस्तेन लिखेत्स्वयम्।
मतं मेऽमुकपुत्रस्य अमुकस्य महीपतेः॥

सन्निवेशं प्रमाणं चेत्यस्य पूर्ववाक्ये प्रलिखेदित्यत्रान्वयः। तयो राजस्वहस्तलिखनानियमात्। इदं च राज्ञा प्रतिग्रहीत्रे समर्पणीयमित्याह विष्णुः—

पटे च ताम्रपट्टे वा लिखितं स्वमुद्राङ्कमागामिनृपतिपरिज्ञानार्थं दद्यादिति।

अत एव दत्तापहारदोषप्रतिपादनमपि भाविनृपप्रत्यायनार्थं तत्रावश्यकमित्यप्याह—
व्यासः,

षष्टिवर्षसहस्राणि दानाच्छेदफलं तथा।
आगामिनृपसामन्तबोधनायाभिलेखयेत्॥ इति।

षष्टिवर्षसहस्राणीत्यादि पुराणवचनप्रसिद्धम् । दानाच्छेदयोः दानापहारयोः स्वर्गादिनरकादि फलं लेखयद्राजेत्यर्थः । जयपत्रे विशेषमाह—

व्यासः,

व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः ।
जयपत्रं ततो दद्यात् परिज्ञानाय पार्थिवः ॥
जङ्गमं स्थावरं येन प्रमाणेनात्मसात्कृतम् ।
भागाभिशापसन्दिग्धे यः सम्यग्विजयी भवेत् ॥
तस्य राज्ञा प्रदातव्यं जयपत्रं सुनिश्चितम् ।
पूर्वोत्तरक्रियापादं तत्प्रमाणं परीक्षणम् ॥
निगदस्मृतिवाक्यं च यथासभ्यविनिश्चितम् ।
एतत्सर्वं समासेन जयपत्रेऽभिलेखयेत् ॥ इति ।

प्रमाणस्य पृथक्ग्रहणात्क्रियापदेन प्रत्याकलितमत्र गृह्यते । परिज्ञानाय=प्राड्न्यायस्य बोधनाय । भागेऽभिशापे वा सन्दिग्धे । विवादपदमात्रोपलक्षणमेतत् । तेन विवादविषयो यो यत्र विवादे स तत्र लेखनीयः । जयपत्रं राजमुद्राङ्कितं कार्य्यमित्याह—

वृद्धवशिष्ठः,

यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् ।
सावधारणकं चैव जयपत्रकमुच्यते ॥
प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया ।

अत्र च राज्ञः सभ्यानां च स्वहस्तोऽप्यपेक्षित इत्याह—

कात्यायनः—

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः ॥
सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः ।
यथा लेख्यविधौ तत्र स्वहस्तं दद्युरेव ते ॥

क्वचित्पश्चात्काराख्योऽपि जयपत्रभेद उक्तस्तेनैव—

अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः ।
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ॥
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ।
अन्यवाद्यादि हीनेभ्य इतरेषां प्रदीयते ॥
वृत्तानुवादसंसिद्धं तच्च स्याज्जयपत्रकम् । इति ।

वशिष्ठेन तु राजपत्रस्य लक्षणाभिधानपूर्वकं तस्य चातुर्विध्यमुक्तम्—

राज्ञः स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।

राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ॥
शासनं प्रथमं ज्ञेयं जयपत्रं तथाऽपरम् ।
आज्ञाप्रज्ञापनापत्रं राजकीयं चतुर्विधम् ॥ इति ।

आज्ञाप्रज्ञापनापत्रयोः स्वरूपमुक्तं तेनैव--

सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु च ।
कार्य्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥
ऋत्विक्पुरोहिताचार्य्यमान्येष्वभ्यर्चितेषु तु ॥
कार्य्यं निवे(१)द्यते येन पत्रं प्रज्ञापनेति तत् ॥ इति ।

लेख्यप्रयोजनमाह मरीचिः—

स्थावरे विक्रयाधाने विभागे दान एव च ।
लिखितेनाप्नुयात्सिद्धिमविसंवादमेव च ॥
सिद्ध्यते वाचिकोऽप्याधिः स्थावरेषु दशाब्दिकः ।
प्रतिग्रहे च क्रीते च नालेख्या सिध्यति क्रिया ॥ इति ।

पूर्वलेख्ये कथञ्चन व्यवहाराक्षमतामुपगते तद्विधमेवापरं लेख्यम धमर्णेनोत्तमर्णाय लिखित्वा देयम् । शासनादौ तथाभूते राजादिद्वाराऽन्यत्करणीयमित्याह—

योगीश्वरः,

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।
भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत । (२।९१)

सर्वैरेतैर्विशेषणैर्व्यवहाराक्षमता विवक्षिता । दुष्टलिप्यक्षरपरिलेपेनावाचकतया वा यल्लेख्यं तत्तु दुर्लेख्यम् । नष्टं=सर्वथा नाशमुपगतम् । उन्मृष्टं=मसीदोषादिना मृदितलिप्यक्षरम् । यद्यपि दग्धमपि नष्टमेव तथापि कालमात्रकृता शीर्णता नष्टपदेनात्र विवाक्षता । पत्रान्तरकरणं चार्थिप्रत्यर्थिनोः परस्परसम्प्रतिपत्तौ । विमतौ तु देशान्तरस्थपत्रानयनाय कालो देयोऽध्वापेक्षया व्यवहारो वा प्रवर्त्तनीयः । दुर्लेख्यादौ तु सम्प्रतिपत्तौ पत्रान्तरकरणमन्यथा व्यवहारप्रवृत्तिरेवेत्यवसेयम । साक्षिषु सत्सु तैरेव निर्णयः ।

तथा च नारदः—

लेख्ये देशान्तरस्थे तु शीर्णे दुर्लिखिते हृते ।
सतस्तत्कालकरणमसतो द्रष्टृदर्शनम् ॥ इति ।
( व्य० प० १ श्लो० १४१ )

---

( १ ) प्रज्ञाप्यत इति पाठान्तरम् ।

सतो विद्यमानस्य लेख्यस्यानयनाय कालकरणम्। असत इत्यनादरे षष्ठी। तद्विनापीत्यर्थः। द्रष्टारः साक्षिणस्तैर्दर्शनं निर्णयः कार्य्यः। तच्च लेख्यं परीक्ष्यैव प्रमाणीकरणीयमित्याह—

कात्यायनः,

राजा क्रियाः समाहूय यथान्यायं विचारयेत्।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः॥
दर्पणस्थं यथाबिम्बमसत्सादिव दृश्यते।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुटिला नराः॥

व्यासः—

लेख्यमालेख्यवत्केचित् कुर्वन्ति कुशला नराः।
तस्मान्न लेख्यसामर्थ्यात्सिद्धिरैकान्तिकी मता॥

बृहस्पतिः—

ज्ञात्वा देशं च कालं च कुशलाः कूटकारकाः।
कुर्वन्ति सदृशं लेख्यं तद्यत्नेन विचारयेत्॥
स्त्रीबालार्त्तालिपिज्ञांश्च वञ्चयन्ति स्वबान्धवाः।
लेख्यं कृत्वा स्वनामाङ्कं ज्ञेयं युक्त्यागमैस्ततः॥

कात्यायनः—

साक्षिदोषाद्भवेद्दुष्टं पत्रं वै लेखकस्य च।
धनिकस्यापि वै दोषात् तथा धारणिकस्य च॥
दुष्टैर्दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत्।
तत्पत्रमुपधादुष्टैः साक्षिलेखककारकैः॥
उपधात्र दुष्टान्तःकरणता।

स एव—

धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितम्।
भवेत् कूटं नचेत्कर्त्ता कृतं हीति विभावयेत्॥
देशाचारविरुद्धं यत्सन्दिग्धं क्रमवर्जितम्।
कृतमस्वामिना यच्च साध्यहीनं च दुष्यति॥

नचेदित्यादेरयमर्थः। कर्त्ता लिखनकर्त्ता धनिकाधमर्णसम्प्रतिपत्त्या मयैतल्लिखितमिति यदि न विभावयेत्तदा तत् पत्रं कूटं भवेदप्रामाण्यशङ्कास्कन्दितं स्यादिति।

व्यासः—

अदृष्टं श्रावितं लेख्यं प्रमीतधनिकर्णिकम्।
अबन्धलग्नकं चैव बहुकालं न सिध्यति॥

एतदपवादमाह बृहस्पतिः—

उन्मत्तजडबालानां राजभीतिप्रवासिनाम् ।
अप्रगल्भभयार्त्तानां न लेख्यं हानिमाप्नुयात् ॥

उन्मत्तादीनां लेख्यं तददर्शनादिनापि हानिं नाप्नुयादित्यर्थः ।

बृहस्पतिः—

दूषितो गर्हितः साक्षी यत्रैकोऽपि निवेशितः ।
कूटलेख्यं तु तत्प्रोक्तं लेखको वापि तद्विधः ॥

कात्यायनः—

न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा ।
एवं प्रत्यर्थिनो लेख्यं कूटलेख्यं प्रकीर्त्तितम् ॥ इति ।

कूटमप्रामाण्यशङ्काकलङ्कितमित्यर्थः। तस्माद् दुष्टलेख्यपरीक्षाऽवश्यापेक्षणीयेत्यभिप्रायः ।

परीक्षाप्रकारमाह कात्यायनः—

त्रिविधस्यापि लेख्यस्य भ्रान्तिः सञ्जायते नृणाम् ।
ऋणिसाक्षिलेखकानां हस्तोक्त्या साधयेत्ततः ॥

स एव—

अथ पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुद्धिः स्यान्न संशयः ॥
ऋणिस्वहस्तसन्देहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥

याज्ञवल्क्यः—

सन्दिग्धलेख्यशुद्धिः स्यात् स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ॥ (२।९२)

एतद्देशकालयोरस्येदं द्रव्यं घटत इति युक्त्या प्राप्तिः युक्तिप्राप्तिः । क्रिया=साक्ष्यादि । चिह्नमसाधारणं यस्य यच्छ्रीकारादि । सम्बन्धः=पूर्वमपि परस्परविश्वासकृतस्तयोर्दानग्रहणादिसम्बन्धः । आगम=एतावतो द्रव्यस्यास्मिन्देशे कालेऽस्य सम्भावितः प्राप्त्युपायः । एतैर्हेतुभिः(१) । हेतुरसाधारणोऽन्यो गोवृषनयेन पृथगेव वा । प्रतिवादिना लेख्यदोष उद्भाविते वादिना तत्पुत्रेण वा तदुद्धारः करणीय इत्याह—

बृहस्पतिः,

उद्धरेल्लेख्यमाहर्त्ता तत्पुत्रो भुक्तिमेव तु ।
अभियुक्तः सभातश्चेत् तत्पुत्रोऽपि तदुद्धरेत् ॥

यत्तु कात्यायनः—

(१) सन्दिग्धलेख्यशुद्धिः स्यादिति शेषः ।

साक्षिलेखककर्त्तारः कूटतां यान्ति ते यथा ।
तथा दोषाः प्रवक्तव्या दुष्टैर्लेख्यं प्रदुष्यति ॥
आहर्त्ता भुक्तियुक्तोऽपि लेख्यदोषान् विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषानवाप्नुयात् ॥ इति,

तदनभियुक्तपितृमरणे वेदितव्यम् । दोषानुद्धारे दण्डमाह—

कात्यायनः,

कूटोक्तौ साक्षिणां वाक्याल्लेखकस्य च पत्रकम् ।
नयेच्छुद्धिं न यः कूटं स दाप्यो दममुत्तमम् ॥ इति ।

उत्तमं साहसमिति शेषः । राजशासने निर्णयप्रकारमाह—

प्रजापतिः,

कार्य्यो यत्नेन महता निर्णयो राजशासने ।
राज्ञः स्वहस्ततो मुद्रालेखकाक्षरदर्शनात् ॥

मुद्रालेखकाक्षरयोर्दर्शनान्निर्णयाद्राजस्वहस्ततश्च निर्णय इत्यर्थः । स्थावरविक्रयबन्धकादौ कूटत्वेन लेख्यं दूषयतो साधयतश्च दोषे शारीरदण्डमाह—

व्यासः,

स्थावरे विक्रयाधाने लेख्यं कूटं करोति यः ।
स सम्यग्भावितः कार्य्यो जिह्वापाण्यङ्घ्रिवर्जितः ॥

सम्यग्भावितः प्रमाणेन सल्लेख्यत्वमङ्गीकारितः । अनेन कूटलेख्यकर्त्तुर्नायं दण्डः किन्तु कूटत्वोद्भावनकर्त्तुरिति गम्यते । तथा च लेख्यं परकीयं यः कूटं करोति कूटमेतदिति वदतीत्यर्थः । कूटलेख्यकर्त्तुस्तु दण्डान्तरं वक्ष्यते । ऋणादानादावपि लेख्यदोषमुद्भावयितुस्तदसाधययतो विषयानुबन्धानुरोधेन दण्डः कल्प्यः ।

लेख्यप्राबल्यमप्याह बृहस्पतिः,

कुलश्रेणिगणादीनां यथाकालं प्रदर्शयेत् ।
श्रावयेत् स्मारयेच्चैव यथा स्याद्बलवत्तरम् ॥

नारदः,

दर्शितं प्रतिकालं यत् श्रावितं(१) स्मारितं च यत् ।
लेख्यं सिध्यति सर्वत्र मृतेष्वपि हि साक्षिषु ॥ (ऋणा०प्र०श्लो० १४०)

कात्यायनः—

दृष्टे पत्रे स्फुटं दोषं नोक्तवान्नृणिको यदि ।

(१) प्रार्थितं श्रावितं तथेति पाठो मुद्रितनारदस्मृतौ ।

ततो विंशतिवर्षाणि स्थितं पत्रं स्थिरं भवेत् ॥

ऋणिकग्रहणं प्रतिवादिमात्रोफलक्षणम् ।

स एव—

शक्तस्य सन्निधावर्थो यस्य लेख्येन भुज्यते ।
विंशद्वर्षाण्यतिक्रान्तं तत्पत्रं दोषवर्जितम् ॥
अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः ।
तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता ॥
सीमाविवादे निर्णीते सीमापत्रं विधीयते ।
तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिम् ॥
प्राप्तं वा तेन यत् किञ्चिद्देयं वाथ निरूपितम् ।
विनापि मुद्रया लेख्यं प्रमाणं मृतसाक्षिकम् ॥

अपिशब्दो मृतसाक्षिकमित्यत्राप्यन्वेति ।

व्यासः—

स्वहस्तकाज्जानपदं तस्मात्तु नृपशासनम् ॥
प्रमाणान्तरमिष्टं हि व्यवहारार्थमागतम् ।
द्वित्रलिपिज्ञः स्वकृतमन्यल्लिख्येत युक्तितः ॥
कुर्य्याद्विसदृशं लेख्यं तस्माज्जानपदं शुभम् ।
अप्रकाशात् साक्षियुक्तं लेखकाक्षरमुद्रितम् ॥
लोकप्रसिद्धं स्वकृताद्वरमन्यकृतं शुभम् ।
देशाध्यक्षादिलिखितं यत्र जानपदं कृतम् ॥
समकालं पश्चिमं वा तत्र राजकृतं शुभम् ।

संवर्तः—

लेख्ये लेख्यक्रिया प्रोक्ता वाचिके वाचिकी मता ।
वाचिकी तत्र सिध्येत्सा लेख्यस्योपरि या क्रिया ॥
लेख्यस्योपरि यत्साक्ष्यं कूटं तदभिधीयते ।
अधर्म्मस्य हि तद्द्वारमतो राजा विवर्जयेत् ॥
वाचिकी यदि सामर्थ्यमक्षराणां विहन्यते ।
क्रियाणां सर्वनाशः स्यादनवस्था च जायते ॥ इति ।

अस्यार्थः । लेख्ये सति लेख्यक्रिया प्रोक्ता सैव बलीयसीत्यर्थः । वाचिके साक्षिरूपे प्रमाणे सति वाचिकी क्रिया=साक्षिरूपा क्रिया सैव मता बलीयसी । लेख्यस्योपरि या वाचिकी=साक्षिरूपा क्रिया लेख्यानारूढेति यावत् । तत्र सा सिध्येत् । लेख्यस्योपरि यत्साक्ष्यं लेख्यसाधकतयोपन्यस्तमित्यर्थः । अधर्मस्य च तद्द्वारमित्यत्र हेतुर्वाचिकीति । तत्रापि हेतुः क्रियाणामिति ।

तत्राप्युपपत्तिरनवस्थेति। प्रमादपरिहारमतियत्नेन कृत्वा हि प्रायशो लेख्यं भवति। तेन तत्राप्रामाण्यशङ्कापि नोचिता। साक्ष्यादावपि तत्सम्भवादिति तात्पर्यम्। नतु सर्वथा तत्र साक्ष्यादिनिवर्त्तनमभिप्रेतम्। लेख्यपरीक्षोपदेशविरोधात्।

इति लेख्यनिरूपणम्।

अनयोश्च साक्षिलेख्ययोः शब्दाभिव्यञ्जकत्वाच्छब्दप्रमाणेऽन्तर्भावः। तथा हि। यथोक्तगुणवतां दोषरहितानां च साक्षिणामाप्तवाक्यावश्यम्भावात्। आप्तवाक्यस्य च प्रामाण्यात्। तदुभयविशेषणवत्तानिर्धारणायैव साक्षिपरीक्षोपदेशः। आप्तवाक्यस्य च वक्तृज्ञानानुमापकत्वेन स्वातन्त्र्येण वा प्रामाण्यमित्यन्यदेतत्। लेख्यं तु स्वस्य हितकारित्वेन स्वस्मिन्नाप्तत्वात् तद्वचनाभिव्यञ्जकमित्याप्तवाक्यमेव तत्रापि प्रमाणम्। अत एव तत्रानाप्तच्छलकृतत्वशङ्कानिरासाय उन्मत्तादेः स्वहितानभिज्ञतया स्वस्मिन्नप्यनाप्तत्वाच्छङ्कानिरासाय च लेख्यपरीक्षोपदेशोऽप्यर्थवान्।

## अथ भुक्तिः।

इयं च याज्ञवल्क्यादिभिरेकैव त्रिविधमानुषप्रमाणान्तर्गततयोक्ता।

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ (अ०२श्लो०२२)

इत्यादिवचनैः। बृहस्पत्यादयो मानुषप्रमाणभेदतयोपन्यस्ते तद्भेदत्रैविध्ये भुक्तियुक्तिचोदनाऽप्रतिकालानाख्यातवन्तः।

साक्षि द्वादशभेदं तु लिखितं दशधा स्मृतम्।
अनुमानं त्रिधा भिन्नं नवधा दैविकी क्रिया ॥

इत्युक्त्वा भुक्तियुक्तिचोदनाऽप्रतिकालान् बृहस्पतिर्विवृतवान्। तत्र युक्तिचोदनाऽप्रतिकालयोः प्रमाणान्तरसहकारितयैव प्रामाण्यम्। भुक्तेस्तु वक्ष्यमाणविशेषणवत्याः स्वत्वहेत्वाविनाभावात् स्वत्वानुमापकत्वं स्वत एवेत्यभिसन्धाय योगीश्वरादिभिर्भुक्तिरेव प्रमाणतयोक्ता, अन्यैस्तु यथाकथञ्चिदनुमापकतामभिसन्धाय युक्तिचोदनाऽप्रतिकालसङ्ग्रहायानुमानत्वेनैव सोक्तेति सौकर्याय त्रयमपि निरूपयामः। तत्र क्वचित् सागमाया भुक्तेः प्रामाण्यं मनसि सन्दधानः सप्त स्थावरागमोपायान् प्रदर्शयस्तत्र भुक्तेः प्रामाण्यमाह—

बृहस्पतिः,

एतद्विधानमाख्यातं साक्षिणां लिखितस्य च।
साम्प्रतं स्थावरे प्राप्ते भुक्तेश्च विधिरुच्यते॥
विद्यया क्रयबन्धेन शौर्यभार्यान्वयागतम्।
सपिण्डस्याप्रजस्यांशं स्थावरं सप्तधा कृतम्॥
पित्र्यं लब्धक्रयाधाने रिक्थशौर्य्यप्रवेदनात्।
प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात्॥ इति।

स्थावरग्रहणमत्र भुक्तेरावश्यकत्वसूचनाय न तु तत्रैव भोगस्य प्रामाण्यनियमाय। जङ्गमेऽपि तत्सम्भवात्। तदेतदुत्तरत्र विवेचयिष्यामः। विद्यया=प्रतिग्रहादिकप्रयोजकतया। स्वत्वोपायः क्रयः प्रसिद्धः। बन्धो=बन्धकं सोपाधिकस्वत्वहेतुर्नष्टाधिविधौ चात्यन्तिकस्वत्वहेतुः। तदप्युत्तरत्र विवेचनीयम्। क्रयबन्धेनेति समाहारद्वन्द्व एकत्वम्। शौर्यागतं=युद्धार्जितम्। भार्यागतं=विवाहकाले प्राप्तम्। अन्वयागतं=पित्रादिक्रमोपात्तम्। अप्रजस्य सपिण्डस्यांशं=रिक्थहरान्तराभावे पिण्डदानाद्यधिकारितया प्राप्तम्। पित्र्य इत्यादिना प्रागुक्तानेव सप्त स्थावरागमोपायाननूद्य तत्र भोगस्य प्रामाण्यं विधीयते। तत्र प्रवेदनं विवाहः।

स एव—

क्रमागतः शासनिकः क्रयाधानागमान्वितः।
एवंविधस्तु यो भोगः स तु सिद्धिमवाप्नुयात्॥
संविभागक्रयप्राप्तं पितृलब्धं च राजतः।
स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया॥
प्राप्तमात्रं येन भुक्तं स्वीकृत्यापरिपन्थिनम्।
तस्य तत्सिद्धिमाप्नोति हानिश्चोपेक्षया तथा॥
अध्यासनात् समारभ्य भुक्तिर्यस्याविघातिनी।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत्॥

अपरिपन्थिनम्=विरोध्यप्रतिबद्धम्। अध्यासनात्=परिग्रहात्।

नारदः—

आगमेन विशुद्धेन भोगो याति प्रमाणताम्।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति॥
(ऋ० प्र० श्लो० ८५)

आगमस्याविशुद्धत्वं विरोध्यास्कन्दनं भवेत्।
(इदं ना० स्मृ० न लब्धम्)

व्यासः—

सागमो दीर्घकालश्च विच्छेदोपरवोज्झितः।

प्रत्यर्थिसन्निधानश्च परिभोगोऽपि पञ्चधा ॥

विच्छेदोऽन्तरायः उपरव आक्रोशस्ताभ्यामुज्झितो रहितः । यद्वा छेदो व्यवधानं तद्विगमवान् विच्छेदो निरन्तर इति यावत् । अपरवो=वर्जनविषयो रवः । मदीयं क्षेत्रादि त्वया किमिति भुज्यत इति प्रतिषेधः । अपशब्दस्य वर्जनार्थत्वात् । तेनोज्झितः ।

नारदः—

सम्भोगं केवलं यस्तु कीर्त्तयेन्नागमं क्वचित् ।
भोगच्छलोपदेशेन विज्ञेयः स तु तस्करः ॥( ऋ०प्र०श्लो०८६ )

इदं सागमत्वविशेषणं तदनुपन्यासे दूषणं च स्मरणयोग्यता यत्रागमस्य तत्र काले बोद्धव्यम् । स च कालः शतवर्षावधिकः "शतायुर्वै पुरुष" इति श्रुतेरिति विज्ञानयोगिनः । पुत्रादिक्रमेणापि स्मरणासम्भवाद् यावति काले स्मरणं तावानेव विवक्षितोऽस्मार्त इति तु वयम् । अनेनाभिप्रायेणाह स एव—

स्मार्त्ते काले क्रिया भुक्तेः सागमा भुक्तिरिष्यते ।
अस्मार्त्ते ऽनुगमाभावात् क्रमात्त्रिपुरुषागता ॥ इति ।
( ऋ० प्र० श्लो० ८९ )

भुक्तिः प्रमाणमिति शेषः । अनुगम=आगमाभावनिश्चयः । कल्पतरुकारस्त्वनुगम आगमानुसन्धानमिति व्याचख्यौ । तत् त्वागमाभावनिश्चयस्य बाधत्वेनानुमितिप्रतिबन्धकस्याभाववचनस्यावश्यकत्वादागमानुसन्धानस्य च भोगेनैव क्रियमाणत्वेन तदभावासम्भवाच्च हेयम् ।

याज्ञवल्क्यः—

आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् । (२।२७)

पूर्वेषां त्रयाणां क्रमेणागतोऽस्मार्त्तकाल इति यावत् । तस्मात् भोगात् विना स्मार्त्तकालाद्भोगात् आगमो=दानक्रयादिरूपः स्वत्वहेतुरभ्यधिक उपजीव्यत्वात् । आगमं विना भोगमात्रात् स्वत्वानुत्पत्तेः । स्मरणयोग्ये च काले स्मर्त्तव्यास्मरणरूपया योग्यानुपलब्ध्या तदभावनिश्चये भोगेनागमानुसन्धानमित्यसम्भवात् । अस्मार्त्ते तु तदभावनिश्चयाभावे निष्प्रतिपक्षेण नैरन्तर्य्यादिविशेषणवता भोगेन स्वत्वहेत्वाक्षेपद्वारा स्वत्वाक्षेप इति तात्पर्य्यम् । अनेनैवाभिसन्धिनाह—

नारदः,

अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः ।
न तच्छक्यमपाहर्त्तुं क्रमात्त्रिपुरुषागतम् ॥(व्य०प०१श्लो०९३)

पूर्वतरैस्त्रिभिः सह पित्रा भुक्तमन्यायेनापि यदि किमुतान्यायानि-

श्चये तदपाहर्त्तुं न शक्यमर्थिना। स्वाध्यक्षं निराक्रोशनिरन्तरोपभोगे सति तस्य निरुत्तरत्वात्। अत्र च सर्ववचनेषु त्रिपुरुषागतत्वं भोगस्य स्मार्त्तकालीनत्वोपलक्षणं न तु यथाश्रुतम्। स्मरणयोग्येऽपि द्वितीयादिवर्षरूपे काले पुरुषत्रयात्ययसम्भवात्। तत्र च बाधेनानुमित्यर्थापत्योरनुदयात्। इदमेवाभिप्रेत्याह—

व्यासः,

पिता पितामहो यस्य जीवेच्च प्रपितामहः।
त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुषः॥
पितामहेन भुक्तस्य तत्पुत्रेण विना च तम्।
तौ विना यस्य पित्रा च तस्य भोगस्त्रिपूरुषः॥

कात्यायनोऽपि—

मुख्या पैतामही भुक्तिः पैतृकी चापि संमता।
त्रिभिरेतैरविच्छिन्ना स्थिरा षष्ट्याब्दिका मता॥

व्यास एव—

वर्षाणि विंशतिर्भुक्ता स्वामिनाऽव्याहता सती।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपौरुषी॥
त्रिपौरुषी च त्रिगुणा न तत्रान्वेष्य आगमः॥

भुक्ता भुक्तिः पाकं पचतीतिवत्प्रत्ययानुग्रहाय धातोरनुवादः। तत्रागमस्तादृशभोगेनैवाक्षिप्यते। आगमाभावनिश्चये तु सर्वत्र भोगो निष्फल एव।

अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि।
चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः॥

(ना०स्मृ०व्य०प०१श्लो० ८७)

न च यो भुङ्क्ते इत्येकवचनश्रवणादेकपुषोपभोग एतद्दण्डविधानमनेकपुरुषोपभोगे तु भोगस्य प्राबल्यमिति वाच्यम्। द्वितीयादावप्यागमाभावनिश्चये भोगस्याप्रयोजकत्वात्। इदमेवाभिप्रेत्याह—

नारदः,

आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा।
कारणं भुक्तिरेवैका सन्तता या चिरन्तनी॥ (१)

यदपि वचनम्—

यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत्।
न तच्छक्यमपाहर्त्तुं क्रमात्त्रिपुरुषागतम्॥ इति।

---

(१) मुद्रितनारदस्मृतौ नोपलभ्यते।

तदपि अत्यन्तम्=उपलभ्यमानम् आगमं विना आगमाभावनिश्चयाभाव इति व्याख्येयम् ।

ननु स्मार्त्ते काले सागमत्वं भुक्तिविशेषणमसङ्गतम् । सिद्धे प्रमाणान्तरादागमे तेनैव स्वत्वसिद्धौ भोगस्य विशेष्यांशस्यानुमानार्थापत्त्योरनुपयोगात् । असिद्धे विशेषणासिद्धेरिति चेत्, न । प्रमाणान्तरासिद्धागमसहित एव विशेषणान्तरविशिष्टो भोगः कालान्तरे स्वत्वमवगयति, भोगरहितोऽवगतोऽप्यागमः साक्ष्यादिभिर्न कालान्तरे स्वत्वमवगमयितुमीष्टे मध्ये दानक्रयादिना स्वत्वापगमसम्भवादिति विशेषणविशेष्ययोर्द्वयोरपि नानर्थक्यमसिद्धिर्वा । इदमिदानीं मम स्वमिति साध्ये स्वत्वभागे आगमस्तत्र तस्येदानींपर्यन्तमननुवृत्तौ भोग इति निगर्वः । याज्ञवल्क्यादिभिः सर्वप्रकारकानुपभोगे पूर्णस्वत्वोत्पादकता दानाद्यागमस्य नास्तीत्युक्तम् ।

आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो ।

( या० अ० २ श्लो० २७ )

बलं=पूर्णता ।

नारदः—

विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु ।
विशेषतः स्थावराणां यन्न भुक्तं न तत् स्थिरम् ॥

( व्य० प० १ श्लो० ७७ )

दानविक्रयादेरुपभोगनिरपेक्षस्यैव स्वत्वोत्पादकत्वात् किमिति भोगलवोऽप्यवश्यं तत्रापेक्ष्यत इत्याशङ्कायामुपपत्तिरुक्ता विज्ञानेश्वराचार्यैः । दानादेः परस्वत्वापादने परकर्तृकस्वीकारापेक्षाऽवश्यम्भाविनी । स्वीकारश्च त्रिविधो मानसो वाचिकः कायिकश्च । ममेदमित्यध्यवसायो मानसः । ममेदमित्याद्यभिलापो वाचिकः । उपादानाभिमर्शनादिरूपेणानेकप्रकारकः कायिकः । तत्र मानसं विना स्वत्वासम्भवात् स तावदावश्यक एव । दानविशेषपुरस्कारेण शब्दप्रयोगविशेषनियमोपादानाभिमर्शनादिचेष्टाविशेषनियमाच्च वाचिककायिकावप्यावश्यकावित्यवसीयते । तत्र हिरण्यवस्त्रादौ दातृकर्तृकजलत्यागादनन्तरमेव प्रतिग्रहीतुरुपादानादिसम्भवात् त्रिविधोऽपि व्यापारः सम्पद्यते । क्षेत्रादौ तु फलोपभोगं विना कायिकस्वीकारासम्भवादल्पेनाप्युपगभोगेनावश्यम्भवितव्यमन्यथा दानक्रयादेः सम्पूर्णता न भवत्युत्तरकालीनस्वीकाराभावात् । तेन तत्सहितादागमान्तराद्धिकल आगमो दुर्बलो भवति । एतच्च द्वयोरागमयोः पूर्वापरभावानवगमे । तदवगमे तु स्वल्प-

भोगविकलोऽपि प्राक्तन एवागमो बलवान्। पूर्वेण दानादिना स्वत्वापगमे दानाद्यन्तरासम्भवात्। नचैवं तस्य क्षेत्रादेर्मध्यमत्वापत्तिः। पूर्वस्याप्यागमादुत्तरस्वाम्यानुत्पत्तेश्चेति वाच्यम्। प्रतिश्रुतन्यायेनापेक्षणीयस्वत्वस्य सत्त्वात्। पूर्वस्वाम्यसत्त्वेऽपि राज्ञैव प्रतिग्रहीत्रादेः कायिकस्वीकारस्य निष्प्रतिपक्षस्य सम्पादनीयत्वात्। अथवा साक्षादेवानेन योगीश्वरवचनेन साक्ष्यादीनामुक्तानां मानुषप्रमाणानां बलाबलमुच्यते। पूर्वव्याख्याने स्वार्थिकम्। द्वितीयव्याख्याने चेत्थम्–आद्ये पुरुषे साक्षिलेख्याभ्यां भावित आगमो भोगादधिको बलवान्। तेन भुक्तितः साक्षिलेख्ययोस्तत्र बलवत्त्वमुक्तं भवति। पूर्वक्रमागतस्तु भोगो विनापि भावितादागमाच्चतुर्थे पुरुषेऽधिको मध्यमे तु पुरुषे भोगरहितागमात् स्तोकभोगसहितोऽप्यागमो बलवानिति। स्पष्टञ्चेदम् "आदौ तु कारणं दानम्" इत्युदाहृते नारदवाक्ये।

प्रथमपुरुषेऽपि स्वाम्यनुपभोगेन समक्षनिराक्रोशपरोपभोगेन क्षेत्रादिभूमेर्हिरण्यादेश्च कियताचित्कालेन स्वाम्यहानिः पूर्वस्वामिन इत्याह–

याज्ञवल्क्यः,

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी।
परेण भुज्यमानस्य धनस्य दशवार्षिकी॥ (२। २४)

मनुनारदौ–

(१)यं कश्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी।
भुज्यमानं परैरर्थं(२)न स तं लब्धुमर्हति॥ (ना०व्य०प०१श्लो०७९)
(मनु० ८।१४७)

व्यासः–

उपेक्षिता यथा धेनुर्विना पालेन नश्यति।
पश्यतोऽन्यैस्तथा भुक्ता भूमिः कालेन हीयते॥
वर्षाणि विंशतिर्यस्य भूर्भुक्ता तु परैरिह।
सति राज्ञि समर्थस्य तस्य सेह न सिद्ध्यति॥

नारदः–

भुज्यमानान् परैरर्थान् यः स्वान्मोहादुपेक्षते।
समक्षं जीवतोऽप्यस्य तान्भुक्तिः कुरुते वशम्॥
(व्य०प०१श्लो०७८)

पश्यतो ब्रुवत इत्यादि षष्ठ्यनादरे।

---

(१) यत्किञ्चिदिति पाठान्तरम्। (२) परैस्तूष्णीं न स तदिति पाठोऽपि।

बृहस्पतिः—

ऋक्थिभिर्वा परैर्द्रव्यं समक्षं यस्य दीयते ।
अन्यस्य भुञ्जतः पश्चान्न स तल्लब्धुमर्हति ॥
पश्यन्नन्यस्य ददतः क्षितिं यो न निवारयेत् ।
सतापि लेख्येन भुवं न पुनस्तां समाप्नुयात् ॥

एतेषु वचनेषु विंशतिवर्षावधिकस्वामिसमक्षनिराक्षेपभोगनिबन्धना भूमेर्हानिर्दशवर्षावधिकतादृशपरोपभोगानिबन्धना च हिरण्यादिधनस्य हानिरित्यर्थः प्रतीयते। सा न तावत् स्वत्वहानिः। दर्शनकालीनाप्रतिषेधस्य दानादिवत्स्वत्वनिवर्त्तकत्वस्य लोकाप्रसिद्धत्वात्। उपभोगस्य च तादृशस्य स्वत्वं प्रति प्रमाणत्वेन प्रमाणस्य प्रमेयं प्रति ज्ञापकत्वेन स्वत्वरूपाजनकतया स्वत्वोत्पादकत्वाभावात्। स्वत्वस्य तदुत्पत्तिनिवृत्तिहेतूनां च लौकिकत्वस्य दायभागप्रस्तावे विस्तरेणोपपादयिष्यमाणत्वात् । गौतमादिभिस्तदुभयकथनस्य लोकप्रसिद्ध्यनुवादात् । अनागमभोगस्य नारदवचनेन पूर्वोदाहृतेन "अनागमं तु" इत्यादिना स्वत्वहेतुताया निरस्तत्वाच्च ।

अत्राहापरार्कः—व्यवहारस्थितिमाश्रित्येदमुच्यते न(१) धर्मगतिमिति परस्वापहारप्रत्यवायभीरुणा परेण पूर्वस्वामिने तदर्पणीयम् । सभापतिसभ्यादीनां व्यवहाररीत्या तत आच्छिद्य तद्दानेऽपि न क्षतिः । अत एव-

मनुः,

अजडश्चेदपौगण्डो विषये चास्य भुज्यते ।
भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति ॥ (८।१४८)

व्यवहारेण भोक्तार्हतीति व्यवहारस्थितिमेवोक्तवान् । बृहस्पतिरपि "सतापि लेख्येन" इत्याह। "अनागमम्" इत्यादि नारदवचनं तु बहुतरधनभूमिविषयमेकपुरुषनियमाभावनिश्चयविषयं वा । अत एव योगीश्वरः-"आगमस्तु कृतो येन" इत्युक्तवान् । तस्मात् "निन्हुते लिखितम्" इत्यादिवचनेन यथा यथापेक्षिततर्कसहकृतेनैकदेशसाधनेऽन्यैकदेशदापने निवेदितैकदेशस्य प्रागनिवेदितस्यादापनेऽपि न व्यवहारदर्शिनां दोषस्तथात्रापीति ।

तदयुक्तम् । "छलं निरस्य" इत्यादिना व्यवहारदर्शिनामप्येतादृशविषये दोषावर्जनीयत्वात् "निह्नुत" इत्यादिवदत्र सत्तर्काभा-

---

(१) न भूमिगतिमिति मुद्रितापरार्कपुस्तके पाठः ।

वाच्च। अस्मदुपपादितरीत्या तत्रापि तथानभ्युपगमाच्च । तच्च प्रपञ्चितं विशेषपरिभाषाप्रस्तावे । एवंविधा हि भुक्तिस्तूष्णीम्भूतस्य पश्यतः स्वामित्वे सति न घटते किन्तु भोक्तुरेव स्वामित्वे सति युज्यते इति भवति तत्र भुक्तिः प्रमाणमिति पूर्वं स्वयमेव स्वामिस्वत्वहानिपरस्वत्वोत्पत्तिपरत्वव्याख्यानेनास्य विरोधाच्च। न च तदप्येतदनुग्राहकतर्कप्रदर्शनेन व्यवहारस्थितिपरमेव न वस्तुगतिपरम्। व्यवहारहानिश्च भोक्ता यद्येवमुपन्यस्यति–अजडोऽयमपौगण्डोऽयमेतत्समक्षं मया भुज्यमानं क्षेत्रादि यद्येतदीयमनेन कुतो विंशतिवर्षावधि न प्रतिषिद्धम् अस्मिंश्चार्थे गुणोपेता बहवः साक्षिणः सन्तीति, तथोपन्यस्ते चायं निरुत्तरोऽवश्यम्भवतीति वाच्यम्। अस्य सत्तर्कत्वाभावात्, आगमप्रमाणानुपन्यासेन मूलशैथिल्यात् । उपेक्षाहेत्वभावकृतव्यवहारहानावपि वस्त्वनुसरणस्यावश्यकत्वात्। तथा च नारद उपेक्षालिङ्गाभावकृतामेव व्यवहारहानिमाह न वस्त्वभावकृताम्।

उपेक्षां कुर्वतस्तस्य तूष्णीम्भूतस्य तिष्ठतः।
काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यति ॥ इति।(१)

न च निरुत्तरताप्रयुक्तव्यवहारहानिशङ्कानिरासाय प्रत्यक्षं स्वीये वस्तुनि परेण भुज्यमाने तूष्णीं न स्थेयमित्युपदेशार्थमिदं वचनं हीनादिलक्षणवदिति वाच्यम् । विंशत्यादिग्रहणस्यैवमानर्थक्यप्रसङ्गात्। ततोऽर्वागपि व्यवहारहानिशङ्कायास्तुल्यत्वात्। लेख्यदोषोद्भावनमुत्तरकाले न कार्यं ततोऽर्वाक्तु कार्यमित्येतदर्थं तद्ग्रहणमिति चेत्, न। आध्यादिष्वपि विंशत्याद्युत्तरकाले तदनुद्भावनस्य तुल्यतयैतदपवादत्वेनोत्तरवाक्यासङ्गतेः। तच्च लेख्यप्रस्तावेऽभिहितम्।

अत्र मिताक्षराकाराः–न वस्तुहानिर्न व्यवहारहानिरनेन वचनेन प्रतिपाद्यते । किन्तु परकृतसमक्षभोगेऽप्रतिषेधलक्षणस्वापराधप्रयुक्ता क्षेत्राद्युत्पन्ननष्टफलहानिः। विद्यमानफलेऽपि तदीयस्वत्वानपगमात् परस्वत्वानुत्पादाच्च न्यायतस्तद्वस्तु विद्यमानफलसहितमेव लभते यद्यपि स्वामी, तथापि नष्टे फले धर्मिनाशादेव स्वत्वापगमान्निष्क्रयद्वारेण चौरादिव भोक्तुः सकाशात् तद्ग्रहणं प्राप्तमुपेक्षारूपापराधान्न भवति। परस्वोपभोगलक्षणापराधनिबन्धनो राजदण्डस्त्वनपवादाद्भोक्तुर्भवत्येव। "अनागमं तु" इत्यादिनारदवचनात्। परोक्षभोगे साक्रोशे सोपेक्षे

(१) अयं श्लोकः ना० स्मृ० व्य० प० १।७९ श्लोकादनन्तरं पुस्तकान्तरपाठत्वेन दत्तो वर्तते।

समक्षभोगे च नष्टमपि फलं निष्क्रयरूपेण स्वामी लभत एव। "पश्यतोऽब्रुवत" इति वचनात्। विंशतिवर्षेभ्यो भूमेर्दशवर्षेभ्यश्च प्राग्धनस्य नष्टमपि फलं तन्निष्क्रयरूपेण प्राप्नोति विंशतिदशशब्दोपादानादिति।

अत्रेदं वक्तव्यम्। नष्टफलालाभे प्रतिषेधरूपापराध एव बीजं वचनं वा। नाद्यः। विंशत्यादिवर्षोपभोगवत्ततः प्रागपि समक्षभोगेऽप्रतिषेधापराधस्य तुल्यत्वात् तत्कृतनष्टफलालाभप्रसङ्गे विंशत्यादिग्रहणाविवक्षाप्रसङ्गदोषसाम्यात्। तत्परिहाराय वाचनिकत्वं यदि नष्टफलालाभस्य, तर्हि यथाश्रुतभूम्यादिस्वत्वहानिरेव वचनादस्तु, किं नष्टफलपरतया लाक्षणिकया। अत एव कल्पतरुरत्नाकरस्मृतितत्त्वस्मृतिचन्द्रिकाकारादिभिर्वचनस्वरसायात एष एवार्थोऽभ्युपगतः।

अत्र ब्रूमः। यावता विना वचनमनुपपन्नं तावदेव वचनमस्तके कल्प्यम्। अत एव यथाश्रुतार्थग्रहणे समक्षभोगोपेक्षायां स्वत्वनाशकत्वमुपभोगस्य परकृतस्य तत्कालीनस्य स्वत्वोत्पादकत्वमलौकिकं वचनान्तरविरुद्धं च कल्प्यम्। अस्मन्मते तु नष्टफले धर्मिनाशात् स्वत्वनाशः क्लृप्त एव परस्वत्वोपभोगे चौरादिवन्निष्क्रयरूपेण तत्प्रत्यर्पणमपि लोकप्रसिद्धत्वात् प्रसक्तं विंशतिवर्षाद्युत्तरमपराधविशेषात् स्वामिनस्तदलाभमुखेन प्रतिषिध्यते स एव चास्य दण्डः। इतरत्सर्वं वचनान्तराविरुद्धमेवेति।

भवदेवस्तु-किमयं विंशतिवर्षाद्यवच्छिन्नोऽप्रतिरवो भोगो वचनावगतो भोक्तुः स्वत्वं जनयति प्रमापयति वा?। नाद्यः। याजनादिवदस्य स्वत्वजनकत्वस्य लोकशास्त्रयोरप्रतीतत्वात्। नापि द्वितीयः। लिङ्गतया वा प्रमाकपकत्वमनुपपन्नतया वा?। न द्वयमपि। ईदृशभोगस्य स्वत्वेन सह कुत्रापि व्याप्तेरगृहीतत्वात्। अत एव न तस्य स्वत्वेन विनानुपपत्तिरपि। तस्या अपि व्याप्तिच्छायोपजीवकत्वात्। किञ्चानेन प्राचीनस्वत्वस्य सत एव प्रमापणमानुमानद्वारा तन्निरपेक्षतया वा?। न तावत् प्रथमः। स्मार्त्तकालीनस्यागमाभावनिश्चये तदनुमापकत्वस्य बाधेनासम्भवात्। प्रमाणान्तरेणागमनिश्चयेऽस्य सिद्धसाधनेनानुमापकत्वाक्षेपकत्वयोरसम्भवात् न द्वितीयः। व्यभिचाराच्च। "अन्यायेनापि यद्भुक्तम्" इतिवचनविरोधाच्च स्वस्यान्यायेन भोगासम्भवात्। किञ्चेयमनुपपन्नता स्त्रीराजादिधनगोचरापि सम्भवतीति तत्र न कदाचिदपि भोगः प्रमाणमिति कुतः। तस्मादेवं वाच्यम्। यदयं यथोक्तो भोगः पूर्वस्वामिनो भोक्त्रुद्देशेन त्यागात् तत्स्वत्वध्वंसमर्थापयति अनुमापयति वा। नहि सम्भवति तन्न जहाति, परभोगश्चेद-

शे तस्मिन्वस्तुनि क्षम्यत इति । तथा च तदुद्देशेन त्यक्ते तत्परिग्रहणादेव परस्य तत्र स्वत्वमप्युत्पद्यते । यथा सर्वभूतोद्देशेन त्यक्ते तडागतोयारामपुष्पफलादाविति नियमात्तदपि भोक्तुः स्वीभवति । स्त्रीराजधनादौ तु नैवम् । स्त्रीणामज्ञत्वादप्रागल्भ्याद्राजधनस्य बहुलतया जडादेरप्रागल्भ्याच्छ्रोत्रियस्य बहुकालीनाध्यापनादिव्यग्रतयाऽऽध्युपनिधिसीमादीनामाधित्वादित एव स्वत्वध्वंसजनकपूर्वस्वामित्यागाऽकल्पकत्वात् । अतो भूम्यादौ विंशतिवार्षिको गवादौ दशवार्षिको भोगः पूर्वस्वामिनः स्वत्वध्वंसे भोक्तुः स्वत्वोत्पत्तौ च प्रमाणम् । यच्च कालवैषम्यं तद्भूम्यादेर्महाफलत्वेन तत्र चिरकालेनैव स्वत्वहानिकल्पनस्योचितत्वात्, द्रव्यान्तराणां चातथात्वादल्पकालेनापि स्वत्वहानिकल्पनाया उचितत्वादौचित्यसिद्धम् । यच्च भूम्यादावेव कालवैषम्येण भोक्तुः स्वत्वजननं तदपि वचनादेव युक्तम् । यथा तदेव जन्म पुत्रस्य पितृधने स्वत्वजनकं न तु पुत्र्या इति ।

अत्र प्रदीपकृतः । यत्र हि मत्कृत्येदानीं नात्र फलसम्भावना तदधुना तावत्पर एव भुङ्क्तां पश्चादेतत्सकाशात् सफलोपभोगां भुवं ग्रहीष्यामीत्याद्यभिसन्धाय भूम्यादिस्वामी तत्र परोपभोगं क्षमते । तत्रापि विंशत्याद्यवधिको भोगोऽस्ति स्वामिनस्तदुद्देशेन त्यागश्च नास्तीति व्यभिचारान्नैतद्दशभोगस्य पूर्वस्वामिस्वत्वत्यागे प्रामाण्यम् । न चात्र पूर्वस्वामिना स्वीयत्यागाभावं प्रतिज्ञाय दिव्यं कार्यम्, तत्र च तद्भङ्गे त्यागनिर्णये परिग्रहात्परस्य स्वत्वं निर्बाधमिति वाच्यम् । यतस्तस्यापि पूर्वभोगसिद्धस्य पूर्वस्वशमिपरिग्रहस्य त्यागानवधारणकालीनत्वेन भोक्तुः स्वत्वाजनकतया तद्वैयर्थ्यात् । किञ्च भूस्वामी सचेताः किमिति वृथैव तत्र स्वत्वं जह्यात् । न ह्यत्र दृष्टमुद्देश्यं नाप्यदृष्टम्, धर्मशास्त्रोक्तेतिकर्तव्यताविरहात् । महेच्छत्वसुशीलत्वदयालुत्वादिनापि न त्यागसम्भवः । स त्यजन्नपि तैरेव हेतुभिः क्षमत इत्यस्यापि सम्भवात् । नापि यदुद्देशेन यत्त्यज्यते तत्तस्य स्वमिति नियमः । उद्देश्याज्ञातगृहीते व्यभिचारात् । अपि च । त्यागाद्भोक्तुः स्वत्वं स्वरूपसतो ज्ञानाद्वा । नाद्यः । अदृष्टचरत्वात् । द्वितीये च तज्ज्ञानं भोक्तुः स्वामिवचनात् स्यात् । तथा च तदुद्देशेन मयेदं त्यक्तमिति स्वामिनस्तदभिसन्धिपूर्वकं वचनं ज्ञापकं दानमेवेति तत एव स्वामिनःस्वत्वध्वंसे कृतमुपेक्षानुसरणेन । नच यथोक्तक्षमयैव त्यागानुमानम् । अत्यक्तेऽपि सौशील्यादिना क्षमासम्भवात । नचैवं यथोक्तक्षमया भोक्तुः स्वत्वानुमानमपि न स्यात् । पूर्वस्वामिनः स्वत्वसत्त्वेऽपि सौशील्यादिना तस्य अन्यथा

सिद्धत्वादिति वाच्यम् । तावत्कालं सौशील्यादिना क्षमाया असम्भवसहकृतो भोगो भोक्तुः स्वत्वप्रमापक इति स्मृतिबलादवगतम् । तच्च स्वत्वं पूर्वागमाद्वोत्पद्यतां स्वामिनो भोक्त्रुद्देशेन तद्वस्तुत्यागाद्वेत्यत्र न नो ग्रह इति ।

अत्र वदामः । प्रदीपकृद्भिर्यत्सिद्धान्तितं क्षमायास्तावत्कालीनायाः सौशील्यादिहेतुकत्वासम्भवेन सहकृतो भोगो भोक्तुः स्वत्वं प्रमापयति । तच्च भोक्तुः पूर्वागमाद्वोत्पद्यतां भोक्त्रुद्देश्यकस्वामिकृतत्यागाद्वेत्यत्र न नो ग्रह इति । तत्र प्रष्टव्यम् । भोक्तुः स्वत्वोत्पादकौ पूर्वागमस्वामिकृतभोक्त्रुद्देश्यकत्यागौ प्रमाप्य तावत्कालीनो भोगो भोक्तुः स्वत्वमनुमापयत्यप्रमाप्य वा । नाद्यः । भोक्तुः पूर्वागमसिद्धौ सम्प्रति तत्र स्वामिनः स्वाम्यासम्भवेन तदीयाप्रतिरवविंशत्यादिवर्षकालीनभोगोपन्यासवैयर्थ्यात् । तेनैव तदनुमानान्न तद्वैयर्थ्यमिति चेत्, न । तत्र व्यभिचारेणानुमानासम्भवात् । भोक्त्रुद्देश्यकत्यागप्रमापणेऽपि तद्दूषणानपगमात् । न द्वितीयः । पूर्वस्वत्वध्वंसानवगमे भोगसहस्रेणापि स्मार्त्तकालीनेन भोक्तुः स्वत्वानुमानं न । अनुमानबाधात् । स्मर्त्तव्यास्मरणरूपयोग्यानुपलब्धेर्जागरूकत्वात् । यश्चात्र न नो ग्रह इत्यनास्थावादः सोऽप्ययुक्तः । पूर्वागमभोक्त्रुद्देश्यकस्वत्वत्यागयोः फलभेदेन तत्त्वनिर्णयफलके निर्धारणेऽन्यतरनिर्द्धारणस्यावश्यकत्वात् । पूर्वागमो हि यदि भोक्तुरेव सम्प्रति स्वामिमन्यस्याभोक्तुर्मिथ्याभियोगनिबन्धनो दण्डोऽपि स्यान्न केवलं भूधनहानिः । तस्य स्वत्वस्यागमासिद्धौ तदपलापदण्डमात्रं न मिथ्याभियोगित्वनिमित्तो द्विगुणो दण्डः । स्वत्वहानिरुभयपक्षे तुल्या । विंशत्यादिग्रहणाविवक्षाप्रसक्तिश्चोभयपक्षेऽपि कक्षीकरणीया । भोक्तृपूर्वागमपूर्वस्वामिकर्त्तृकभोक्त्रुद्देश्यकत्यागस्य द्वित्रादिवर्षोपभोगस्थलेऽपि सिद्धौ भोक्तृस्वत्वस्यावारणीयत्वात् । भवदेवमताच्च भवन्मतस्य नातीव भेदः । यथोक्तभोगो भोक्त्रुद्देश्यकपूर्वस्वामिकर्तृकत्यागं कल्पयंस्ततस्तत्स्वत्वध्वंसे सति परिग्रहाद्भोक्तुः स्वत्वोत्पत्तिं निर्बाधामादधातीति तमर्थमिदं वचनं बोधयतीति तन्मतम् । तच्च त्वयाप्यभ्युपगतं तावत्कालीनभोगस्य सौशील्यादिहेतुकक्षमाहेतुकत्वासम्भवेन पूर्वस्वामिन इदानीन्तनभोगकर्त्रुद्देश्यकत्यागं विना तदीयपूर्वागमं विनाऽसम्भवाद्भोक्तुः स्वत्वानिमित्तत्वेन तदुभयान्यतरानास्थावादमभ्युपगच्छता । तथा च यत्तन्मते नैकान्तिकत्वं त्वया दूषणमापादितं तद्भवन्मतेऽपि तुल्यम् । यच्च सौशील्यादिहेतुकत्वं तावत्कालीनक्षमायां न सम्भवतीत्युक्तं तत् त्वन्मतेऽपि समाधान-

क्षममेवेति । वस्तुतस्तु तावत्कालीनक्षमायाः सौशील्यादिहेतुकत्वास-म्भवोऽपि न नियतः । अतिसुशीलतादिस्वभावानामाजन्माप्युपेक्षायाः सम्भवात् । वचनमस्तकेऽतिगौरवं चोभयमते तुल्यम् । विज्ञानेश्वरमते त्वतिलाघवमुपपादितमेव । किञ्च स्मार्त्ते काले स्मर्त्तव्यास्मरणरूपया योग्यानुपलब्ध्या भोक्तुरागमाभावनिश्चये पूर्वस्वामिनश्च त्यागाभाव-निश्चये तदीयपरिग्रहकृतस्वत्वोत्पत्तिपूर्वस्वामिस्वत्वध्वंसावुभावपि क-ल्पयितुमशक्याविति मतद्वयमपीदमत्ययुक्तम् ।

यच्चापरमत्र प्रदीपकृद्भिरुक्तम् । आधेरनुपभोगेन यत्रासिद्धिस्तद्वि-षयं "पश्यतोऽब्रुवत" इत्यादि वचनम् । तेन यत्राधिग्रहीत्राधेयं भूम्यादि न भुज्यते, किन्त्वाधात्रा चिरं भुक्त्वान्यत्राधीयते तत्रोत्तरस्याधिग्रही-तुस्तत्र भूम्यादौ प्रभुत्वं नतु प्रथमस्येति—

आधौ प्रतिग्रहे क्रीते पूर्व्वा तु बलवत्तरा ।

इत्येतदपवादार्थमिदमीदृशे विषये वचनम् । तेनात्र द्वितीयस्यैवाधिः सिध्यति । यद्वा हानिपदमुपेक्षितकोटौ विचारकाणामुपेक्षानिमित्ता न्यूनता प्रतिभातीति संशयतादवस्थ्यपरं न तु हानिर्भङ्ग एव । तथा सति "हीनस्य गृह्यते वाद" इत्यादिवचनासिद्धं दण्डमन्तरेणैव पुनर्व्यव-हारदर्शनं न घटत इति पुनर्विचारेणैवात्रापि निर्णयः। अत एव "उपेक्षि-ता यथा धेनुः""वर्षाणि विंशतिर्यस्या" इत्यादिव्यासवचनयोः पद्यन्त-मनादृत्य ये यदीये भूमिधने परैरुपभुज्येते तदीयत्वेन ते हीयेते न निश्चीयेते इति व्याख्यानं रत्नाकरकृतापि कृतम् । किञ्च यदि विंशतिवार्षि-की भुक्तिः स्वतो भोक्तुः स्वत्वे प्रमाणं तर्हि तत एव साध्यसिद्धौ "श-क्तस्य सन्निधावर्थ" इत्यादिकात्यायनवचनेन यद्भोगस्य लेख्यादिदोषनि-राकरणार्थमुक्तं तदपार्थकं स्यादिति ।

तदपि चिन्त्यम् । तस्यैतादृगाधिविषयत्वं न प्रकरणादर्थतः शब्दतो वावगम्यते । अस्य चाधिविशेषविषयतायामाधिसीमेत्यस्यैतदपवादस्यै-तादृगाधिभिन्नाधिविषयताप्यशाब्दी कल्प्या । "आधौ प्रतिग्रह" इत्या-देरयमपवाद इत्ययुक्तम् । अतिव्यवहितस्य तस्यात्रानुपस्थितेः । विंश-त्यादिवर्षात्प्रागपि चैतादृगाधिभोगे परक्रियायाः प्राबल्यस्याप्रतिहतेर्विं-शत्यादिग्रहणाविवक्षाप्रसक्तिः । वचनं तावत्कालीनैतादृगाधिभोग एव तथेति यदि, तर्हि श्रुतभूमिधनसामान्यातिक्रमेणैतादृगाधिकृततद्विषय-त्वस्याशाब्दस्य कल्पनं जल्पनमेव । उपेक्षानिमित्तकविचारकसंशय-तादवस्थ्यात्पुनर्विचारः कर्त्तव्य इत्येतन्मात्रपरमिदं वचनं न तु सर्वथा भङ्गरूपहानिपरमिति च यदस्य वचनस्य तात्पर्यान्तरवर्णनं, तत्रापि

विंशत्यादितः प्रागपि तादृगुपेक्षाहेतुकसंशयतादवस्थ्यापरिहारात् पुनर्व्यवहारप्रवृत्त्यावश्यकत्वे विंशत्यादिपदार्थाविवक्षाप्रसक्तिर्दुर्वारा । प्रत्युत विंशत्यादिवर्षोत्तरं तादृगुपेक्षायाः पुनर्विचारपुरःसरं निर्णयः कर्त्तव्यः प्राक्तु नेत्यनौचित्यापत्तिश्च । अतः प्राङ्नोपेक्षककोटिन्यूनताप्रतिभासाश्चिरतरोपेक्षायास्तावदेकः स इति न शक्यम् । सत्यां सामग्र्यां प्रागपि तस्य वारयितुमशक्यत्वादसत्यां तूत्तरमपि तदसम्भवात् कालविशेषनियमानुपपत्तेः । हानिपदस्यानिश्चयपरता च बहुषु वचनेष्वयुक्तास्मिन् पक्षे प्रसज्यते । यच्चोक्तं तावत्कालीनभोगस्य भोक्तृस्वत्वोत्पत्तिहेतुत्वस्य यथाश्रुतस्याश्रयणे "शक्तस्य सन्निधावर्थ" इत्यादिवचनोक्तलेख्यादिप्रमाणान्तरस्य स्वत्वसाधकस्य दोषानिराकरणमपार्थकं तावद्भोगादेव स्वत्वसिद्धिरिति तादृग्वचनतात्पर्यबीजम् । तदमूलकम् । विज्ञानयोगिव्याख्याने तदनभ्युपगमात् ।

वाचस्पतिस्तु हानिबोधकस्मृतीनां प्रमाणपरिपालनकर्त्तव्यताविधिशेषत्वम् । यस्मादुपेक्षायां हानिशङ्का भवति तस्मात्स्वप्रमाणं सर्वथा परिपालनीयं न तु तत्रोदासितव्यमित्यत्र तात्पर्य्यम् । अत एव कल्पतरौ हानिवचनानि लिखित्वा प्रमाणपरिपालनमुपसंहृतमित्याह ।

तदपि यद्वा तद्वा । विंशत्यादिग्रहणाविवक्षाप्रसक्तितादवस्थ्यात् । ततः प्रागपि प्रमाणपरिपालनस्यावश्यकत्वात् । हानिशङ्काप्रसक्तितौल्यात् । प्रदेशान्तरस्थविधिशेषत्वानुपपत्तेरत्र च तद्विध्यश्रवणात् । अन्यत्र स्पष्टं तद्विधिसत्त्वेन तदुन्नयनस्याप्यनुपयोगात् । हानिपदेनातत्फलकप्रमाणापरिपालनलक्षणया तत्प्रतियोगिभूतप्रमाणपरिपालनकर्त्तव्यतापरत्वेऽत्यन्तक्लिष्टत्वापत्तेश्च । तस्मात् समस्तदोषशून्या विज्ञानयोगिव्याख्यैवास्य वचसो ज्यायसी ।

ननु—

अध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी ।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत् ॥

इति बृहस्पतिवचने त्रिंशद्वर्षभुक्तेर्हान्यापादकत्वोक्त्या विंशतिवर्षभुक्तेस्तन्न्यूनवर्षभुक्तेरिव हान्यनापादकत्वमर्थसिद्धमिति योगीश्वरव्यासादिवचनैरस्य विरोधः ? मैवम् । योगीश्वरादिवचनेषु "अब्रुवत" इत्येतावन्मात्राभिधानाद्यत्र विरुद्धं वाङ्मात्रमपि भूमिस्वामिनो नास्ति तत्र विंशतिवर्षभोग एव हानिकारणम् । बृहस्पतिवचने तु अध्यासनात् भूमिपरिग्रहादारभ्य यस्य भुक्तिरविघातिनीत्यविघातिनीपदप्रयोगाद्विघातस्य च कलहताडनादिरूपत्वेन लोके प्रसिद्धेर्वाङ्मात्रविप्रतिपत्तौ सत्यामपि यत्र भोक्त्रा सह पूर्व·

स्वामिना तद्भोगप्रतिरोधकं कलहताडनादि नाचरितं तत्र त्रिंशद्वर्षभोगस्तादृशो हान्यापादक इतिवचनस्वरसेनैव विरोधपरिहारात् ।

मम तु प्रतिभाति । विंशतिवार्षिकीत्यादिहानिविशेषणाद्भूम्याद्युत्पन्ननष्टफलस्य विंशतिवार्षिकादेर्हानिस्तावत्कालीनं तत्फलमुपेक्षालक्षणादपराधान्न प्राप्नोति । विंशतिदशवर्षेभ्यः प्रागुक्तभोगकालगणनया तदुत्पन्नं नष्टमपि फलं निष्क्रयरूपेण लभत एव । विंशत्यादिशब्दोपादानात् । अन्यथा यावत्कालीनपरकृतभोगोपेक्षा तावत्कालीननष्टफलहानिमेव सामान्येन वदेत् । एतावता विंशत्यादिग्रहणस्यार्थवत्त्वे विंशत्याद्यधिकवर्षीयफलहानिर्दण्डापूपिकया सिध्यति भुक्तिविशेषणतायामिव विंशत्यादिसङ्ख्यायाः । न चैवं वचनान्तरसंवादायत्तभुक्तिविशेषणत्वव्याख्यातोऽस्य व्याख्यानस्य न फलतो विशेष इति वाच्यम् । यतो विंशत्यादिग्रहणस्य भुक्तिविशेषणत्वे कियत्कालीननष्टफलहानिरिति साकाङ्क्षमेवेति । अत एवापराधाभावादाध्यादौ न तद्धानिरपीत्याह—

योगीश्वरः,

आधिसीमोपनिक्षेपजडबालधनैर्विना ।
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥ ( २।२५ )

भोग्याधेर्भोगार्थमेवाधीकरणादुपेक्षायामपि न स्वामिनोऽपराधः । गोप्याधौ स्वाम्यनुमतिमन्तरेण भोक्तुरपराधातिशयमापादयितुमेवोपेक्षोपपत्तिः । जडबालयोस्त्वज्ञत्वादेवोपेक्षा । उपनिध्युपनिक्षेपयोरपि भुक्तेः प्रतिषिद्धत्वात्तदतिक्रमे चोपनिक्षेप्तुरुपनिधातुश्च सोदयतल्लाभादुपेक्षा । राज्ञोऽनेकराजकार्यव्यग्रत्वात्, स्त्रीणामप्रागल्भ्यानभिज्ञत्वाभ्यां श्रोत्रियस्याध्ययनाध्यापनतदर्थविचारश्रौतस्मार्त्ततत्तत्कर्मानुष्ठानव्यस्ततयेति सर्वत्र स यथायथमपराधविशेषसमाधानसहकृतादस्माद्वचनादत्र कदाचिन्नष्टोपचयहानिरपि भवतीत्यर्थः । अत एवाध्यादिभोगे दण्डमाधिकमाह—

स एव,

आध्यादीनां विहर्त्तारं धनिने दापयेद्धनम् ।
दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥ ( २।२६ )

एतत्तत्प्रस्तावे विवेचयिष्यामः । क्वचिदन्यत्रापि नष्टफलहान्यपवादो मनुनोक्तः—

सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥ ( ८।१४६ )

दम्यो=दमनार्थं यः प्रयुज्यते ।

मनुनारदौ—

आधिः सीमा बालधनं निक्षेपोपनिधी स्त्रियः ।
राजस्वं श्रोत्रियस्वं च नोपभोगेन नश्यति ॥ ( मनु०८।१४९ )
(नार० ऋणा०प्र०८१)

नारदः—

अन्वाहितं हृतं न्यस्तं बलावष्टब्धयाचिते ।
अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं विना ॥ (ऋणा०प्र०९२)

अन्वाहितम्=एकत्राहितमन्यत्र पुनराहितम् । बलावष्टब्धं=राजादिबलावष्टम्भेन स्थापितम् । इतरत्प्रसिद्धम् ।

बृहस्पतिः—

भुक्तिस्त्रैपुरुषी सिध्येदपरेषा न संशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥
अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् ।
सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते ॥
विवाह्यश्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च ।
सुदीर्घेणापि कालेन तेषां सिध्येन्न तद्धनम् ॥
······वित्तापनयनेषु च ।
बालश्रोत्रियवित्ते च प्राप्ते च पितृतः क्रमात् ॥
नोपभोगे बलं कार्य्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥

भोगं न कल्पयेत्=प्रमात्वेन नाद्रियेतेत्यर्थः ।

गौतमः—

अजडापौगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तुर्न श्रोत्रियप्रव्रजितराजपुरुषैः । पशुपुरुषस्त्रीणामनतिभोगः । अतिभोगे तद्धानिरेवेत्यर्थः।

कात्यायनः—

सनाभिभिर्बान्धवैश्च भुक्तं यत् स्वजनैस्तथा ।
भोगात्तत्र न सिद्धिः स्याद्भोगमन्येषु कल्पयेत् ॥

अन्येषु=असंबद्धेषु । सर्वत्रोपभोगे सकुल्यत्वाद्यनुरोधेन शीलादेरुपेक्षाहेतोः सम्भवान्न भोगस्यान्यथोपपन्नस्य स्वत्वहेतुकल्पनद्वारा स्वत्वसाधकत्वं नाप्युपचयहानिहेतुत्वमिति तात्पर्य्यम् । क्वचिदेकदेशोपभोगेन समस्तसिद्धिमाह—

बृहस्पतिः,

यद्येकशासने ग्रामे क्षेत्रारामाश्च लेखिताः ।

एकदेशोपभोगेऽपि सर्वे भुक्ता भवन्ति ते ॥

"आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो" इत्यस्यायमपवादः । एकशासनपत्रारूढेषु किञ्चिदुपभोगेऽपि शासनारूढभोगस्यानपेतत्वान्न प्रत्येकभोगापेक्षेत्याशयः । विच्छिन्नभोगनिर्णयोपायमाह—

बृहस्पतिः,

छिन्नभोगे गृहे क्षेत्रे सन्दिग्धं यत्र जायते ।
लेख्येन भोगविद्भिर्वा साक्षिभिः शुद्धिमाहरेत् ॥
नामाघाटागमं सङ्ख्यां कालं दिग्भागमेव च ।
भोगच्छेदनिमित्तं च ये विदुस्तत्र साक्षिणः ॥
तदुत्पन्नाश्च सामन्ता येऽन्यदेशे व्यवस्थिताः ।
मौलास्ते तु समुद्दिष्टाः प्रष्टव्याः कार्यनिर्णये ॥
अदुष्टास्ते तु यद्ब्रूयुः सन्दिग्धे समदृष्टयः ।
तत्प्रमाणं प्रकर्त्तव्यमेवं धर्मो न हीयते ॥
स्थावरस्यैतदाख्यातं लाभभोगप्रसाधनम् ।
प्रमाणहीनवादे तु निर्द्देश्या दैविकी क्रिया ॥ इति ।

सीमाविवादनिर्णय एतत्प्रपञ्चं विवेक्ष्यामः ।

एवं भुक्तिर्निरूपिता ।

युक्तिस्वरूपमाह कात्यायनः,

लिङ्गोद्देशस्तु युक्तिः स्यात् । इति ।

लिङ्गस्य=अग्निदत्वाद्यव्यभिचारिण उल्काहस्तत्वादेः उद्देशो=निश्चयः तेन चाग्निदत्वाद्यनुमानम् । यद्यपि भुक्तिरपि निरन्तरत्वानिराक्रोशत्वादिप्रागुक्तविशेषणोपहितानुमानविधयाऽर्थापत्तिविधया वा साधिकेति तत्रापि लक्षणमिदमतिप्रसक्तमेव, वक्ष्यमाणचोदनाऽप्रतिकालेऽपि । तथापि स्मर्तृप्रसिद्धिबलाद्गोवृषवत्ताद्भिन्नलिङ्गोद्देश एव युक्तिरूपत्वेन लक्ष्यः । अत एव तत्प्रवृत्तिस्थलं तादृशमेवाह—

नारदः,

असाक्षिप्रत्ययास्त्वन्ये षड्विवादाः प्रकीर्त्तिताः ।
लक्षणान्येव साक्षित्वे तेषामाहुर्मनीषिणः ॥
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः ।
केशाकेशिगृहीतश्च युगपत्पारदारिकः ॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः ।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्त्तितः ॥
प्रत्यक्षचिन्हैर्विज्ञेयो दण्डपारुष्यकृन्नरः ।

असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥ (ऋणा० प्र०श्लो० १७२।१७३।१७४।१७५ )

साक्षित्वे=साक्षिकार्य्ये । समीपग इत्यन्यत्रापि सम्बध्यते । तच्चाविनाभावापादकविशेषणान्तरोपलक्षणम् । प्रत्यक्षचिन्हैः शोणिताक्तखड्गादिभिः । पारुष्ये=वाक्पारुष्ये । परीक्षणं=साक्षिगवेषणम् । यद्यपि गालिदानादिश्रवणं प्रत्यक्षचिह्नं सम्भवति । तथापि प्रथमप्रवृत्त्यादिनिश्चयाय साक्ष्याद्यपेक्षेति ध्येयम् ।

शङ्खलिखितौ—

केशाकेशिग्रहणात् पारदारिकः, उल्काहस्तोऽग्निदः, शस्त्रपाणिर्घातको, लोप्त्रहस्तश्चौरः ।

केशाकेशिग्रहणादिति स्त्रीसङ्ग्रहणे वक्ष्यमाणानामन्येषामपि चिह्नानामुपलक्षणम् । लोप्त्रं=चौर्यप्राप्तं वस्तु ।

बृहस्पतिः—

असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः ।
शपथैर्वानुयुञ्जीत उपधां वा प्रयोजयेत् ॥

उपधा=युक्तिरिति कल्पतरौ । शपथाभ्यनुज्ञानमन्यथासिद्धयुक्त्यभावे ज्ञेयम् । अत एव नारदः—

युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् । ( प्र०श्लो०२३९ )

अर्दयेत्=पीडयेत् । पराजयेदिति यावत् ।

इति युक्तिः ।

चोदनाप्रतिकालस्वरूपं तु चोदनाया धनदानादिविषयकप्रेरणाया अप्रतिकालोऽप्रतिषेधः । सोऽपि यद्ययमस्य ऋणादिसम्बन्धी न स्याद्याच्यमान एनं निराकुर्य्यादनिराकरणादस्त्यस्यानेन सम्बन्ध इत्यर्थापत्तिविधयाऽनुमानविधया वा ऋणादिसम्बन्धं साधयन् भवति प्रमाणम् इदमेवाभिप्रेत्याह—

कात्यायनः,

अर्थिनाभ्यर्थितो यस्तु विघातं न प्रयोजयेत् ।
त्रिचतुःपञ्चकृत्वो वा परतस्तद्दणी भवेत् ॥

नारदोऽपि—

अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं स दाप्यते ॥

( ऋणा० प्र० श्लो०२३७ )

परतः=तदूर्ध्वम् । चोदनाप्रतिकालस्य शीलादिप्रयुक्तस्यापि स-

म्भवाद्युक्त्यादिसहकार्यपेक्षामाह—

नारदः,

चोदनाप्रतिघाते च युक्तिलेशैस्तमन्वियात् ।
देशकालार्थसम्बन्धपरिमाणक्रियादिभिः ॥
( ऋणा० प्र० श्लो० २३८ )

अत एव तस्य विषयमप्याह स एव—

प्रमादाद्धनिनो यत्र न स्याल्लेख्यं न साक्षिणः ।
अर्थं चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः ॥
चोदनाप्राप्तकालश्च युक्तिलेशस्तथैव च ।
तृतीयः शपथः प्रोक्तस्तैरेनं साधयेत् क्रमात् ॥
( ऋणा० प्र० २४६ )

कात्यायनः—

दानं प्रज्ञापनाभेदः सम्प्रलोभक्रिया च या ।
वित्तापनयनं चैव हेतवो हि विभावकाः ॥
एषामन्यतमो यत्र वादिना भावितो भवेत् ।
मूलक्रिया तु तत्र स्याद्भावितो वादिनिह्नवे ॥

दानम्=उत्कोचदानम् । प्रज्ञापनाभेदः=प्रज्ञापकस्वहस्तचिह्नाद्यन्यथाकरणम् । सम्प्रलोभक्रिया=साक्षिसभ्यादिभ्यो लोभप्रदर्शनम् । वित्तापनयनं=वित्तगोपनम् । एषामन्यतमो हेतुर्यत्र वादिना=प्रतिवादिना ऽधमर्णादेरुपरि भावितः=प्रमाणेन साधितो भवेत्तदा मूलक्रिया=ऋणापहरणादिरूपा तदुपरि सिद्धैव । एषां तदविनाभादिति भावः ।

एवं साक्षिलेख्यभुक्तिरूपं त्रिविधं मानुषं प्रमाणं निरूपितम् ।

## अथ दिव्यान्युच्यन्ते ।

तत्र दिव्यं नाम मानुषप्रमाणाभाव एव यन्निर्णायकं तदुच्यते । यत्तु स्मृतितत्त्वे एवकारस्थले अपिशब्दं दत्वा मानुषप्रमाणसत्त्वेऽपि यत्र दिव्याङ्गीकारस्तत्रापि तद्भवतीति प्रयोजनमुक्तम् । तदयुक्तम् ।

एषामन्यतमाभावे दिव्यान्यतममुच्यते (२।२२)

इति वदता याज्ञवल्क्येन

प्रमाणहीने वादे तु निर्दोषा दैविकी क्रिया ।

इति वदता बृहस्पतिना च

युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।

इति नारदेनापि मानुषप्रमाणासत्त्वे एव दिव्यस्य विधानात् ।

तत्र बृहस्पतिः दिव्यभेदानाह—

घटोऽग्निरुदकं चैव विषं कोशस्तु पञ्चमः ।
षष्ठं तु तण्डुलः प्रोक्तः सप्तमं तप्तमाषकम् ॥
अष्टमं फालमित्युक्तं नवमं धर्मजं तथा ।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवा ॥ इति ।

नारदः—( व्य०प०१ )

युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।
अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः ॥ ( २३९ )
घटोऽग्निरुदकं चैव विषं कोशस्तु पञ्चमः ।
उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः ॥ (२५२ )
सन्दिग्धेऽर्थेऽभियुक्तानां परीक्षार्थं महात्मनाम् ।
प्रोक्तानि नारदेनेह सत्यानृतविशुद्धये ॥ इति । ( २५३ )

अर्दयेत्=पीडयेत् । अर्थापेक्षत्वं सिसाधयिषितार्थस्याल्पत्वमहत्त्वानुरूपमित्यर्थः । नन्वन्येषामपि शपथानां मानुषप्रमाणाभाव एव निर्णायकत्वेन दिव्यत्वात् कथं दिव्यानि नवेत्यभिधानम् ।

तथा च शङ्खः—

तत्र दिव्यं नाम तुलाधारणं विषाशनमप्सु प्रवेशो लोहधारणमिष्टापूर्त्तदानमन्यांश्च शपथान् कारयेत् । इति ।

तांश्च शपथानाह बृहस्पतिः—

सत्यं वाहनशस्त्राणि गोबीजकनकानि च ।
देवब्राह्मणपादांश्च पुत्रदारशिरांसि च ॥
एते च शपथाः प्रोक्ताः स्वल्पार्थे सुकराः सदा ॥ इति ।

नारदोऽपि—

सत्यं वाहनशस्त्राणि गोबीजकनकानि च ।
देवतापितृपादांश्च दत्तानि सुकृतानि च ॥
( व्य० प० १ श्लो० २४८ )
स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा ।
अभियोगेषु सर्वेषु कोशपानमथापि वा ॥ (१)
इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणे । इति ।

सत्यम् । अत्र समनन्तरभाविनिर्णयनिमित्तस्य दिव्यत्वेन विवक्षितत्वात् । तादृशत्वं च घटादीनामेव नतु शपथानाम् । तेषां कालान्तरभाविनिर्णयनिमित्तत्वात् । नन्वेवं कोशस्य कथं तेषु ग्रहणमिति चेत्,

---

(१) इदं नार. स्मृतौ न दृश्यते ।

सत्यम्। तस्य तेषु पाठो महाभियोगविषयत्वसाम्यात् सावष्टम्भाभियोगविषयत्वसाम्याच्च। वस्तुतस्तु शपथानामपि नारदादिवचनानुसाराद्गोबलीवर्दन्यायेन दिव्यत्वाभ्युपगमेन नवशब्दस्योपलक्षणत्वात्।

मनुः--

असाक्षिकेषु त्वर्थेषु मिथो विवदमानयोः।
अविन्दंस्तत्त्वतः सत्यं शपथेनापि लम्भयेत्॥
अग्निं वाहारयेदेनमप्सु चैनं निमज्जयेत्।
पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत् पृथक्॥ (८।१०९।११४)
यस्माद्देवैः प्रयुक्तानि पुष्करार्थं महात्मभिः।
परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः॥ (इदं न दृश्यते)

असाक्षिकेष्विति मानुषप्रमाणरहितेष्वित्यर्थः। उद्दिष्टानां दिव्यानां मध्ये तुलादीनि महाभियोगे प्रयोक्तव्यानि।

तथा च याज्ञवल्क्यः--

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि॥
रुच्या वान्यतरः कुर्यादितरो वर्त्तयेच्छिरः।
(अ० २ श्लो० ९५।९६)

अत्राग्निशब्देन तप्तायःपिण्डादयो गृह्यन्ते। शीर्षकं=लक्षणया जयपराजयनिमित्तो दण्डः। तत्र तिष्ठतीति शीर्षकस्थः तत्प्रयुक्तदण्डभागित्यर्थः। रुच्या=इच्छया। अन्यतरः=अभियुक्ताभियोक्त्रोरन्यतरः। इतरः शिरो वर्त्तयेत्=दण्डं स्वीकुर्यादित्यर्थः। ननु "कोशमल्पेऽपि दापयेत्" इति स्वल्पाभियोगेऽपि कोशस्य विधानात् कथं "महाभियोगेष्वेतानि" इति चेत्, न। तस्य तुलादिषु पाठोऽवष्टम्भाभियोगेऽपि प्राप्त्यर्थो ननु महाभियोगेष्वेवेति नियमार्थः। अन्यथा कोशस्य शङ्काभियोग एव प्राप्तिः स्यात्।

अवष्टम्भाभियुक्तानां धटादीनि विनिर्दिशेत्।
तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत्॥(१)

इति पितामहस्मरणात्। अवष्टम्भः=शीर्षकस्थः। अवष्टम्भोऽत्र निश्चय इति स्मृतितत्त्वे। यदा शीर्षकस्थोऽभियोक्ता न स्यात्तदा एतानि दिव्यानि न निर्दिशेदिति।

तथा च नारदः--

शिरोवर्त्ती यदा न स्यात्तदा दिव्यं न दीयते। इति।
(व्य० प० १ श्लो० २५७)

---

(१) शङ्कास्वेव न संशयः इति पाठो मिताक्षरायाम्।

दिव्यदाने नियममाह—

पितामहः,

अभियोक्ता शिरःस्थाने दिव्येषु परिकीर्त्यते ।
अभियुक्ताय दातव्यं दिव्यं श्रुतिनिदर्शनात् ॥ इति ।

कात्यायनोऽपि—

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् । इति ।

"अभियुक्ताय दातव्यम्" इत्यस्यापवादं "रुच्या वान्यतर" इत्यनेनाह याज्ञवल्क्यः ।

नारदोऽपि—

अभियोक्ता शिरःस्थाने सर्वत्रैकः प्रकल्पितः ।
इच्छया त्वितरः कुर्य्यादितरो वर्त्तयेच्छिरः ॥ इति ।
(ना० स्मृ० न दृश्यते)

क्वचिद्विषयविशेषे शिरो विनापि दिव्यं देयमित्याह—

याज्ञवल्क्यः,

विनापि शीर्षकात्कुर्य्यान्नृपद्रोहेऽथ पातके । इति । (अ०२श्लो०९६)

शीर्षकाद्विनापि=पराजयप्रयुक्तदण्डभागिनोऽभियोक्तुरभावेऽपि। पातके=ब्रह्महत्यादौ ।

कात्यायनोऽपि—

पार्थिवैः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥ इति ।

कालिकापुराणेऽपि—

परदाराभिशापे च चौर्य्यागम्यागमेषु च ।
महापातकशस्ते च स्याद्दिव्यं नृप ! साहसे ॥
विप्रतिपत्तौ विवादेऽवर्णस्य ख्यापने कृते ।
तत्रैव दापयेद्दिव्यं शिरःपूर्वं महीपतिः ॥
परदाराभिमर्शे च बहवो यत्र वादिनः ।
शिरोहीनं भवेद्दिव्यमात्मनः शुद्धिकारणात् ॥ इति ।

विप्रतिपत्तौ=परदारगमनाद्यभियोगरूपायाम् । विवादे=ऋणादानादिविषये । अवर्णोऽपवादः । परदाराभिमर्शे चेति चौर्य्यादीनामप्युपलक्षणम् ।

विष्णुः—

राजद्रोहे साहसे च विना शीर्षं प्रवर्त्तनात् । इति ।

विषयविशेषेषु दिव्यविशेषानाह सङ्ग्रहकारः—

घटादीनि विषान्तानि गुरुष्वर्थेषु दापयेत् ।

पितामहोऽपि—

अवष्टम्भाभियुक्तानां धटादीनि विनिर्दिशेत्।
तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत्॥ इति।

कात्यायनः—

शङ्काविश्वाससन्धाने विभागे रिक्थिनां सदा।
क्रियासमूहकर्तृत्वे कोषमेव प्रदापयेत्॥ इति।

क्रियासमूहकर्तृत्वे=सम्भूयैकक्रियाकारित्वे।

पितामहोऽपि—

विश्रम्भे सर्वशङ्कासु सान्धिकार्य्ये तथैव च।
एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये॥
शिरःस्थायिविहीनानि दिव्यादीनि विवर्जयेत्।
धटादीनि विषान्तानि कोश एकः शिरः स्मृत्॥ इति।

तण्डुलानां विषयं स एवाह—

चौर्य्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः॥ इति।

अन्यत्र=स्त्रीसङ्ग्रहादौ न तु दत्तापह्नवे। "तदर्द्धार्द्धस्य तण्डुला" इति वक्ष्यमाणकात्यायनवचनेन तण्डुलदिव्यविधानात्। एतदल्पचौर्य्यशङ्कायां वेदितव्यम्।

चौर्य्येऽभिशङ्कायुक्तानां तप्तमाषो विधीयते।

इति महाचौर्य्यशङ्कायां तप्तमाषस्य तेनैव विधानात्। द्रव्यसङ्ख्यया दिव्यविशेषानाह विष्णुः—

अथ शपथक्रिया राजद्रोहादिषु यथाकामं निक्षेपर्णस्तेयेष्वर्थप्रमाणात्। इति।

शपथो=दिव्यम्। राजद्रोहादिषु यथाकामं राजेच्छानुरोधाद्दिव्यं, निक्षेपादिषु धनतारतम्यादित्यर्थः। वस्त्रादिविषयविवादे तु तन्मूल्यद्रव्यपरिमाणं ग्राह्यम्।

बृहस्पतिरपि—

विषं सहस्रेऽपहृते पादोने च हुताशनः।
त्रिपादोने च सलिलमर्द्धे देयो धटः सदा॥
चतुःशताभियोगे तु दातव्यस्तप्तमाषकः।
त्रिशते तण्डुला देयाः कोशश्चैव तदर्द्धके॥
शते हृतेऽपह्नुते च दातव्यं धर्मशोधनम्।
गोचौरस्य प्रदातव्यं सद्यः कालावलेहनम्॥(१)

(१) गोचौरस्य प्रदातव्यः सभ्यैः फालः प्रयत्नतः। इति पाठोऽपरार्के।

एषा सङ्ख्या निकृष्टानां मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः ॥ इति ।

धर्मशोधनम्=धर्मजदिव्येन शोधनम् । निकृष्टानां जातिगुणधर्मैः । मध्यमत्वमुत्तमत्वं च तैरेव । यत्तु—

नासहस्राद्धरेत् फालं न विषं न तुलां तथा । (२।९९)
इति याज्ञवल्क्यवचनं तन्मध्यमोत्तमपुरुषविषयम् ।

यत्तु—

सहस्रे तु घटं दद्यात्सहस्रार्द्धे तथायसम् ।
अर्द्धस्यार्द्धे तु सलिलं तस्यार्द्धे तु विषं स्मृतम् ॥

इति पितामहवचनम् । तद्यत्राल्पद्रव्यापहारे पातित्यं भवति तद्विषयम् । एतत् स्तेयसाहसविषयम् । दत्तापह्नवे तु—

कात्यायनः,

दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् ।
स्तेयसाहयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥
सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् ।
हेमप्रमाणयुक्तं तु तदा दिव्यं प्रयोजयेत् ॥
ज्ञात्वा सङ्ख्यां सुवर्णानां शतनाशे विषं स्मृतम् ।
अशीतेस्तु विनाशे वै दद्याच्चैव हुताशनम् ॥
षष्ट्या नाशे जलं देयं चत्वारिंशति वै घटम् ।
विंशद्दशविनाशे तु कोशपानं विधीयते ॥
पञ्चाधिकस्य वा नाशे तदर्द्धार्द्धस्य तण्डुलाः ।
ततोऽर्धार्धविनाशे हि स्पृशेत्पुत्रादिमस्तकम् ॥
ततोऽर्द्धार्द्धविनाशे तु लौकिक्यश्च क्रियाः स्मृताः ।
एवं विचारयन् राजा धर्मार्थाभ्यां न हीयते ॥ इति ।

अत्र सुवर्णशब्दः षोडशमाषात्मकः । नाशोऽपह्नवः । विंशद्दशविनाशे=विंशतेर्दशानां वेत्यर्थः । विंशद्दशविनाशे त्रिंशद्विनाशन इति स्मृतिचन्द्रिकायाम् । पञ्चाधिकस्य=पञ्चभ्योऽधिकस्य षट्प्रभृतेरिति यावत् । तदर्द्धार्द्धस्य सुवर्णप्रभृतेः । ततोऽर्द्धार्द्धस्य=अष्टमाषोनसुवर्णार्द्धप्रभृतेः । ततोऽर्धार्धविनाशे=सार्द्धसप्तमाषोनसुवर्णार्द्धप्रभृतेर्विनाशे । लौकिक्यश्च क्रियाः=अपह्नवे तव दशगुणो द्रव्यनाशो भविष्यतीत्यादिकाः । चशब्दः स्मार्त्तशपथसङ्ग्रहार्थः । अत एवाह—

विष्णुः—

सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत् । तत्र च कृष्णलोने शूद्रं

दूर्वाकरं शापयेत् । द्विकृष्णलोने तिलकरम् । त्रिकृष्णलोने रजतकरम् । चतुःकृष्णलोने सुवर्णकरम् । पञ्चकृष्णलोने सीरोद्धृतमहीकरम् । तत्र सुवर्णार्द्धोने कोशो देयः शूद्रस्य । ततः परं यथार्हं घटाग्न्युदकविषाणामन्यतमम् । द्विगुणार्थे यथाभिहिता समयक्रिया वैश्यस्य । त्रिगुणेऽर्थे राजन्यस्य । कोशवर्जं चतुर्गुणेऽर्थे ब्राह्मणस्य । न ब्राह्मणस्य कोशं दद्यादन्यत्रागामिकालसमयनिबन्धनाक्रियातः । कोशस्थाने ब्राह्मणं सीरोद्धृतमहीकरमेव शापयेत् । प्राग्दृष्टदोषं स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत् । सत्सु प्रथितं सच्चरितं न महत्यर्थेऽपि ॥ इति ।

सीरोद्धृतमहीकरं=लाङ्गलोद्धृतलोष्टहस्तमित्यर्थः । ऊनग्रहणमधिके शापनिवृत्त्यर्थम् । शापे तु विशेषमाह—

मनुः,

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ इति । (८।११३)

यद्यहमर्थापह्नवी स्यां तदा सत्याभिधानधर्मो मम निष्फलः स्यादिति शपथकारिणं ब्राह्मणं वाचयेत् । एवं क्षत्रियादीनां वाहनादीनि निष्फलानि स्युरित्यादीत्यर्थः । पादस्पर्शादिना विशेषः स्मृत्यन्तरे दर्शितः—

निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् ।
ऊनत्रिके तु पुष्पं स्यात् कोशपानमतः परम् ॥ इति

अत्र निष्कशब्देन कर्षचतुर्थांशो मुद्रामुद्रितः प्रतिपाद्यते । क्वचिद्देशे तत्रापि निष्कव्यवहारात् । न तु मनूक्तो निष्कः । तस्य राजतपलात्मकत्वेन मूलकाञ्चनकर्षादधिकत्वात् । तत्र सत्यवचनविधौ "चतुर्गुणेऽर्थे ब्राह्मणस्य" इति विरोधः स्यात् । दिव्ये दण्डे च मनूक्तं परिमाणं ग्राह्यमिति बृहस्पतिराह—

सङ्ख्या रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा ॥ इति ।

सङ्ख्या=परिमाणम् । रश्मिरजोमूला=त्रसरेण्वादिका । विनये=दण्डे । तच्च परिमाणं प्रतिज्ञापूर्वकं मनुराह—(अ० ८)

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥ (१३१)
जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥ (१३२)
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥ (१३३)

सर्षपाः षड् यवो मध्यस्त्रियवं त्वेककृष्णलम् ।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोड़श ॥ (१३४)
पलं सुवर्णाश्चत्वारः पलानि धरणं दश ।
द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः ॥ (१३५)
ते षोड़श स्याद्धरणं पुराणश्चैव राजतः ।
धरणानि दश ज्ञेयः शतमानस्तु राजतः ॥ (१३६)
कार्षापणस्तु विज्ञेयः कार्षिकस्ताम्रिकः पणः ।
चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥ इति । (१३७)

अत्र ताम्ररूप्यसुवर्णानामिति ताम्ररूप्ययोरल्पत्वात् प्राक्प्रयोगो न तु क्रमप्रदर्शनार्थः । पलानि धरणं दशेत्यन्तं सुवर्णपरिमाणाभिधानम् । चतुःसौवर्णिको निष्क इत्यन्तं रूप्यपरिमाणाभिधानम् । अवशिष्टेन ताम्रपरिमाणाभिधानम् । जालान्तरप्रविष्टे सूर्य्यरश्मौ यत्सूक्ष्मं रजो दृश्यते तत् त्रसरेणुसंज्ञकम् । अष्टौ त्रसरेणवो लिक्षा तिस्रो लिक्षा राजसर्षपः । त्रयो राजसर्षपाः गौरसर्षपः । षड् गौरसर्षपा मध्यमो यवो न सूक्ष्मो न स्थूल इति मध्यमयवस्य परिमाणमुक्तं मिताक्षरायाम् । मध्यशब्दः पादपूरणार्थः । तथा च सम्पूर्णयवपरिमाणमुक्तमिति मनुभाष्ये । त्रयो यवाः कृष्णलम् । माषः पञ्च कृष्णलानि । सुवर्णः षोड़श माषाः । पलं सुवर्णाश्चत्वारः । धरणं दश पलानि । रूप्यमाषो द्वे कृष्णले । रजतस्य धरणं षोड़श रूप्यमाषाः । अस्य च पुराण इति संज्ञान्तरम् । राजतः शतमानः राजतदशधरणानि राजतपलसंज्ञाप्यस्य भवति ।

शतमानं तु दशभिर्धरणैः पलमेव तु । (अ०१श्लो०३६५)

इति याज्ञवल्क्यस्मरणात् । पूर्वोक्तसुवर्णचतुष्टयपरिमित एको राजतनिष्कः । कार्षिकः=कर्षसंमितः ताम्रिकस्ताम्रविकारः कार्षापणो विज्ञेयः । पण इति च संज्ञा अस्यैव विज्ञेयेत्यर्थः । चशब्दोऽध्याहार्य्यः ।

अत एव बृहस्पतिः—

निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः ।
ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः ॥
स एव चान्द्रिका प्रोक्ता ताश्चतस्रस्तु धानकाः ।
ता द्वादश सुवर्णस्तु दीनाराख्यः स एव तु ॥ इति ।

कर्षः=पलचतुर्थांशः । "ते षोड्शाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम्" इत्यमरसिंहेनाभिधानात् । ते=माषाः षोड़शाक्षः कर्ष इति च संज्ञेत्यर्थः । तेनाक्षकर्षशब्दयोः सुवर्णपरिमाणवचनत्वमित्यवगम्यते । याज्ञवल्क्यः पले विकल्पमाह—

पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम् । इति । (१।३६४)
तस्य चतुर्थोऽशो विंशतिर्माषाः तत्परिमितः कार्षापणः ।

अत एव कात्यायनः—

माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु ।
काकिणी तु चतुर्भागा माषकस्य पणस्य च ॥ इति ।

राजतोऽपि कार्षापणोऽस्तीत्याह नारदः—

कार्षापणो दाक्षिणस्यां दिशि रौप्यः प्रवर्त्तते । इति ।
( परिशि० प्र० श्लो० ५० )

व्यासस्तु सौवर्णनिष्कस्य प्रमाणमाह—

पलान्यष्टौ सुवर्णाः स्युस्ते सुवर्णाश्चतुर्दश ।
एवं निष्कप्रमाणं तु व्यासेन परिकीर्त्तितम् ॥ इति ।

वर्णभेदेन दिव्यव्यवस्थामाह नारदः—

ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥
साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः ।
विषं विना ब्राह्मणस्य सर्वेषां वा तुला स्मृता ॥ (१)इति ।

अनित्या चेयं व्यवस्था ।

राजन्येऽग्निं धटं विप्रे वैश्ये तोयं नियोजयेत् ।
सर्वेषु सर्वदिव्यं वा विषवर्ज्जं द्विजोत्तमे ॥

इति कात्यायनस्मरणात् । व्यवस्थापक्षे वयोविशेषादिना व्यवस्थापनीयम् ।

तदाह नारदः—

क्लीबातुरान् सत्त्वहीनान् परितश्चार्दितान्नरान् ।
बालवृद्धातुरांस्त्रींश्च परीक्षेत धटे सदा ॥
स्त्रीणां तु न विषं प्रोक्तं न वापि सलिलं स्मृतम् ।
धटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत् ॥
नार्त्तानां तोयशुद्धिः स्यात् न विषं पित्तरोगिणाम् ।
श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते ॥
( व्या० प० १ श्लो० २५५ )

---

( १ ) एते श्लोकाः ना. स्मृ. व्य. प. १ मे २५४ श्लोकानन्तरं तट्टिप्पण्यां दृश्यन्ते ।

न मज्जनीयाः स्त्रीबाला धर्मशास्त्रविचक्षणैः ।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥ (३१३)
निरुत्साहान् व्याधिक्लिष्टानार्त्तांस्तोये निमज्जयेत् ।
सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः ॥ (३१४)
साहसेनागतानेतान्नैव तोये निमज्जयेत् ।
न चापि हारयेदग्निं न विषेण विशोधयेत् ॥ इति (३१५)

हारयेत्=कारयेत् ।

याज्ञवल्क्यः—

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य च ॥ इति । (२९८)

स्त्री=स्त्रीमात्रं जातिवयोऽवस्थाविशेषानादरेण । बाल=आषोडशाद्वर्षाज्जातिविशेषानादरेण । वृद्धो=ऽशीतिकावरः । अन्धो=नेत्रविकलः । पङ्गुः=पादविकलः । ब्राह्मणो=जातिमात्रम् । रोगी=व्याधितः । एतेषां शोधनार्थं तुलैवेति नियमः । अनेन वचनेन सर्वदिव्यसाधारणेषु मार्गशीर्षचैत्रवैशाखेषु स्त्र्यादीनां सर्वदिव्यप्रसक्तौ तुलैवेति नियम्यते न तु सर्वकालं स्त्रीणां तुलानियमः कोशादिविधानात् । अग्निः फालस्तप्तमाषश्च क्षत्रियस्य । जलमेव वैश्यस्य । वा एवार्थे । शूद्रस्य विषस्य सप्तैव यवा उक्तप्रमाणलक्षणा भवन्तीत्यर्थः । ब्राह्मणस्य तुलाविधानात् शूद्रस्य विषविधानात् अग्निर्जलं वेति क्षत्रियवैश्यविषयमित्यवगम्यते ।

अत एव पितामहः—

ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं प्रोक्तं विषं शूद्रस्य दापयेत् ॥ इति ।

कात्यायनोऽपि—

न लोहशिल्पिनामग्निः सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदां चैव विषं दद्यात्तु न कचित् ॥
तण्डुलैर्न वियुञ्जीत व्रतिनं मुखरोगिणम् ॥ इति ।

व्रतिनं=पयोव्रतादिनियमस्थम् ।

हारीतोऽपि—

कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् ।
पित्तं श्लेष्मवतां नित्यं विषं च परिवर्जयेत् ॥ इति ।

विष्णुरपि—

न श्लैष्मिकाणां व्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनामुदकं हेमन्तशिशिरयोश्च । इति ।

पितामहोऽपि—

कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम्।
पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत्॥
मद्यपस्त्रीव्यसनिनां कितवानां तथैव च।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः॥ इति।

यत्तु पितामहेनोक्तम्—

सव्रतानां भृशार्त्तानां व्याधितानां तपस्विनाम्।
स्त्रीणां च न भवेद्दिव्यं यदि धर्मस्त्ववेक्ष्यते॥ इति,
तुलेतरविषयं तदिति केचित्। तदयुक्तम्।
घटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत्।

इति पूर्वोदाहृतनारदवचनेन स्त्रीणां कोशादिविधानात्। तदन्यस्त्रुविषयमित्युक्तं विद्यारण्यश्रीपादैः। विज्ञानेश्वराचार्यास्तु—'पुंस्त्रियोर्विवादे—"रुच्या वान्यतरः कुर्यात्" इत्यनेन पक्षे स्त्रीणामपि दिव्यप्रसक्तौ पुरुषस्यैव दिव्यं न स्त्रीणामित्येतत्परमिदम्। अन्यथा सर्वथा तासां दिव्यनिषेधे "घटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत्" इत्यनेन विरोधः स्यात् इति प्राहुः।

कात्यायनः—

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान्।
प्रेष्यान्वार्द्धुषिकांश्चैव ग्राहयेच्छूद्रवद्द्विजान्॥

कालिकापुराणेऽपि—

वर्णान्त्यस्य सदा देयं माषकं तप्तहेमजम्॥ इति।
वर्णानामन्त्यः प्रत्यन्त्यः तस्येत्यर्थः।

नारदोऽपि— (व्य० प० १ श्लो० ३३२)

महापराधे निर्द्धर्मे कृतघ्ने क्लीबकुत्सिते।
(१)नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत्॥ इति।

कात्यायनोऽपि—

मातापितृद्विजगुरुवृद्धस्त्रीबालघातिनाम्।
महापातकयुक्तानां नास्तिकानां विशेषतः॥
लिङ्गिनां प्रमदानां च मन्त्रयोगक्रियाविदाम्।
वर्णसङ्करजातीनां पापाभ्यासप्रवर्त्तिनाम्।

(१) नास्तिकव्रात्यदासेषु इति मुद्रितना०स्मृ० पाठः।

एतेष्वेवाभियोगेषु निन्द्येष्वेव प्रयत्नतः।
दिव्यं प्रकल्पयन्नैव राजा धर्मपरायणः॥
एतैरेव नियुक्तानां साधूनां दिव्यमर्हति।
(१)न सन्ति साधवो यत्र तत्र शोध्याः स्वकैर्नरैः॥ इति।

साधूनां दिव्यमर्हति राजा कल्पयितुमिति शेषः। प्रतिनिधिद्वारा एतैर्दिव्यं कारणीयमिति द्रढयितुमाह स एव—

महापातकयुक्तेषु नास्तिकेषु विशेषतः।
न देयं तेषु दिव्यं तु पापाभ्यासरतेषु च॥ इति।

भृगुः—

येषु पापेषु दिव्यानि प्रतिषिद्धानि यत्नतः।
तारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्नरः॥ इति।

तारयेत्=शोधयेत्। अभिशस्तं प्रतिनिधिद्वारा शोधनमकारयित्वा न त्यजेदित्यर्थः। यत्तु तेनैवोक्तम्—

अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम्।
प्रातिलोम्यप्रसूतानां निश्चयो नतु राजनि॥
तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेत्॥ इति,

तत् तैर्नियुक्तानां साधूनामभावे विज्ञेयम्। तत्प्रसिद्धानि=सर्पघटादीनि इति स्मृतितत्त्वे। साधूनामप्यसामर्थ्ये प्रतिनिधिमभ्युपजानाति—
स एव,

कालदेशाविरोधे तु यथायुक्तं प्रकल्पयेत्।
अन्येन हारयेद्दिव्यं विधिरेष विपर्यये॥ इति।

विपर्यये=सामर्थ्याभावे। सर्ववर्णविषये विशेषमाह—
हारीतः,

राजन्येऽग्निं घटं विप्रे वैश्ये तोयं नियोजयेत्।
न विषं ब्राह्मणे दद्याद्विषं वर्णान्तरे स्मृतम्॥
कोशतण्डुलधर्म्मास्तु धर्मसम्भवमेव च।
पुत्रदारादिशपथान् सर्ववर्णे प्रयोजयेत्॥ इति।

## अथ दिव्यकालः।

तत्र पितामहः—

यो यस्य विहितः कालो विधिर्यस्य च यो यथा।
तं प्रवक्ष्यामि तत्त्वेन वादिनश्च बलाबलम्॥

---

(१) नेच्छन्तीति पाठान्तरम्।

चैत्रो मार्गशिराश्चैव वैशाखश्च तथैव च ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥
घटः सर्वर्त्तुकः प्रोक्तो वाते वाति विवर्जयेत् ।
अग्निः शिशिरहेमन्तवर्षासु परिकीर्त्तितः ॥
शरद्ग्रीष्मे च सलिलं हेमन्ते शिशिरे विषम् ॥ इति ।

विष्णुरपि--

स्त्रीब्राह्मणविकलासमर्थरोगिणां न तुला देया न वाति वायौ न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः शरद्ग्रीष्मयोश्च न कुष्ठिपैत्तिकब्राह्मणानां विषं देयं प्रावृषि च । न श्लैष्मिकाणां व्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनामुदकं हेमन्तशिरयोश्च । इति ।

हेमन्तनिषेधोऽत्र पौषमासविषय एव नतु मार्गशीर्षविषयोऽपि । मार्गशीर्षस्य "चैत्रो मार्गशिरा" इति पूर्वोदाहृत पितामहवचनेन सकलदिव्यसाधारणत्वाभिधानात् ।

नारदोऽपि— ( व्य० प० १ दिव्य० प्र० )

विचार्य्य धर्मनिपुणैर्धर्मशास्त्रविशारदैः ।
धर्म्मं सर्वर्त्तुकं प्रोक्तं पण्डितैर्घटधारणम् ॥ (२६०)
वर्षासु समये वह्निर्हेमन्तशिशिरे तथा ।
ग्रीष्मे सलिलमित्युक्तं विषं काले तु शीतले । ( २४५ )
न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषं दद्यात् प्रवाते न तुलां तथा ॥ ( २५९. )
नापराह्णे न मध्याह्ने न सन्ध्यायां कदाचन । इति । ( ३२० )
मध्याह्ने दिव्यनिषेधो जलव्यतिरिक्तविषयः । अत एव—

पितामहः,

पूर्वाह्णेऽग्निपरीक्षा स्यात् पूर्वाह्णे च घटो भवेत् ।
मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता ॥
दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते ।
रात्रौ तु पश्चिमे भागे विषं देयं सुशीतले ॥ इति ।

अत्र विशेषतो वर्षासु निषेधात् सिंहस्थावेव । परीक्षामात्रनिषेधाच्च दिव्यान्तरं सिंहेतरवर्षास्वपि कुर्वन्ति । अतो—

याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत् ।

इत्यस्य न विषयम् । तथा च ज्यौतिषे—

सिंहस्थे मकरस्थे च जीवे चास्तमिते भृगौ ।
मलमासे न कर्त्तव्या परीक्षा जयकाङ्क्षिणा ॥

तथा—

रविशुद्धौ गुरौ चैव न शुक्रेऽस्तङ्गते पुनः।
सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः॥
नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणम्।
न परीक्षाऽधिवासश्च शनिभौमदिने भवेत्॥ इति।

रविशुद्धौ गुरौ चैवेत्यत्र शस्यत इति शेषः।

तथा च दीपिकायाम्—

नो शुक्रास्तेऽष्टमेऽर्के गुरुसहितरवौ जन्ममासेऽष्टमन्दौ
विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ॥
नाडीनक्षत्रहीने गुरुरविरजनीनाथताराविशुद्धौ
प्रातः कार्य्या परीक्षा क्षितनुचरग्रहांशोदये शस्तलग्ने॥ इति।

यद्यपि दिव्ये वारविशेषविधानाभावस्तथापि शिष्टाचारादादित्यवारे दिव्यानि दातव्यानीति मिताक्षरायाम्।

## अथ दिव्यदेशाः।

तत्र पितामहः—

प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटः सदा।
इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे॥ इति।

धटग्रहणं दिव्यान्तरस्याप्युपलक्षणम्। इन्द्रस्थानग्रहणं च प्रसिद्धदेवतायतनान्तरस्याप्युपलक्षणम्। अत एव दिव्यमात्रमुपक्रम्य—

नारदः, ( व्य० प० १ दि० प्र० २६५ )

सभाराजकुलद्वारे देवायतनचत्वरे इति।

विषयविशेषे इन्द्रस्थानादीनां व्यवस्थामाह—

कात्यायनः,

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम्।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत्॥
प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे।
अतोऽन्येषु तु कार्य्येषु सभामध्ये विदुर्बुधाः॥ इति।

इन्द्रस्थाने=इन्द्रध्वजपूजास्थाने। दिव्यदेशाद्यनादरे दिव्यं विसंवदतीत्याह—

नारदः,

अदेशकालदत्तानि बहिर्वासकृतानि च। (१)
व्यभिचारे सदर्थेषु कुर्वन्तीह न संशयः॥

( ना० स्मृ० न लब्धम् )

---

(१) बहिर्वादीति बालम्भट्यां पाठः। वादिनमभियोक्ता बहिर्वादीति तदर्थश्च तत्रैव कृतः।

वासो=जननिवासस्तस्माद्बहिष्कृतानि। निर्जनप्रदेशकृतानीति यावत्।
अत एव पितामहः—

प्रत्यक्षं दापयेद्दिव्यं राजा वाधिकृतोऽपि वा ।
ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च ॥ इति ।

ब्राह्मणानां श्रुतवताम् प्रकृतयोऽमात्यास्तेषां चेत्यन्वयः ।

## अथ दिव्यसाधारणविधिः ।

तत्र बृहस्पतिः—

स्नेहात्क्रोधाल्लोभतो वा भेदमायान्ति साक्षिणः ।
विधिदत्तस्य दिव्यस्य न भेदो जायते क्वचित् ॥ इति ।

विधिश्च पितामहेन दर्शितः—

दिव्येषु सर्वकार्य्याणि प्राड्विवाकः समाचरेत् ।
अध्वरेषु यथाध्वर्युः सोपवासो नृपाज्ञया ॥
तत आवाहयेद्देवान् विधिनानेन धर्मवित् ।
वादित्रतूर्यघोषैश्च गन्धमाल्यानुलेपनैः ॥
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ।
एह्येहि भगवन्धर्म ! ह्यस्मिन्दिव्ये समाविश ॥
आवाह्य तु घटे धर्मं पश्चादङ्गानि विन्यसेत् ।

सर्वकार्य्याणि=साधारणानि असाधारणानि च । ततः=तदुपयोगिसामग्रीसम्पादनानन्तरमित्यर्थः । घटग्रहणमत्र दिव्यमात्रोपलक्षणम् । अस्मिन्दिव्य इति मन्त्रलिङ्गादेतेषां धर्माणां दिव्यमात्रे साम्यम् ।

इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत् ।
आवाहनं च देवानां तथैव परिकल्पयेत् ॥

इत्युपसंहरता तेनैवोक्तत्वाच्च । अङ्गानि कानीत्याकाङ्क्षायां—
स एवाह,

इन्द्रं पूर्वे तु विन्यस्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥
कुबेरस्तु सुवर्णाभो ह्यग्निश्चैव सुवर्णभः ।
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥
ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान् ।
इन्द्रस्य दक्षिणे पार्श्वे वसूनास्थापयेद्बुधः ॥

धरो ध्रुवस्तथा सोम आपश्चैवानलोऽनिलः ।
प्रत्यूषश्च प्रभातश्च च वसवोऽष्टौ प्रकीर्त्तिताः ॥
देवेशेशानयोर्मध्ये आदित्यानां तथाऽयनम् ।
धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ॥
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥
इत्येते द्वादशादित्या नामभिः परिकीर्त्तिताः ।
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ॥
वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥
भुवनाधीश्वरश्चैव कपाली च विशाम्पतिः ।
स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादश स्मृताः ॥
प्रेतेशरक्षोमध्ये च मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही चैव माहेन्द्री चामुण्डा गणसंयुता ।
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ॥
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ।
पवनः स्पर्शनो वायुरनिलो मरुतस्तथा ॥
प्राणाः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्त्तिताः ।
धटस्योत्तरभागे तु दुर्गामावाहयेद्बुधः ॥
एतासां देवतानां तु स्वनाम्ना पूजनं विदुः ।
भूषावसानं धर्माय दत्त्वा चार्घ्यादिकं क्रमात् ॥
अर्घ्यादि पश्चादङ्गानां भूषान्तमुपकल्पयेत् ।
गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत् ॥
चतुर्दिक्षु तथा होमः कर्त्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥
सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् ॥

अङ्गानाम्=इन्द्रादिदुर्गान्तानाम् । अर्घ्याद्युपकल्पनं च न काण्डानुसमयेन । तथात्वे प्रयोगवचनावगताङ्गसहभावबाधापत्तेः । किन्तु पदार्थानुसमयेन । तथा च दुर्गायै भूषणं दत्त्वा धर्मस्येन्द्रादिदुर्गान्तानां च गन्धादिपरिचर्यं प्रकल्पयेदिति । गायत्रीं प्रणवादिकामुच्चार्य पुनः प्रणवं स्वाहाकारान्तमुच्चार्य समिदाज्यचरुभिः प्रत्येकमष्टोत्तरशतं जुहुयात् ।

अनुक्तसङ्ख्या यत्र स्याच्छतमष्टोत्तरं स्मृतम् ।

इति स्मरणादित्यर्थः। होमानन्तरकर्त्तव्यं स एवाह—

यमर्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके।
मन्त्रेणानेन सहितं तत्कार्य्यं च शिरोगतम्॥

मन्त्रश्च—

आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥ इति।

एतत्सर्वं पूर्वाह्णे कर्त्तव्यम्। तस्य प्रधानकालत्वात्।

तथा च नारदः— (व्य०प०१दि०प्र०श्लो०२६८)

अहोरात्रोषिते स्नाते आर्द्रवाससि मानवे।
पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्त्तितम्॥ इति।

एतत्प्राड्विवाकेनोपवासादिनियमपूर्वकं कर्त्तव्यम्।

तथा च नारदः—

प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः।
श्रुतवृत्तोपसम्पन्नः शान्तचित्तो विमत्सरः॥
सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः।
उपोषितश्चार्द्रवासाः कृतदन्तानुधावनः॥
सर्वेषां देवतानां च पूजां कृत्वा यथाविधि। इति।

कर्त्तुरुपवासादिकमाह पितामहः—

त्रिरात्रोपोषिता ये स्युरेकरात्रोषिताय वा।
नित्यं देयानि दिव्यानि शुचये चार्द्रवाससे॥ इति।

याज्ञवल्क्योऽपि—

सचैलं स्नातमाहूय सूर्य्योदय उपोषितम्।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ॥ इति (अ०२श्लो०९७)

अत्र सूर्य्योदयपदेन पूर्वाह्ण एव ग्राह्यः।

पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्त्तितम्॥ (व्य०प०१श्लो०२६८)

इति नारदवचनानुरोधात्। त्रिरात्रैकरात्रपक्षयोः शक्ताशक्तविषयत्वेन व्यवस्था ज्ञेया। दिव्यप्रयोगानन्तरं दक्षिणादानमुक्तेन विधिना दिव्यप्रयोगं कारयितू राज्ञः फलं चाह—

पितामहः,

सद्भिः परिवृतो राजा शुद्धिमेतां प्रपूजयेत्।
ऋत्विक्पुरोहिताचार्य्यान् दक्षिणाभिस्तु तोषयेत्॥
एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान्।
महतीं कीर्त्तिमाप्नोति ब्रह्मभूयाय कल्पते॥ इति।

अयं च विधिः सर्वदिव्यसाधारण इत्याह—

स एव,

इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत्।
आवाहनं च देवानां तथैव परिकीर्त्तितम् ॥ इति।

सर्वदेवावाहनादि संशोध्याशिरसि पत्रारोपणान्तं सर्वदिव्यसाधारणमित्यर्थः।

इति दिव्यमातृका।

## अथ घटाविधिः।

तत्र पितामहः—

विशालामुच्छ्रितां शुभ्रां घटशालां तु कारयेत्।
यत्रस्थो नोपहन्येत श्वभिश्चाण्डलवायसैः ॥
कपाटबीजसंयुक्तां परिचारकरक्षिताम्।
पानीयादिसमायुक्तामशून्यां कारयेन्नृपः ॥ इति।

बीजानि=यवव्रीह्यादीनि। घटार्थानि काष्ठानि—

नारद आह,

खादिरं कारयेत्तत्र निर्व्रणं सुष्कवर्जितम्।
शांशपं तदभावे वा शालं वा कोटरैर्विना ॥
अर्जुनं तिन्दुकीसारं तिनिशं रक्तचन्दनम्।
अर्जुनास्तिलकोऽशोकतिनिसो रक्तचन्दनः ॥

इति माधवीये पाठः।

एवं विधानि काष्ठानि घटार्थं परिकल्पयेत् ॥ इति।

( दिव्यप्र० श्लो० २६४,२६५ )

शांशपं=शिंशपावृक्षसम्बन्धि। "देविकाशिंशपा" ( अ०७पा०३सू०१) इति पाणिनिस्मरणादिकारस्याकारः। एवंविधानीति अन्यस्याप्योदुम्बरादेर्यज्ञियस्य काष्ठस्य ससारस्य ग्रहणम्।

अत एव पितामहः—

छित्वा तु यज्ञियं काष्ठं यूपवन्मन्त्रपूर्वकम्।
प्रणम्य लोकपालेभ्यस्तुला कार्य्या मनीषिभिः ॥
मन्त्रः सौम्यो वानस्पत्यश्छेदने जप्य एव च। इति।

यूपवन्मन्त्रपूर्वकमित्यनेन ॐ ओषधे त्रायस्वैनमित्यादिच्छेदनमन्त्रप्रयोगादिकमुक्तम्। वानस्पत्यः वनस्पते शतवल्शो विरोहेति मन्त्रः। छेदने कृते इति शेषः। वानस्पत्यस्य च्छेदनानन्तरं प्रयोगे यूपवदित्यतिदेशात्सिद्धेऽपि

पुनर्विधानम् औपदेशिकेन सोमदैवत्येनातिदेशिकस्य तस्य बाधनिवृत्त्यर्थम्। अत्र जप्य एव चेति चशब्दस्य वानस्पत्य इत्यनेनान्वयात् तस्य च समुच्चयद्योतकत्वात्समुच्चय इति केचित्। सौम्यवानस्पत्ययोरेकार्थत्वात्। "तुल्यार्थास्तु विकल्पेरन्" इत्यनेन न्यायेन व्रीहियववद्विकल्प इत्यपरे।

पितामहः—

प्राङ्मुखो निश्चलः कार्य्यः शुचौ देशे धटः सदा।
इन्द्रस्थाने सभायां वा धर्मस्थाने चतुष्पथे॥ इति।

धटनिर्माणप्रकारं तत्प्रमाणं चाह—

पितामहः,

चतुर्हस्ता तुला कार्य्या पादौ कार्य्यौ तथाविधौ।
अन्तरं तु तयोर्हस्तौ भवेदध्यर्द्धमेव च॥ इति।

पादौ=तुलाधारकाक्षनामककाष्ठधारणाख्यौ स्तम्भौ। तथाविधौ=चतुर्हस्तौ। अन्तरं=मध्यम्। अध्यर्द्धं=सार्धहस्तद्वयम्। अक्षकाष्ठस्य प्रमाणं पादस्तम्भमध्यप्रमाणाभिधानेनैव सूचितमिति न पृथगुपन्यस्तम्। अन्तरालप्रमाणपर्य्यालोचनया ततः किञ्चिदधिकमक्षकाष्ठं कर्त्तव्यम्। पादस्तम्भयोर्मस्तकप्रदेशाद् यथा बहिर्न निःसरति तथा अक्षकाष्ठं कार्यमिति स्मृतिचन्द्रिकायाम्। अत्र निखातभागपरित्यागेन पादस्तम्भयोश्चतुर्हस्तत्वाभिधानं ज्ञेयम्।

अत एव पितामहः—

हस्तद्वयं निखेयं तु पादयोरुभयोरपि। इति।

व्यासोऽपि—

हस्तद्वयं निखेयं तु प्रोक्तं मुण्डकयोर्द्वयोः।
षड्हस्तं तु तयोः प्रोक्तं प्रमाणं परिमाणतः॥ इति।

मुण्डकौ=पादस्तम्भौ। हस्तप्रमाणं दर्शितं

कालिकापुराणे,

यवानां तण्डुलैरेकमङ्गुलं चाष्टभिर्भवेत्।
अदीर्घयोजितैर्हस्तश्चतुर्विंशतिरङ्गुलैः॥ इति।

स्मृत्यन्तरेऽपि—

तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः।
प्रमाणमङ्गुलोक्तं हि वितस्तिर्द्वादशाङ्गुलः॥
हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम्।
तत्सहस्रद्वयं कोशो योजनं तच्चतुष्टयम्॥ इति।

हस्तो वितस्तिद्वितयं चतुर्विंशत्यङ्गुलो हस्त इत्यर्थः।

शारदातिलकेऽपि--

चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः।
यवानामष्टभिः क्लृप्तं मानाङ्गुलमितीरितम्॥ इति।

यवानां=यवतण्डुलानामित्यर्थः। "यवानां तण्डुलैः" इति स्मरणात्। तुलायां विशेषान्तरमाह--

पितामहः,

चतुरस्रा तुला कार्य्या दृढा ऋज्वी तथैव च।
कटकानि च देयानि त्रिषु स्थानेषु यत्नतः॥ इति।

कटकानि=लोहमयानि बलयानि। त्रिषु स्थानेषु अन्त्ययोर्मध्ये। कटकग्रहणं लोहकीलादीनामुपयुक्तानामुपलक्षणम्।

नारदोऽपि—

ऋज्वी घटतुला कार्य्या खादिरी तैन्दुकी तथा।
चतुरस्रा त्रिभिः स्थानैर्घटकर्कटकादिभिः॥ इति।

( व्य० प०१श्लो०२६३ )

घटो=मध्यम्। कर्कटकौ=अन्त्यौ। पादस्तम्भादीनां स्थूलता तु विशेषानभिधानात् यावति स्थौल्ये दार्ढ्यं भवति तावत्येव कार्य्या। शिष्टाचाराद्विशेषो ज्ञेयः। पादस्तम्भावुदग्दक्षिणसंस्थानौ कृत्वा तुला प्राङ्मुखा कार्या।

पश्चिमे तोलयेत्कर्तॄनन्यस्मिन् मृत्तिकां शुभाम्।

इति पितामहस्मरणात्। पूर्वपश्चिमसंस्थानौ कृत्वोदङ्मुखा वा कार्य्या।

धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम्॥

( व्य० प०१ श्लो० २७२ )

इति नारदस्मरणात्। घटाङ्गत्वेन तोरणादिकं कार्य्यमित्याह—

पितामहः—

तोरणे तु तथा कार्य्ये पार्श्वयोरुभयोरपि।
घटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः॥
अवलम्बौ तु कर्त्तव्यौ तोरणाभ्यामधोमुखौ।
मृण्मयौ सूत्रसम्बद्धौ घटमस्तकचुम्बिनौ॥ इति।

घटारोहणमाह नारदः—( व्य०प०१श्लो०२७१।२७२ )

शिक्यद्वयं समासज्य घटकर्कटयोर्दृढम्।
एकशिक्ये तु पुरुषमन्यत्र तुलयेच्छिलाम्॥

धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम्।
(१)पिटकं पूरयेत्तस्मिन्निष्टकापांशुलोष्टकैः॥ इति।

इष्टकाभिर्ग्रावभिः पांशुभिर्लोष्टैर्वेत्यर्थः। माषराशिभिरपि पिटकं पूरयेत्। "माषराशिमथापि वा" इतिस्मृत्यन्तरवचनात्।

पितामहोऽपि—

शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि।(२)
प्रागग्रान् कल्पयेद्दर्भांस्तत्र विप्रः समाहितः॥
पश्चिमे तोलयेत्कर्तॄनन्यस्मिन्मृत्तिकां शुभाम्।
इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम्॥ इति।

अत्र इष्टकापाषाणयोर्वर्ज्यत्वोक्तिः समुच्चयनिराकरणार्था न तु विकल्पनिराकरणार्था। पूर्वोदाहृते नारदवचने तयोरपि विधानात्। एतेन मृत्तिकापाषाणादीनां सम्भूयतोलनकर्त्तृत्वमिति मतमपास्तम्। मृत्तिकाशिलेष्टकादीनामेकार्थत्वात् "तुल्यार्थास्तु विकल्पेरन्" इति न्यायेन विकल्प इति मिताक्षरायाम्।

विष्णुरपि—

अत्रैकशिक्ये पुरुषमारोपयेत् द्वितीये प्रतिमानं शिलादीति।
समतानिरीक्षणार्थं राज्ञा तद्विदो नियोक्तव्याः।

तथा च पितामहः—

परीक्षका नियोक्तव्यास्तुलामानविशारदाः।
वणिजो हेमकाराश्च कांस्यकारास्तथैव च॥ इति।

नियुक्ताश्च निरीक्षेरन्नित्याह नारदः—( व्य०प०१श्लो०२७४ )

सुवर्णकारा वणिजः कुशलाः कांस्यकारकाः।
तां तुलामन्ववेक्षेरन् तुलाधारणकोविदाः॥ इति।

निरीक्षकान् प्रत्याह पितामहः—

कार्य्यः परीक्षकैर्नित्यमवलम्बसमो धटः।
उदकं च प्रदातव्यं धटस्योपरि पण्डितैः॥
यस्मिन्न प्लवते तोयं स विज्ञेयः समो धटः॥ इति।

अवलम्बसमः=तोरणयोर्लम्बमानौ यौ मृन्मयाववलम्बौ तयोः समः।

नारदोऽपि—(व्य०प०१श्लो०२७३)

प्रथमारोहणे ग्राह्यं प्रमाणं निपुणैः सह।(३)
तुलाशिरोभ्यां तुल्यं तु तोरणं न्यस्तलक्षणम्॥ इति।

---

(१) पिटकं=शिक्यम्। (२) शिक्ययोरुभयोरपीत्यपि पाठः।
(३) तद्गुणैः सहेत्यपि पाठः।

तोलनानन्तरं कर्त्तव्यं पितामह आह—

तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य्य तु।
घटं तु कारयेन्नित्यं पताकाध्वजशोभितम्॥
तत आवाहयेद्देवान्विधिनानेन मन्त्रवित्।
वादित्रतूर्यनिर्घोषैर्गन्धमाल्यानुलेपनैः॥
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत्॥ इति।

विवादानुरूपं प्रश्नं पृच्छतीति प्राट् तद्विवेचयतीति विवाकः प्राट् चासौ विवाकश्च प्राड्विवाकः।

प्राड्विवाकसमाख्याव्युत्पत्तिमाह—

कात्यायनः,

व्यवहाराश्रितं प्रश्नं पृच्छति प्राडिति श्रुतिः।
विवेचयति यत्तस्मिन् प्राड्विवाकस्ततः स्मृतः॥ इति।

ततोऽभियुक्तं तोलयित्वावतार्य धर्मावाहनादारभ्याभियुक्तशिरसि पत्रबन्धनान्तं साधारणविधिं कुर्य्यात्। घटपूजायां गन्धादिविशेषं-

नारद आह—

रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः।
अर्च्चयेत्तु घटं पूर्वं ततः शिष्टांस्तु पूजयेत्॥ इति।

(ना० स्मृ० न लब्धम्)

शिष्टानवशिष्टानिन्द्रादीन्। पत्रबन्धनानन्तरं घटमामन्त्रयेत प्राड्विवाक इत्याह—

पितामहः,

घटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित्॥ इति।

विधिना=मन्त्रेण। शास्त्रवित्=प्राड्विवाकः। मन्त्रश्च तेनैव दर्शितः—

त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम्।
धकाराद्धर्ममूर्त्तिस्त्वं टकारात् कुटिलं नरम्॥
धृतो धारयसे यस्माद् घटस्तेनाभिधीयसे।
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च॥
त्वमेव देव! जानीषे न विदुर्यानि मानवाः।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति॥ इति।

शोध्यस्याभिमन्त्रणं चाह याज्ञवल्क्यः—(अ०२)

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः॥ (१००)

त्वं तुले ! सत्यधामासि पुरा देवैर्विनिर्म्मिता।
तत्सत्यं वद कल्याणि ! संशयान्मां विमोचय ॥ (१०१)
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय।
शुद्धं चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥ इति। (१०२)

तुलाश्रितः=तुलामारूढः। प्रतिमानसमीभूतः=प्रतिमानेन मृदादिना समीकृतः। रेखां कृत्वा अवतारणे साम्यचिह्नं कृत्वा। अभिमन्त्रणमेवावतारणानन्तरं कार्य्यम्। अवतारित इति क्तप्रत्यय दर्शनात्। ततः प्राड्विवाकः तुलाधारकं शपथैर्नियम्य शिरोगतपत्रकं पुनर्धटमारोपयेत्।

अत एव नारदः—

समयैः परिगृह्याथ पुनरारोपयेन्नरम्।
निर्वाते वृष्टिरहिते शिरस्यारोप्य पत्रकम ॥ इति।
(व्य०प०१श्लो० २२६)

समयैः=शपथैः। परिगृह्य=नियम्य। ते च विष्णुना दर्शिताः।

ब्रह्मघ्नो ये स्मृता लोका ये लोकाः कूटसाक्षिणः।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥ इति।

पुनरारोहणकाले ऽभिमन्त्रणमाह—

नारदः,

त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च।
त्वमेव देव ! जानीषे न विदुर्यानि मानवाः ॥
(व्य०प०१श्लो०२७८)

व्यवहाराभिशस्तोऽयं मानवस्तोल्यते त्वया।
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥
देवासुरमनुष्याणां सत्ये त्वमभिषिच्यसे।
सत्यसन्धोऽसि भगवन् ! शुभाशुभविभावने ॥
आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्चरात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ इति।
(ना० स्मृ० न लब्धम्)

मन्त्रोच्चारणानन्तरं कर्तव्यं पितामह आह—

ज्योतिर्विद्ब्राह्मणश्रेष्ठः कुर्यात्कालपरीक्षणम्।
विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः ॥
साक्षिणो ब्राह्मणाः श्रेष्ठाः यथादृष्टार्थवादिनः।
ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ॥

शंसन्ति साक्षिणः श्रेष्ठाः शुद्धशद्धी नृपे तदा । इति ।
दशगुर्वक्षरोच्चारणकालः प्राणः ते षट् विनाडिकाः ।

तथा च स्मृत्यन्तरम् ।

दशगुर्वक्षरः प्राणः षट् प्राणाः स्याद्विनाडिका ॥ इति ।

विष्णुधर्मोत्तरेऽपि—

लघ्वक्षरसमा मात्रा निमेषः परिकीर्त्तितः ।
अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम ! ॥
द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः ।
विनाड़िकास्तु षट् प्राणास्तत्षष्ट्या नाड़िका स्मृता ॥
अहोरात्रं तु तत्षष्ट्या नित्यमेव प्रकीर्त्तितम् । इति ।

कानि पुनर्जयपराजयचिह्नानीत्यपेक्षायामाह—

नारदः,

तुलितो यदि वर्धेत विशुद्धः स्यान्न संशयः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥ इति ।
( व्य० प० १ श्लो० २८३ )

वर्धेत=उपरिगच्छेत् । हीयमानः अधो गच्छेत् । यत्पुनरुक्तं पितामहेन—

तुलितो यदि वर्धेत शुद्धो भवति धर्मतः ।
हीयमनो न शुद्धः स्यादेकेषां तु समोऽशुचिः ॥
अल्पपापः समो ज्ञेयो बहुपापस्तु हीयते ॥ इति ।

अल्पत्वं व्यभिचारे समालिङ्गनादिना, चौर्ये तद्देशगमनादिना । तत्र एकेषामिति पूजार्थं नतु स्वमतं समस्य शुचित्वद्योतनार्थम् । अल्पपापिनोऽप्यशुचित्वात् । तेन हीयमानसमयोर्न कश्चिद्विशेषः । दण्डे प्रायश्चित्ते परं विशेषस्तयोर्द्दोषानुसारित्वात् । यत्तु कैश्चित् "एकेषां तु समोऽशुचिः" इति वचनं । 'अल्पपापः समो ज्ञेय' इति च वचनं साम्ये संशयपरमेवेत्युक्तम् । तत् क्लिष्टकल्पनया वाक्यानार्जवात्तैरुपेक्षणीयम् । यत्तूक्तम्—

बृहस्पतिना,

घटेऽभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात् ।
तत्समस्तु पुनस्तौल्यो वर्द्धितो विजयी भवेत् ॥ इति ।

अयमर्थः । पुनर्देवतावाहनाद्यङ्गसहितं सर्वं कर्म विधाय तोलनीय इति । समस्याशुचित्वनिश्चयो न प्रथमतोलनपर्याये कार्यः । किन्तु पुनस्तोल्यमानस्य समतैव यदि भवति तदा अशुद्धिरवधारणीयेत्यर्थ इति

स्मृतिचन्द्रिकायाम्। यत्तु कैश्चित्तस्मिन्नेव प्रयोगे तोलनमुक्तं, तन्न। 'प्रधाना वृत्तावङ्गावृत्तिः' इति न्यायेन तोलनस्य फलसम्बन्धेन प्रधानत्वात् तदावृत्तौ देवतावाहनाद्यङ्गानामप्यावृत्तेरेवोचितत्वात्। शिक्यादिच्छेदेऽपि पुनः समीकृत्य तोलनीय इत्याह—

कात्यायनः,

शिक्यच्छेदे तुलाभङ्गे तथा चापि गुणस्य वा।
शुद्धेस्तु संशये चैनं परीक्षेत पुनर्नरम्॥ इति।

शुद्धिसंशयकारणान्याह नारदः—

तुलाशिरोभ्यामुद्भ्रान्तं विचलं न्यस्तलक्षणम्।
यदा वायुप्रणुन्नं वा तदा नैकतरं वदेत्॥ इति।

अयमर्थः। यदा तुलान्तौ तिर्यक्चलितौ, यदा च समताज्ञानार्थं न्यस्तं चिह्नमपैति, यदा च वायुना प्रेरिता तुला ऊर्ध्वमधश्च कम्पते तदा जयं पराजयं च न वदेदिति।

व्यासोऽपि—

कक्ष्यच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा।
रज्जुच्छेदेऽक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृपः॥ इति।

कक्ष्यं=शिक्यतलम्। कर्कटौ=तुलोपान्तस्थौ शिक्याधारावीषद्वक्रौ कर्कटशृङ्गसन्निभौ लोहकीलकौ। अक्षः=पादस्तम्भयोरुपरिनिहितस्तुलाधारपट इति मिताक्षरा। दार्ढ्यप्रयोजकः कीलक इति हलायुधः।

यत्तु बृहस्पतिवचनम्—

कक्ष्यच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा।
रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमाप्नुयात्॥ इति,

तत् आकस्मिककक्ष्यच्छेदादिविषयम्। कात्यायनवचनं तु दृश्यमानकारणकशिक्यच्छेदादिविषयमिति विज्ञानेश्वराचार्यादयः।

इति धटविधिः।

## अथाग्निविधिः।

तत्र पितामहः—

अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम्।
कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा॥
आग्नेयं मण्डलं त्वाद्यं द्वितीयं वारुणं तथा।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम्॥
पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते।

सप्तमं सोमदैवत्यमष्टमं शर्वदैवतम् ॥
पुरस्तान्नवमं यत्तु तन्महत्पार्थिवं विदुः ।
गोमयेन कृतानि स्युरद्भिः पर्युक्षितानि च ॥ इति ।

सावित्रं त्वष्टमं तथा । नवमं शर्वदैवत्यमिति दिव्यविदो विदुः ॥ इति मिताक्षरायां पाठः । प्रख्यातदेवतायतनादिपूर्वोक्तदिव्यप्रदेशभूशुद्धिं सम्पाद्य तत्र प्राड्विवाकः सोपवासो नृपाज्ञया प्रवृत्तो नव मण्डलानि कुर्यात् । तानि च प्राक्संस्थानि कर्त्तव्यानि । पुरस्तान्नवमम् इत्यष्टानां मण्डलानां पूर्वभागे नवममण्डलस्य कर्त्तव्यताभिधानात् । पश्चिमे मण्डले स्थित्वेति वक्ष्यमाणवचनलिङ्गाच्च । तानि चाष्टौ क्रमेणाग्न्यादिदैवत्यानि । नवमं महत्=मण्डलान्तरापेक्षयाऽधिकपरिमाणम् अपरिमिताङ्गुलम् । पार्थिवं=पृथिवीदैवत्यम् । ननु मण्डलानामग्न्यादिदैवत्यत्वं न सम्भवति । तत्प्रकाशकत्वाभावात् । तदुद्देशेन त्यज्यमानत्वाभावाच्चेति चेत्, न । 'प्रैतु होतुश्चमसो ब्रह्मण' इति न्यायेन आग्नेयेत्यादिदेवतातद्धितान्तलक्षणसमाख्याबलेनाग्न्यादिदेवतापूजनस्थानत्वेनाग्न्यादिदैवत्यत्वसम्भवात् । अतस्तेष्वग्न्यादिदेवतापूजनं कार्य्यम् । मण्डलपरिमाणं स एवाह—

द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् ।
अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ॥
षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना । इति ।

मण्डलान्तरम्=अन्यमण्डलम् । सान्तरालमेकैकमण्डलं द्वात्रिंशदङ्गुलम् । एवञ्चान्तरालसहितैरष्टभिर्मण्डलैरङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं भवति । नवममण्डलस्यापरिमिताङ्गुलकत्वादगणना । मण्डलं सान्तरालं द्वात्रिंशदङ्गुलम् । तत्र मण्डलं षोडशाङ्गुलं षोडशाङ्गुलं तदन्तरालम् । तथा च याज्ञवल्क्यः—

षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ॥ इति । (२।१०६)

तावत्=षोडषाङ्गुलम् अन्तरं=मध्यम् । यत्तु नारदवचनम्—

अतः परं प्रवक्ष्यामि विधिमग्नेर्यथोदितम् ।
द्वात्रिंशदङ्गुलं प्राहुर्मण्डलान्मण्डलान्तरम् ॥
अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ।
चत्वारिंशत् समधिकं भूमेरङ्गुलमानतः ॥ इति । (१)
(व्य०प०१ श्लो०२८५।२८६)

तत् नवमाष्टमयोरङ्गुलयोर्यदन्तरालं षोडशाङ्गुलं तस्यागन्तव्यत्वा-

---

(१) षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना । इति पाठो मुद्रित ना० स्मृ० ।

दनन्तराभावेनाङ्गुलानां परिगणनमिति न कश्चिद्विरोधः । यत्तु कल्प-तरुकारेण एतदेव वाक्यम्—

चतुर्विंशतिराख्याता भूमेस्तु परिकल्पना ।

इति पठितम् ।

तत् षोडशाङ्गुलस्य प्रथमावस्थानं मण्डलस्यागन्तव्यत्वेन । तद्-व्यनन्तभावगम्यभूमेरङ्गुलानां परिगणनविषयमिति न कश्चिद्विरोधः । यदा तु दिव्यकर्त्तुः पदं षोडशाङ्गुलादधिकं तदा तत्पदसम्मितं मण्ड-लम् अवशिष्टाङ्गुलमन्तरालमित्येवं द्वात्रिंशदङ्गुलता सम्पादनीया ।

तथा च नारदः—

मण्डलस्य प्रमाणं तु कुर्य्यात् तत्पदसम्मितम् । इति । (व्य०प०१।२९९)

पितामहोऽपि—

कर्त्तुः पदसमं कार्य्यं मण्डलं तु प्रमाणतः । इति ।

अङ्गुलप्रमाणं तु "तिर्य्यग्यवोदराण्यष्टौ" इत्यादिना घटविधिप्रकरणे दर्शितम् । यत्तु विष्णुवचनम्—

षोडशाङ्गुलं तावदन्तरमण्डलसप्तकं कुर्य्यादिति ।

तद्गन्तव्यमण्डलविषयम् ।

स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् । (२।१०६)

इति याज्ञवल्क्यवचनेन समानार्थकं ज्ञेयम् । यत्तु रत्नाकरे एतच्च मण्ड-लसप्तकं मण्डलाष्टकलङ्घनासामर्थ्यं इत्युक्तम् । तदयुक्तम् ।

पश्चिमे मण्डले स्थित्वा प्राङ्मुखः प्राञ्जलिः शुचिः ।

इति वचनेन—

अष्टमं मण्डलं गत्वा नवमे निःक्षिपेद्बुधः ।

इति वचनेन च मण्डलसप्तकलङ्घनस्यैवोक्तत्वेन मण्डलाष्टकलङ्घ-नस्यानुक्तत्वात् । प्रोक्षितेष्वेतेषु प्रागग्राः कुशाः प्रसारणीयाः ।

तथा च पितामहः—

मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः ।
विन्यसेच्च पदं कर्त्ता तेषु नित्यमितिस्थितिः ॥ इति ।

ततः प्राड्विवाकः प्रथममण्डलाद्दक्षिणतो लौकिकमग्निं प्रतिष्ठाप्य शान्तिहोमं कुर्य्यात् ।

शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम् ।

इति स्मरणात् । होमश्चात्र 'अग्नये पावकाय स्वाहा' इत्यनेन मन्त्रेण कुर्य्यादित्युक्तं व्याख्यातृभिः । ततस्तस्मिन्नग्नौ लोहकारात् पिण्डं तापयेत् ।

तथा च नारदः—

जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि ।
दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ प्रतापयेत् ॥
अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरक्षितम् ॥ इति ।
(व्य०प०१ श्लो०२८८)

सुरक्षितम्=चाण्डालादिस्पर्शो यथा न सम्पद्यते तथा रक्षितम् । अयःपिण्डस्य परिमाणादिकं

पितामह आह,

अस्त्रिहीनं समं कृत्वा अष्टाङ्गुलमयोमयम् ।
पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम् ॥ इति ।

सममस्त्रिहीनम्=समन्ततः कोणरहितं समवृत्तमिति यावत् । अष्टाङ्गुलम्=अष्टाङ्गुलविस्तारं, पञ्चाशत्पलिकं=पञ्चाशत्पलपरिमितं समं तापयेदित्यन्वयः । सर्वतस्तापयेदित्यर्थः ।

यत्तु—

शतार्धपलिकं वृत्तं द्वादशाङ्गुलमायतम् ।
लोहमग्निमयं ध्मातं देयं राज्ञाभिशापिनः ॥

इति कालिकापुराणे लोहपिण्डस्य द्वादशाङ्गुलायामत्वमुक्तम् । तदष्टाङ्गुलेन सह विकल्पितं ज्ञेयम् ।

यत्तु शङ्खलिखिताभ्याम्—

अथवा सप्ताश्वत्थपत्रान्तरितं षोडशपलमपि अग्निवर्णं लौहपिण्डमञ्जलियादाय सप्तमपदमर्य्यादं गच्छेत् ।

इति पिण्डस्य षोडशपलत्वमुक्तम् । तदपि वैकल्पिकम् । सप्तमपदमर्यादं=सप्तममण्डलं यावत् । अभिविधिपरोऽत्र मर्य्यादाशब्दः । केचित्तु षोडशपलसङ्ख्या असामर्थ्ये इति प्राहुः । इदं च पिण्डप्रतापनं त्रिः कर्त्तव्यम् ।

अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरक्षितम् ।
पञ्चाशत्पलिकं भूयः कारयित्वा शुचिर्द्विजः ॥
तृतीयतापे तप्तं तं ब्रूयात्सत्यपुरस्कृतम् । (व्य०प०१।२८९)

इति नारदवचने तृतीयतापे तप्तं तमिति लिङ्गात् । सुतप्तमयःपिण्डमुदके निःक्षिप्य पुनः सन्ताप्योदके निःक्षिप्य पुनः प्रतापयेत् । तस्मिन् काले प्राड्विवाको धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं साधारणं विधिं कुर्य्यात् । वह्निपूजायां चन्दनादेर्विशेषं

पितामह आह,

तत्र पूजां हुताशस्य कारयेन्मनुजाधिपः ।

रक्तचन्दनमाल्यैश्च रक्तपुष्पैस्तथैव च ॥ इति ।

तत्र=अयःपिण्डाग्नौ । हुताशस्य=आवाहितस्य धर्मरूपस्याग्नेः । ततः शोध्यकर्त्तव्यमाह—

हारीतः,

प्राङ्मुखस्तु ततस्तिष्ठेत्प्रसारितकराङ्गुलिः ।
आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम् ॥ इति ।

अवस्थितिश्च प्रथमे मण्डले कर्त्तव्येत्याह—

पितामहः,

प्रथमे मण्डले तिष्ठेत्प्राङ्मुखः प्राञ्जलिः शुचिः ॥ इति ।

तत्र स्थितस्य करौ शोधनीयावित्यप्याह—

स एव,

लक्षयेयुः क्षतादीनि हस्तयोस्तस्य कारिणः ॥ इति ।

कारिणः=नियुक्ताः पुरुषाः ।

नारदोऽपि—

लक्षयेत्तस्य चिह्नानि हस्तयोरुभयोरपि ।
प्राकृतानीव गूढानि सव्रणान्यव्रणानिच ॥ इति । ( न लब्धम् )

शोधनप्रकारं विष्णुराह—

करौ विमृदितव्रीहेः तस्यादावेव लक्षयेत् । इति ।

विमृदिता व्रीहयो याभ्यां तौ । व्रीहिमर्दनं तयोर्यथावस्थितरूपज्ञानार्थम् । एवं शोधितयोर्व्रणादिचिन्हेषु सत्सु प्राक्स्थितत्वज्ञानार्थमलक्तादिरसेन तेषां चिह्नं कर्त्तव्यमिति—

नारद आह,

हस्तक्षतेषु सर्वेषु कुर्य्याद्धंसपदानि तु ।
तान्येव पुनरालक्षयेद्धस्तौ विन्दुविचित्रितौ ॥ इति ।

(व्य० प०१ श्लो०३०१)

तानि=प्राक्कृतचिह्नानि । पुनः=पिण्डधारणानन्तरम् । ततः प्राड्विवाककृत्यं—

याज्ञवल्क्य आह,

करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥ इति । (२।१०३)

तावत्=तावत्कृत्वः सप्तकृत्वः सूत्रेण वेष्टयेदिति तावदित्यस्य क्रियाविशेषणत्वमङ्गीकृत्योक्तोऽर्थो मिताक्षरायाम् । तावतां सूत्राणां समाहारस्तावत्सूत्रं तेन । सप्तभिः सूत्रैर्वेष्टयेदित्यर्थः । "सप्तभिः सूत्रतन्तुभिः"

इति वक्ष्यमाणनारदादिवचनसंवादी प्रतिभाति। तावच्छब्दः सङ्ख्याशब्दस्तेन समाहारे द्विगुः स्त्रीलिङ्गत्वाभावाच्च न ङीप् त्रिभुवनमितिवत्। सप्तकृत्वो वेष्टनं तु वचनालाभेऽपि शिष्टाचारतः कर्त्तव्यमिति मदनरत्ने। वेष्टनं चाश्वत्थपत्रहस्तयोः सूत्रं च शुक्लमित्याह—

नारदः,

वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः। इति।

अश्वत्थपत्राणि सप्तापि समानानि।

तथा च स्मृतिः—

पत्रैरञ्जलिमापूर्य ह्यश्वत्थैः सप्तभिः समैः। इति।

शमीपत्रादीन्यप्यश्वत्थपत्राणामुपरि स्थापयेत्।

तथा च स्मृतिः—

सप्त पिप्पलपत्राणि शमीपत्राण्यथाक्षतान्।

दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान्न्यसेत्॥ इति।

पुष्पाणि च तत्र स्थापनीयानि।

तथा च पितामहः—

सप्त पिप्पलपत्राणि चाक्षतान् सुमनो दधि।

हस्तयोर्निःक्षिपेत्तत्र सूत्रेणावेष्टनं तथा॥ इति।

सुमनसः=कुसुमानि। सूत्रेणेति जातावेकवचनम्। यत्तु स्मृत्यन्तरम्—

अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः।

अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पदे॥ इति,

तत् अश्वत्थपत्राभावेऽर्कपत्रविधायकं ज्ञेयम्। अश्वत्थपत्राणां पितामहप्रशंसावचनेन मुख्यतावगमात्।

पिप्पलाज्जायते वह्निः पिप्पलो वृक्षराट् स्मृतः।

अतस्तस्य तु पत्राणि हस्तयोर्निक्षिपेद्बुधः॥ इति।

ततस्तप्तलोहपिण्डे प्राड्विवाकस्तत्राग्निमावाह्याग्निमभिमन्त्रयेत्—"त्वमग्ने वेदा" इत्यनेन मन्त्रेणेत्याह—

पितामहः,

तापिते तु ततः पश्चादग्निमावाहयेच्छुचिः।

आवाहनं तु देवानां कृत्वा पूर्वविधानवित्॥

त्वमग्ने! वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे।

त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम्॥

जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम्।

पापात्पुनासि वै यस्मात् तस्मात्पावक उच्यसे॥

पापेषु दर्शयात्मानमर्चिष्मान् भव पावक ! ।
अथ वा शुद्धभावेन शान्तो भव हुताशन ! ॥
त्वमग्ने ! सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेव देव ! जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ इति ।

विष्णुस्तु "त्वमग्ने सर्वभूतानाम्" इत्यादि "धर्मतस्त्रातुमर्हसि" इत्यन्तं पितामहवचनवदेवाभिमन्त्रणे मन्त्रमाह । तदस्य मन्त्रस्य समुच्चयेनाभिमन्त्रणसाधनत्वं न तु विकल्पेन । प्रार्थनीयार्थस्य शोध्यव्यक्तिविशेषनिष्ठतया प्रकाशनेन भिन्नकार्यत्वात् । पितामहेन एकवाक्यतया पठनाच्च ।

यत्तु—

तृतीयतापत्तं तं ब्रूयात्सत्यपुरस्कृतम् ।
शृण्विमं मानवं धर्मं लोकपालैरधिष्ठितम् ॥ (व्य०प०१।२९०)
त्वमग्ने ! सर्वदेवानां पवित्रं परमं मुखम् ।
त्वमग्ने ! सर्वभूतानां हृदिस्थं वेत्सि चेष्टितम् । (२९१)
सत्यानृते च जिह्वायास्त्वत्तः समुपलभ्यते ।
वेदादिभिरिदं प्रोक्तं नान्यथा कर्त्तुमर्हसि ॥ ( २९२ )
अनेनादाविदं प्रोक्तं मिथ्या चेदमसौ वदेत् ।
सर्वथा च यथा मिथ्या तथाग्निं धारयाम्यहम् ॥ (२९३)
स एष त्वां धारयति सत्येनानेन मानवः ।
सत्यवाक्यस्य चास्य त्वं शांतो भव हुताशन ! ॥
मृषावाक्यस्य चास्य त्वं दह हस्तौ च पापिनः । ( २९४ )

इति नारदोक्तमभिमन्त्रणं विष्णुपितामहाभ्यामुक्तेनाभिमन्त्रणेनैकार्थत्वाद्विकल्पते । "तुल्यार्थास्तु विकल्पेरन्" इति न्यायात् । यदा नारदोक्ताभिमन्त्रणं क्रियते तदा तदनन्तरं कर्त्तव्यमाह—

स एव,

अमुमर्थं च पत्रस्थमभियुक्तं यथार्थतः ।
संश्राव्य मूर्ध्नि तस्यैव न्यस्य देयो यथाक्रमम् ॥ इति ।
( व्य० प० १।२९५ )

पूर्वोक्ताभिमन्त्रणमन्त्रार्थं शिरसि निहितपत्रस्थमन्त्रार्थं च संश्राव्य तत्पत्रं यथास्थानं निधाय लोहपिण्डो देय इत्यर्थः । यदा तु विष्णुपितामहोक्ताग्न्यभिमन्त्रणं क्रियते तदा तस्मिन् कृते कर्त्तव्यमाह—

पितामहः—

ततस्तं समुपादाय राजा धर्मपरायणः।
सन्दंशेन नियुक्तो वा हस्तयोस्तस्य निक्षिपेत् ॥ इति।

नियुक्तः=प्राड्विवाकः। सन्दंशेन तं=लोहपिण्डं समुपादाय=गृहीत्वा तस्य=शोध्यस्य हस्तयोः निक्षिपेदित्यर्थः। निक्षेपणात् प्राक् पक्षद्वयेऽपि शोध्यमभिमन्त्रयेत्। अभिमन्त्रितवतश्च तस्य हस्तयोरुपरि लोहपिण्डं स्थापयेत्।

तथा च याज्ञवल्क्यः—( अ०२ )

त्वमग्ने ! सर्वभूतानामन्तश्चरसि पावक !।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं करे मम ॥ ( १०४ )
तस्येत्युक्तवतो लोहं पञ्चाशत्पलिकं समम्।
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥ ( १०५ )

पापेभ्य इति ल्यब्लोपे पञ्चमी। पुण्यपापानि पर्यालोच्येत्यर्थः। ब्रूहि=दर्शयेत्यर्थः। इत्युक्तवतः=पूर्वोक्तमन्त्रेणाग्न्यभिमन्त्रणं कृतवतस्तस्य हस्तयोरश्वत्थपत्रादिसाहितयोः सूत्रैर्वेष्टितयोरित्यर्थः। गृहीतलोहपिण्डस्य शोध्यस्य कर्त्तव्यमाह—

स एव,

स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्। इति। (२।१०६)

अस्यार्थविवरणपुरःसरं विष्णुरपि—

ततस्तत्राग्निवर्णं लोहपिण्डं पञ्चाशत्पलिकं समं दद्यात्। तं समादाय नातिद्रुतं न च विलम्बितं मण्डलेषु पदन्यासं कुर्वन् व्रजेत्। ततः सप्तममण्डलमतीत्य भूमौ लोहपिण्डं पातयेदिति।

मण्डलेषु=द्वितीयादिमण्डलेषु सप्तममण्डलमतीत्य=सप्तमं मण्डलमतिक्रम्य अष्टमं मण्डलं गत्वेति यावत्। भूमौ=शुष्काभिनवतृणपुञ्जान्वितायां नवममण्डलरूपायामित्यर्थः। वक्ष्यमाणकालिकापुराणवचनानुरोधात्।

नारदोऽपि—

हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः। (१)
स्थित्वैकस्मिस्ततोऽन्यानि व्रजेत्सप्त त्वजिह्मगः ॥ (व्य०प०१।२९६)
असम्भ्रान्तः शनैर्गच्छेदक्रुद्धः सोऽनलं प्रति।
न पातयेत्तामप्राप्य या भूमिः परिकल्पिता ॥ ( २९७ )

---

( १ ) एतदर्धस्थाने मु० ना० स्मृतौ स्नातश्च मण्डलस्थश्च ततः सङ्गृह्य पावकम्'। इत्यर्धं वर्तते। अग्रेतनम्–'असम्भ्रान्त' इत्यर्धं च न दृश्यते। तथा 'न मण्डलमतिक्रामेत्' 'मण्डलं चाष्टमं' अनयोरर्धयोरत्रत्यक्रमवैपरीत्येन पाठोऽस्ति।

न मण्डलमतिक्रामेन्न चार्वाक् स्थापयेत्पदम् ।
मण्डलं चाष्टमं गत्वा ततोऽग्निं विसृजेन्नरः ॥ इति । ( २९८ )

एकस्मिन्=प्रथमे मण्डले । विसृजेत् नवममण्डल इति शेषः ।

अत एव पितामहः—

त्वरमाणो न गच्छेत्तु सुस्थो गच्छेच्छनैः शनैः ।
न मण्डलमतिक्रामेन्नान्तरा स्थापयेत्पदम् ॥
अष्टमं मण्डलं गत्वा नवमे निक्षिपेद्बुधः । इति ।

नवमे मण्डले नूतनतृणसमान्विते अग्निविसर्गः कर्त्तव्यः ।

तथा च कालिकापुराणे—

मण्डलानि तथा सप्त षोडशाङ्गुलमानतः ।
तावदन्तरतो गच्छेद्गत्वा नवतृणे क्षिपेत् ॥ इति ।

निक्षेपानन्तरं परीक्षकस्य कर्त्तव्यमाह—

नारदः,

तस्यैवं मुक्तपिण्डस्य कुर्यात् करनिरीक्षणम् । इति ।

शुद्धाशुद्धपरिज्ञानार्थमिति शेषः । तत्राशुद्धिप्रत्यायकानि लक्षणानि—

स एवाह,

पूर्वदृष्टेषु चिन्हेषु ततोऽन्यत्रापि लक्षयेत् ।
मण्डलं रक्तसङ्काशं यत्रान्यद्वाग्निसम्भवम् ॥
सोऽविशुद्धस्तु विज्ञेयोऽसत्यधर्मव्यवस्थितः । इति ।
[ ना०स्मृ०नलब्धम् ]

यस्य करतलयोर्मध्ये यत्र क्वचिदग्निकारितं स्फोटाद्युपलभ्यते तमशुद्धं विजानीयादित्यर्थः । यस्य पुनर्नोपलभ्यते स शुद्धो ज्ञेयः ।

अत एव विष्णुः—

यो हस्तयोः क्वचिद्दग्धस्तमशुद्धं विनिर्दिशेत ।
न दग्धः सर्वथा यस्तु स विशुद्धो भवेन्नरः ॥ इति ।

दग्धादग्धसन्देहे नारद आह—

यदा तु न विभाव्येते दग्धाविति करौ तदा ।
व्रीहीनतिप्रयत्नेन सप्त वारास्तु मर्दयेत् ॥ ( व्य०प०१।३०२ )
मर्दिते यदि नो दग्धः सभ्यैरेवं विनिश्चितः ।
मोच्यः शुद्धः स सत्कृत्य दग्धो दण्ड्यो यथाक्रमम् ॥ इति ।

न विभाव्येते=न निश्चीयेते । व्रीहियवयोर्मर्दने विकल्पमाह—

पितामहः,

ततस्तद्धस्तयोः प्रास्येद्व्रीहीन्वा यदि वा यवान् ।

निर्विशङ्केन तेषां तु हस्ताभ्यां मर्दने कृते ॥
निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् ॥ इति ।

प्रास्येत्=प्रक्षिपेत् । निर्विकारे करतलद्वये स्थिते सायङ्काले शोध्यस्य शुद्धिं निर्दिशेदित्यर्थः । केचिन्निर्विकारो यदा हस्त इति पठन्ति । तन्मते मर्दनानन्तरमेव शुद्धिरवधारणीया । सायङ्काललक्षणकालबोधकवचनाभावात् । ननु 'दिनस्यान्त' इति पाठे—

भुक्त्वाग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।

इत्यादियाज्ञवल्क्यवचनेन विरोधः । तत्रानन्तर्यवाचिक्त्वाप्रत्ययस्य मुक्त्वेति प्रयोगेण कृतव्रीहिमर्दनयोः करयोर्विकारस्यादर्शने तप्तलोहपिण्डन्यासानन्तरमेव शुद्धेरवधारणीयत्वोक्तेरिति चेत्, न । "समानकर्तृकयोः पूर्वकाले क्त्वा" (३।४।४।२१) इति पाणिनीयवचनेन क्त्वाप्रत्ययस्य पूर्वकालवाचित्वावधारणात् । हारियोजनयागस्य संस्रवस्रुग्विमोकाभ्यां व्यवधानेन परिधिप्रहरणानन्तर्याभावेऽपि "वेदे प्रहृत्य परिधीन् जुहोति" इत्यत्र क्त्वाप्रत्ययदर्शनात् । लोकेऽपि उपवेशनक्रियान्तरव्यवधानेन गमनस्य भोजनानन्तर्याभावेऽपि भुक्त्वा व्रजतीति क्त्वादर्शनाच्च । अतो नान्तर्यवाचकत्वं क्त्वाप्रत्ययस्य । किञ्च क्त्वाप्रत्ययस्यानन्तर्यवचनत्वे बृहस्पतिसवाधिकरणविरोधः स्यात् । (पू०मी०अ०४पा०४अधि० २०) तत्रापि क्त्वाप्रत्ययस्य पूर्वकालवचनत्वाभिधानात् । तथा हि । "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति श्रूयते । तत्र संशयः । स किं वाजपेये "शरदि वाजपेयेन यजेत" इत्यनेन विहितो यः शरत्कालस्तस्मिन् कर्त्तव्यः । आहोस्वित् स्वकाले वसन्ते कर्त्तव्यः । तत्र बृहस्पतिसवस्याङ्गत्वं तावत्पूर्वमुक्तम् । तच्चाङ्गमङ्गिकाले अङ्गिना सह प्रयोक्तव्यम् इतरेषामङ्गानामङ्गिकाले समनुष्ठीयमानत्वादिति पूर्वः पक्षः । राद्धान्तस्तु पूर्वकालवाचिक्त्वाप्रत्ययेन साङ्गे वाजपेये निवृत्ते सति पश्चात्कर्मान्तरत्वेन बृहस्पतिसवस्य विहितत्वात् यदाङ्गिना सहैकप्रयोगः स्यात् तदा क्त्वाप्रत्ययप्रापितः पूर्वोत्तरकालविभागो बाध्येत । न ह्यङ्गिना सह प्रयोक्तव्यानामङ्गानां वाजपेये निवृत्ते पश्चात् विधानं श्रुतम् । ततः प्रयोगेऽवश्यम्भाविनि सति स्वस्वचोदकप्रापिते काले तदनुष्ठानं युक्तम् । बृहस्पतिसवस्य ज्योतिष्टोमविकारत्वाद्वसन्तकालश्चोदकप्राप्तः । वाजपेयेन सह प्रयोगैक्ये शरदि वाजपेयस्य विहितत्वाद्बृहस्पतिसवोऽपि शरदि प्रसज्येत । तथा च वाजपेये वृत्ते कर्त्तव्यो बृहस्पतिसवस्तदनन्तरं कालातिक्रमकारणस्यातिदेशकृतस्य वसन्तका-

ललक्षणाङ्गोपसंहारस्य सत्त्वात् तदुत्तरवसन्तकाले कर्त्तव्यः। क्त्वा पूर्वकालतायां स्मर्य्यते नानन्तर्य्ये। ननु सर्वत्राङ्गापूर्वैः प्रधानापूर्वं जनयितव्यम्। इह तु पूर्वकालीनेन साङ्गप्रधानानुष्ठानेन फलापूर्वस्य निष्पन्नत्वादुत्तरकालीनमङ्गं निरर्थकमेव स्यादिति चेत्, न। तस्यैवापूर्वस्यानेनातिप्राबल्यदशायाः कल्पनीयत्वात्। तस्मान्नाङ्गिनः कालेऽनुष्ठानं किन्तु स्वकाल एवेति स्थितम्। तदनेन विरोधवारणाय पूर्वकालत्वमेवार्थः। तथा च न कोऽपि विरोध इति सर्वं सुस्थम्। केषुचिन्निमित्तेषु पुनराग्निधारणं कर्त्तव्यम्।

तथा च याज्ञवल्क्यः,

अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत्। इति। ( २।१०७ )

यदा गच्छतोऽन्तरा=अष्टममण्डलादर्वाक् पिण्डः पतति दग्धादग्धत्वे वा सन्देहस्तदा पुनर्हरेदित्यर्थः। इदं तु यदि हस्तयोर्न दाहस्तदा वेदितव्यम्। दाहे त्वशुद्धिरेव।

तथा च नारदः,

यस्त्वन्तरा पातयति दग्धश्च न विभाव्यते।
पुनस्तं हारयेदग्निं स्थितिरेषा दृढीकृता॥ इति।

( व्य० प० १। श्लो० २९८ )

हस्तयोरन्यत्र दग्धविभावनेऽपि पुनर्धारणं कार्य्यमित्याह—

कात्यायनः,

प्रस्खलत्यभियुक्तश्चेत् स्थानादन्यत्र दह्यते।
न तं दग्धं विदुर्देवास्तस्य भूयोऽपि दापयेत्॥ इति।

भूयोऽपि=पुनरपीत्यर्थः।

इत्यग्निविधिः।

## अथ जलविधिः।

तत्र पितामहः—

तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम्।
मण्डलं धूपदीपाभ्यां कारयेच्च विचक्षणः॥
शरान् सम्पूजयेद्भक्त्या वैणवं च धनुस्तथा।
मङ्गलैः पुष्पधूपैश्च ततः कर्म समाचरेत्॥ इति।

धूपदीपाभ्यां शरान् सम्पूजयेदित्यन्वयः। जलसमीपे संस्कृतायां भुवि मण्डलं कृत्वा तत्र शरादिकं सम्पूज्य प्रयोगारम्भः कार्य इत्यर्थः।

धनुषः प्रमाणमाह—

नारदः,

क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् ।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ॥ इति ।

( व्य० प० १।श्लो०३०७ )

सप्तशतं=सप्ताधिकशताङ्गुलम् । एवं षट्शतं पञ्चशतं च । लक्ष्य स्थानं च—

स एवाह,

मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम् ।
हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विचक्षणः ।
न्यूनाधिके तु दोषः स्यात् क्षिपतः सायकांस्तथा ॥ इति ।

शराश्चानायसाग्रा वैणवाश्च कर्त्तव्या इत्याह—

कात्यायनः,

शरांश्चानायसाग्रांस्तु प्रकुर्वीत विशुद्धये ।
वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेत् ॥ इति ।

क्षेप्ता च क्षत्रियस्तद्वृत्तिर्ब्राह्मणो वा कार्य्य इत्याह—

पितामहः,

क्षेप्ता च क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोऽथवा ।
अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥ इति ।

शोध्यकर्णप्रमाणोच्छ्रिततोरणं मण्डलं समीपे कार्य्यमित्याह—

नारदः,

गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम् ।
कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचिः ॥ इति ।

उपादेयानुपादेयजले विविनक्ति—

पितामहः,

स्थिरे तोये निमज्जेत्तु न ग्राहिणि न चाल्पके ।
तृणशैवालरहिते जलौकामत्स्यवर्जिते ॥
देवखातेषु यत्तोयं तस्मिन् कुर्य्याद्विशोधनम् ।
आहार्य्यं वर्जयेन्नित्यं शीघ्रगासु नदीषु च ।
आविशेदमले नित्यमूर्मिपङ्कविवर्जिते ॥

ग्राहिणि=ग्राहाख्यजलजन्तुयुक्ते । आहार्य्यम्=नद्यादित आहृत्य महति कटाहादौ स्थापितम् ।

---

( १ ) यस्तु पातयते त्रासादन्धो वा न विभाव्यते । इति पाठो मुद्रितना० स्मृ० ।

पितामहः—

नदीषु नातिवेगासु तडागेषु सरःसु च ।
ह्रदेषु स्थिरतोयेषु कुर्य्यात्पुंसां निमज्जनम् ॥ इति ।

अतिवेगासु=अवस्थित्ययोग्यासु ।

विष्णुः—

पङ्कशैवालदुष्टग्राहमत्स्यजलौकादिविवर्जिताम्भसि । इति ।

तत्र उदके प्राड्विवाको वरुणं पूजयेदित्याह—

स एव,

गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।
वरुणाय प्रकुर्वीत पूजामादौ समाहितः ॥ इति ।

ततो दृढकायः कश्चित्पुरुषो नाभिमात्रजले स्थापनीय इत्यपि—

स एवाह,

ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ।
नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवद्बली ॥
तस्योरु प्रतिसङ्गृह्य निमज्जेदभिशापवान् ॥ इति ।

पितामहोऽपि—

स्थापयेत्प्रथमं तोये स्तम्भवत्पुरुषं नृपः ।
आगतं प्राङ्मुखं कृत्वा तोयमध्ये तु कारिणम् ॥ इति ।

स्तम्भवत्पुरुषं=स्तम्भसमन्वितं पुरुषम् । कारिणं=दिव्यकारिणं शोध्यमिति यावत् । अनेन पुरुषेण यज्ञियवृक्षजातां धर्मस्थूणामवष्टभ्य स्थातव्यम् ।

तथा च स्मृतिः—

उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च । इति ।

ततः प्राड्विवाको धर्मावाहनादिहोमान्तं कृत्वा शोध्यशिरसि च पत्रारोपणं विधाय जलाभिमन्त्रणं कुर्य्यात् ।

तथा च पितामहः—

ततस्त्वावाहयेद्देवान् सलिलं चानुमन्त्रयेत् ॥ इति ।

देवतावाहनं पूर्वोक्तस्य सकलदिव्यसाधारणस्य प्रतिज्ञापत्रबन्धनान्तस्य कर्मजातस्योपलक्षणम् । सलिलग्रहणं सलिलदेवताभूतस्य वरुणस्याप्युपलक्षणम् ।

जलाभिमन्त्रणमन्त्रं विष्णुराह—

त्वमम्भः ! सर्वभूतानामन्तश्चरासि साक्षिवत् ।
त्वमेवाम्भो ! विजानीषे न विदुर्यानि मानवाः ॥

व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥ इति ।

पितामहोऽपि—

तोय ! त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् ।
शुद्धस्त्वं कारणं प्रोक्तं द्रव्याणां देहिनां तथा ।
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे ॥ इति ।

अनयोर्मन्त्रयोर्विकल्पः तुल्यार्थत्वात्(१) । वरुणाभिमन्त्रणमन्त्रः शङ्खलिखिताभ्यां दर्शितः—

सदसच्च त्वमेव वरुण ! उभयोः प्रतिष्ठितस्त्वयि सत्यं त्विदं देव ! वरुण ! त्वमेव तद्ब्रूहि वरेण्य ! तदादिशस्व इति ।

नारदोऽपि—

सत्यानृतविभागस्य तोयाग्नी स्पष्टकृत्तमौ ।
अद्भ्यश्चाग्निरभूद्यस्मात् तस्मात्तोये विशेषतः ॥
क्रियते धर्मतत्त्वज्ञैर्दूषितानां विशोधनम् ।
तस्मात्सत्येन भगवन् ! जलेश ! त्रातुमर्हसि ॥ इति ।

अनयोरपि विकल्पः । ततः प्राड्विवाकोऽभिमन्त्रिते जले शोध्यं प्रवेशयेदित्याह—

कालिकापुराणे व्यासः,

त्राह्येनं वरुण ! त्वं च अस्मादेवाभिशापतः ।
शुद्धश्चेदतिकारुण्यादभिमन्त्र्य जले क्षिपेत् ॥ इति ।

त्राह्येनमित्यादिनाऽऽतिकारुण्यादित्यन्तेन मन्त्रेणाभिमन्त्र्य जले पुरुषं प्रवेशयेदित्यर्थः । अयं च मन्त्रः पूर्वोक्तेन जलाभिमन्त्रणमन्त्रेण वैकल्पिकः । शोध्योऽपि कृताभिमन्त्रणो जलं प्रविशेत् ।

तथा च याज्ञवल्क्यः—

सत्येन माभिरक्ष त्वं वरुणेत्यभिशाप्य कम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥ इति । (२।१०८)

हे वरुण ! मां त्वं सत्येनाभिरक्षेत्यनेन मन्त्रेण कमुदकम्, अभिशाप्य=अभिमन्त्र्य नाभिदघ्नोदकस्थस्य नाभिप्रमाणोदकस्थितस्य पुरुषस्योरू गृहीत्वा शोध्यो जलं विशेत् । जले निमज्जेदित्यर्थः । ततः पूर्वोक्ते लक्ष्यस्थाने शरत्रयं प्रक्षिपेदित्याह—

बृहस्पतिः,

अप्सु प्रवेश्य पुरुषं प्रेषयेत्सायकत्रयम् । इति ।

---

(१) तुल्यार्थास्तु विकल्पेरन् इति न्यायेनेत्यर्थः ।

कालविशेषे देशविशेषे च शरक्षेपनिषेधमाह—

स एव,

इषून्न निःक्षिपेद्विद्वान्मारुते वाति वै भृशम् ।
विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले ॥
तृणगुल्मलतावल्लीपङ्कपाषाणसंयुते । इति ।

तदनन्तरं कर्त्तव्यमाह—

याज्ञवल्क्यः,

समकालमिषुं मुक्तमानीयान्यो जवी नरः ।
गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात् ॥ इति । (२।१०९)

अयमर्थः । त्रिषु शरेषु मुक्तेषु एको वेगवान् मध्यमशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठति, अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति । एवं स्थितायां तृतीयस्यां करतालिकायां शोध्यो नाभिप्रमाणोदकस्थितस्य पुरुषस्योरू गृहीत्वा निमज्जति । तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यमशरपातस्थानं गच्छति । शरग्राही च तस्मिन् प्राप्ते द्रुततरं तोरणमूलं प्राप्यान्तर्जलगतं शोध्यं यदि न पश्यति तदा शुद्धो भवतीति ।

तथा च कात्यायनः—

(१)क्षिप्तेषु मज्जनं कार्य्यं गमनं समकालिकम् । इति ।

एतदेव स्पष्टीकृतं पितामहेन,

गन्तुश्चापि च कर्त्तुश्च समं गमनमज्जनम् ।
गच्छेत्तोरणमूलात्तु लक्ष्यस्थानं जवी नरः ॥
तस्मिन् गते द्वितीयोऽपि वेगादादाय सायकम् ।
गच्छेत्तोरणमूलं तु यतः स पुरुषो गतः ॥
आगतस्तु शरग्राही न पश्यति यदा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धं विनिर्दिशेत् ॥ इति ।

नारदोऽपि—

शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः ।
गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः ॥
मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥
(व्य०प०१श्लो०३०९।३१०)

---

(१) क्षिप्तेषु शरेषु सत्सु मज्जनं, गमनं च तृतीयकरतालिकासमकालिक कार्य-मित्यर्थः ।

अग्रे पितामहवदेव। क्वचित्पितामहवाक्यमपि शरप्रक्षेपणादि नारदवदेव पठन्ति। त्रिषु मुक्तेषु मध्यमः शरो ग्राह्यः।

तथा च स्मृतिः,

तेषां च प्रेषितानां च शराणां शास्त्रचोदनात्।
मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा॥ इति।
तत्रापि पतनस्थानादानेतव्यो न सर्पणस्थानात्।

तथा च पितामहः—

शरस्य पतनं ग्राह्यं सर्पणं तु विवर्जयेत्।
सर्पन् सर्पन् शरो यायाद्दूराद्दूरतरं यतः॥ इति।

स्थानान्तरगमने चाशुद्धिः।

तथा च नारदपितामहौ—

अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात्।
स्थानाद्वान्यत्र गमनाद्यस्मिन् पूर्वं निवेशितः॥ इति।
(ना०व्य०प०१श्लो०३१२)

एकाङ्गस्यापि दर्शनादिति कर्णाद्यभिप्रायेण।

तथा च कात्यायनः—

शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत्॥ इति।

इत्युदकविधिः।

## अथ विषविधिः।

तत्र नारदः—(व्य० प० १)

अतः परं प्रवक्ष्यामि विषस्य विधिमुत्तमम्।
यस्मिन् काले यथा देयं यादृशं परिकीर्त्तितम्॥ (३१८)
यावन्मात्रं समुद्दिष्टं धर्मतत्त्वानुवेदिभिः।
तोलयित्वेप्सिते काले देयमेतद्धिमागमे॥ (३१९)
नापराह्णे न मध्याह्ने सन्ध्यायां च विवर्जयेत्।
शार्ङ्गं हैमवतं शस्तं गन्धवर्णरसान्वितम्॥ (३२०)
अकृत्रिममसंमूढममन्त्रोपहतं च यत्।
वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता॥
हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि हि॥ (३२४) इति।

हिमागमे=हेमन्तशिशिरयोः शार्ङ्गं=शृङ्गोद्भवम्। हैमवतं=हिमालयोद्भवम्। हेमन्त इति हेमन्तशिशिरयोर्ग्रहणम्। "हेमन्तशिशिरयोः समा-

सेन" इति श्रुतेः । वसन्तस्य सर्वसाधारणत्वात् तत्रापि सप्तयवा शरदि ततोऽप्यल्पा षड्यवेत्यर्थः । वत्सनाभोऽपि ग्राह्य इत्याह—

पितामहः,

यवाः सप्त प्रदातव्याः शुचिहेतोर्न संशयः ।
शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य च ॥ इति ।

यवाः सप्तेति शीतलकालविषयम् ।

रात्रौ तु पश्चिमे भागे विषं देयं सुशीतले ।

इति पूर्वोदाहृतवचनात् । वर्ज्यविषमाह—

पितामहः,

चारितानि(१) च जीर्णानि कृत्रिमाणि तथैव च ।
भूमिजानि च सर्वाणि विषाणि परिवर्जयेत् ॥ इति ।

नारदोऽपि—

भृष्टं च चारितं चैव धूपितं मिश्रितं तथा ।
कालकूटमलाबुं च विषं यत्नेन वर्जयेत् ॥ इति । (व्य०प०१श्लो०३२१)

वत्सनाभस्वरूपमाह कात्यायनः—

वत्सनाभनिभं पीतं वर्णज्ञानेन निश्चितम् ।
शुक्तिशृङ्गाकृतिभङ्गे विद्यात्तद्वत्सनाभकम् ॥
मधुक्षीरसमायुक्तं स्वच्छं कुर्वीत तत्क्षणात् ।
बाह्यमेवं समाख्यातं लक्षणं धर्मसाधकैः ॥ इति ।

शार्ङ्गस्वरूपमाह स एव—

अजाशृङ्गनिभं श्यामं सुपीतं शृङ्गसम्भवम् ।
भङ्गे च शृङ्गबेराभं ख्यातं तच्छार्ङ्गिणं विषम् ॥
रक्तस्थमसितं कुर्य्यात्कठिनं चैव तत्क्षणात् ।
अनेन विधिना ज्ञेयं विषं दिव्यं विशारदैः ॥ इति ।

भङ्गे=छेदने शृङ्गबेराभम्=आर्द्रकतुल्यम् । भङ्गे आर्द्रकतुल्यं सुपीतमित्यन्वयः । शार्ङ्गिणं=शृङ्गिणां सम्बन्धि । "इनण्यनपत्ये" (पा०सू०अ०६ पा०४सू०१६४) इति प्रकृतिवद्भावान्न टिलोपः । यद्रक्तस्थं तत्क्षणाद्रक्तमसितं कुर्य्यादितिसम्बन्धः । विषं च घृतप्लुतं देयमित्याह—

नारदः,

विषस्य पलषड्भागाद्भागो विंशतिमस्तु यः ।
तमष्टभागहीनं तु शोध्ये दद्यात् घृतप्लुतम् ॥ इति (व्य०प०१श्लो०३२३)

---

(१) चारितानि=सञ्चारितानि कस्मैचिद्दत्तानि ।

पलं चात्र चतुःसुवर्णिकं तस्य षष्ठो भागो दश माषा दश यवाश्च भवन्ति। "त्रियवं त्वेककृष्णलम्। पञ्चकृष्णलको माष" इत्येको माषः पञ्चदश यवा भवन्ति। पञ्चदशानां माषाणां यवाः सार्द्धशतं भवन्ति। पूर्वं च दश यवा इति षष्ट्यधिकशतं यवाः पलस्य षष्ठो भागस्तस्माद्विंशतितमो भागोऽष्टौ यवाः तस्याष्टमभागहीनः=एकयवहीनः तं विंशतितमं भागं सप्तयवं घृतप्लुतं दद्यादित्यर्थः। घृतं च विषात्रिंशद्गुणं ग्राह्यमित्यप्याह—

नारदः—

पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम्।
घृतेन योजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितम्॥ इति। (न लब्धम्)

कात्यायनोऽपि—

पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम्।
घृतेन योजितं श्लक्ष्णं पिष्टं त्रिंशद्गुणान्वितम्॥ इति।

एतच्च विषं सोपवासेन प्राड्विवाकेन पूर्वोक्तदिव्यदेशे काले च देवद्विजसन्निधौ शिवपूजां कृत्वा तत्पुरतो विषं स्थापयित्वा धर्मावाहनादिशोध्यशिरसि प्रतिज्ञापत्रं निधाय विषमभिमन्त्र्य दक्षिणाभिमुखाय उदङ्मुखेन प्राङ्मुखेन वा देयमित्याह—

नारदः,

दद्याद्विषं सोपवासो देवब्राह्मणसन्निधौ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम्॥
द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते।
उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहितः॥ इति।
(ना०स्मृ०न लब्धम्)

अभिमन्त्रणमन्त्रमाह विष्णुः—

विषत्वाद्विषमत्वाच्च क्रूरत्वात्सर्वदेहिनाम्।
त्वमेव विष! जानीषे न विदुर्यानि मानवाः॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि॥ इति।

नारदोऽपि—

विष! त्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः।
शोधयैनं नरं पापात्सत्येनास्यामृतं भव॥ इति। (व्य०प०१श्लो०३२५)

अनयोरेकार्थत्वाद्विकल्पः। शोध्यस्याभिमन्त्रणमन्त्रमाह—

याज्ञवल्क्यः,

विष! त्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः।
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम्॥ इति। (२।११०)

पितामहोऽपि—

दीयमानं करे कृत्वा विषं तु परिशापयेत्।

विष! त्वं ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम्॥

पापेषु दर्शयात्मानं शुद्धानाममृतं भव।

अनयोरपि विकल्पः। अभिमन्त्रणानन्तरकर्त्तव्यमाह—

याज्ञवल्क्यः,

एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम्। इति। (२।१११)

शुद्धिप्रकारमाह बृहस्पतिः—

विधिदत्तं विषं येन जीर्णं मन्त्रौषधैर्विना।

स शुद्धः स्यादन्यथा तु दण्ड्यो दाप्यश्च तद्धनम्॥ इति।

याज्ञवल्क्योऽपि—

यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत्। इति (२।१११)

वेगो नाम धातोर्धात्वन्तरप्राप्तिः।

धातोर्धात्वन्तरप्राप्तिर्विषवेग इति स्मृतः।

इति वचनात्। धातवश्च त्वगादयः सप्त।

त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः।

इति वचनात्। विषवेगाश्च सप्त तेषां लक्षणानि विषतन्त्रे दर्शितानि—

वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ

तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ॥

यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गं च हिक्कां

षष्ठो निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य॥ इति।

शोध्यश्च कुहकादिभ्यो रक्षणीयः।

अत एव पितामहः—

त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम्।

कुहकादिभयाद्राजा धारयेत् दिव्यकारिणम्॥

औषधीर्मन्त्रयोगांश्च मणीनथ विषापहान्।

कर्त्तुः शरीरसंस्थांश्च गूढोत्पन्नान् परीक्षयेत्॥ इति।

दिनान्तपर्यन्तं विषवेगराहित्ये शुद्धिरवधारणीयेत्याह—

विष्णुः,

विषं वेगक्रमातीतं सुखेन यदि जीर्यते।

विशुद्धमिति तं ज्ञात्वा दिवसान्ते विसर्जयेत्॥

पितामहोऽपि—

भक्षिते तु यदा सुस्थो मूर्च्छाछर्दिविवर्जितः।

निर्विकारो दिनस्यान्ते शुद्धं तमपि निर्दिशेत्॥ इति।

नारदोऽपि—

छायानिवेशितो रक्ष्यो दिनशेषमभोजनः ।
विषवेगक्लमातीतः शुद्धोऽसौ मनुरब्रवीत् ॥ इति । (व्य०प०१श्लो०३२६

मिताक्षरायां तु—

पञ्चतालशतं कालं निर्विकारो यदा भवेत् ।
तदा भवति सशुद्धस्ततः कुर्याच्चिकित्सितम् ॥

इति नारदवाक्यं पठित्वा विषे पीते यावत्करतालिकाशतपञ्चकं क्रियते तावत्कालं निर्विकारश्चेच्छुद्धः । अनन्तरं तु चिकित्सनीयः । यानि तु दिनान्तावधिबोधकानि पितामहादिवचनानि तान्यल्पमात्रविषयाणीत्युक्तम् ।

इति विषविधिः ।

## अथ कोशविधिः ।

तत्र नारदः—( व्य० प० १ )

अतः परं प्रवक्ष्यामि कोशस्य विधिमुत्तमम् ।
शास्त्रविद्भिर्यथा प्रोक्तं सर्वकालाविरोधिनम् ॥ (३२७)
पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च ।
सशूकस्याऽव्यसनिनः कोशपानं विधीयते ॥ ( ३२८ )
इच्छतः श्रद्दधानस्य देवब्राह्मणसन्निधौ । ( ना० स्मृ० नलब्धम् )

सशूकस्य=असत्येन दिव्यकरणेऽनिष्टशङ्कायुक्तस्य । कोशपानम्—उग्रदेवतास्नानोदकपानम् । देवतास्नानोदकं च प्रसृतित्रयं ग्राह्यमित्याह—

विष्णुः, उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकात्प्रसृतित्रयं पिबेदिदं मया न कृतमिति व्याहरन् देवताभिमुख इति ।

याज्ञवल्क्योऽपि,

देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ।
संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥ इति । (२।११२)

उग्रान् देवान्=दुर्गादित्यादीन् । तेषामन्यतमं देवं प्राड्विवाकः सोपवासो गन्धपुष्पादिभिः सम्पूज्य स्नापयित्वा तत्स्नानोदकं दिव्यदेशं नयेदित्यर्थः । नीत्वा च तत्र निधाय धर्मावाहनादि शोध्यशिरसि पत्रारोपणान्तं सर्वदिव्यसाधरणविधिं विधाय देवतायतनसमीपे मण्डलं च विधाय तत्र शोध्यं प्राङ्मुखं स्थापयित्वा तमसत्येनैतद्दिव्यकरणे ऽनिष्टं संश्राव्य अलाबधाबुकेन "तोय ! त्वं प्राणिनां प्राण" इत्यादिना मन्त्रेणाभिमन्त्र्य पूर्वनिहितोदकात् प्रसृतित्रयं पाययेत् । शोध्यश्च जलविधावे-

वोक्तेन "सत्यानृतविभागस्य" इत्यादिना मन्त्रेणाभिमन्त्र्य पिबेत् ।

तथा च नारदः—

तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम् ।
आदित्याभिमुखं कृत्वा पाययेत् प्रसृतित्रयम् ॥ इति ।

पितामहोऽपि—

प्राङ्मुखं कारिणं कृत्वा पाययेत् प्रसृतित्रयम् ।
पूर्वोक्तेन विधानेन स्नातमात्रं स्थिरं शुचिम् ॥ इति ।

कारिणं=दिव्यकारिणं शोध्यमिति यावत् । पूर्वोक्तेन=सकलदिव्यसाधारणतया प्रागुक्तेनेत्यर्थः ।

नारदोऽपि—

अर्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु ।
एनश्च श्रावयित्वा तु पाययेत्प्रसृतित्रयम् ॥ इति ।

एनः=पापम् । तच्च तत्फलाभिधानमुखेन तेनैव दर्शितम्—

स्वेच्छया यः पिबेत्कोशं न क्वचिद्दूषितो नरः ।
न संवदेन्नरो लोभात् श्वित्री भवति दुर्मतिः ॥
जानानः कामकारेण कोशं पीत्वा विसंवदेत् ।
दरिद्रो व्याधितो मूर्खः सप्तजन्मनि जायते ॥ इति ।

सशिरस्केऽभियोगे अभियोक्तुः श्राव्यमनिष्टमप्याह—

स एव,

बलात्कोशं हि यो दत्त्वा हितमिच्छेत चात्मनः ।
स विनाशी भवेत्तस्य तच्च कार्यं न सिद्ध्यति ॥ इति ।

एवं यस्य कस्य चिदुग्रदेवस्य स्नानोदकमाहृत्य कोशानुष्ठाने प्राप्ते नियमार्थमाह—

पितामहः,

भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् ।
समभावे तु देवानामादित्यस्य तु पाययेत् ॥
दुर्गायाः पाययेच्चोरान् ये च शस्त्रोपजीविनः ।
भास्करस्य तु यत्तोयं ब्राह्मणं तत्र पाययेत् ॥ इति ।

उग्रदेवतायुधानि स्नापयित्वा तदुदकं स्वल्पेऽपराधे पाययेत् ।

तथा च कात्यायनः—

स्वल्पेऽपराधे देवानां स्नापयित्वाऽऽयुधोदकम् ।
पाय्यो विकारे चाशुद्धो नियम्यः शुचिरन्यथा ॥ इति ।

पाय्यः=पाययितव्यः । नियम्यः=दण्ड्यः । आयुधग्रहणं ताम्रादिनिर्मितादित्यमण्डलस्याप्युपलक्षणम् ।

अत एव बृहस्पतिः—

यद्भक्तः सोऽभियुक्तः स्यात्तस्यैवायुधमण्डलम् ।
प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥ इति ।

अत्र विशेषमाह पितामहः—

दुर्गायाः पाययेच्छूलमादित्यस्य तु मण्डलम् ।
अन्येषामपि देवानां स्नापयेदायुधानि तु ॥ इति ।

कृतकोशपानस्य शोध्यस्य किं तत्कालमेव शुद्धिर्नेत्याह—कात्यायनः,

अथ दैवविसंवादात्रिसप्ताहं तु दापयेत् ।
अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव च ॥ इति ।

दैवविसम्वादः=दैविकव्याध्युद्भवः । दैविकव्याध्यादीनपि—स एव दर्शयति,

ज्वरातिसारविस्फोटाः शूलास्थिपरिपीडनम् ।
नेत्ररुग्भालरोगश्च तथोन्मादः प्रजायते ।
शिरोरुभुजभङ्गश्च दैविका व्याधयो नृणाम् ॥ इति ।

शुद्धिकालविधिं विष्णुरप्याह—

यस्य पश्येद्द्विसप्ताहात् त्रिसप्ताहादथापि वा ।
रोगोऽग्निर्ज्ञातिमरणं राजदण्डमथापि वा ॥
तमशुद्धं विजानीयात् तथा शुद्धं विपर्यये ।
दिव्ये च शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृपः ॥ इति ।

पितामहोऽपि—

त्रिरात्रात्सप्तरात्राद्वा द्विसप्ताहादथापि वा ।
वैकृतं यस्य दृश्येत पापकृत्स तु मानवः ॥
तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणं नैव तस्य विभावना ॥ इति ।

तत्=रोगादिवैकृतं तस्य=कृतकोशपानस्यैकस्य यदि भवेत् तदैव स पापकृदिति न किन्तु तदीयस्य सर्वस्य जनस्य मध्येऽपि यदि कस्यचिद्भवेत् तदापीत्यर्थः ।

अत एव बृहस्पतिः—

सप्ताहाद्वा द्विसप्ताहाद्यस्यार्त्तिर्न प्रजायते ।
पुत्रदारधनानां च स शुद्धः स्यान्न संशयः ॥ इति ।

याज्ञवल्क्योऽपि—

अर्वाक्चतुर्दशादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥ इति । (२।११३)

एतेषां च त्रिरात्रादीनां पक्षाणाम् अभियोगाल्पत्वमहत्त्वाभ्यां व्यवस्था ज्ञातव्या । अवधेरूर्ध्वं तु रोगाद्युद्भवेऽपि न पराजयः ।

तथा च नारदः—

ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं तु महद्भवेत् ।
नाभियोज्यस्तु विदुषा कृतकालव्यतिक्रमात् ॥ इति ।

( व्य० प० १ श्लो० ३३१ )

अत्र द्विसप्ताह इत्यवधिकालमात्रोपलक्षणम् । कृतकालव्यतिक्रमहेतोराभिधानात् । तेनैकविंशतिरात्रस्यावधिकालत्वाश्रयणे चतुर्दशरात्रादूर्ध्वमपि वैकृतोत्पत्तौ पराजयः । एवं त्रिरात्रात्सप्तरात्रात्प्रागपि वैकृतोत्पत्तौ न पराजय इति सिद्धम् ।

इति कोशविधिः ।

## अथ तण्डुलविधिः ।

तत्र पितामहः—

तण्डुलानां प्रवक्ष्यामि विधिं भक्षणचोदितम् ।
चौर्य्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ॥ इति ।

चौर्य्यग्रहणमर्थविवादप्रदर्शनार्थम् । "तदर्द्धार्द्धस्य तण्डुला" इति धनविवादे कात्यायनेनोक्तत्वात् ।

पूर्वेद्युर्यत्कर्त्तव्यं तत्स एवाह—

तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् ।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोदकेन सम्मिश्रान् रात्रौ तत्रैव वासयेत् ।
आवाहनादिपूर्वं तु कृत्वा रात्रौ विधानतः ॥ इति ।

शुचिः प्राड्विवाकः सूर्य्यस्थाने धर्मावाहनादिहोमान्तं सर्वदिव्यसाधारणविधिं कृत्वा आदित्यस्नानोदकेन शुक्लान् शालितण्डुलानाप्लाव्य रात्रावेवं कृत्वा तथैव प्रातःकालपर्य्यन्तं स्थापयेदित्यर्थः । स्नानोदकं देवताया इत्याह—

कात्यायनः,

देवतास्नानपानीयादिग्धतण्डुलभक्षणम् । इति ।

प्रातःकर्त्तव्यमपि स एवाह—

प्रभाते कारिणे देया आदित्याभिमुखाय तु । इति ।

कारिणे=शोध्याय । देयाः तण्डुला इत्यनुषङ्गः । भक्षणं च सोपवासेन

सूर्य्यालयमध्य एव कर्त्तव्यमित्याह—

बृहस्पतिः,

सोपवासः सूर्य्यगृहे तण्डुलान् भक्षयेच्छुचिः । इति ।

शोध्यानुष्ठेयमनुवादव्याजेन दर्शयति पितामहः—

प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ।
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्ततः ॥ इति ।

भक्षयित्वा=भक्षणं कारयित्वा । हेतुमतो णिजन्तस्य भक्षेरयं प्रयोगः । पत्रे विशेषं—

स एवाह,

भूर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य तु । इति ।

शुद्ध्यशुद्ध्यवधारणोपायं स एवाह—

शोणितं दृश्यते यस्य हनुस्तालु च शीर्यते ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥ इति ।

बृहस्पतिरपि—

शुद्धः स्याच्छुक्लनिष्ठीवी रक्तमिश्रे तु दोषभाक् । इति ।

कात्यायनोऽपि—

शुक्लनिष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथा । इति ।

इति तण्डुलविधिः ।

## अथ तप्तमाषविधिः ।

तत्र पितामहः—

तप्तमाषस्य वक्ष्यामि विधमुद्धरणे शुभम् ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥
चतुरङ्गुलखातं तु मृन्मयं वापि मण्डलम् ।

मण्डलं=सूर्य्यमण्डलाकार वर्त्तुलमिति यावत् । एतादृशं पात्रं घृततैलाभ्यां पूरयेदित्याह—

स एव,

पूरयेद् घृततैलाभ्यां पलैर्विंशतिभिस्तु तत् ।
सुवर्णं माषकं तस्मिन् सुतप्ते निक्षिपेत्ततः ॥
अङ्गुष्ठाङ्गुलियोगेन तप्तमाषकमुद्धरेत् ॥ इति ।

सुवर्णं मासकं कर्षषोडशांशप्रमाणम् । सुवर्णग्रहणं रूप्यमाषनिवृत्त्यर्थम् । तन्माषपरिमितं हिरण्यं ताम्रं वा पिण्डीकृत्य निक्षिपेत् । अङ्गु-

ष्ठाङ्गुलियोगेन=अङ्गुष्ठतर्जनीमध्यमाभिरित्यर्थः । इदं च तप्तमाषोद्धरणं प्राड्विवाकेन घृततैलयोस्तापे समारब्धे धर्मावाहनादिशोध्यशिरः पत्रारोपणान्तं सर्वसाधारणं कर्म विधाय "त्वमग्ने ! वेदाश्चत्वार" इत्याहिना अग्निदिव्यप्रकरणोक्तेन मन्त्रेणाभिमन्त्र्य कारयितव्यम् । शोध्यस्तु याज्ञवल्क्योक्तेन "त्वमग्ने ! सर्वभूतानाम्" इत्यादिमन्त्रेणाभिमन्त्र्य तप्तमाषमुद्धरेत् ।

अत एव बृहस्पतिः—

समुद्धरेत्तैलघृतात्सुतप्तात्तप्तमाषकम् । इति ।

कल्पान्तरमाह स एव—

सौवर्णे राजते ताम्र आयसे मृन्मयेऽपि वा ।
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥
सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोभनाम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमद्वीचितरङ्गाढ्ये ह्यनखस्पर्शगोचरे ।
परीक्षेदार्द्रपर्णेन चुरुकारं सघोषकम् ॥ इति ।

ततः प्राड्विवाको धर्मावाहनादिपत्रारोपणान्तं साधारणं कर्म कृत्वा घृतमभिमन्त्रयेत् । मन्त्रस्तु तेनैव दर्शितः—

ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रममृतं घृत ! त्वं यज्ञकर्मसु ॥
दह पावक ! पापं त्वं हिमशीतोऽशुचौ भव । इति ।

ततः प्राड्विवाकः शोध्येन "त्वमग्ने ! सर्वभूतानां" इत्यादि मन्त्रेणाभिमन्त्रणं कारयित्वा मुद्रिकां ग्राहयेदित्याह—

स एव,

उपोषितं ततः स्नातमार्द्रवाससमागतम् ।
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ॥
प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः । इति ।

अत्र तर्जन्यैव मुद्रिकोद्धरणं कार्य्यम् । तस्याः परीक्षाभिधानात् । पक्षद्वयेऽपि शुद्ध्यवधारणोपायं

बृहस्पतिराह,

कराग्रं यो न धुनुयात् विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण पितामहवचो यथा ॥ इति ।

कालिकापुराणेऽपि—

न धुनेद्यः कराग्रं तु यस्य रक्तं न जायते ।
विस्फोटाद्यैस्तथा दोषैः स शुद्धो यस्य चोज्झितम् ॥ इति ।

रक्तं=रक्तवर्णम् । यस्य कराग्रं विस्फोटाद्यैरुज्झितमित्यन्वयः ।

पितामहोऽपि—

यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः । इति ।

इति तप्तमाषविधिः ।

## अथ फालविधिः ।

बृहस्पतिः—

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥ इति ।

एवंविधं फालं प्रतिष्ठितेऽग्नौ प्रक्षिप्य प्राड्विवाको धर्मावाहनादि-शोध्यशिरःपत्रारोपणान्तं साधारणं कर्म कृत्वा "त्वमग्ने" इत्यादिना प्रागुक्तमन्त्रेणाभिमन्त्र्य शोध्येन "त्वमग्ने ! सर्वभूतानां" इत्यादिना प्रागुक्तमन्त्रेणामन्त्रणं कारयित्वा लेहयेत् ।

तथा च स एव—

अग्निवर्णं ततश्चौरं जिह्वया लेहयेत्सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥ इति ।

इति फालविधिः ।

## अथ धर्मजाविधिः ।

तत्र पितामहः—

अधुना सम्प्रवक्ष्यामि धर्माधर्मपरीक्षणम् ।
हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ॥ इति ।

हन्तॄणामिति साहसाभियोगेषु, याचमानानामित्यर्थाभियोगेषु, प्रायश्चित्तार्थिनां नृणामिति पातकाभियोगेषु एतद्दिव्यं भवतीति सूचितम् । धर्माधर्मप्रकारमाह—

स एव,

राजतं कारयेद्धर्ममधर्मं सीसकायसम् ।
लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ ।
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ॥
सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् ।
एवंविधायोपलिप्य पिण्डयोस्तौ निधापयेत् ॥
गोमयेन मृदा वापि पिण्डौ कार्य्यौ समन्ततः ।
मृद्भाण्डके उपहृते स्थाप्यौ चानुपलक्षितौ ॥

उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ ।
आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् ॥
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ।
यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे ॥

इति मन्त्रं शोध्यो ब्रूयात् । अहमिति मन्त्रलिङ्गात् । बृहस्पतिरपि—

पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ ।
जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥
आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।
अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥
समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ ।
ततः कुम्भात्पिण्डमेकं प्रगृह्णीतानुयाचितः ॥
धर्मे गृहीते शुद्धः स्यात् स पूज्यश्च परीक्षकैः । इति ।

जीवदानादिकैर्मन्त्रैः "माप्रगामपथोवयं" इत्यादिसूक्तपठितै ऋङ्मन्त्रैः । अन्यैर्वा आगमोक्तैः प्राणप्रतिष्ठामन्त्रैरित्यर्थः । ते च शारदातिलके उक्ताः—

पाशाङ्कुशपुटा शक्तिर्वाणीबिन्दुविभूषितः ।
पाद्याः सप्त रकारान्ता व्योमसत्येन्दुसंयुतम् ॥
तदन्ते हंसमन्त्रः स्यात्ततोऽमुष्यपदं भवेत् ।
प्राणा इति वदेत् पश्चादिह प्राणास्ततः परम् ॥
अमुष्य जीव इह तु स्थितोऽमुष्यपदं भवेत् ।
सर्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः ॥
श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं चिरम् ।
तिष्ठन्त्वग्निवधूरन्ते प्राणमन्त्रोऽयमीरितः ॥
प्रत्यमुष्यपदात्पूर्वं पाशाद्यानि प्रयोजयेत् ।
प्रयोगेषु समाख्यातः प्राणमन्त्रो मनीषिभिः ॥ इति ।

इति धर्मजविधिः ।

## अथ शपथविधिः ।

तत्र मनुः—

महर्षिभिश्च देवैश्च कार्य्यार्थं शपथाः कृताः ।
(१)वसिष्ठश्चापि शपथं शेपे वै यवने नृपे ॥ इति । (८।११०)

---

(१) वशिष्ठोऽपि पुत्रशतमनेन भक्षितमिति विश्वामित्रेणाक्रुष्टः स्वपरिशुद्धयेऽपि यवनापत्ये सुदाम्नि राजनि शपथं चकार । अत्र शपधातुः करोत्यर्थः । धातूनामनेकार्थत्वात् । इति कुल्लूकभट्टः ।

नारदोऽपि—(व्य० प० १ श्लो० २४३।२४४)

शपथा अपि देवानामृषीणां च महात्मनाम्।
(१) वसिष्ठः शपथं लेभे यातुधाने तु शङ्कितः॥
महर्षयस्त्वथेन्द्रश्च पुष्करार्थे निबोधिताः।
शेपुः शपथमव्यग्राः परस्परविशुद्धये॥ इति।

शपथे विशेषमाह मनुः—(८।११३)

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः॥ इति।

व्याख्यातमेतत् पूर्वमेव।

बृहस्पतिरपि—

सत्यवाहनशस्त्राणि गोबीजकनकानि च।
देवब्राह्मणपादाश्च पुत्रदारशिरांसि च॥
एते च शपथाः प्रोक्ता मुनिभिः स्वल्पकारणे॥ इति।

पुत्रदारादीनां शिरःस्पर्शः कार्य्यः।

तथा च मनुः—

पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत् पृथक्। इति। (८।११४)

स्पर्शनं च दक्षिणकरेण कुर्य्यात्।

तथा च कात्यायनः—

यत्रोपदिश्यते कर्म कर्त्तुरङ्गं न तूच्यते।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः॥ इति।

शपथे कृते कियता कालेन शुद्धिरवधारणीयेत्याकाङ्क्षायां शुद्धिप्रकारमाह—

स एव,

आचतुर्दशकादह्नो यस्य नो राजदैविकम्।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः॥ इति।

व्यसनमापत्। घोरम्=अतिपीडाकरम्। अल्पस्य शरीरधर्मत्वात्। तच्च प्रागुक्तरोगादि। अत्राह्नो दिवसस्य योऽयं चतुर्दशभागस्तस्मादर्वाग् व्यसनं न जायते स शपथे शुचिरित्यर्थः। कर्त्तव्यस्य शपथस्य स्वल्पविषयत्वेन बह्ववधेरनुचितत्वात्।

यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च।
न चार्त्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः॥ (८।११५)

---

(१) वशिष्ठः शपथं शेपे यातुधानेन शङ्कितः।
सप्तर्षयस्तथेन्द्रेण पुष्करार्थेन शङ्किताः॥ इति मु० ना० स्मृ० पाठः।

इति मनुना शीघ्रमेव शुचेरभिधानाच्च । मिथ्याशपथकरणे दोषमाह—
यमः,

कृत्वा मृषा तु शपथं कीटस्य वधसंयुतम् ।
अनृतेन च युज्येत वधेन च तथा नरः ॥
तस्मान्न शपथं कुर्यान्नरो मिथ्या वधेप्सितम् । इति ।

कीटस्येति यज्जन्तुवधेऽल्पदोषस्तस्योपलक्षणम् । तेनात्यन्तानुपयुक्तकीटादीनामपि वधसंयुक्तः शपथोऽनर्थहेतुः । तद्वधपापेन मृषाशपथकर्त्ता युज्यत इत्यर्थः । यत्तु स्मृतितत्त्वे प्राणिमात्रोपलक्षणमित्युक्तम् । तदयुक्तम् । ब्राह्मणादीनां प्राणित्वेन सङ्ग्रहान्मिथ्याशपथकरणे तद्वधजनितदोषप्रसङ्गात् ।

मनुरपि—

न वृथाशपथं कुर्यात् स्वल्पेऽप्यर्थे नरो बुधः ।
वृथा हि शपथं कुर्वन् प्रेत्य चेह च नश्यति ॥ इति (८।१११)

अत्र शपथानामपि दिव्यत्वादुपवासादिसाधारणदिव्यविधिरत्रातिदेष्टव्यः । यत्तु स्मृतितत्त्वव्यवहारचिन्तामणिकाराभ्यां शपथानां दिव्यभेदेऽनुपन्यासाद्धटादिमध्ये परिगणनाभावाच्च न दिव्येतिकर्त्तव्यताया अतिदेश इत्युक्तम् । तदप्यसत् । पूर्वनारदादिवचनैः शपथानामपि दिव्यत्वस्योक्तत्वात्, घटादिपरिगणनवाक्यस्योपलक्षणत्वेन व्याख्यातत्वाच्च । किञ्च त्वदुक्तदिव्यलक्षणस्यापि सत्त्वाच्च त्वयापि तेषां दिव्यत्वमङ्गीकर्तव्यम् । अन्यथा तल्लक्षणमव्याप्तं स्यात् । तस्मात् शपथानामपि दिव्यत्वादस्त्येव दिव्यधर्मातिदेश इत्यलम् ।

इति शपथविधिः समाप्तः ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमञ्जरीनीराजितचरणकमल-
श्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनु-
श्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदय-
पुण्डरीकविकासदिनकर-
श्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मज-श्रीपरशुराममिश्रसूनुसकलवि-
द्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्र
विद्वज्जनजीवातु-
श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशे
प्रमाणनिरूपणाख्यं द्वितीयं प्रकरणम् ॥ २ ॥



एवं लौकिकालौकिकेषु प्रमाणेषु निरूपितेषु प्रमेयाणि व्यवहारपदानि निरूप्यन्ते तृतीये प्रकरणे । तेषां चोद्देशो व्यवहारभेदप्रदर्शनप्रस्तावे "ऋणादानं ह्युपनिधिः" इत्यादि नारदवचनेन दर्शितः ।

मनुरपि—( अ० ८ )

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।
सम्भूय च समुत्थानं दत्तस्यानपकर्म च ॥ (४)
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥ (५)
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयं च साहसं चैव स्त्रीसङ्ग्रहणमेव च ॥ (६)
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥ इति । (७)

यद्यपि नारदवचने "द्यूतं प्रकीर्णकं चैव" इत्यष्टादशपदान्युक्तानि । तथापि प्रकीर्णकपदेनोपयुक्तशेषाभिधानाद्राज्ञैव स्वाज्ञातिक्रमादौ परेण कृते प्रतिवादित्वमास्थाय निर्णेतव्यम् । यच्च ऋणादिषु पूर्वोक्तव्यवहारपदेषु नोक्तं तत्सर्वं प्रकीर्णकमिति नारदेनैव तल्लक्षणकरणाद्व्यवहर्तृसम्बन्धनियमाभावान् मनुना प्रकीर्णकस्य व्यवहारपदत्वानुक्तिरिति ध्येयम् । द्यूताह्वययोस्तु अप्राणिपाशादिकृतत्वप्राणिमल्लमेषादिकृतत्वमात्रभेदादेकपदत्वविवक्षयाऽष्टादशसङ्ख्योपपादनीया । अन्यथोनविंशतिसङ्ख्यत्वापत्तेः । यथा सपणक्रीडत्वेन तयोरभेदविवक्षयैक्यमुक्तं तथा पारुष्यरूपेण वाग्दण्डपारुष्ययोरप्यैक्यविवक्षा सम्भवति तथापि तन्न विवक्षितम् । स्वतन्त्रेच्छस्य पर्यनुयोगानर्हत्वात् । मनुना द्विवचनप्रयोगान्नारदादिनिबन्धनेषु पृथङ्निर्देशाच्च ।

ननु पारुष्यद्वयस्य वक्ष्यमाणसाहसविशेषत्वात्पदान्तरत्वोक्तिरयुक्ता । सत्यम् । बलावष्टम्भेन क्रियमाणस्य तस्य साहसत्वं छलकृतस्य तु साहसलक्षणाभावात्पदान्तरत्वम् ।

तथाचाह नारदः—

तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र तूच्यते ।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु ॥
(व्य० प० १४ श्लो० १२)

तस्येति पूर्वोक्तं साहसं परामृष्टम् । आधिरर्थाहरणद्वारा क्रियमाणः परस्य मानसः क्लेशः । "पुंस्याधिर्मानसी व्यथा" इति कोशात् । स आ-

क्रम्य=बलावष्टम्भेन विधीयमानः साहसमित्युच्यते । छलेन तु विधीयमान आधिः स्तेयमित्युच्यत इत्यर्थः । नन्वनेन स्तेयस्य साहसाद्भेद उपपादितो न पारुष्यद्वयस्य । सत्यम् । नारदेन स्वयं व्यवहारपदेन पृथगनुद्दिष्टस्यापि स्तेयस्य साहसादुपपादिते भेदे पृथगुद्दिष्टस्य पारुष्यद्वयस्य सुतरां ततः स उन्नेतुं शक्य इत्यभिप्रायो नारदस्य ।

तदुक्तं सङ्ग्रहकारेणापि—

मनुष्यमारणादीनि कृतानि प्रसभं यदि ।
साहसानीति कथ्यन्ते यथाख्यान्यन्यथा पुनः ॥

अन्यथा पुनः=यद्यप्रसभं कृतानि तदा यथाख्यानि=स्वस्वाख्यानि स्तेयस्त्रीसङ्ग्रहणवाक्पारुष्यदण्डपारुष्यसंज्ञकानि भवन्तीत्यर्थः । अत एव मनुना स्तेयस्त्रीसङ्ग्रहणे अपि व्यवहारपदत्वेन साहसात् पृथगुद्दिष्टे । नारदेन तु तयोः प्रायेण लोके छलेनैव क्रियमाणत्वात्पदान्तरत्वं स्फुटमित्यनुक्त्वा साहसत्वमस्फुटमिति तदेवोक्तम् । वाक्पारुष्यदण्डपारुष्ययोस्तु विपरीतम् । प्रायेण ते प्रसभमेव क्रियमाणे लोके दृश्येते । छलेन तु तयोः करणं साहसभेदापादकं स्फुटमिति तद्व्यक्तीकरणाय ते एव साहसात्पृथगुपदिष्टे । अत एव तेनाप्राणिप्राणिकृतत्वविशेषापुरस्कारेण समाह्वयोऽपि द्यूतत्वेनैवोद्दिष्ट इति ध्येयम् । यद्यप्युपनिधिनिक्षेपयोरपि तत्प्रकरणवक्ष्यमाणरीत्यावान्तरभेदोऽस्ति तथापि तमविवक्षित्वा मनुनारदाभ्यां पर्यायत्वेनैव द्वयं विवक्षितम् । एतयैव दिशा स्मृत्यन्तरयोरप्यविरोध उन्नेयः । एवं व्यवहारपदानां प्रातिस्विकानि लक्षणानि तदवान्तरभेदाश्च तत्तत्स्थाने व्यक्तीकरिष्यामः ।

बृहस्पतिः—

पदान्यष्टादशैतानि धर्मशास्त्रोदितानि तु ।
मूलं सर्वविवादानां ये विदुस्ते परीक्षकाः ॥ इति ।

यत्तु नारदेन—

एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं स्मृतम् ।
क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते ॥ इत्युक्तम् (अ०१श्लो०२०)

यच्च कात्यायनेन—

अष्टादशक्रियाभेदाद्भिन्नान्यष्टसहस्रशः । इति ।

तत्र क्रियाभेदात्=साध्यभेदादित्यर्थः । तद्द्वयमप्यवान्तरभेदभूयस्त्वाभिप्रायेणप्रकीर्णप्रकारप्राचुर्याभिप्रायेण चेत्यष्टादशत्वाविघातः। अत एवाष्टोत्तरशतसङ्ख्यात्वाष्टोत्तरसहस्रसङ्ख्यत्वयोरपि नारदकात्यायनोक्तयोः प्रकारभूयस्त्वमात्रपरत्वादविरोधः ।

इति व्यवहारपदानामुद्देशः ।

एषां सामान्यलक्षणं तु "स्मृत्याचारव्यपेतेन" इत्यादि योगीश्वरवचनेन व्यवहारसामान्यलक्षणप्रस्तावप्रदर्शितेन प्रकटितम्। व्यवहारस्य=चतुष्पाद्व्यवहारस्य पदं=विषय इति योगव्युत्पत्त्यापि तदेव पर्य्यवस्यति।

यत्तु बृहस्पतिना—

पदाङ्गसहितस्त्वेष व्यवहारः प्रकीर्त्तितः।
विवादकारणान्यस्य पदानि शृणुताऽधुना॥

इति विवादकारणत्वं लक्षणमुक्तं, तदपि विषयस्यापि कारणत्वादविरुद्धमिति।

अथ क्रमश ऋणादानादीनि अष्टादश व्यवहारपदानि निरूपयिष्यता प्रथमं तावत् ऋणाख्यमाद्यं पदं निरूप्यते।

बृहस्पतिः—

पदाङ्गसहितस्त्वेष व्यवहारः प्रकीर्त्तितः।
विवादकारणान्यस्य पदानि शृणुतानि तु॥
ऋणादानोद्ग्रहादीनि द्यूताह्वानान्तिकानि च।
क्रमशः सम्प्रवक्ष्यामि क्रियाभेदांश्च तत्त्वतः॥ इति।

तस्य सप्तविधत्वं दर्शयन् स्वरूपमाह—

नारदः,

ऋणं देयमदेयं च येन यत्र यथा च यत्।
दानग्रहणधर्माश्च ऋणादानमिति स्मृतम्॥ इति।
(व्य०प०१श्लो०१)

तत्राधमर्णे पञ्चविधम्—ईदृशमृणं देयम; ईदृशमदेयम्, अनेनाधिकारिणा देयम्, अस्मिन् समये देयम्, अनेन प्रकारेण देयमिति। उत्तमर्णे द्विविधो दानविधिरादानविधिश्चेति। एवं समुदितं सप्तप्रकारं यस्मिन्विवादविषये तदृणादानाख्यव्यवहारपदमित्यर्थः। तत्रेतरेषां दानविधिपूर्वकत्वादादौ दानविधिरुच्यते।

तत्र बृहस्पतिः—

परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम्।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा॥ इति।

परिपूर्णं=सवृद्धिकमूलद्रव्यपर्य्याप्तम्। आधिबन्धकम्। तद्विषये विशेषोऽग्रे वक्ष्यते। नन्वाधिबन्धयोरेकार्थत्वेन लोकप्रसिद्धत्वात्कथं बन्धं वेत्युक्तिरित्याशङ्क्यात्र विवक्षितं बन्धशब्दस्यार्थमाह—

नारदः,

निक्षेपो मित्रहस्तस्थो बन्धो विश्वासकः स्मृतः। इति।

उत्तमर्णस्य विश्वासहेतुस्तन्मित्रहस्तस्थो निक्षेप एव बन्धशब्देनोच्यत इत्यर्थः । तत्रापि विशेषोऽग्रे वक्ष्यते । लग्नकः=प्रतिभूः । तथा चायमर्थः । उत्तमर्णः परिपूर्णमाधिं बन्धं वा समीचीनलग्नकं वाधमर्णहस्तलिखितं साक्षियुक्तं वा पत्रं गृहीत्वा ऋणं दद्यात् । ऋणशब्दसमानार्थककुसीदशब्दार्थप्रदर्शनव्याजेन तत्प्रयोजनमाह—

नारदः,

स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते ।
तत्कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम् ॥ इति ।
( ऋ०प०१श्लो०९८)

स्थानं=मूलधनस्यावस्थितिः, लाभो=वृद्धिः तन्निमित्तं तत्प्रयोजनमित्यर्थः । कुसीदशब्दस्यावयवार्थं दर्शयति—

बृहस्पतिः,

कुत्सितात्सीदतश्चैव निर्विशङ्कैः प्रगृह्यते ।
चतुर्गुणं चाष्टगुणं कुसीदाख्यमृणं ततः ॥
कुत्सितात्सीदत इत्येते अधमर्णविशेषणे ।

वृद्धिप्रकारान् स एवाह—

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधान्यैः प्रकीर्त्तिता ।
षड्विधान्यैः समाख्याता तत्त्वतस्तां निबोधत ॥ इति ।

षड्विधा मे इति क्वचित्पाठः । तत्र मे=मम मते । तान् प्रकारान्—

स एवाह,

कायिका कालिका चैव चक्रवृद्धिरतोऽपरा ।
कारिता सशिखा वृद्धिर्भोगलाभस्तथैव च ॥ इति ।

स्वरूपमेतेषां स एवाह—

कायिका कर्मसंयुक्ता मासग्राह्या तु कालिका ।
वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता ॥
प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता ।
गृहात्तोषः फलं क्षेत्राद्भोगलाभः प्रकीर्त्तितः ॥ इति ।

कायिका कर्मसंयुक्ता=यत्र बन्धकीकृतस्य गवाश्वादेर्दोहनवाहनादिकं कायिकं कर्म वृद्धित्वेन परिकल्पितं तत्र सा कायिकेत्यर्थः ।

तथा च व्यासः—

दोह्यवाह्यकर्मयुता कायिका समुदाहृता । इति ।

मदनरत्ने तु भोग्याधितया स्थापितस्य यो दोहनवाहनादिकर्मरूपो

भोगस्तत्सहिता या वृद्धिः सा कायिकेत्युक्तम्। मासग्राह्या तु कालिका=प्रतिमासं लभ्या या वृद्धिः सा कालिकेत्यर्थः।

प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मता। (व्य०प०१।१०३)

इति नारदवचनात्। वृद्धेर्वृद्धिश्चक्रवृद्धिः=वृद्धेरपि प्रतिमासं मूलभावेन पुनर्वृद्धिरित्यर्थः।

वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता। (व्य०प०१।१०४)

इति नारदवचनात्। कारिता ऋणिना कृता=ऋणिनाऽधमर्णेन स्वेच्छया कृता वृद्धिः कारितेत्यर्थः।

वृद्धिः सा कारिता नाम यर्णिकेन स्वयं कृता। (व्य०प०१।१०३)

इति नारदवचनात्। अधमर्णकारितैव वृद्धिर्देया नोत्तमर्णकारिता।

तथा च बृहस्पतिः—

ऋणिकेन तु या वृद्धिरधिका सम्प्रकल्पिता।
आपत्कालकृता नित्यं दातव्या सा तु कारिता॥
अन्यथा कारिता वृद्धिर्न दातव्या कथञ्चन। इति।

उत्तमर्णप्रलोभनार्थम् आपत्काले शास्त्रोक्तादधिका स्वयं कल्पिता या सा वृद्धिर्दातव्या न पुनरेवंविधा धनिकेन कारिता दातव्येत्यर्थः। प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता=प्रतिदिनलभ्यात्माशिखासादृश्याच्छिखावृद्धिरिति व्यपदिश्यत इत्यर्थः। किं पुनः शिखासादृश्यं वृद्धेरित्याकाङ्क्षायां—

बृहस्पतिरेवाह,

शिखेव वर्द्धते नित्यं शिरश्छेदान्निवर्त्तते।
मूले दत्ते तथैवैषा शिखावृद्धिस्तु सा स्मृता॥ इति।

प्रत्यहं गृह्यत इति अधमर्णप्रतिश्रुतदिनसङ्ख्यया वृद्धिग्रहणकालोपलक्षणम्।

तथा च कात्यायनः—

प्रतिकालं ददात्येव शिखावृद्धिस्तु सा स्मृता। इति।

गृहात्तोषः फलं क्षेत्राद्भोगलाभः प्रकीर्त्तितः=बन्धकीकृताद्गृहान्निवासादिजनितः सन्तोषः, क्षेत्रात् शस्यादिफलं च भोगलाभाख्यो वृद्धिप्रकार इत्यर्थः। गृहक्षेत्रग्रहणं स्थावरात्मकभोग्याधेरुपलक्षणार्थम्।

अत एव कात्यायनः—

आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पितः।
प्रयोगे यत्र चैवं स्यादाधिभोगः स उच्यते॥ इति।

यस्मिन्नृणादानप्रयोगे स्थावरोपभोग आधित्वेन परिकल्पितस्तत्र

सा वृद्धिराधिभोग इत्युच्यत इत्यस्यार्थः। अपरार्कादौ गृहात्स्तोमः शदः क्षेत्रादिति पाठः। स्तोमो भाण्डक इति कल्पतरौ । शदः=शस्यादिफलम् । वृद्धेः परिमाणं दर्शयति—

मनुः,

वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम् ।
अशीतिभागं गृह्णीयात् मासाद्वार्धुषिकः शते ॥ इति । (८।१४०)

निष्कशते प्रयुक्ते मासस्य सपादनिष्कपरिमितां वृद्धिं वार्धुषिको वृद्ध्यर्थं गृह्णीयादित्यर्थः । एतत्सबन्धकविषयम् ।

अत एव याज्ञवल्क्यः,

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥ इति ॥ (२।३७)

सबन्धके प्रयुक्तस्य द्रव्यस्याशीतितमो भागो वृद्धिः । पणशते प्रयुक्ते सपादः प्रतिमासं वर्द्धत इत्यर्थः । अन्यथा=बन्धकराहित्ये वर्णक्रमात्=ब्राह्मणादिवर्णक्रमेण द्वित्रिचतुःपञ्चकं शतं धर्म्यं भवति । द्वौ वा त्रयो वा चत्वारो वा इति द्वित्रिचतुःपञ्चा अस्मिन् शते वृद्धिर्दीयत इति द्वित्रिचतुःपञ्चकं शतम् । "तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते" इति कन् । (५।१।४७) तथा चायमर्थः। बन्धकराहिते पणशते प्रतिमासं ब्राह्मणात्पणद्वयं, क्षत्रियात् पणत्रयं, वैश्यात्पणचतुष्टयं, शूद्रात्पणपञ्चकं ग्राह्यम् । यत्तु मनुनोक्तम्—

द्विकं शतं वा गृह्णीयात्सतां धर्ममनुस्मरन् । (८।१४१)

इति, तद्व्यवस्थितविकल्पविषयम् ।

अत एव व्यासः—

सबन्धे भाग आशीतः षाष्ठो भागः सलग्नके ।
निराधाने द्विकशतं मासलाभ उदाहृतः ॥ इति ।

सबन्धे=आधिसहिते आशीतः=अशीतितमः । षाष्ठः=षष्टितमः । सलग्नकः=सप्रतिभूः । निराधाने=बन्धकरहिते । आधानग्रहणं प्रतिभुवोऽप्युपलक्षणम् । कल्पतरौ साष्टभाग इति पठित्वा सलग्नके अशीतितमो भागः स्वकीयाष्टमभागसहितो मासवृद्धिरित्युक्तम् ।

मनुः—

द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम् ।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥ इति । (८।१४२)

द्विकं द्वौ वृद्धिर्दीयते यस्मिन्मूलधने तत्तथा । एवं त्रिकाद्यपि । समं मात्रयाप्यनधिकम् ।

विष्णुरपि—

अथोत्तमर्णोऽधमर्णकाद्यथादत्तमर्थं गृह्णीयात् । द्विकं त्रिकं चतुष्कं पञ्चकं शतं वर्णानुक्रमेण प्रतिमासमिति ।

अधमर्णविशेषे वृद्धिविशेषमाह याज्ञवल्क्यः—

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् । इति । (२।३८)

ऋणं गृहीत्वा कान्तारं महावनं तद्गच्छन्तीति कान्तारगाः दुर्गमवर्त्मगन्तारो वस्त्रादिक्रयकारिणः पणशतस्य दशकं प्रतिमासं दशपणान् दद्युरित्युत्तरवाक्यस्थस्यानुषङ्गः । समुद्रं तरन्तीति सामुद्राः=समुद्रगन्तारः प्रतिमासं विंशकं शतं दद्युरित्यर्थः । कारितायां तु न नियम इत्याह—

स एव,

दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु । इति । (२।३८)

सर्वे ब्राह्मणादयोऽधमर्णाः सबन्धकेऽबन्धके वा सर्वासु जातिषु उत्तमर्णभूतासु स्वयमङ्गीकृतां वृद्धिं दद्युरित्यर्थः ।

द्रव्यविशेषे वृद्धिविशेषमाह स एव—

सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा ।

वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥ इति । (२।३९)

पशुस्त्रीणां=महिषीप्रभृतीनां वृद्ध्यर्थं प्रयुक्तानां तदीया सन्ततिरेव वृद्धिः । रसस्य=घृतादेरष्टगुणा । वस्त्राणां चतुर्गुणा, धान्यानां त्रिगुणा, हिरण्यानां द्विगुणा । परेति प्रत्येकं सम्बध्यते । परा=परमा । अतः परमधिका वृद्धिर्नास्तीत्यर्थः । न च गवादीनां ऋणत्वेन दानं न सम्भवतीति वाच्यम् । तत्पोषणाद्यशक्तस्य तत्पुष्टिसन्तत्याद्यर्थिनो दानसम्भवात् । ग्रहणं तु क्षीरवाहनसेवाद्यर्थम् ।

बृहस्पतिरपि—

हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके ।

धान्ये चतुर्गुणा प्रोक्ता शदवाह्यलवेषु च ॥

उक्ता पञ्चगुणा शाके बीजेक्षौ षड्गुणा स्मृता ।

लवणस्नेहमद्येषु वृद्धिरष्टगुणा मता ॥

गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके । इति ।

कुप्यं=त्रपुसीसकादिकम् । शदः=क्षेत्रफलम् । तच्च गोबलीवर्दन्यायाद्धान्यव्यतिरिक्तं पुष्पमूलफलादिकम् । वाह्योऽश्वादिः । लवो=मेषोर्णाचमरीकेशादिः । अत्र चिरकालशब्देन प्रतिश्रुताया अशीतिभागाया वृद्धेर्यस्मिन् समये द्वैगुण्यादिप्रापकत्वं भवति ततोऽधिकः कालो

गृह्यते । यत्तु "धान्ये शदे लवे बाह्यो न" इत्यादि मनुनोक्तं, तत्प्रत्यर्पणसमये समृद्धाधमर्णविषयम् । षाड्गुण्यनिषेधपरमिति मदनरत्ने । यत्तु वसिष्ठवचनम्—

द्विगुणं हिरण्यं त्रिगुणं धान्यं धान्येनैव रसा व्याख्याताः । पुष्पमूलफलानि च तुलाधृतमष्टगुणमिति ।

तत् त्रिगुणमेव धान्यादिकं दातव्यमिति यत्र देशे स्थितिस्तद्विषयम् । दरिद्राधमर्णविषयं वा । एवमन्यत्रापि न्यूनाधिकपरमवृद्धिप्रतिपादकानि वचनानि देशविशेषविषयतया दरिद्रादिविषयतया वा व्यवस्थापनीयानि ।

व्यासोऽपि—

वदन्त्यष्टगुणान् काले मद्यस्नेहरसासवान् । इति ।

स्नेहस्तैलादिः । रसः=क्षीरादिः ।

कात्यायनोऽपि—

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम् ।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य च ॥ इति ।

विष्णुरपि—

हिरण्यस्य द्विगुणा वृद्धिस्त्रिगुणा वस्त्रस्य धान्यस्य चतुर्गुणा रसस्याष्टगुणा सन्ततिः स्त्रीपशूनामिति ।

व्यासोऽपि—

शाकपाषाणबीजेक्षौ षड्गुणा परिकीर्त्तिता । इति ।

वशिष्ठोऽपि—

वज्रशुक्तिप्रबालानां हेम्नश्च रजतस्य च ।
द्विगुणा त्विष्यते वृद्धिः कृतकालानुसारिणी ॥ इति ।

शुक्तिशब्देनात्र मुक्ताफलं लक्ष्यते । वज्रसाहचर्यात् ।

अत एव कात्यायनः—

मणिमुक्ताप्रबालानां सुवर्णरजतस्य च ।
तिष्ठति द्विगुणा वृद्धिः फलकैटाविकस्य च ॥ इति ।

कैटं=कीटोद्भवं पट्टसूत्रादि । आविकं=कम्बलादिकम् ।

वसिष्ठोऽपि—

ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च ।
त्रिगुणा तिष्ठतो वृद्धिः कालाचिरकृतस्य तु ॥ इति ।

रीतिरारकूटम् । देशभेदेन परां वृद्धिं दर्शयति—

नारदः, ( व्य०प०१ )

ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः ।
(१)देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते ॥ (१०५)
द्विगुणं त्रिगुणं चैव तथान्यस्मिंश्चतुर्गुणम् ।
तथाष्टगुणमन्यस्मिन् तत्तु देशेऽवतिष्ठते ॥ इति । (१०६)

यत्र वृद्धिविशेषो न श्रूयते तत्र द्विगुणैव ग्राह्येत्याह—

विष्णुः,

अनुक्तानां द्विगुणेति ।

अयं च द्वैगुण्यादिरूपो वृद्ध्युपरमः सकृत्प्रयोगे सकृदाहरणे वेदितव्यः ।

तथा च मनुः—

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहिता । इति । (८।१५१)

उपचयार्थं प्रयुक्तं द्रव्यं कुसीदं तस्य वृद्धिः कुसीदवृद्धिः द्वैगुण्यं नात्येति=नातिक्रामति । यदि सकृदाहिता=सकृत् प्रयुक्ता । पुरुषान्तरसङ्क्रमणादिना प्रयोगान्तरकरणे तस्मिन्नेव वा पुरुषे रेकसेकाभ्यां(२) प्रयोगान्तरकरणे द्वैगुण्यमतिक्रम्य पूर्ववद्वर्द्धत एवेत्यर्थः । द्वैगुण्यग्रहणं त्रैगुण्यादीनामुपलक्षणम् । सकृदाहृतेति पाठे यदि प्रतिमासं प्रतिवत्सरं वा न गृह्यते किन्तु सकृद्गृह्यते तदा द्वैगुण्यं नातिक्रामतीत्यर्थः ।

गौतमोऽपि—

चिरस्थाने द्वैगुण्यं प्रयोगस्येति ।

प्रयोगस्येत्येकवचननिर्देशात् प्रयोगान्तरकरणे द्वैगुण्यातिक्रमः । चिरस्थान इति निर्देशात् शनैःशनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमो भवतीति सूचितम् । उक्तस्य वृद्ध्युपरमस्य क्वचिद्द्रव्यविशेषेऽपवादमाह—

बृहस्पतिः

तृणकाष्ठेष्टकासूत्रकिण्वचर्मास्थिवर्मणाम् ।
हेतिपुष्पफलानां च वृद्धिस्तु न निवर्त्तते ॥ इति ।

किण्वं=सुराद्रव्योपादानकारणभूतो मलविशेषः । चर्म=शरादिनिवारकः फलकः । किण्वंसुराद्रव्योपादानकारणं, चर्म हरकमित्यपरार्के(३)वर्म=कवचम् । हेतिः=आयुधम् । पुष्पफलयोर्वृद्धेरनिवृत्तिः प्रतिदानवेलायामत्यन्तसमृद्धाधमर्णविषया देशविशेषविषया वा वेदितव्या । अन्यथा

(१) या देशस्थितिस्त्वन्या यत्रर्णमवतिष्ठते । इति मु० ना स्मृ०पाठः ।

(२) प्रयुक्तद्रव्यैकदेशग्रहणेन न्यूनीकरणं रेकः, तत्रैव प्रक्षेपेणाधिकीकरणं सेकः । रिचिर् विरेचने षिच क्षरणे इति धातुभ्यामनयोर्निष्पत्तिः ।

(३) फरकं फलकमिति पाठद्वयम् ।

त्रैगुणवृद्धिप्रतिपादकव्यासवचनविरोधः स्यात्।

विष्णुरपि—

किण्वकार्पाससूत्रवर्मचर्मायुधेष्टकाङ्गाराणामक्षयेति।

कार्पासे तु षड्गुणवृद्धिविधायकव्यासवचनविरोधः पूर्ववत्परिहरणीयः।

वासिष्ठोऽपि—

दन्तचर्मास्थिशृङ्गाणां मृन्मयानां तथैव च।
अक्षया वृद्धिरेतेषां पुष्पमूलफलस्य च॥ इति।

अक्षया=मूलप्रतिपादनाभावे शतगुणापि वर्द्धत एवेत्यर्थः। शिखावृद्ध्यादीनामनुपरममाह—

बृहस्पतिः,

शिखावृद्धिं कायिकां च भोगलाभं तथैव च।
धनी तावत् समादद्याद्यावन्मूलं न शोधितम्॥ इति।

न शोधितं=न प्रतिदत्तमृणिकेनेत्यर्थः। क्वचिदनङ्गीकृतापि वृद्धिर्भवतीत्याह—

विष्णुः,

यो गृहीत्वा ऋणं पूर्वं श्वो दास्यामीति सामकम्।
न दद्याल्लोभतः पश्चात्तद्दहा वृद्धिमाप्नुयात्॥ इति।

श्व इति प्रतिश्रुतस्य प्रतिदानकालावधेरुपलक्षणम्। सममेव सामकम्। अवृद्धिकमिति यावत्। योऽमुकस्मिन्दिने सममेवाहं त्वदीयं धनं दास्यामीति प्रतिज्ञाय ऋणं गृहीत्वा पश्चाल्लोभाद्विलम्बं कुर्यात् सोऽवधिदिनमारभ्य वृद्धिं दद्यादित्यर्थः। कालावध्यनङ्गीकारेण गृहीतस्य धनस्य षण्मासादूर्ध्वं वृद्धिर्भवतीत्याह—

नारदः,

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित्।
अनाकारितमप्यूर्ध्वं वत्सरार्द्धाद्विवर्द्धते॥ इति।

(व्य० प० १श्लो० १०८)

अनाकारिता=अनङ्गीकृता। प्रीतिदत्तानां प्रतियाचनप्रतिदानदिननिर्देशशून्यानामिति शेषः। अनाकारितमित्यादेरयमर्थः। वृद्धिमकृत्वा गृहीतमपि षण्मासादूर्ध्वं प्रतिदत्तं वृद्धिं प्राप्नोतीति। प्रतियाचितस्य प्रीतिदत्तस्यादाने वृद्धिविशेषमाह—

कात्यायनः,

प्रीतिदत्तं न वर्द्धेत यावन्न प्रतियाचितम्।
याच्यमानमदत्तं च वर्द्धते पञ्चकं शतम्॥ इति।

पञ्चकं=पञ्चाधिकम् । प्रतियाचनादिनमारभ्य पणशतस्य पणपञ्चकं प्रतिमासं वर्द्धत इत्यर्थः। याचितकं गृहीत्वा अप्रतिप्रदायैव देशान्तरगमने विशेषमाह—

कात्यायनः,

योयाचितकमादाय तमदत्त्वा दिशं व्रजेत् ।
ऊर्ध्वं सम्वत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥ इति ।

एतच्चाप्रतियाचितविषयम् । प्रतियाचिते याचितकमदत्त्वा यदि देशान्तरं गच्छति तदा विशेषमाह—

स एव,

कृत्वोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥ इति ।

कृत्वोद्धारं याचितकं गृहीत्वा याचितोऽप्यदत्त्वेत्यन्वयः। देशान्तरगमनाभावे तु याचितकालादारभ्य याचितकस्य वृद्धिविशेषमाह—

स एव,

स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित् ।
तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत् ॥ इति ।

ततः=प्रतियाचनकालादारभ्येत्यर्थः । एतत् कञ्चिदवधिमपरिकल्प्य याञ्चाऽप्राप्ते ज्ञेयम् । अवधिं स्वीकृत्य तदतिक्रमे त्वतिक्रमदिनमारभ्य तद्धनस्य वृद्धिर्ज्ञेया । "तद्धनं वृद्धिमाप्नुयात्" इति न्यायसाम्यात् । गृहीतपण्यस्य मूल्यमदत्त्वा देशान्तरगमने वृद्धिविशेषमाह—

स एव,

पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ॥ इति ।

एतच्चाप्रतियाचितविषयम् । प्रतियाचने त्वेतस्य निक्षिप्तवृद्धिशेषयोश्च तद्दिनमारभ्य प्रतिमासं शते पञ्चकं वर्द्धत इत्यप्याह—

स एव,

निक्षिप्तं वृद्धिशेषं च क्रयविक्रय एव च ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥ इति ।

नन्वकृतायां वृद्धौ परिमाणविशेषस्यानुक्तेः किंपरिमाणं ग्राह्यमिति चेत्, 'अशीतिभागो वृद्धिः स्यात्' इत्यादि याज्ञवल्क्याद्युक्तपरिमाणं ग्राह्यमिति ब्रूमः ।

अत एव विष्णुः—

वृद्धिं दद्युर्वत्सरातिक्रमे यथाभिहिताम् । इति ।

वत्सरातिक्रम इति यत्र यदतिक्रमे वृद्धिरुक्ता तस्योपलक्षणम् । यथाभिहितां धर्मशास्त्रे इति शेषः । धर्मशास्त्रे यथोक्ता तथाविधामित्यर्थः । ननु यथाभिहितां दद्यादित्यर्थः कस्मान्न भवति ? अतिप्रसङ्गापत्तेः ।

कृतानुसारादधिका व्यतिरिक्ता न सिद्ध्यति ।
कुसीदपथमाहुस्तं पञ्चकं शतमर्हति ॥ (८।१५२)

इति मनूक्तेश्च । अस्यार्थः । शास्त्रविधिनियमितशास्त्रकृतवृद्ध्यनुसारी यो वृद्धिग्रहणे लौकिकानां समाचारः स कृतानुसारः तस्मादधिका वृद्धिरुत्तमर्णादेरकृतवृद्धौ न सिद्ध्यति यतः सा व्यतिरिक्ता=धर्मशास्त्रबाह्या । अत एव कुसीदपथमाहुस्तं न धर्मपथमिति । पञ्चकं शतमर्हतीति प्रतियाचितविषयमिति स्मृतिचन्द्रिकायाम् । पूर्वोक्ताच्छास्त्रानुसारादधिकाऽधमर्णेनाकृता वृद्धिर्न सिध्यति । यतः कुसीदपथमाहुस्तम् । यदा तु व्यवहारावष्टम्भादुत्तमर्णोऽधिकमधमर्णेनाकारितं लाभमिच्छति तदा ब्राह्मणे पञ्चकं शतं ग्रहीतुमर्हति न ततोऽधिकमधमर्णाकारितमित्यर्थमाह रत्नाकरः । अकृतवृद्धेरपवादमाह—

नारदः,

पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः ।
वृथादानाक्षिकपणा वर्द्धन्ते नाविवक्षिताः ॥ इति । (अ०२।३६)

पण्यस्य=वस्त्रादेर्मूल्यम् । भृतिर्वेतनम् । न्यासो=निक्षेपः । वृथादानं=वेश्यादिभ्यः प्रतिश्रुतम् । आक्षिकपणो=द्यूनद्रव्यम् । अविवक्षिताः=अनाकारिताः । अत्र पण्यमूल्यस्य वृद्धेरभावोक्तिः प्रवासप्रतियाचनयोरभावे वेदितव्या । अन्यथा पूर्वोक्तकात्यायनवचनेन विरोधः स्यात् । न्यासस्य च वृद्ध्यभाववचनं प्रतियाचनाभावे,

न वृद्धिः स्त्रीधने लाभे निक्षिप्ते च यथास्थिते ।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात् स्वयंकृता ॥

इति संवर्त्तवाक्ये यथास्थित इतिविशेषणोपादानाद्य त्यन्यथाकरणाभावे च ज्ञातव्यम् । तथा च "निक्षिप्तं वृद्धिशेषं च" इत्यादिपूर्वोक्तकात्यायनवचनविरोधो नेति ।

कात्यायनोऽपि—

वर्मशस्यासवद्यूते पण्यमूल्ये च सर्वदा ।
स्त्रीशुल्केषु न वृद्धिः स्यात्प्रातिभाव्यागतेषु च ॥ इति ।

सर्वदेत्यनेन प्रतियाचनादेः परस्तादपि वृद्धिरकृता नास्तीत्युक्तम् । यद्यपि सर्वदेति सर्वशेषत्वात्पण्यमूल्येऽपि प्रतियाचनादेः परस्तादकृतवृद्ध्युपरमः प्रतिभाति । तथापि पूर्वोक्तकात्यायनवचनविरोधान्न तच्छे-

ता सर्वदेत्यस्य । एवं च पूर्वोक्त एव परिहारः । एवं चर्मणोऽपि वृ-
ग्रभावोक्तिः प्रतियाचनाभावे । तथा च न तच्छेषतापि । एवं च
पूर्वोक्ताक्षयवृद्धिप्रतिपादकवसिष्ठादिवचनविरोधः । अन्यत्रापि वृ-
ाभावं—
यास आह,

प्रातिभाव्यं भुक्तबन्धमगृहीतं च दित्सतः ।
न वर्धते प्रपन्नस्य दमः शुल्कं प्रतिश्रुतम् ॥ इति ।

भुक्तबन्धमित्यनेन स्थापितस्य गुप्ताधेर्वस्त्रालङ्कारादेरुपभोगे वृद्धिर्न
ातीत्युक्तम् ।
त एव गौतमः—

भुक्ताधिर्न वर्धते वस्त्रालङ्कारादिरिति ।

अगृहीतं च दित्सत इति । दित्सतः=प्रतिदातुमिच्छोरधमर्णादुत्तमर्णो
लोभादिवशान्न गृह्णाति तदा तस्य कृतापि वृद्धिस्तद्दिनादारभ्य
येत्यर्थः ।

च याज्ञवल्क्यः—

दीयमानं न गृह्णाति प्रयुक्तं यत् स्वकं धनम् ।
मध्यस्थस्थापितं चेत्स्याद्वर्द्धते न ततः परम् ॥ इति । (२।४४)

मध्यस्थस्थापितमिति विशेषणेनाधमर्णो यदि स्वनिकटे स्थापयति त-
वत्येव वृद्धिरिति ।

तदेवं प्रसङ्गागता सविशेषा वृद्धिर्निरूपिता ।

## इदानीमाधिर्निरूप्यते ।

त्र आधिर्नाम अधमर्णेनोत्तमर्णविश्वासार्थं गृहीतद्रव्यनिमित्तं य-
स्थाप्यते भूषणादि स उच्यते । अधिक्रियत इत्याधिरिति व्यु-
। तत्स्वरूपं तद्भेदं चाह—
तिः,

आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः ।
जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ।
याद‍ृच्छिकः सावधिश्च लेख्यारूढोऽथ साक्षिमान् ॥ इति ।

प्यो=रक्षणीयः । याद‍ृच्छिकः=अकृतावधिः । सावधिः=अमुकस्मिन्दिने अ-
ोचयिष्यामि नो चेत्तत्रैवेत्युक्त्वा स्थापितः । यद्यप्यत्राधिरष्टवि-
ातस्तथापि गोप्यभोग्ययाद‍ृच्छिकसावधिरूपाणां भेदानां ना-
ाप्युपयोगे तात्पर्यातिशय इति सूचयितुं चतुर्विधत्वोक्तिरिति

स्मृतिचन्द्रिकायाम् । अत्र स्वरूपप्रकारकालप्रमाणैश्चतुर्विधत्वम् । तत्र स्वरूपं द्विविधं जङ्गमस्थावरभेदेन, प्रकारश्च द्विविधो गोप्यभोग्यभेदेन, कालद्वैविध्यमवधिनियमानियमाभ्यां, प्रमाणमपि लेख्यसाक्षिभेदेन द्विविधमित्येवमष्टविधत्वमिति कृत्यकल्पतरौ ।

नारदोऽपि—

अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः ।
कृतकालोपनेयश्च यावद्देयोद्यतस्तथा ।
स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च । इति ।
(व्य० प० १ श्लो० १२४।१२५)

कृतकालः=कृतावधिः । उपनेयः=स्वसमीपे नेयो मोचनीय इति यावत् । यावद्देयोद्यतः=यावदृणं दीयते तावत् स्थितः अवधिरहित इत्यर्थः ।

प्रकारान्तरेण चतुर्विधत्वं भारद्वाज आह—

आधिस्तु त्रिविधः प्रोक्तो भोग्यो गोप्यस्तथैव च ॥
अर्थप्रत्ययहेतुर्यश्चतुर्थस्त्वाज्ञया कृतः ।
आर्पणात्पूर्वलिखितो भोग्याधिः श्रेष्ठ उच्यते ॥
गोप्याधिस्तु परेभ्यः स्वं दत्त्वा यो गोप्यते गृहे ।
अर्थप्रत्ययहेतुर्यः प्रत्ययाधिः स उच्यते ।
आज्ञाधिर्नाम यो राज्ञा संसदा वाज्ञया कृतः ॥ इति ।

स चाधिर्नाशादिभिर्यथा विकृतो न भवति तथा परिपालनीय इत्याह—

हारीतः,

बन्धं यथा स्थापितं स्यात् तथैव परिपालयेत् ।
अन्यथा नश्यते लाभो मूलं वा तद्व्यतिक्रमात् ॥ इति ।

यथा=येन प्रकारेण गोप्यत्वेन भोग्यत्वेन वा स्थापितमाधिं तथैव गोप्यं गोप्यत्वेन भोग्यं भोग्यत्वेनैव पालयेत् । अन्यथा=वैपरीत्ये । तस्य समयस्य व्यतिक्रमात् लाभो वृद्धिः मूलं द्रव्यं वा नश्यत इत्यर्थः ।

नारदोऽपि—

उपचारस्तथैवास्य लाभहानिर्विपर्यये ।
प्रमादाद्धनिनस्तद्वदाधौ विकृतिमागते ॥ इति । (व्य०प०१श्लो०१२६)

उपचारो=रक्षणम् कर्त्तव्यमिति शेषः । ततो धनिनः प्रमादाद् विपर्य्यये नाशे विकृतिं वागते आधौ लाभहानिर्भवतीत्यर्थः ।

बृहस्पतिरपि—

अशान्तलाभे च ऋणे तथा पूर्णेऽवधौ धनी ।

यो भुङ्क्ते बन्धकं लोभान्न स लाभो भवेत्पुनः ।
न्यासवत्परिपाल्योऽसौ वृद्धिर्नश्यति हापिते ॥ इति ।

अत्र शान्तलाभे ऋणे भोक्तव्य इति परिभाषितो गोप्याधिरशान्तलाभे न भोक्तव्यः । इयत्समयेनायं भोक्तव्य इति परिभाषितस्तु अवधौ पूर्णे भोक्तव्यः । अन्यथा यो भुङ्क्ते तस्य स लाभः पुनर्न भवेदित्यर्थः । असौ=आधिः । न्यासवत्परिपालनीयो न नाशनीयः । हापिते तु वृद्धिर्नश्यतीत्यर्थः । केचित्तु तथापूर्णेऽवधावित्यत्राकारप्रश्लेषं कृत्वा अवधावपूर्णे न भोक्तव्य इत्याहुः ।

याज्ञवल्क्योऽपि—

गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते । इति । (२।५९)

गोप्याधेरल्पेऽपि भोगे महत्यपि वृद्धिर्न देया । सोपकारे भोग्याधौ हापिते व्यवहारायोग्यतां प्रापिते वृद्धिर्न देयेत्यर्थः ।

मनुरपि—

न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात् । इति । (८।१४३)

हापित इति शेषः । एतच्च बलात्कारविषयम् ।

तथा च मनुः—

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् ।
मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् ॥ इति । (८।१४४)

अधमर्णेन भोगो न कर्त्तव्य इति निषिध्यमानस्तद्वचनमुल्लङ्घ्य भोगकर्तुरल्पभोगेऽपि सर्ववृद्धिनाश इत्यर्थः । बलात्काराभावे तु स एवाह,

यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्ते विचक्षणः ।
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥ इति । (८।१५०)

अर्धग्रहणमननुज्ञाताधिभोगानुसारेण कल्पितस्य वृद्धिभोगस्योपलक्षणार्थम् । अन्यथा महाभोगस्य अर्धविसर्जनेन निष्कृतेरसम्भवात्तस्य भोगस्य निष्कृतिरिति वाक्यशेषविरोधः स्यात् । अथ विरोधपरिहारार्थमल्पभोगविषयमेवेदं कुतो न भवति । तथा सत्यननुज्ञाता महाभोगविषये लाभहानिरनेनानुक्ता स्यात् । न चानेनानुक्तेऽपि "गोप्याधिभोगे नो वृद्धिः" इति याज्ञवल्क्यवचनमेवात्र लाभहानिविधायकं भविष्यति । न भविष्यति । तस्य बलात्कृताल्पभोगविषयत्वात् । तस्मादर्धग्रहणस्योपलक्षणत्वमेव युक्तम् । यत्तु हारीतवचने मूलनाशाभिधानं तद्बलात्कृतबहुभोगविषयमिति स्मृतिचन्द्रिकायाम् । आधिविनाशविषयमिति कश्चित् । गोप्याधित्वेन स्थापितदास्यादेः कर्मकारणे विशेषान्तरमुक्तम्—

कात्यायनेन,

अकाममननुज्ञातमाधिं यः कर्म कारयेत्।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा न लभेत सः॥ इति।

अकाममिच्छारहितम्। कर्मफलं=वेतनम्। दाप्य अधमर्णाय राज्ञेति शेषः। एवं गोप्याधितया स्थापितेऽश्वादौ तद्भाटकं दाप्यो वृद्धिर्वा त्याजनीयेत्यर्थः।

आहितदास्यादिपीडने स एवाह—

यस्त्वाधिं कर्म कुर्वाणं वाचा दण्डेन मर्मभिः।
पीडयेद्भर्त्सयेच्चैव प्राप्नुयात् पूर्वसाहसम्॥ इति।

आधावन्यथाकरणे याज्ञवल्क्य आह—

नष्टो देयो विनष्टश्चेद्दैवराजकृतादृते। इति। (२।५९)

नष्टः=विकृतिं गतः पूर्ववत्कृत्वा देयः। विनष्टः=आत्यन्तिकनाशं प्राप्तः सोऽपि देयो मूल्यादिद्वारेण। दैवम्=अग्न्युदकदेशोपप्लवादि तत्कृताद्विनाशाद्विना। तथा स्वापराधरहिताद्राजकृतादपि विनाशाद्विनेत्यर्थः। दैवराजकृते तु विनाशे सवृद्धिकं मूल्यं दातव्यमधमर्णेनाध्यन्तरं वा।

तथा च स्मृतिः—

स्रोतसापहृते क्षेत्रे राज्ञा चैवापहारिते।
आधिरन्योऽथ कर्त्तव्यो देयं वा धनिने धनम्॥ इति।

तत्र स्रोतसापहृत इति दैवकृतोपलक्षणम्।

बृहस्पतिरपि—

दैवराजोपघातेन यत्राधिर्नाशमाप्नुयात्।
(१)तत्रान्यं दापयेद्बन्धं शोधयेद्वा धनं ऋणी॥ इति।

राजोपघातोऽत्र उच्छृङ्खलेन राज्ञा कृत उपद्रवः। न तु धनिकापराधनिमित्तकः।

अत एव व्यासः—

दैवराजोपघाते तु न दोषो धनिनः क्वचित्। इति।

कात्यायनोऽपि—

न चेद्धनिकदोषेण निष्पतेद्वा म्रियेत वा॥
आधिमन्यं स दाप्यः स्याद्दणान्मुच्येत नर्णिकः॥ इति।

निष्पतेत्=नश्येत्। म्रियेतेति पश्वाद्यभिप्रायेण। अदाने तस्माद्दणान्न मुच्येतेत्यर्थः। आधेर्विनाशे तन्मूल्यं देयम्।

---

(१) तत्राधिं दापयेद्द्यात्साधयेद्वा धनं ऋणी। इतिपाठान्तरम्।

तथा च व्यासः—

ग्रहीतृदोषान्नष्टश्चेद्बन्धो हेमादिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूल्यं दापयेद्धनी ॥ इति ।

सलाभमृणं संशोध्य=सम्यक् विचार्य विनष्टाधेर्मूल्यं दत्त्वा सवृद्धिकं धनं गृह्णीयात् । अन्यथा मूलनाश इत्यर्थः ।

अत एव नारदः—

विनष्टे मूलनाशः स्याद्दैवराजकृताद्दते । इति। (व्य०प०१श्लो०१२६)

हारीतोऽपि—

आधौ नष्टे धनं नष्टं धनिकस्याधिरेव च । इति ।

भोगेन विकृतिं गतस्याधेस्तथैवार्पणे मूलनाशमाह—

बृहस्पतिः,

भुक्ते चासारतां प्राप्ते मूलहानिः प्रजायते । इति ।

बहुमूल्याधिनाशे तु सलाभमृणादुपरि आधिमूल्यमाधात्रे देयम् ।

तथा च स एव—

बहुमूल्यो यत्र नष्ट ऋणिकं तत्र तोषयेत् । इति ।

न च तोषयेदिति वचनाद्यावता धनेनाधाता तुष्यति तावद्धनं देयमिति शङ्कनीयम् । यत आह—

मनुः,

मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् । इति ।

सलाभऋणापगतावशिष्टबन्धकांशेनेत्यर्थः । यद्युत्तमर्णः सलाभमृणावशिष्टं मूल्यमधमर्णाय दत्त्वा न तोषयति तदा त्वाधिप्रत्यर्पणप्रतिमूल्येनाधमर्णं तोषयेत् ।

तथा च हारीतः—

खादको वित्तहीनश्चेल्लग्नको वित्तवान्यदि ।
मूल्यं तस्य भवेद्देयं न वृद्धिं दातुमर्हति ॥ इति ।

आधीकृतस्य धनस्य प्रीतिदत्तधनस्येवाकारितवृद्ध्यसम्भवादित्याशयः । खादको=बन्धखादकः आधिनाशक उत्तमर्ण इति यावत् । लग्नकः=प्रतिभूः । मूल्यं=नाशिताधेर्मूल्यम् । यद्यत्राधमर्णो बलाद्वृद्धिं गृह्णाति तदा गृहीतवृद्ध्यंशके महापराधानुसारं दण्डं दद्यात् ।

तथा च स एव—

द्विगुणं त्रिगुणं वापि यः साधयति लग्नकम् ।
राजगामि तु तद्द्रव्यं साधको दण्डमर्हति ॥ इति ।

यः साधयति लग्नकं=लग्नकाद्यः साधयतीत्यर्थः । लग्नकग्रहणमुत्तमर्ण-

स्याप्युपलक्षणार्थम्। अविद्यमानवृद्धिसाधनस्योत्तमर्णेऽपि समानत्वात्। यद्युत्तमर्ण आधिनाशेऽपि ऋणपत्रावष्टम्भेनाधमर्णाद्धनं जिघृक्षति सोऽपि दण्डभागित्याह—

कात्यायनः,

आधिदृष्टेन लेख्येन भुङ्क्ते यद्दणिकाद्धनी।
नृपो दमं प्रापयित्वा आधिलेख्यं तु नाशयेत्॥ इति।

दमं=दण्डम्। ऋणिकद्रव्यभोगद्रव्यानिष्कृत्यर्थं वृद्धिहानिरप्युन्नेयेति स्मृतिचन्द्रिकायाम्। सम्यग्रक्ष्यमाणस्याप्याधावसारतां गते सति ऋणिकेन धनमाध्यन्तरं वा उत्तमर्णाय देयमित्याह—

नारदः, (व्य०प०१श्लो०१३०)

रक्ष्यमाणोऽपि यद्याधिः कालेनेयादसारताम्।
आधिरन्योऽथ वा कार्यो देयं वा धनिने धनम्॥ इति।

असारताम्=सवृद्धिकमूलयद्रव्यापर्याप्तताम्। केचिदेकसंवत्सरभववृद्धिसहितमूलद्रव्यापर्याप्ततामसारतामाहुः। तच्चिन्त्यम्। एतादृशविशेषकल्पने कारणाभावात्।

याज्ञवल्क्योऽपि—

आधेः स्वीकरणात्सिद्धौ रक्ष्यमाणोऽप्यसारताम्।
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत्॥ इति। (२।६०)

आधेः स्वीकरणादुपभोगात् सिद्धि र्न लेख्यमात्रेणेत्यर्थः। एतदेवाभिप्रेत्याह—

नारदः,

आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा।
सिद्धिरस्योभयस्यापि भोगो यद्यपि नान्यथा॥ इति।

गोप्याधौ भोगः स्वीकारः भोग्याधौ फलभोगः। एतच्चाधेर्भोगात् सिद्धिप्रतिपादनम्—

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा।

इत्येवमादिवाक्योक्तनिर्णयार्थम्। अत एव द्वयोर्धनिकयोर्दुष्टाधमर्णिकेन एकस्य वस्तुन आधीकरणे भोगान्निर्णय इत्याह—

विष्णुः,

ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ।
यस्य भुक्तिर्जयस्तस्य बलात्कारं विना कृता॥ इति।

द्वयोरपि भोगसत्त्वे निर्णयप्रकारमाह—

वसिष्ठः,

तुल्यकाले निसृष्टानां लेख्यानामाधिकर्मणि।

येन भुक्तं भवेत् पूर्वं तस्याधिर्बलवत्तरः ॥ इति ।

निसृष्टानां=कृतानां लेख्यानां सद्भावेऽपीति शेषः । अयमर्थः । तुल्यकालोत्पन्नानां लेख्यानां सद्भावसाम्येऽपि भोग्याधिसिद्धौ भोगस्योत्कृष्टकारणत्वात् तत्र धर्म्यनिबन्धना बलवत्ता युक्तेति ।

बृहस्पतिरपि--

क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत्समकालिकम् ।
येन भुक्तं भवेत् पूर्वं तस्य तत्सिद्धिमाप्नुयात् ॥ इति ।

क्षेत्रग्रहणं भोग्याधिमात्रोपलक्षणार्थम् । यत्राधिविशेषे भोगाभावः, भोगार्थं च युगपत्प्राप्तौ तत्र निर्णयप्रकारमाह—

वसिष्ठः,

यद्येकदिवसे तौ तु भोक्तुकामावुपागतौ ।
विभज्याधिः समं तेन भोक्तव्य इति निश्चयः ॥ इति ।

तेन=ताभ्यामित्यर्थः । द्वयोरेकमाधिं कुर्वतोऽधमर्णस्य दण्डमाह—

कात्यायनः,

आधिमेकं द्वयोर्यस्तु कुर्यात्का प्रतिपद्भवेत् ।
तयोः पूर्वकृतं ग्राह्यं तत्कर्त्ता चौरदण्डभाक् ॥ इति ।

ऋणग्रहणोपक्रमत्वादाधिक्रिया प्रतिपदित्युच्यते । पूर्वकृतं=पूर्वाध्युपादानादिना सिद्धम् । आधिविशेषे दण्डविशेषमाह—

विष्णुः,

गोचर्ममात्राधिकां भुवमन्यस्याधीकृतामन्यस्य यः प्रयच्छेत् स वध्यः ऊनां चेत् षोडशसुवर्णं दण्ड्य इति ।

उपादानादियौगपद्ये त्वाह—

बृहस्पतिः,

तुल्यकालोपस्थितयोर्द्वयोरपि समं भवेत् । इति ।

उपस्थितयोः उपादानादिकं कर्त्तुमिति शेषः । साक्षिलेख्यसिद्धयोर्लेख्यसिद्धं बलवदित्याह--

कात्यायनः,

आधानं विक्रयो दानं लेख्यसाक्षिकृतं यदा ।
एकक्रियाविरुद्धं तु लेख्यं तत्रापहारकम् ॥ इति ।

लेख्यसाक्षिकृतं=लेख्यसाक्षिसिद्धम् । अपहारकं=बलवत् । लेख्यसिद्धत्वविशेषेऽपि बलाबलमाह--

स एव,

अनिर्दिष्टं च निर्दिष्टमेकत्र च विलेखितम् ।

विशेषलिखितं ज्याय इति कात्यायनोऽब्रवीत् ॥ इति ।

एकत्र=आधिकरणादौ । विशेषलिखितं=निर्दिष्टलिखितं ज्यायो बलवदित्यर्थः । लेख्ये निवेशितं लिखितम् । अनिर्दिष्टनिर्दिष्टपदयोरर्थमाह—

स एव,

यो विद्यमानं प्रधनमनिर्दिष्टस्वरूपकम् ।
आकाशभूतमादध्यादादिष्टं नैव तद्भवेत् ॥
यद्यत्तदास्य विद्येत तदादिष्टं विनिर्दिशेत् । इति ।

प्रशब्दः पादपूरणार्थः । अनिर्दिष्टस्वरूपकमनिरूपितस्वरूपकम् । आकाशभूतमविद्यमानस्वभावम् । अयमर्थः । आधातुराधिकरणकाले यद्धनं विद्यते निरूपितस्वरूपं च तद्धनमाधित्वेनादिष्टं सन्निर्दिष्टमित्युच्यते । तद्विपरीतं तु धनमाधित्वेन कल्प्यमानमनिर्दिष्टमिति । आधिकरणकाले विद्यमानत्वसाम्येऽप्याह—

स एव,

यस्तु सर्वस्वमुद्दिश्य प्राक् पश्चान्नामचिह्नितम् ।
आदध्यात्तत्कथं न स्याच्चिह्नितं बलवत्तरम् ॥ इति ।

यः पूर्वमविशेषेण सर्वस्वमाधित्वेनोद्दिश्य कस्यचिद्धस्ताद्दणं गृहीत्वा पश्चाल्लेखनसमये विशेषेण क्षेत्रादिकमेव लेखयति तत्रोत्तरकालं विवादे सति यावत्पश्चाल्लिखितं तावदेव प्रमाणं नोद्दिष्टमित्यर्थः । चिह्नितमिति विरोध्युत्तरक्रियोपलक्षणार्थम् । तेन यदि प्रथममाधिमादाय धनी धनं दत्वा पश्चादबन्धकत्वं विधाय आधिमन्तरेणैवात ऊर्ध्वं त्वयि ऋणमास्तामिति प्रकारान्तरेण पुनः क्रियां करोति तदा निराधिक्रिया बलवतीत्यवगन्तव्यम् । अत एवाह—

याज्ञवल्क्यः,

सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया । इति । (२।२३)

उत्तरा क्रिया पूर्वस्याः क्रियाया बाधिका भवतीत्यर्थः । निर्दिष्टत्वाविशेषे उत्तरक्रियाबलवत्त्वस्यापवादमाह—

स एव,

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥ इति ॥ (२।२३)

एकमेव क्षेत्रमेकस्याधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याधिं कृत्वा किमपि गृह्णाति तत्र पूर्वस्यैव तत्क्षेत्रं भवति नोत्तरस्येत्यर्थः । एवं प्रतिग्रहे क्रये च योजनीयम् । स्वामित्वप्रतिबन्धावगमाभ्यां प्रागेव पूर्वस्याः क्रियायाः कृतत्वादिति भावः ।

एतदेवाभिप्रेत्य वसिष्ठोऽप्याह—

यः पूर्वतरमाधाय विक्रीणीते तु तं पुनः ।

किमेतयोर्बलीयः स्यात्प्राक्तनं बलवत्तरम् ॥ इति ।

आध्यादीनां यौगपद्येऽप्याह—

स एव,

कृतं यत्रैकदिवसे दानमाधानविक्रयम् ।
त्रयाणामिति सम्बन्धे कथं तत्र विधिं नयेत् ॥
त्रयोऽपि तद्धनं धर्म्यं विभजेयुर्यथांशतः ।
उभौ क्रियानुसारेण त्रिभागेन प्रतिग्रही ॥ इति ।

आधीकृतस्य धनस्य स्वत्वनिवृत्तिकालमाह—

याज्ञवल्क्यः,

आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ।(१)
काले कालकृतो नश्येत् फलभोग्यो न नश्यति ॥ इति । (२।५८)

प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण द्वैगुण्ये जातेऽधमर्णेन तावद्धनं दत्त्वा यदि न मोक्ष्यते तदासौ नश्येदधमर्णस्य स्वं न भवेत्किन्तूत्तमर्णस्यैव भवेत् । यस्तु कालकृतः कृतकालः । आहिताग्न्यादिषु पाठात्कालशब्दस्य पूर्वनिपातः । यद्वा "जातिकालसुखादिभ्यः परा निष्ठा वाच्या" इत्यनेन वार्त्तिकेन निष्ठान्तस्य परनिपातः । स यदि सम्प्रतिपन्ने काले न मोक्ष्यतेऽधमर्णेन तदा सोऽपि पूर्ववन्नश्येत् । फलभोग्यः क्षेत्रादिः कदापि न नश्येत्किन्तूत्तमर्णेन यावत् स्वधनं न प्राप्यते तावदुत्पन्नफलमेव भोक्तव्यमित्यर्थः । अत्र काले कालकृतो नश्येदित्यनेन कृतकालस्योभयविधस्याधेस्तत्कालातिक्रमे नाश उक्तः । फलभोग्यो न नश्यतीत्यनेनाकृतकालस्य भोग्याधेर्नाशाभाव उक्तः । पारिशेष्यादाधिः प्रणश्येदित्येतदकृतकालगोप्याधिविषयमवतिष्ठते ।

द्वैगुण्यातिक्रमेण च विनाशे चतुर्दशदिवसप्रतीक्षणं कर्त्तव्यमित्याहतुर्व्यासबृहस्पती—

हिरण्ये द्विगुणीभूते पूर्णे काले कृतेऽवधौ ।
बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य तु ॥
तदन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयात् । इति ।

तत्=तस्मात्कारणात् । अन्तरा चतुर्दशदिवसमध्ये इत्यर्थः । अत्र द्वैगुण्यग्रहणं त्रैगुण्यादीनामुपलक्षणार्थम् । वक्ष्यमाणबृहस्पतिवचने शान्तलाभ इति सामान्येनैवाभिधानात् । नन्वाधेर्दानादिस्वत्वनिवृत्तिकारणस्य प्रतिग्रहादिस्वत्वापत्तिकारणस्य चाभावात् "आधिः प्रणश्येत्" इत्ययुक्तमिति चेत्, नैवम् । न केवलं दानादिरेव स्वत्वनिवृत्तिकारणं प्रति-

(१) करोत्यर्थणिजन्तात्कर्मणि लट् । मोच्यत इति पाठान्तरम् ।

ग्रहादिरेव वा स्वत्वापत्तिकारणं किन्तु द्वैगुण्ये निरूपितकालप्राप्तौ च द्रव्याधानमपि । तस्य याज्ञवल्क्यवचनेनैवाधमर्णोत्तमर्णयोरात्यन्तिकस्वत्वनिवृत्तिस्वत्वापत्त्योः कारणत्वावगमात् लोकाच्च । न च—

न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः । (८।१४३)

इति मनुवचनम् । तस्यायमर्थः । कालेन संरोधः कालसंरोधः=चिरकालावस्थानं तस्मात्कालसंरोधात् आधेर्न निसर्गोऽस्ति नान्यत्राधीकरणमस्ति न च विक्रय इति, तेन विरोध इति वाच्यम् । "न त्वेवाधौ सोपकार" इत्याद्युपक्रम्य कथनेन एतस्य भोग्याधिविषयत्वात् ।

यत्तु बृहस्पतिना—

पूर्णावधौ शान्तलाभे बन्धे स्वामी धनी भवेत् ।
अनिर्गते दशाहे तु ऋणी मोचितुमर्हति ॥

इति दशदिवसप्रतीक्षणमुक्तम् । तद्वस्त्रादिविषयम् । "हिरण्ये द्विगुणीभूत" इति व्यासबृहस्पतिभ्यां विशेषोपादानान्न हिरण्यविषयम् । शान्तलाभे=त्रैगुण्यादिपरमवृद्ध्या निवृत्तलाभे । यत्तु पुनस्तेनैवोक्तम्—

गोप्याधिर्द्विगुणादूर्ध्वं कृतकालस्तथावधेः ।(१)
आवेदयित्वर्णिकुले भोक्तव्यस्तदनन्तरम् ॥ इति,

तत् स्वत्वापत्तेरर्वागाव भोगमात्रविधिपरं न पुनः स्वत्वापत्तिपरम् । तथा च न बार्हस्पत्यवचनयोः परस्परं विरोधो नापि व्यासबृहस्पतिवचनयोः । यदा तु शान्तलाभे धने बन्धकस्य तथैवावस्थितस्य मोचनात्प्रागधमर्णस्य मरणादि भवेत्तदा किं कर्त्तव्यमिति परीक्षायामाह—

बृहस्पतिः,

हिरण्ये द्विगुणीभूते पश्चान्नष्टेऽधमर्णिके ।
द्रव्यं तदीयं सङ्गृह्य विक्रीणीते ससाक्षिकम् ॥
रक्षेद्वा कृतमूल्यं तु दशाहं जनसंसदि ।
ऋणानुरूपं परतो गृह्णीतान्यत्तु वर्जयेत् ॥ इति ।

हिरण्ये द्विगुणीभूते पश्चादाधिमोक्षणादर्वागितिशेषः । हिरण्यग्रहणं वस्त्रादीनामुपलक्षणम् । द्विगुणीभूत इति त्रैगुण्यादीनामुपलक्षणम् । नष्टे=कुत्रचिद्गते चिरमाविज्ञाते । द्रव्यं=बन्धकीकृतं द्रव्यम् । ऋणानुरूपं द्विगुणीभूतद्रव्यपर्याप्तम् । परतः=दशाहादूर्ध्वम् । अन्यत्तु वर्जयेत्=अवशिष्टं ऋणिबन्धवे तदभावे राज्ञे समर्पयेदित्यर्थः । अत एव—

(१) कृतकालो यथाविधि इत्यपरार्के पाठः ।

कात्यायनः,

आधाता यत्र वै न स्याद्धनी बन्धं निवेदयेत् ।
राज्ञस्ततः स विज्ञातो विक्रेय इति धारणा ।
सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्पयेत ॥ इति ।

राजन्यथार्पयेदिति न्यायात्प्रत्यासन्नाभावविषयम् । तत्सद्भावे तत्रैवार्पणस्य न्याय्यत्वात । यत्र तेनार्पणं क्रियते तत्रैव यदि सवृद्धिकं धनं दत्त्वा बन्धो गृह्यते तदा न विक्रेयः प्रयोजनस्य सिद्धत्वात् । अस्मिन्विषयेऽन्यत्राधिकरणं न विरुद्धं दण्डापूपन्यायात् । किन्त्वन्यत्राधिं कृत्वा मूलमात्रं ग्रहीतव्यम् । न तु सवृद्धिकम् । यदाह—

प्रजापतिः,

धनी धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदाधिलिखितं पूर्वं वास्य समर्पयेत् ॥ इति ।

यद्बन्धस्वामिभिर्धनं प्रयुक्तं तत्तुल्येनैव धनेन परं=धनिकान्तरमाधिं नयेत न तु सवृद्धिकेनेत्यर्थः । अयं चान्वाधिर्धनस्य द्वैगुण्ये सति । प्रतिपत्तौ तु द्वैगुण्यादर्वागपि द्रष्टव्यः । क्वाचिद्गोप्याधेर्द्वैगुण्याद्यातिक्रमेऽपि ऋणिकस्य स्वत्वनाशो न भवतीत्याह—

याज्ञवल्क्यः,

चरित्रबन्धककृतं स वृद्ध्या दापयेद्धनम् ।
सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ इति । (२।६१)

चरित्रं=शोभनचरितं तेन यद्बन्धकं तच्चरित्रबन्धकं तेन यत् द्रव्यं स्वाधीनं कृतं पराधीनं वा कृतं तच्चरित्रबन्धककृतम् । अयमर्थः । अधमर्णेन धनिनः शुद्धान्तःकरणत्वेन बहुमूल्यमपि बन्धकीकृत्याल्पमेव धनं स्वाधीनं कृतम् । यदि वा उत्तमर्णेनाधमर्णस्य निर्दोषतामवगत्याल्पमेव बन्धकं गृहीत्वा बहुधनमधमर्णाधीनं कृतं तदा तद्धनं स=राजा वृद्धिसहितं दापयेन्न त्वाधिनाश इति । अथवा चरित्रं=गङ्गास्नानाद्यग्निहोत्रादिजनितापूर्वं तद्बन्धकीकृत्य गृहीतं चरित्रबन्धककृतमिति । एतादृशं बन्धकं द्विगुणीभूतेऽपि द्रव्ये न नश्यति किन्तु द्विगुणीभूतं द्रव्यमेव दातव्यमित्याभिप्रायः । तथा सत्यङ्कारकृतम् । करणं कारः । भावे घञ् । सत्यस्य कारः सत्यङ्कारः । "कारे सत्याऽगदस्य" इति मुम् । (६।३।७०) तेन कृतं सत्यङ्कारकृतम् । तदपि द्विगुणमेव देयं नाधिनाशः । बन्धकार्पणसमय एव द्विगुणीभूतेऽपि द्रव्ये मया द्रव्यमेव द्विगुणं दातव्यं नाधिनाश इति समये कृते द्विगुणीभूतं द्रव्यमेव दातव्यं नाधिनाश इत्यभिप्रायः । क्रयविक्रयादिनिर्वाहाय यदङ्गुलीयकादि परहस्ते समर्पितं

तत्सत्यङ्कारकृतं तत्राङ्गुलीयकादिग्रहीता व्यवस्थामतिक्रामन् तदेवाङ्गुलीयकादि द्विगुणं प्रतिपादयेत् । इतरश्चेदङ्गुलीयकादिकमेव जह्यात्।

चरित्रबन्धादिस्थले द्वैगुण्यादूर्ध्वं चाधिनाशो न भविष्यतीति बुद्ध्वा अधमर्णेन मोचने बिलम्बो न कार्यः ।

तथा च व्यासः—

गोप्याधिं द्विगुणादूर्ध्वं मोचयेदधमर्णिकः । इति ।

अस्मिन्नेव विषयेऽधमर्णासन्निधाने उत्तमर्णेनाधिर्विक्रेतव्यः ।

तथा च याज्ञवल्क्यः—

विना धारणकाद्वापि विक्रीणीत ससाक्षिकम् । इति । (२।६३)

धारणिकात्=अधमर्णात् । अयमर्थः । असन्निहिते अधमर्णे उत्तमर्णः साक्षिभिस्तदाप्तैश्च सह तमाधिं विक्रीय धनं गृह्णीयादिति । वाशब्दो व्यवस्थितविकल्पार्थः । यदर्णदानकाले द्विगुणीभूतेऽपि द्रव्ये द्रव्यमेव देयं नाधिनाश इति परिभाषितं तदा अयं पक्षः । इतरथा "आधिः प्रणश्येद्द्विगुण" इत्यनेनोक्त आधिनाशपक्ष इति ।

यदि द्वैगुण्यावधिकालयोरर्वागेवाधिमोचनार्थमधमर्णः समायाति तदा उत्तमर्णेन मोक्तव्यो न वृद्धिलोभेन स्थापनीय इत्याह—

बृहस्पतिः,

धनं मूलीकृतं दत्त्वा यदाधिं प्रार्थयेदृणी ।
तदैव तस्य मोक्तव्यस्त्वन्यथा दोषभाग्धनी ॥ इति ।

मूलीकृतम्=अधमर्णेन देयं धनम् । तच्च भोग्याधौ मूलमात्रं गोप्याधौ तु सवृद्धिकं दत्त्वा ऋणी यद्याधिं प्रार्थयते तदा धनिना स मोक्तव्यः । अन्यथा दोषभाक्=स्तेयदोषभागित्यर्थः । यदाह—

याज्ञवल्क्यः,

उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत् । इति ( २।६२ )

स्तेनः=स्तेनवद्दण्ड्य इत्यर्थः । उत्तमर्णस्यासन्निधाने तदाप्तहस्ते धनं दत्त्वा आधिमधमर्णो गृह्णीयात् ।

तथा च स एव,

प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात् । इति । (२।६२)

प्रयोजके=उत्तमर्णे असति=असन्निहिते सति कुले=तदाप्तहस्ते सवृद्धिकं धनं निधायाधमर्णः स्वीयं बन्धकं गृह्णीयादित्यर्थः । क्वचित्प्रयोजकोऽसति कुल इति पाठः । तत्र प्रयोजको धनप्रयोक्ता असति=धनिके इति शेषः । आप्नुयात्तदानीमेवेति शेषः । तथा च उत्तमर्णेऽसन्निहिते तदाप्तहस्ते

सवृद्धिकं धनं निधाय प्रयोजको=धनप्रयोक्ताऽधमर्णस्तदानीमेव स्वाधिमाप्नुयादित्यर्थः।

यदि तु तदाप्तोऽपि न सन्निहितः अधमर्णस्य चाधिविक्रयेणाग्रिमवृद्धिव्यवच्छेदाय धनदानेच्छा भवति तदा किं विधेयमिति वीक्षायामाधिमूल्यं परिकल्प्य तद्गृहे एवाधिं स्थापयेत्। तथा च स्थापनदिनमारभ्य तद्धनं न वर्द्धत इत्याह—

स एव,

तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः॥ इति। (२।६२)

तिष्ठेदाधिरितिशेषः। तत्रोत्तमर्णे तत्कुले वा। एतच्चाधिमोचनं यदि भोग्याधिर्गोप्याधिश्च तावता कालेन मोचनीय इत्यवधिं कृत्वा स्थापितस्तदाधमर्णेनावधेरर्वाग्लोभेन न कर्त्तव्यम्। इदमेवाभिप्रेत्य फलभोग्याधिविषये—

व्यास आह,

फलभोग्यं पूर्णकालं दत्त्वा द्रव्यं तु सामकम्। इति।

ऋणी बन्धमवाप्नुयादित्यनुषङ्गः। मूलमात्रं दत्त्वा परिभाषितकालमापन्नं फलभोग्याधिमाप्नुयादित्यर्थः। फलभोग्यग्रहणमाध्यन्तरोपलक्षणम्। सामकग्रहणं सवृद्धिकस्याप्युपलक्षणम्। भोग्याधिविषये कश्चिद्विशेषमाह—

बृहस्पतिः,

क्षेत्रादिकं यदा भुक्तमुत्पन्नमधिकं ततः।
मूलोदयं प्रविष्टं चेत्तदाधिं प्राप्नुयादृणी॥
परिभाष्य यदा क्षेत्रं प्रदद्याद्धनिके ऋणी।
त्वयैतच्छान्तलाभेऽर्थे भोक्तव्यमिति निश्चयः॥
प्रविष्टे सोदये द्रव्ये प्रदातव्यं त्वया मम। इति।

अधिकं=मूलापेक्षयाऽधिकं क्षेत्राद्यर्थव्ययद्रव्यम्। ततः=तस्मात् क्षेत्रादेः। उदयो=वृद्धिः। शान्तलाभेऽर्थे=परमवृद्धिसहिते मूलद्रव्ये। इयं निमित्तसप्तमी। परमवृद्धिसहितं क्षेत्राद्यर्थव्ययसहितमेतन्मूलद्रव्यमस्मिन् क्षेत्र उपभोक्तव्यम्। उपभोगेन च सवृद्धिकधने प्रविष्टे त्वयैतत्क्षेत्रं मोक्तव्यमिति परिभाष्य यदा क्षेत्रादिकं बन्धकीकुर्यात्तदा क्षेत्रादिफलभोगेन क्षेत्राद्यर्थव्ययसहिते सवृद्धिके धने प्रविष्टे ऋणी किमप्यदत्त्वा तमाधिं प्राप्नुयादित्यर्थः। एवंविधस्याधेः पूर्वगृहीते ऋणे कालक्रमेण परां वृद्धिं प्राप्ते सति तदनन्तरं यः सवृद्धिकमूलद्रव्योपभोगार्थं क्षेत्रादिराधिः क्रियते स क्षेत्राद्यर्थव्ययद्रव्यसहितसवृद्धिकमूलोपभोगानन्तरं धनिकेनाधमर्णाय प्रत्यर्पणीयः।

तथा च याज्ञवल्क्यः—

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥ इति । (२६४)

आधौ तदादत्त इति शेषः । अयमेव क्षयाधिरित्युच्यते ।

इत्याधिविधिः ।

## अथ प्रतिभूः ।

तत्र प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह समयः । तद्भेदानाह—

बृहस्पतिः,

दर्शने प्रत्यये दाने ऋणिद्रव्यार्पणे तथा ।
चतुष्प्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः ॥ इति ।

प्रत्ययो=विश्वासः। दानम्=ऋणापाकरणार्थमर्थार्पणम् । ऋणिद्रव्यार्पणम्= ऋणिनो यद्द्रव्यं गृहीतोपकरणादि तदर्पणम् । चतुष्प्रकाराणां प्रतिभुवां प्रातिभाव्याङ्गीकारप्रकारं दर्शयति—

स एव,

आहैको दर्शयामीति साधुरित्यपरोऽब्रवीत् ।
दाताहमेतद्द्रविणमर्पयामीति चापरः ॥ इति ।

एको=दर्शनप्रतिभूरहमेनं पलायनप्रवृत्तं दर्शयिष्यामीत्याह । अपरः= प्रत्ययप्रतिभूरेष साधुर्न त्वां प्रतारयिष्यति यतोऽयं श्रोत्रियपुत्रोऽस्य सर्वस्वसम्पन्नो ग्रामोऽस्ति मत्प्रत्ययेनास्य द्रव्यं देहीति ब्रवीति । दानप्रतिभूर्यद्ययं न ददाति तदा सवृद्धिकमृणमहं दातेति । अपरः=ऋणिद्रव्यार्पणप्रतिभूर्यद्ययं न ददाति तदाहमेतदीयगृहोपकरणादिकमर्पयिष्यामीति कथयतीत्यर्थः ।

दर्शनप्रतिभुवा यदा धनिकस्य धारणिकदर्शनापेक्षा तदैव स दर्शनीय इत्याह—

कात्यायनः,

दर्शनप्रतिभूर्यस्तु देशे काले च दर्शयेत् ।

यस्मिन्देशे काले च धनिकस्तद्दर्शनमपेक्षते तत्रैव दर्शयेत् अधमर्णमितिशेषः । दर्शिते च तस्मिन् धनिकेन प्रातिभाव्यात् स मोक्तव्य इत्युत्तरार्द्धेनाह—

स एवाह,

यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥ इति ।

एवं प्रत्ययादिप्रतिभुवोऽपि तदविसंवादे मोक्तव्या अन्यथा धारणिकदेयं धनं दाप्या इत्याहतुः—

कात्यायनबृहस्पती,

यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः।
अदर्शयन् स तं तस्मै प्रयच्छेत् स्वधनाद्दृणम्॥
आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम्।
उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा॥ इति।

यत्तु योगीश्वरेण प्रतिभुवां त्रैविध्यमेवोक्तम्—

दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते। इति।

तद्दानार्पणयोरनतिभेदाभिप्रायेण।

आद्यौ तु वितथे दाप्यावितरस्य सुता अपि॥ (२।५३) इति।

वितथे=दर्शनप्रत्ययदानविसंवादे। इतरस्य सुता अपीति वचनात् पूर्वयोः सुता न दाप्याः। सुता इत्यभिधानान्न पौत्रा इत्युक्तं भवति। दानं=स्वधनार्पणं धनिकाय। अर्पणं तु धारणिकधनमानीय तस्य अर्पणम्। धनिकस्य स्वधनलाभे उभयतो न विशेषः। अत एव सूक्ष्मभेदविवक्षया पञ्चप्रकारा अपि प्रतिभुवो हारीतेनोक्ताः—

अभये प्रत्यये दाने उपस्थाने प्रदर्शने।
पञ्चस्वेषु प्रकारेषु ग्राह्यो हि प्रतिभूर्बुधैः॥

अभयमुपद्रववारणम्। उपस्थानमत्र धारणिकधनस्य धनिकायानीयार्पणं न दर्शनम्। तस्य पृथङ्निर्देशात्। पञ्चस्वित्यनन्वयाच्च। व्यासस्तु सप्तभिर्विषयैः सप्तप्रकारकं प्रतिभुवमाह—

लेख्ये कृते च दिव्ये वा दानप्रत्ययदर्शने।
गृहीतबन्धोपस्थाने ऋणिद्रव्यार्पणे तथा।

प्रतिभूर्ग्राह्य इत्यत्र प्रकृतम्।

कात्यायनोऽपि—

दानोपस्थानवादेषु विश्वासशपथेषु च।
लग्नकं कारयेदेवं यथायोग्यं विपर्यये॥

वादो=विवादस्तत्र प्रतिभूग्रहणम्।

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये॥ (२।१०)

इति योगीश्वरेणाप्युक्तम्। तच्च प्रागेव व्याख्यातम्। दर्शनप्रत्ययदानेषु यथायथं सर्वेषामन्तर्भावसम्भव इति परमार्थः। दर्शनप्रतिभुवे नष्टधारणिकान्वेषणाय कालावधिर्देय इत्याह—

बृहस्पतिः,

नष्टस्यान्वेषणे कालं दद्यात् प्रतिभुवे धनी।

देशानुरूपतः पक्षं मासं सार्धमथापि वा ॥

सार्द्धमासमिति परमावधिः।

तथा च कात्यायनः—

नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम्।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥
काले प्रतीते प्रतिभूर्यदि तं नैव दर्शयेत्।
स तमर्थं प्रदाप्यः स्यात्प्रेते चैष विधिः स्मृतः ॥

परं=परमावधिभूतम्। प्रतीते=अन्वेषणाय परिकल्पिते। प्रेते चैष विधिरिति धारणिके मृते प्रतिभूस्तमर्थं प्रदाप्य इति विधिः। कालावधिविधेस्तत्रान्वयबाधात्। एतदपि दैवराजकृतप्रतिबन्धाभावे बोध्यम्।

अत एव कात्यायनः—

दर्शनप्रतिभूर्यस्तं देशे काले न दर्शयेत्।
निबन्धमावहेत्तत्र दैवराजकृतादृते ॥

निबन्धमृणम्। दैवकृतो=दीर्घरोगमरणादिरूप ऋणदानप्रतिबन्धः। राजकृतो=बन्धनासेधदण्डादिरूपः। प्रतिभूभेदेन स्पष्टमाह—

नारदः,

ऋणिष्वप्रतिकुर्वत्सु प्रत्यये वाथ हापिते।
प्रतिभूस्तदृणं दद्यादनुपस्थापयंस्तथा ॥ इति। (व्य०प०१।११९)

ऋणिषु=अधमर्णेषु अप्रतिकुर्वत्सु=असाध्येषु निर्धनत्वादिना ऋणमप्रत्यर्पयत्स्विति दानप्रतिभूविषयम्। प्रत्यये=विश्वासे हापिते=विसंवादिते इति प्रत्ययप्रतिभूविषयम्। अनुपस्थापयन्नृणिनमदर्शयन्नृणिनः सकाशादाधिमृणं=पर्याप्तं तद्धनं वोत्तमर्णायानर्पयन्निति दर्शनद्रव्यार्पणप्रतिभूविषयमिति विवेकः।

हारीतः—

विश्वासार्थं कृतस्त्वाधिर्न प्राप्तो धनिना यदा।
प्रापणीयस्तदा तेन देयं वा धनिने धनम् ॥

तेन=बन्धकार्पणप्रतिभुवा।

तथाच पितामहः—

आधिपालकृतस्त्वाधिर्भिन्नकालोपलक्षणम्।
नचेत् स्वधनिने दत्तस्तस्याधेस्तैः समर्पणम् ॥

तैः=आधिपालैराधिसमर्पणप्रतिभूभिः। बहुत्वमत्राविवक्षितम्। एवमभयाधिप्रतिभूष्वपि तुल्यन्यायतया योज्यम्। अभयप्रतिभूरधमर्णादुत्तमर्णस्य भयोपस्थितौ तत्प्रतीकारमाचरेत्। तद्भयेन द्रव्यक्षतौ त-

दीयं तत् द्रव्यं दद्यात्। प्रमाणप्रतिभूः प्रमाणप्रदर्शनं कारयेत्। अशक्तौ विवादास्पदीभूतं धनं दद्यात्। वादप्रतिभूर्वादपराजितस्याधमर्णस्य देयमुत्तमर्णाय दद्यात् पराजयदण्डं च राज्ञ इति। प्रतिभुवि मृते तत्पुत्रादीन् प्रत्याह—

योगीश्वरः,

दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा।
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः॥ (२।५४)

"दर्शने प्रत्यये" इत्यर्थस्य पूर्वश्लोकोक्तस्यैव स्पष्टीकरणमत्रेति न पुनरुक्तिरिति मिताक्षरायां मदनरत्ने चोक्तम्। वस्तुतस्तु तत् जीवति सति प्रतिभुवि, प्रेते त्विदमिति न पौनरुक्त्याशङ्का। "वितथ" इति तत्रात्र च "मृत" इत्युपादानात्। स्मृतिचन्द्रिकाकारस्यापीदमेवाभिसंहितम्। प्रतिभूपुत्रादीनां विधिरिति प्रस्तावे लिखनात्। दानाय यः स्थितः प्रतिभूस्तत्पुत्रा दद्युरित्यर्थः।

बृहस्पतिरपि—

आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम्।
उत्तरौ तु विसंवादे, तौ विना तत्सुतौ तथा॥ इति।

आद्यौ=दर्शनप्रत्ययप्रतिभुवौ। वितथे=दर्शनप्रत्ययदानविसंवादे। उत्तरौ=दानर्णिद्रव्यार्पणप्रतिभुवौ। विसंवादे=द्वेषादिना धनिकेनादाने। तौ विना=तयोर्देशगमने मरणे च। अत्र ताविति द्विवचनान्तेन सर्वनाम्ना दानर्णिद्रव्यार्पणप्रतिभुवोः परामर्शः। सर्वनाम्नामसति बाधके सन्निहितपरामर्शकत्वात्। पूर्वोदाहृत-"दर्शनप्रतिभूर्यत्र" इति याज्ञवल्क्यवचनाच्च। तेन दर्शनप्रत्ययप्रतिभूसुतैर्न तद्देयमिति बोद्धव्यम्। प्रतिभूपुत्रपौत्रयोर्मूलमात्रदानादाने आह—

कात्यायनः,

प्रातिभाव्यागतं पौत्रैर्दातव्यं न तु तत् क्वचित्।
पुत्रेणापि समं देयमृणं सर्वत्र पैतृकम्॥ इति।

सर्वत्र प्रातिभाव्यागतमृणमित्यन्वयः।

व्यासोऽपि—

ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः।
समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः॥ इति।

पौत्रेण प्रातिभाव्यातिरिक्तं पैतामहमृणं यावद्गृहीतमेव देयम्। तथा पुत्रेण प्रातिभाव्यागतं पैत्रमृणं यावद्गृहीतमेव देयम्। तयोः पौत्रपुत्रयोः सुतौ प्रपौत्रपौत्रौ यथाक्रममप्रातिभाव्यायातं प्रातिभाव्यायातं च गृही-

तधनौ न दाप्याविल्यर्थः ।

यत्तु नारदवचनम्—

खादको वित्तहीनः स्याल्लग्नको वित्तवान्यदि ।
मूलं तस्य भवेद्देयं न वृद्धिं दातुमर्हति ॥ इति ।

तदपि, खादकोऽधमर्णः । लग्नकः=प्रतिभूर्यदि वित्तवान्मृतस्तदा तत्पुत्रेण मूलमात्रं देयं न वृद्धिरिति मृतपदाध्याहारेण व्याख्येयम् ।

विषयविशेषे दर्शनप्रत्ययप्रतिभुवः पुत्रेण सवृद्धिकं देयमित्याह—

कात्यायनः,

गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत् ।
विना पित्रा धनात्तस्माद्दाप्यः स्यात्तदृणं सुतः ॥ इति ।

दर्शनग्रहणं प्रत्ययस्योपलक्षणम् । समानन्यायत्वात् । दर्शने स्थितः= दर्शने प्रतिभूत्वेन स्थित इत्यर्थः । विना पित्रा=पितरि प्रेते दूरदेशं गते वेति । सुतग्रहणमुपलक्षणार्थम् । यस्य हस्ते बन्धकमायाति तस्य सर्वस्यापि तस्माद्बन्धकप्रतिदानस्य युक्तत्वादिति केचित् ।

यत्तु—

दानप्रतिभुवि प्रेते दायादानपि दापयेत् । (८।१६०)

इति मनुवचनम् । तत्र दायादशब्दो विशेषलक्षणया सुतविषय एव । अन्यथा सपिण्डमात्राभिधाने "तत्सुतौ न दाप्याविति निश्चय" इत्यादिपूर्वोदाहृतवचनविरोधः स्यादिति । केचिदिदं प्रतिभूबन्धकविषयं पूर्वोदाहृतवचनानि त्वबन्धकप्रतिभूविषयाणीति विषयभेदान्न विरोध इत्याहुः । अनेकप्रातिभूदेयाविषये दानप्रकारमाह—

योगीश्वरः,

बहवः स्युर्यदि स्वांशैर्दद्युः प्रातिभुवो धनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥ इति । (२।५५)

एकच्छायाश्रितेषु=एकस्याधमर्णस्य च्छायां प्रत्येकं सकलधनदायकत्वरूपसादृश्यमाश्रितास्तेषु । धनिकस्य यथारुचि धनिकस्योत्तमर्णस्य यथारुचि= यथाकामम् । यमेवोत्तमर्णो याचते स एव सर्वं दद्यादित्यर्थः । रुच्यविशेषे तु "समं स्यादश्रुतत्वात्" इति न्यायेनात्रापि यथांशमेव दद्युः ।

एकच्छायाश्रितेषु लग्नकेषु यद्यन्यतरो दूरदेशं गतो मृतो वा भवति उत्तमर्णस्य च तस्मादेव ग्रहणेच्छा तदा प्रकारमाह—

कात्यायनः,

एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते ।
प्रोषिते तत्सुतः सर्वं पित्रंशं तु मृते समम् ॥ इति ।

प्रोषिते=देशान्तरगते। सर्वं=सवृद्धिकमृणम्। मृते तु पितुरंशमवृद्धिकं दद्यादित्यर्थः।

स्मृतिचन्द्रिकायां तु—

एकच्छायाश्रिते सर्वं दद्यात्तु प्रोषिते सुतः।
मृते पितरि पित्रंशं परर्णं न बृहस्पतिः॥

इति पठित्वा इत्थं व्याख्यातम्। तथाहि। सर्वं=परर्णमपि न पित्रंशमात्रमित्यर्थः। नतु सर्वं सवृद्धिकमिति व्याख्येयम्।

पुत्रेणापि समं देयमृणं सर्वं तु पैतृकम्।

इति बृहस्पतिस्मरणात्। समं=मूलमात्रम्। एतच्च धनिकेच्छायां प्रोषितस्य पुत्रो मह्यं दद्यादित्येवंविधायां सत्यां सर्वदानविधानं द्रष्टव्यम्। असत्यां धनिकेच्छायां पित्रंशं प्रोषितपितृकः पुत्रो दद्यादिति वावगन्तव्यम्। परर्णम्=परस्य पितृव्यतिरिक्तस्य ऋणं पितरि मृते तु सुतः सत्यामपि धनिकेच्छायां सर्वं न दातुमर्हति किन्तु पित्रंशमवृद्धिकमेवेति ब्रूते इत्यर्थः। परर्णम्=अन्येषां प्रतिभुवामंशमिति मदनरत्ने। प्रातिभाव्यापलापे दण्डमाह स एव—

यो यस्य प्रतिभूर्भूत्वा मिथ्या चैव तु गच्छति।
धनिकस्य धनं दाप्यो राज्ञा दण्डं च तत्समम्॥
कुर्याच्चेत्प्रतिभूर्वादमृणिकार्थेऽर्थिना सह।
सोपसर्गस्तदा दण्ड्यो विवादाद्द्विगुणं धनम्॥ इति।

सोपसर्गो विप्लवकारीति स्मृतिचन्द्रिकायाम्। प्रतिभूभ्यो धनग्रहणे विशेषमाह—

बृहस्पतिः,

नात्यन्तं पीडनीयाः स्युर्ऋणं दाप्याः शनैः शनैः। इति।

अथ प्रतिभूदत्तस्य प्रतिक्रियाविधिमाह—

कात्यायनः,

यस्यार्थे येन यद्दत्तं विधिनाभ्यर्थितेन तु।
साक्षिभिर्भावितेनैव प्रतिभूस्तत्समाप्नुयात्॥ इति।

यस्य=प्रातिभाव्यकारयितुः कृते येन=प्रतिभुवा धनिकादिभिर्याचितेन साक्ष्यादिभिरङ्गीकारितेन यत्=स्वकीयसुवर्णधान्यवस्त्रादिकं धनिकादिभ्यो दत्तं तत्सकलमेव प्रातिभाव्यकारयितुः सकाशात्सममेवाप्नुयादित्यर्थः।

यत्तु—

प्रतिभूर्दापितो यत्तु प्रकाशं धनिनां धनम्।

द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत्॥ (२।५६)

इति याज्ञवल्क्यवचनम्। तद्धानिकपीडितप्रतिभूविषयम्। यत आह—नारदः,

यं चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः।
ऋणिकस्तं प्रतिभुवे द्विगुणं प्रतिदापयेत्॥ इति। (व्य०प०१।१२१)

एतत् द्विगुणदानं त्रिपक्षानन्तरं बोध्यम्। यत आहतुः—कात्यायनबृहस्पती,

प्रातिभाव्यं च यो दद्यात्पीडितः प्रतिभावितः।
त्रिपक्षात्परतः सोऽर्थं द्विगुणं दातुमर्हति॥ इति।

प्रातिभाव्यं=प्रातिभाव्यागतं धनम् प्रतिभावितः=प्रतिभूत्वेन कृतः। अत्र वदन्ति। "द्विगुणं प्रतिदातव्यम्" इत्यादिभिर्वचनैर्द्वैगुण्यमात्रं प्रतिपाद्यते। "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते" इति (१)विहितजातेष्टिर्यथा शुचित्वाद्यबाधेनैव प्रवर्त्तते तथा इदमपि (२)कालकलाक्रमाबाधेनाप्युपपन्नं भवति। एवं च पश्वादीनामपि सवृद्धिकमेव दानं भविष्यति। अन्यथा त्रिपक्षादूर्ध्वं सवृद्धिकदानपक्षे तेषां मूल्यदानमेव स्यात्सन्तत्यसम्भवात् सन्ततेरेव तद्वृद्धित्वेनोक्तत्वादिति। तन्न सुन्दरम्। वचनानर्थक्यात्। कथमानर्थक्यम्।

---

(१) पू० मी० चतुर्थाध्याये ३ पादे द्वितीयवर्णकम्—"अङ्गानां तूपघातसंयोगो निमित्तार्थः" (४–३–३९) इति। तत्र "वैश्वानरं" इति वाक्ये संशयः पुत्रजन्मानन्तरमेवेयमिष्टिः कार्येति जातकर्मानन्तरमिति। निमित्तानन्तरं नैमित्तिकस्यावश्यंभावित्वाज्जन्मन एव निमित्तत्वाज्जन्मानन्तरमेवेति पूर्वपक्षे सिद्धान्तः—"यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इति वाक्यशेषश्रुतपुत्रगतपवित्रत्वादिफलकामनावान् वैश्वानरेष्टावधिकारी। तच्च फलं जीवत्येव पुत्रेऽभीष्टम्। जीवनं च शिशोर्जातमात्रस्य स्तनपानाधीनमेव। तच्च स्तनपानं जातकर्मानन्तरमेव न ततः प्राक्। अतः पुत्रगतपवित्रत्वादिफलावरोधेन जातकर्मानन्तरमेवेष्टिरिति। एवं स्थिते तृतीयवर्णके—जातकर्मानन्तरमेवेष्टिरुताशौचापगम इति चिन्तायाम् उक्तरूपप्रयोजनवशाज्जन्मरूपप्रयोजनाभावान्निमित्तानन्तरं प्राप्तापीयमिष्टिर्जातकर्मानन्तरमुत्कृष्टा। एवमुत्कृष्टायाः पुनराशौचानन्तरमुत्कर्षे प्रयोजनाभावाज्जातकर्मानन्तरमेवेति पूर्वपक्षः। अत्रोच्यते-निमित्तानन्तर्यमिष्टेस्तावद्बाधितमेव। तद्गतोक्तप्रयोजनवशात्। बाधिते च निमित्तानन्तर्ये शुद्धकालप्रतीक्षया आशौचापगमे पौर्णमास्यादौ काले कार्या। शुद्धकालस्याप्यङ्गत्वात्। 'शुचिना कर्म कर्तव्यम्' इत्यस्यानपवादादिति। एवं च शुद्धकालरूपमङ्गमबाधित्वैव जातेष्टिविधानम्।

(२) काले=मासादौ कला=वृद्धिः तस्याः क्रमः तदबाधेनापि।

वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ।

इत्यादिभिः कालकलाक्रमेण द्वैगुण्यदानस्य सिद्धत्वादिति गृहाण। ननूक्तमेव जातेष्टिवदिति। प्रत्युक्तमेव तद्वचनानर्थक्यादिति । नहि तत्र वचनानर्थक्यमस्ति येन तथा न कल्प्येत ।

यत्तु पश्वादौ मूल्यदानमेव प्राप्नोति सद्यःसवृद्धिकदानपक्षे तवापि समानं कालक्रमेण सन्तत्यजननपक्षे, सम्भवति चास्मत्पक्षेऽपि सवृद्धिकदानं कालान्तरेऽधमर्णेन सह सङ्घटते गर्भिण्यादिनादावेवेति ।

ननु प्रायेण प्रीत्यैव प्रतिभूर्भवति अतः प्रतिभुवा दत्तं प्रीतिदत्तमेव न च तद्वर्द्धते याचनात् प्राक् ।

प्रीतिदत्तं तु यत्किञ्चिद्वर्द्धते न त्वयाचितम् ।
याच्यमानमदत्तं चेद्वर्द्धते पञ्चकं शतम् ॥

इति स्मरणात्। अतश्चानेनास्य प्रीतिदत्तस्यायाचितस्यापि दानदिवसादारभ्य यावद्द्विगुणं कालक्रमेण वृद्धिरित्युच्यत इति चेत् , न। वचनबलात् सर्वं द्विगुणं भविष्यति। न च तस्यातिभारोऽस्तीति स्मृतिचन्द्रिकायाम्। तन्न । अस्यार्थस्यास्माद्वचनादप्रतीतेरिति मिताक्षरायाम्। अयं च द्विगुणलाभो हिरण्यविषयः। पश्वादौ तु—

सन्ततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणः स्मृतः ॥ (२।५७)

इति याज्ञवल्क्येन द्वैगुण्यापवादस्योक्तत्वात् । दर्शनप्रतिभूर्यद्यङ्गीकृते काले अधमर्णं दर्शयितुमशक्तस्तदा तदन्वेषणार्थं पक्षत्रयं देयम्। यदि तत्र दर्शयति तदा मोचनीयम्। अथ न दर्शयति तदा प्रयुक्तं धनं दाप्य इत्याह—

कात्यायनः,

नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम् ।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥
काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत् ।
निबन्धं दापयेत्तं तु प्रेते चैष विधिः स्मृतः ॥ इति ।

बृहस्पतिरपि—

नष्टस्यान्वेषणे कालं दद्यात् प्रतिभुवे धनी ।
देशानुरूपतः पक्षं मासं सार्द्धमथापि वा ॥
नात्यन्तं पीडनीयाः स्युर्ऋणं दाप्याः शनैः शनैः ।
स्वसाक्ष्ये न नियोज्याः स्युर्विधिः प्रतिभुवामयम् ॥ इति ।

स्वसाक्ष्ये=स्वयं समक्षदर्शने। प्रातिभाव्ये निषिद्धानाह—

कात्यायनः,

न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा ।
विरुद्धो दण्डितश्चैव सन्दिग्धश्चैव न क्वचित् ।
नैव रिक्थी न मित्रं च न चैवात्यन्तवासिनः ।
राजकार्यनियुक्ताश्च ये च प्रव्राजिता नराः ॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ।
जीवन् वापि पिता यस्य तथैवेच्छाप्रवर्त्तकः ॥
नाविज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति ॥ इति ।

सन्दिग्धो=ऽभिशस्तः । अत्यन्तवासिनो=नैष्ठिकब्रह्मचारिणः ।

नारदोऽपि—

साक्षित्वं प्रातिभाव्यं च दानग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥ इति ।

याज्ञवल्क्योऽपि—

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥ इति । (२।५२)

ननु "जायापत्योर्न विभागो विद्यत" इत्यापस्तम्बेन विभागस्य निषिद्धत्वाद्दम्पत्योर्विभागात् प्राक् प्रातिभाव्यादिप्रतिषेधोऽनुपपन्न इति तदंशे विभागात् प्रागिति विशेषणानर्थक्यमिति चेत् ,न । अनेन वचनेन श्रौतस्मार्त्ताग्निसाध्येषु कर्मसु तत्फलेषु च विभागाभावस्योक्तत्वात् । यतो "जायापत्योर्न विभागो विद्यत" इत्यभिसन्धाय "पाणिग्रहणाद्धि सहत्वं कर्मसु" "तथा पुण्यफलेषु च" इति हेतुमुक्तवान् । हि=यस्मात् पाणिग्रहणादारभ्य सहत्वं कर्मसु श्रूयते "जायापती अग्निमादधीयाताम्" इति । तस्मादाधाने सहाधिकारात् तत्सिद्धाग्निसाध्येषु कर्मसु सहाधिकारः । एवं विवाहसिद्धाग्निसाध्येष्वपि कर्मसु—

कर्म स्मार्त्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।

इति योगीश्वरेणाभिधानात् । तथा पुण्यफलेषु स्वर्गादिषु सहत्वं श्रूयते । (१) "दिवि ज्योतिरजरमारभेताम्" इत्यादि । येषु पुण्यकर्मसु सहाधिकारस्तेषां फलेषु सहत्वमित्यर्थः । तेन भर्त्रनुज्ञयानुष्ठितानां पूर्त्तानां फलेषु न सहत्वमिति ।

केचित्तु अनेनैव विभागात् प्राक् दम्पत्योः प्रातिभाव्यादि निषिद्ध·

---

(१) दिवि=द्युलोकादा अजरं=कारणभूतसुकृतनाशपर्यन्तमविनश्वरं जरारहितं वा ज्योतिः=तेजःप्रधानं कलेवरमारभेतामित्यर्थः ।

मभिदधता अनयोर्विभागोऽस्तीत्यर्थादुक्तं भवतीति। न चापस्तम्बवचनविरोधः ग्रहणाग्रहणवत् (१)विकल्पाङ्गीकरणादित्याहुः।

तदतिफल्गु। शाब्दार्थिकयोस्तुल्यबलत्वाभावेन विकल्पानुपपत्तेः। अत एव "तुल्यार्थास्तु विकल्पेरन्" (अ०१२पा०३अधि०४सु०१०) इति भगवता जैमिनिनोक्तम्। "पाणिग्रहणाद्धि सहत्वं कर्मसु" इत्यादौ कर्मादिग्रहणानर्थक्यापाताच्च। किञ्च पूर्वोक्तप्रकारेणैवोपपत्तौ सत्यामष्टदोषदुष्टविकल्पाङ्गीकरणस्याप्यनुचितत्वात्। न चैवं ग्रहणाग्रहणादावपि विकल्पो न स्यात्। न स्याद्यदि गत्यन्तरयुतत्वं स्यात। न च तदस्तीत्यनन्यगतिकतया तस्याङ्गीकारात्।

ननु द्रव्यस्वामित्वेऽपि सहत्वं श्रूयते "द्रव्यपरिग्रहेषु च न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति" इति चेत्, सत्यम। अनेन विभागाभावो नोक्तः। किन्तु पत्न्या द्रव्यस्वामित्वमुक्तम्। यतो द्रव्यपरिग्रहेषु चेत्युक्त्वा न हि भर्तुर्विप्रवासे नैमित्तिकेऽवश्यकर्त्तव्येऽतिथिभोजनादौ हि=यस्मात् स्तेयमिति नोपदिशन्ति मन्वादयस्तस्माद्भार्याया अपि द्रव्यस्वामित्वमस्ति अन्यथा स्तेयं स्यादिति। तस्माद्भार्याया अपि भर्त्तुरिच्छया द्रव्यविभागोऽस्ति न स्वेच्छया। अत एव—

याज्ञवल्क्यः,

यदि कुर्य्यात् समानंशान् पत्न्यः कार्य्याः समांशिकाः। इति। (२।११५)

तस्मात् सुष्ठूक्तं प्राग्विभागात् दम्पत्योर्न प्रातिभाव्यादिकमिति।

अथर्णग्रहणप्रकारमाह बृहस्पतिः—

प्रतिपन्नमृणं दाप्यः सामादिभिरुपक्रमैः। इति।

प्रतिपन्नम्=ऋणसत्तायां सम्प्रतिपन्नम(२)। दाप्यः=दातुमुन्मुखः कर्त्तव्यो धनिनेत्यर्थः।

तथा च मनुः—

यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः।
तैस्तैरुपायैः सङ्गृह्य साधयेदधमर्णिकम्॥ (८।४८)

के ते उपाया इत्यपेक्षायां स एवाह—

धर्मेण व्यवहारेण छलेनाचरितेन च।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च॥ इति। (८।४९)

बृहस्पतिरपि—

धर्मोपधिबलात्कारैः गृहसंरोधनेन च। इति।

गृहसंरोधनेन=आचरिताख्योपायेन।

---

(१) षोडशिग्रहणाग्रहणवदित्यर्थः। (२) प्रतिपन्नम्=अभ्युपगतमिति पाठान्तरम्।

कात्यायनोऽपि—

पीडनेनोपरोधेन साधयेद्दणिकं धनी।
कर्मणा व्यवहारेण सान्त्वेनादौ विभावितम्।
आददीतार्थमेवं तु व्याजेनाचरितेन च॥ इति।

धर्मादीनां स्वरूपमाह बृहस्पतिः—

सुहृत्सम्बन्धिसन्दिष्टैः सामोक्त्यानुगमेन च।
प्रायेण वा ऋणी दाप्यो धर्म एष उदाहृतः॥
छद्मना याचितं चार्थमानीय ऋणिकाद्धनी।
अन्वाहितादि सङ्गृह्य दाप्यते यत्र सोपधिः॥
बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः।
ऋणिको दाप्यते यत्र बलात्कारः स कीर्त्तितः॥
दारपुत्रपशून्बद्ध्वा कृत्वा द्वारोपवेशनम्।
यत्रर्णिको दाप्यतेऽर्थं तदाचरितमुच्यते॥ इति।

सुहृत्सम्बन्धिसन्दिष्टैः=सुहृदां सम्बन्धिनां सन्देशैः। सामोक्त्या=प्रियवाक्येन। अनुगमेन=अनुसरणेन। प्रायेण=प्रार्थनाबाहुल्येन। छद्मना=उत्सवादिव्याजेन गृहीततदीयभूषणाद्यप्रत्यर्पणेन। अन्वाहितम्=अन्यस्मै दातुमर्पितम्। आदिशब्दात् प्रकारान्तरस्यापि ग्रहणम्। उक्तप्रकारेणाधमर्णस्य भूषणादि स्वाधीनीकृत्य यत्र स ऋणं दाप्यते स उपधिरित्यर्थः। दाप्यते=प्रतिदानोन्मुखीक्रियते। अर्थं=स्वकीयमर्थम्। शेषं स्पष्टार्थम्। धर्मादयश्चोपायाः पुरुषापेक्षया प्रयोक्तव्याः। अत आह—

कात्यायनः,

राजानं स्वामिनं विप्रं सान्त्वेनैव प्रदापयेत्।
ऋक्थिनं सुहृदं वापि छलेनैव प्रसाधयेत्॥
वणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद्भृगुः।
देशाचारेण दाप्याः स्युर्दुष्टान् सम्पीड्य दापयेत्॥ इति।

सान्त्वेन=साम्ना धर्माख्योपायेनेत्यर्थः। वणिगादयो देशाचारानुसारेण दाप्याः स्युरित्यन्वयः। सम्पीड्येति बलात्काराचरिताख्योपाययोर्ग्रहणम्। कः पुनर्देशाचार इत्याकाङ्क्षायां—

स एवाह,

धार्योऽवरुद्धस्त्वृणिकः प्रकाशं जनसंसदि।
यावन्न दद्यात्तद्देयं देशाचारस्थितिर्यथा॥ इति।

यत्र देशे धनिकेन स्वयमेव धार्य इत्याचारस्तत्र तथैव धार्यः। यत्र

उत्कोचादिना अन्येनावरुध्य धार्य इति देशाचारस्थितिस्तत्र तथैवेति यथेत्यस्यार्थः।

अवरुद्धस्य विण्मूत्रशङ्कायां तत्प्रतिरोधो न कार्य इति स एव दर्शयति—

विण्मूत्रशङ्का यत्र स्याद्धार्यमाणस्य देहिनः।
पृष्ठतो वानुगन्तव्यो निबद्धं वा समुत्सृजेत्॥ इति।

निबद्धमिति शृङ्खलादिना बद्धमेव मूत्राद्युत्सर्गार्थं प्रेषयेदित्यर्थः। अत्र निकृष्टविषयो द्वितीयः पक्षः तदितरविषयस्त्वाद्यपक्ष इत्युचितव्यवस्थावगन्तव्येति स्मृतिचन्द्रिकायाम्। दर्शनप्रतिभुवं गृहीत्वाऽवरुद्धस्य भोजनादिकाले मोकः करणीयः। यत आह--

स एव,

स कृतप्रतिभूश्चैव मोक्तव्यः स्याद्दिने दिने।
आहारकाले प्राप्ते च निबन्धे प्रतिभूः स्थितः॥ इति।

निबन्धे=पलायनप्रतिबन्धे। यदा तु प्रतिभूर्न लभ्यते लब्धो वाऽधमर्णो न ददामीति वदति तदा पक्षद्वयमाह—

स एव,

यो दर्शनप्रतिभुवं नाधिगच्छेन्न चाश्रयेत्।
स चारके निरोद्धव्यः स्थाप्यो वावेद्य रक्षिणः॥ इति।

नाधिगच्छेत्=न प्राप्नुयात्। नाश्रयेत्=नाङ्गीकुर्यात्। चारके=कारागृहे। रक्षिणो=रक्षकान् रक्षणे पुरुषान्नियुज्य प्रस्थाप्यो वेत्यर्थः। एतस्य प्रतिभूविशेषे प्रतिषेधमाह—

स एव,

न चारके निरोद्धव्य आर्यः प्रात्ययिकः शुचिः। इति।

प्रात्ययिकः=विश्वास्यः। कथं तर्हि स मोचनीय इत्यपेक्षिते—

स एवाह,

सोऽनिबद्धः प्रमोक्तव्यो निबद्धः शपथेन वा। इति।

अनिबद्धः=रक्षकशून्यः। निबद्धः=नियमितः। एवमुक्तधर्म्मादिप्रयोगेण साधयन् धनिको न निवारणीयो राज्ञेत्याह—

मनुः,

यः स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णिकात्।
स राज्ञा नाऽभियोक्तव्यः स्वकं संसाधयन्धनम्॥ इति। (८।५०)

विष्णुरपि—

प्रयुक्तमर्थं यथाकथञ्चित्संसाध्यमानो न राज्ञो वाच्यः स्यादिति।

यथाकथञ्चित्=स्मृत्याचाराविरुद्धेन मार्गेण।

याज्ञवल्क्योऽपि—

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ॥ इति । (२।४०)

साध्यमानश्चेद्राजसन्निधिं गत्वा धनिकं धारयति तदा स दण्ड्य इत्याह—

स एव,

साध्यमानो नृपं गच्छन्दण्ड्यो दाप्यश्च तद्धनम् ॥ इति । (२।४०)

तस्य धनिकस्य धनं तत्समं च दण्डं दाप्य इत्यर्थः ।

अत एव विष्णुः—

साध्यमानश्चेद्राजानमभिगच्छेत्तत्समं दण्ड्य इति ।

तत्समम्=धनिकद्रव्यसमम् ।

यत्तु मनुना—

यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे ।

स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनम् ॥ (८।१७६)

इति स्वल्पदण्ड उक्तः स दरिद्राधमर्णविषयः । ब्राह्मणविषय इति केचित् । छन्देन=स्वेच्छया । स्मृतिचन्द्रिकायां तु दण्ड्य इति सामान्याभिधानम् असमर्थविषये स्वल्पो दण्डो यथा स्यादित्येवमर्थमिति व्याख्याय मनुवचनं प्रमाणत्वेनोपन्यस्तम् । विप्रतिपत्तौ विशेषमाह—

बृहस्पतिः,

प्रतिपन्नस्य धर्मोऽयं व्यपलापी तु संसदि ।

लेख्येन साक्षिभिर्वापि भावयित्वा प्रदाप्यते ॥ इति ।

अयं=पूर्वोक्तो धर्म ऋणसत्तायां प्रतिपन्नस्य=सम्प्रतिपन्नस्य अधमर्णस्य विषये धनिकस्य । व्यपलापी तु=अपह्नवी तु संसदि सभायां प्रमाणेनर्णं संसाध्य प्रतिदानान्मुखः कार्य्य इत्यर्थः । एवं च पूर्वोक्त—

धर्मेण व्यवहारेण छलेनाचरितेन च ।

प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥ (८।४९)

इति मनुवचने व्यवहारेणेति व्यपलापिविषयम् इतरत्सम्प्रतिपन्नविषयमिति बोद्धव्यम् । व्यवहारेण=साक्ष्याद्युपन्यासेन । अत एवासम्प्रतिपन्ने व्यवहारातिरिक्तोपायनिषेधमाह—

स एव,

न रोद्धव्यः क्रियावादी सन्दिग्धेऽर्थे कथञ्चन ।

आसेधयंस्त्वनासेध्यं दण्ड्यो भवति धर्मतः ॥ इति ।

न रोद्धव्य इति व्यवहारातिरिक्तच्छलाद्युपायोपलक्षणम् । क्रियावादिसन्दिग्धपदयोरर्थमाह—

स एव,

प्रदातव्यं यद्भवति न्यायतस्तद्ददाम्यहम् ।
एवं यत्रर्णिको ब्रूते क्रियावादी स उच्यते ॥
रूपसङ्ख्यादिलोभेषु यत्र भ्रान्तिर्द्वयोर्भवेत् ।
देयानादेययोर्वापि सन्दिग्धोऽर्थः स कीर्त्तितः ॥ इति ।

सन्दिग्धेऽर्थे धनग्रहणं कुर्वतोऽर्थहानिदण्डावाह—

स एव,

अनावेद्य तु राज्ञे यः सन्दिग्धेऽर्थे प्रवर्त्तते ।
प्रसह्य स विनेयः स्यात्स चाप्यर्थो न सिध्यति ॥ इति ।

कात्यायनोऽपि—

पीडयेत्तु धनी यत्र ऋणिकं न्यायवादिनम् ।
तस्मादर्थात् स हीयेत तत्समं चाप्नुयाद्दमम् ॥ इति ।

सावधिकमृणमवधिप्राप्तौ निरवधिकं द्वैगुण्यादिपरमवृद्धेः प्राप्तौ कार्यविशेषोपनिपातश्चेत्तस्या अप्राप्तावपि पूर्वोक्तैर्धर्मादिभिरुपायैः सवृद्धिकं ग्राह्यम् । । यद्वा परमवृद्धिसहितं मूलं कृत्वा लेख्यान्तरं ग्राह्यम् । अथवा सवृद्धिकमूलोपभोग्य आधिर्ग्राह्यः ।

तथा च बृहस्पतिः—

पूर्णावधौ शान्तलाभमृणमुद्ग्राहयेद्धनी ।
कारयेद्वा ऋणी लेख्यं चक्रवृद्धिव्यवस्थया ॥
द्विगुणस्योपरि यथा चक्रवृद्धिः प्रगृह्यते ।
भोगलाभस्तदा तत्र मूलं स्यात्सोदयं त्वृणम् ॥ इति ।

शान्तलाभग्रहणमशान्तलाभस्योपलक्षणम् । उद्ग्रहणं धर्माद्युपायेन साधनम् । यदा चक्रवृद्धिर्भोग्याधिर्वा गृह्यते तत्र सोदयं मूलमृणं स्यादित्यर्थः ।

मनुरपि ( अ० ८ )

ऋणं दातुमशक्तो यः कर्त्तुमिच्छेत् पुनः क्रियाम् ।
स दत्त्वा निर्जितां वृद्धिं करणं परिवर्त्तयेत् ॥ (१५४)
अदर्शयित्वा तत्रैव हिरण्यं परिवर्त्तयेत् ।
यावती सम्भवेद्वृद्धिस्तावतीं दातुमर्हति ॥ (१५५)
चक्रवृद्धिं समारूढो देशकालव्यवस्थितः ।
अतिक्रामन्देशकालौ न तत्फलमवाप्नुयात् ॥ इति । (१५६)

निर्जितां लभ्यत्वेनात्माधीनत्वं सम्पन्नाम् । करणं परिवर्त्तयेत्=अन्यल्लेख्यसाक्ष्यादि कुर्यात् । अदर्शयित्वा हिरण्यं दीयमानमिति शेषः । तेन धनिने

सर्वं सवृद्धिकमृणमदत्त्वेत्यर्थः। तत्रैव परिवर्तयेत्=पुनः करणं परिवर्त्तयेत्। साक्षिसमक्षमेतत् ब्रूयाद्यदेतावन्मूलमस्मै धारयामि, एतावती च वृद्धिरिति पत्रे चारोपयेदित्यर्थः। एतच्च यावद्वृद्धि धनं दातुं शक्नोति तावद्दत्त्वा करणपरिवर्त्तनं कार्यम्। समारूढः=प्रतिपन्नः। अङ्गीकृतवानिति यावत्। तत्फलं=चक्रवृद्धिलक्षणम्।

कात्यायनोऽपि—

ग्राह्यं स्याद्द्विगुणं द्रव्यं प्रयुक्तं धनिना सदा।
लभेत चेन्न द्विगुणं पुनर्वृद्धिं प्रकल्पयेत्॥ इति।

अधमर्णस्य धनदानाशक्तौ ग्रहणप्रकारमाह—

नारदः,

अथ शक्तिविहीनः स्यादृणी कालविपर्ययात्।
शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयम्॥ इति। (व्य०प०१।१२१)

यथोदयं=यथाधनोत्पत्ति दाप्यो ब्राह्मण इति शेषः।

तथा च याज्ञवल्क्यः—

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्॥ इति। (२।४३)

अत्र च हीनजातिग्रहणं सजातेरप्युपलक्षणम्। अतश्च समानजातिमपि परिक्षीणं यथोचितं कर्म कारयेत्। ब्राह्मणग्रहणं च श्रेयोजातेरुपलक्षणम्। अतश्च क्षत्रियादिरपि परिक्षीणो यथोदयं शनैः शनैर्वैश्यादेर्दाप्य इत्यर्थः। एतदेव स्पष्टमाह—

मनुः,

कर्मणाऽपि समं कुर्याद्धनिकस्याधमर्णिकः।
समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः॥ इति। (८।१७७)

कर्मणापि समं कुर्यात्=अधमर्णिकत्वेनोत्तमर्णादधरीभूतमात्मानं तावद्धनकार्य्यकर्मकरणेनापि समं कुर्यात् अधमर्णत्वमपनयेदित्यर्थः। श्रेयान्=उत्तमजातीयो गुणाधिकश्च।

बृहस्पतिरपि—

निर्द्धनमृणिनं कर्म गृहमानीय कारयेत्।
शौण्डिकाद्यं ब्राह्मणस्तु दापनीयः शनैः शनैः॥ इति।

शौण्डिकाद्यं=समापकृष्टजाती। ब्राह्मणग्रहणमुत्कृष्टजातेरुपलक्षणार्थम्। यत्तु कात्यायनवचनम्—

कर्षकान् क्षत्रविट्शूद्रान् समहीनांस्तु दापयेत्। इति।
तत् तेषां यथोदयं धनदानसामर्थ्ये मन्तव्यम्। कल्पतरौ तु

कर्मणा क्षत्रविट्शूद्रान् समहीनांस्तु दापयेत् ।

इति पठितम् । तत्र कर्मणा दापयेदित्यन्वयान्न कोऽपि विरोधः ।

कात्यायनोऽपि—

धनदानासहं बुद्ध्वा स्वाधीनं कर्म कारयेत् ।

कर्मकरणासहं तु बन्धनागारे वासयेदित्याह—

स एव,

अशक्तौ बन्धनागारे प्रवेश्यो ब्राह्मणादृते । इति ।

अत्र कर्मकरणाशक्तौ बन्धनागारे प्रवेशाभिधानं सामर्थ्योत्पत्तौ कथञ्चिदृणप्राप्त्यर्थमित्यभिहितं स्मृतिचन्द्रिकायाम् । यस्तु पूर्वमनावेद्याशुभं कर्म कारयति तत्रापि विशेषं—

स एवाह,

यदि ह्यादावनादिष्टमशुभं कर्म कारयेत् ।

प्राप्नुयात्साहसं पूर्वमृणान्मुच्येत चर्णिकः ॥ इति ।

युगपदनेकोत्तमर्णसमवाये दानानुक्रममाह—

याज्ञवल्क्यः,

गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।

दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥ इति । (२।४१)

नृपतेः क्षत्रियस्य । समानजातीयेषूत्तमर्णेषु ग्रहणक्रमेण देयम् । विजातीयेषु तु ब्राह्मणादिवर्णक्रमेणेत्यर्थः ।

कात्यायनोऽपि—

नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत् ।

तत्तदेवाग्रतो देयं राज्ञः स्याच्छ्रोत्रियादनु च ॥ इति ।

श्रोत्रियादनु=ब्राह्मणानन्तरम् । एकदिनकृतनानर्णसमवाये युगपद्देयम् । धनाल्पत्वबहुत्वयोस्तु तदनुसारेण भागं परिकल्प्य दापनीयम् ।

तथा च कात्यायन एव—

एकाहे लिखितं यत्र तत्र कुर्यादृणं समम् ।

ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम् ॥ इति ।

ग्रहणं=बन्धकदानम् , रक्षणं=बन्धकपरिपालनम् , लाभं=बन्धकभोगं च समं=युगपदेव कुर्यात् । अन्यथा अहर्भेदे तूक्तक्रमेण कुर्यादित्यर्थः । अनेकर्णसमवायेऽपि अधमर्णो यदुत्तमर्णाद्द्रव्यं गृहीत्वा यद्व्यवहारादिकं करोति तस्मात्प्राप्तं धनं तदुत्तमर्णायैव दद्यान्नान्येषाम् ।

तथा च स एव,

यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत् ।

तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥ इति।

एवकारस्तस्येत्यनन्तरं द्रष्टव्यः। अधमर्णाभावे तत्पुत्रेण सवृद्धिकमृणं देयमित्याह—

बृहस्पतिः,

याचमानाय दातव्यमल्पकालमृणं कृतम्।
पूर्णावधौ शान्तलाभमभावे च पितुः सुतैः ॥ इति।

अल्पकालं=अदीर्घकालं निरवधिकमिति यावत्। निरवधिकं याचनानन्तरमेव देयं परमवृद्धौ जातायामिति मदनरत्ने। सावधिकमवधिपूर्त्तौ शान्तलाभं शान्त्यनन्तरम्। ऋणग्रहीतुः पितुरभावे पितृकृतमृणं पुत्रैरवश्यं देयमित्यर्थः। आवश्यकदाने हेतुमाह—

नारदः, (व्य०प०१)

इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्यतस्ततः।
उत्तमर्णाधमर्णाभ्यां मामयं मोचयिष्यति ॥ (५)
अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः।
ऋणात्पिता मोचनीयो यथा न नरकं व्रजेत् ॥ (६)

यतस्ततः=येन केनाप्युपायेन। उत्तममृणम् "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" इत्यादितैत्तिरीयश्रुत्युक्तम्। अधममृणं परहस्तात् कुसीदविधिना गृहीतम्। जातेन=व्यवहाराभिज्ञतया निष्पन्नेनेत्यर्थः।

अप्राप्तव्यवहारश्चेत् स्वतन्त्रोऽपि हि नर्णभाक्।
स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ॥
(ना०स्मृ०व्य०प०१श्लो०३१)

इति स्मरणात्। अप्राप्तव्यवहारस्यासेधाह्वाननिषेधश्च स्मर्यते—

अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः॥ इति। (ना०स्मृ०अ०१।५४)

कात्यायनोऽपि—

पितॄणां सूनुभिर्जातैर्दानेनैवाधमाद्दणात्।
विमोक्षस्तु यतस्तस्मादिच्छन्ति पितरः सुतान् ॥
नाप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित्।
काले तु विधिना देयं वसेयुर्नरकेऽन्यथा ॥ इति।

नाप्राप्तव्यवहारैः=हेयोपादेयपरिज्ञानविशेषसहितैः षोडशवर्षैरित्यर्थः। षोडशवार्षिकस्य व्यवहारज्ञत्वमाह—

नारदः, (व्य०प०१)

गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः।

बाल अषोड़शाद्वर्षात् पौगण्डश्चेति शब्द्यते ॥ (३५)
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते । इति । (३६)

यस्य बहवः पुत्रास्तेषां विभक्ताविभक्तभेदेन दानप्रकारमाह—

नारदः, (व्य०प०१)

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः ।
अविभक्ता विभक्ता वा यो वा तामुद्वहेद्धुरम् ॥ इति । (२)

एतदुक्तं भवति विभक्तैः स्वांशानुरूपं देयम् । अविभक्तैरपि समप्रधानतयाऽवस्थाने सम्भूय समुत्थानेन देयम् । गुणप्रधानभावेनावस्थाने यो मुख्यस्तेन देयमिति ।

पुत्रेण रिक्थग्रहणाग्रहणयोः सवृद्धिकमेव देयम् । पुत्राभावे पौत्रेण रिक्थग्रहणे सोदयं देयम् । अग्रहणे मूलमेव । प्रपौत्रेण तु रिक्थाग्रहणे मूलमपि न देयम् ।

तथा च बृहस्पतिः—

ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम् ।
पैतामहं समं देयं न देयं तत्सुतस्य तु ॥ इति ।

आत्मीयवत् सवृद्धिकमित्यर्थः । तत्सुतस्य=अगृहीतधनस्य प्रपौत्रस्य ।

एतदेवाभिप्रेत्य—

नारदः, (व्य०प०१)

क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् ।
देयं पैतामहं पौत्रैस्तच्चतुर्थान्निवर्त्तते ॥ इति । (४)

कात्यायनोऽपि—

पित्रभावे तु दातव्यमृणं पौत्रेण यत्नतः ।
चतुर्थेन न दातव्यं तस्मात्तद्विनिवर्त्तयेत् ॥ इति ।

देयमृणमनेन देयमस्मिन् काले देयमित्येतत्त्रितयमाह—

याज्ञवल्क्यः,

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥ इति । (२।५०)

यदि पिता दातव्यमृणमदत्त्वा मृतो दूरदेशान्तरं गतोऽचिकित्सनीयव्याध्याद्यभिभूतो वा तदा तत्कृतमृणं पुत्रेण तदभावे पौत्रेण देयमित्यर्थः । पुत्रेण पौत्रेण वापह्नुतेऽर्थिना साक्ष्यादिभिर्भावितमृणं देयं पुत्रपौत्रैरित्यन्वयः । प्रोषिते यत्प्रतिदानं तत्प्रवासादारभ्य विंशतिवर्षादूर्ध्वं मन्तव्यम् ।

तथा च नारदः,

**नार्वाक्सम्वत्सराद्विंशात् पितरि प्रोषिते सुतः ।**

**ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्य्यथापि वा ॥ इति ।** (व्य०प०१।१४)

कात्यायनोऽपि—

**विद्यमानेऽपि रोगार्त्ते स्वदेशात् प्रोषिते तथा ।**

विद्यमानेऽपि=**जीवत्यपि** । विंशात् **संवत्सरादूर्ध्वमितिशेषः** ।

अत एव विष्णुः—

**धनग्राहिणि प्रेते प्रव्रजिते द्विदशाः समाः प्रोषिते वा तत्पुत्रपौत्रैर्देयं नातः परमभीप्सुभिरिति ।**

प्रव्रजिते=**संन्यस्ते** । द्विदशाः समाः=**विंशतिवर्षाणि । अस्य प्रोषित इत्यनेन सम्बन्धः** । अतः परं=**विंशतिवर्षादूर्ध्वमभीप्सुभिर्देयमित्यर्थः । एतदुक्तं भवति । पितरि मृते प्रव्रजिते वा पुत्रपौत्रैः प्राप्तव्यवहारैर्देयं प्रोषिते तु विंशतिवर्षादूर्द्ध्वमिति । नातः परमभीप्सुभिरित्यपि पाठस्तस्यायमर्थः । विंशतिवर्षादूर्द्ध्वं न विलम्बः कार्यः ऋणप्रतिदानमभीप्सुभिरिति ।**

**अदेयमृणमाह** याज्ञवल्क्यः—

**सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम् ।**

**वृथादानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥ इति** (२।४७)

**सुरापानेन यत् कृतमृणम् ।** कामकृतं=**स्त्रीव्यसनेन कृतम् ।** द्यूते **पराजयनिर्वृत्तम् ।** दण्डशुल्कावशिष्टकं=**दण्डशुल्कयोरवशिष्टम् ।** वृथादानं=**बन्यादिभ्यो यत्प्रतिज्ञातम् ।**

**धूर्त्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे ।**

**चाटचारणचौरेषु दत्तं भवति निष्फलम् ॥**

**इति वचनात् । न च दण्डशुल्कावशिष्टकमित्यनेनावशेषस्य दाननिषेधात् सर्वं दातव्यमिति शङ्कनीयम् , यत** आहोशना—

**दण्डं वा दण्डशेषं वा शुल्कं तच्छेषमेव वा ।**

**न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम् ॥ इति ।**

न व्यावहारिकं=**सुरापानादिनिमित्तमित्यर्थः ।**

गौतमोऽपि—

**मद्यशुल्कद्यूतकामदण्डान् पुत्रा नाध्यावहेयुरिति ।**

**न पुत्रस्योपरि भवन्तीत्यर्थः ।**

बृहस्पतिरपि—

**(१)सौराक्षिके वृथादानं कामक्रोधप्रतिश्रुतम् ।**

---

(१) सौरम्=सुरापानकृतम् । आक्षिकम्=द्यूतकृतम् ।

प्रातिभाव्यं दण्डशुल्कशेषं पुत्रो न दापयेत् ॥ इति ।

प्रातिभाव्यं=प्रातिभाव्यागतम् । कामक्रोधप्रतिश्रुतयोः स्वरूपं दर्शयति-

कात्यायनः,

लिखितं मुक्तकं वापि देयं यत्तु प्रतिश्रुतम् ।
परपूर्वास्त्रियै तत्तु विद्यात्कामकृतं नृणाम् ॥
यत्र हिंसां समुत्पाद्य क्रोधाद्द्रव्यं विनाश्य वा ।
उक्तं तुष्टिकरं यत्तु विद्यात्क्रोधकृतं तु तत् ॥ इति ।

मुक्तकं=लेखनरहितम् । पित्रात्मादिकृतर्णसमवाये दानक्रममाह —

बृहस्पतिः,

पित्र्यं पूर्वमृणं देयं पश्चादात्मीयमेव च ।
तयोः पैतामहं पूर्वं देयमेवमृणं सदा ॥ इति ।

तयोः=ताभ्यां पित्रात्मीयाभ्यामित्यर्थः । रिक्थग्राहाभावेऽपि पुत्रेण देयमित्याह—

कात्यायनः,

पित्र्यर्णे विद्यमाने तु न च पुत्रो धनं हरेत् ।
देयं तद्धनिके द्रव्यं मृते पुत्रस्तु दाप्यते ॥ इति ।

विभक्तः पुत्रो विभागानन्तरं पितृकृते ऋणे तिष्ठति तस्मिन्मृते तद्धनं न गृह्णीयात्किं तु धनिकाय दद्यात् । यदि किञ्चित्ततोऽवशिष्टं भवति तर्हि गृह्णीयात् । पितृधनाभावे रिक्थग्रहणराहित्येऽपि स्वधनं दद्यादित्यर्थः । अत्र पुत्रग्रहणं पौत्रस्याप्युपलक्षणम् । "पुत्रपौत्रैर्ऋणं देयं" इति वचने उभयोः साम्येन ग्रहणात् । पौत्रस्यावृद्धिकदानं तु वाचनिकमिति न तस्यानेन साम्यपाठेन निवृत्तिः । अनेकऋणदातृसमवाये क्रममाह—

याज्ञवल्क्यः,

रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥ इति (२।५१)

दायविभागक्रमेण प्राप्तं यद्द्रव्यं तद्रिक्थं तद्यो गृह्णाति स रिक्थग्राहो यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतमृणं दाप्य इत्यर्थः । योषितं भार्यां गृह्णातीति योषिद्ग्राहो यदीयां योषितं गृह्णाति स तत्कृतमृणं दाप्य इत्यर्थः । पुत्रोऽनन्याश्रितद्रव्यः अन्यमाश्रितं अन्याश्रितम् एतादृशं यद्द्रव्यं परकीयं द्रव्यं मातापितृसम्बन्धिद्रव्यमिति यावत् । अन्यशब्देन पित्रोर्विवक्षणात् । तन्मातापितृद्रव्यं यस्य नास्ति दायग्रहणायोग्यत्वात् स क्लीबादिः पुत्रोऽनन्याश्रितद्रव्य इत्यर्थः । पुत्रहीनस्य=दायग्र-

हणार्हपुत्रहीनस्य रिक्थिन ऋणं दाप्य इत्यर्थः। एतेषां समवाये पाठक्रमादेव दाप्याः। यत्तु—

सपुत्रस्य वाप्यपुत्रस्य रिक्थग्राही दद्यात्।

इति विष्णुवचनम्। तद्दायानर्हपुत्रस्य सद्भावेऽप्यसद्भावेऽपि वा तदनादरेण रिक्थग्राही ऋणं दद्यादित्येवम्परम्। रिक्थग्राह्यभावे योषिद्ग्राही दाप्यः। अस्मिन्नर्थे विष्णुरपि—

विधनस्य स्त्रीग्राहीति।

विधनस्य=रिक्थग्राहिराहितस्य।

बृहस्पतिरपि,

स्त्रीहारी च तथैव स्यादभावे धनहारिणः। इति।

योषिद्ग्राहाभावे दायभागानर्हः पुत्रोऽदाप्य इत्यस्मिन्नर्थे-

नारदोऽपि,

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत्।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः॥ इति।

(व्य०प०१।२३)

स्त्रीधनिनोरसतोः पुत्र एव ऋणभागित्यन्वयः। स्त्री च धनं च स्त्रीधने तद्वतोः स्त्रीधनहारिणोरित्यर्थः। अत्र स्त्रीहारी धनिपुत्रयोरिति पुत्राभावयोषिद्ग्राहस्यर्णदायित्वाऽभिधानं दायार्हपुत्राभावे मन्तव्यम्। अपुत्रस्य चेत्यनुवृत्तौ-"विधनस्य स्त्रीहारी"इति विष्णुनाऽभिधानात्। "पुत्रोऽसतोः स्त्रीधनिनोः" इति स्वोक्तिविरोधाच्च।

ननु "रिक्थग्राह ऋणं दाप्य" इति वचनमेतेषां समवाये क्रमविधायकम्। स एव तु नोपपद्यते। पुत्रे सत्यन्यस्य रिक्थग्राहित्वासम्भवात्। न च पुत्रे सत्यपि पितृभ्रात्रो रिक्थहारित्वमिति वाच्यम्।

न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः।

इति वचनेन पुत्रे सत्यन्यस्य रिक्थहारित्वनिषेधात्। योषिद्ग्राहोऽपि न सम्भवति।

न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते। (मनुः ५।१६२)

इति वचनेन पत्यन्तरनिषेधात्। पुत्रोऽनन्याश्रितद्रव्य इत्येतदपि न वक्तव्यम्। "रिक्थग्राह ऋणं दाप्य" इत्यनेन गतार्थत्वात्। न च रिक्थग्राहित्वाभावेऽपि पुत्रेण दातव्यमित्येतदर्थमिदम्। तथा सत्यनन्याश्रित इत्यस्य वैयर्थ्यं स्यात्। पुत्रे सति मातापितृद्रव्यस्य अन्यगामित्वासम्भवात्। "न भ्रातर" इति पूर्वोदाहृतवचनात्। पुत्रहीनस्य रिक्थिन इत्येतदपि न वक्तव्यम्। "रिक्थग्राह ऋणं दाप्य"इत्यनेन सति पुत्रे रि-

क्थग्राहिण एव ऋणापाकरणाधिकारित्वस्याभिधानेऽसति पुत्रे कैमुतिकन्यायेन तत्सिद्धेरिति चेत् , मैवं वादीः। सत्स्वपि क्लीबादिषु पुत्रेषु अन्यायवर्त्तिषु च सवर्णापुत्रेषु पितृव्यादीनां रिक्थग्राहित्वसम्भवात्। क्लीबादीनां रिक्थग्राहित्वाभावं दर्शयति—

मनुः,

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः॥ इति ॥(९।२०१)

याज्ञवल्क्येनापि क्लीबादीननुक्रम्य "भर्त्तव्याश्च निरंशका" इत्युक्तम्। अन्यायवृत्तस्य सवर्णापुत्रस्य रिक्थग्राहित्वाभावं दर्शयति—

गौतमः, सवर्णापुत्रोऽप्यन्यायवृत्तो न लभतैकेषामिति।

तस्मात् पुत्रे सत्यपि रिक्थग्राह्यन्यः सम्भवति। योषिद्ग्राहित्वमपि रागकलुषीकृतचित्तस्यातिक्रान्तनिषेधस्य सम्भवति। तस्य ऋणापाकरणे ऽधिकारो भवत्येव। यश्चतसृणां स्वैरिणीनामन्तिमां गृह्णाति यश्च पुनर्भ्वां तिसृणां प्रथमाम्।

तथा च नारदः—(व्य०प० १)

अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम्।
ऋणं तयोः पतिकृतं दद्याद्यस्ते उपाश्नुते॥ (२४)
अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम्।
ऋणं वोढुः स भजते तदेवास्य धनं स्मृतम्॥ इति (२२)

चतसृणां स्वैरिणीनां या अन्तिमा तिसृणां पुनर्भुवां च या प्रथमा तयोः पत्या कृतमृणं ते य उपाश्नुते=पतित्वेनोपभुङ्क्ते स दद्यादित्यर्थः। उपैति= पतित्वेनोपभुङ्क्ते। पुनर्भ्वः स्वैरिणीश्च दर्शयति—

स एव, (व्य०प० १२)

परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम्।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा॥ (४५)
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारमर्हति॥ (४६)
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते।
उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्त्तिता॥ (४७)
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता॥ (४८)
स्त्रीप्रसूताऽप्रसुता वा पत्यावेव तु जीवति।
कामात्समाश्रयेदन्यं स्वैरिणी प्रथमा तु सा॥ (४९)

कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्त्तिता ॥ (५०)
मृते भर्त्तरि तु प्राप्तान्देवरादीनपास्य या ।
उपगच्छेत्परं कामात्सा तृतीया प्रकीर्त्तिता ॥ (५१)
प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा तु या ।
तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तिता ॥ इति । (५२)

उत्पन्नसाहसा=क्षतयोनिः प्रौढेति यावत् । अन्यस्मै=देवराय । 'असत्सु देवरेषु' इत्यग्रेऽभिधानात् । कीदृशस्य योषिद्ग्राहस्यर्णदानेऽधिकार इत्यपेक्षिते—

स एवाह, (व्य०प०१)

या तु सप्रधनैव स्त्री सापत्या वान्यमाश्रयेत् ।
सोऽस्या दद्यादृणं भर्त्तुरुत्सृजेद्वा तथैव ताम् ॥ इति (२१)

सप्रधना=प्रकृष्टधनसहिता बहुधनेति यावत् । अस्या भर्त्तुः ऋणं दद्यादित्यन्वयः । न च योषिद्ग्रहणस्य दानाधिकारशास्त्रीयान्यथानुपपत्त्या योषिद्ग्रहणमपि पूर्वपतिकृतमृणं दातुं शास्त्रीयमिति शङ्कनीयम् । रागप्राप्तयोषिद्ग्रहणसम्भवान्न शास्त्रानुपपत्तिः । अत एवाह—

सङ्ग्रहकारः,

यत्र दद्यादृणं वोढुः पुनर्भूस्वैरिणीपतिः ।
न तेन तदुपादानं शास्त्रेण विहितं भवेत् ॥ इति ।

तदुपादनं=पुनर्भ्वां स्वैरिणीनं च ग्रहणम् । ऋणं पुत्रो दाप्य इति पुनर्वचनं योषिद्ग्राहाभावेऽस्य ऋणदानेऽधिकारो न तस्मिन् सतीति क्रमनिरूपणार्थम् । अनन्याश्रितद्रव्य इति न व्यर्थम् । पित्र्यरिक्थाभावेऽपि बहुषु पुत्रेषु सत्सु दायग्रहणयोग्यस्यैव ऋणदानेऽधिकारो न क्लीबादेर्दायानर्हस्येति प्रतिपादनार्थत्वात् । पुत्रहीनस्य रिक्थिन इत्येतदपि न व्यर्थम् । पुत्रग्रहणमुपलक्षणार्थम् । पुत्रपौत्रहीनस्य ये समनन्तरं रिक्थग्राहित्वेन दायभागे निरूपिताः प्रपौत्रादयस्ते सर्वे दायभागोक्तक्रमेण दाप्याः, यदि रिक्थं गृह्णन्ति, न चेन्न दाप्याः, पुत्रपौत्रौ तु रिक्थग्रहणाभावेऽपि दाप्यौ इति पुत्रपौत्रापेक्षया प्रपौत्रादीनां वैषम्यप्रतिपादनार्थत्वात् । पुत्रपौत्रयोः प्रपौत्राद्यपेक्षया वैषम्यं दर्शयति—

नारदः, ( व्य० प०१ )

क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् ।
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्त्तते ॥ इति । (४)

यद्वा योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तम् "सैव चास्य धनं स्मृतम्"

इति स्मरणात् लक्षणया रिक्थशब्देन योषितमङ्गीकृत्य पुत्राभावे योषिद्ग्राहो दाप्य इत्युच्यते 'पुत्रहीनस्य रिक्थिन' इत्यनेन। पुत्रहीनस्य सयोषित्कस्य ऋणं योषिद्ग्राहो दद्यादित्यर्थः। अस्मिन् पक्षे बहुधनस्त्रीहारिणोऽन्तिमस्वैरिणीप्रथमपुनर्भूहारिणश्चाभावे पुत्रो दाप्यः पुत्राभावे निर्धनानिरपत्ययोषिद्ग्राही दाप्य इति व्यवस्था द्रष्टव्या। अन्यथा योषिद्ग्राहपुत्राभावयोः पुत्रयोषिद्ग्राहौ दाप्याविति व्याख्याने उभयसद्भावे कस्याप्यदानप्रसङ्गः स्यात्। अत एव—

नारदः, ( व्य० प० १ )

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत्।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः॥ इति। (२३)

कस्मिंश्चित् स्त्रीहारिण्यसति पुत्रो दाप्यः पुत्रेऽसति कश्चित् स्त्रीहारीत्यर्थः। अथवा। एते रिक्थग्राहादयः क्रमेण दाप्या इत्युक्ते कस्य दाप्या इत्यपेक्षिते उत्तमर्णस्य तदभावे तत्पुत्रादेः तस्याप्यभावे कस्येत्यपेक्षिते आह—'पुत्रहीनस्य रिक्थिन' इति। पुत्राद्यन्वयहीनस्योत्तमर्णस्य यो रिक्थी रिक्थग्रहणयोग्यः सापिण्डादिस्तस्य दाप्या इत्यर्थः।

तथा च नारदः। ( व्य० प० १ )

ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः।(१)
निर्वपेत्तु सकुल्येषु तदभावेऽस्य बन्धुषु॥ ( ११२ )

इत्यभिधायाभिहितवान्—

यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः।
तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत्॥ इति। (११३)

इति विज्ञानेश्वरानुयायी पन्थाः। अत्र कश्चिद्वादभयङ्करकृदाह—

अहो बत जगत्ख्यातविज्ञानेश्वरयोगिनः।
पूर्वापरविरोधेऽपि नानुसन्धानमद्भुतम्॥

रिक्थग्रहणार्हस्य गृहीतरिक्थस्य पुत्रस्यान्येन रिक्थग्राहिणा सह कदा वा स समावेशः सम्भवति। अपि च पुत्रहीनस्य रिक्थिन इति पदं त्रिभिरपि सम्बध्यते द्वाभ्यामेव वा। प्रथमे पुत्र इति व्याघातस्यमुख्यमुदाहरणम्। द्वितीये भिन्नविषयता, तेषामव्यसमावेश इत्येतदपीति। तन्मन्दधियां धनमात्रम्। रिक्थग्रहणार्हपुत्रसत्त्वे एतद्वचनाप्रवृत्तेः पुत्रहीनस्येति त्रिभिरपि सम्बध्यते। न च पुत्रहीनस्य पुत्र इति व्याघातः। पुत्रहीनस्य रिक्थग्रहणार्हपुत्रहीनस्य पुत्रो रिक्थग्रहणानर्हपुत्र इत्यर्थस्योक्तत्वात्। वादभयङ्करकृता स्वयमित्थं व्याख्यातम्। तथाहि। यथै-

(१) अत्र चकारश्चेदर्थे। सः=यस्य देयं स सान्वयो ब्राह्मणः।

वान्येषा पुत्रवतामृणमनन्याश्रितद्रव्यः पुत्रो दाप्यस्तथैव पुत्रहीनस्य· रिक्थिन ऋणं रिक्थग्राही दाप्यः । तदभावे योषिद्ग्राही ऋणं दाप्यः । तदाह—

नारदः,

अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् ।
ऋणं वोढुः स भजते सैव चास्य धनं स्मृतम् ॥ इति ।

तथा,

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः ॥ इति ।

ननु स्त्रीहारिधनहारिणोरसतोः पुत्रः धनहारिपुत्रयोरसतोः स्त्री· हारीत्युभयसद्भावे न कश्चिद्दाप्य इति विरोध इति चेत्, न । पुत्रपदस्य भ्रातृपुत्रपरत्वात् । तदाह—

मनुः,

भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत् ।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ इति । (९।१८२)

तदप्यसत् । क्रमत्यागे मानाभावात् । नारदवचनं त्वस्मन्मतेऽप्यविरु· द्धम् । किञ्च नारदवचने पुत्रशब्दस्य मुख्येऽर्थे सम्भवति गौणग्रहणे प्रमाणाभावात् । न च भ्रातृपुत्रेऽपि मुख्यः प्रयोगः "पुत्रिणो मनुरब्र· वीत्" इति स्मरणादिति वाच्यम् । वृद्धव्यवहारेण जन्यपुंसि मुख्यनि· र्णयात् । न च मनुवचनविरोधः । गौणत्वेनाप्युपपत्तेः । न च शक्तिरेवा· स्तु । 'अन्यायश्चानेकार्थत्वम्' इति न्यायविरोधात् । नचैवं सैन्धवादि· शब्दानामप्यनेकार्थत्वं न स्यात् । न स्यादेव, यदि विनिगमकं स्यान्न च तदस्तीत्यगत्याङ्गीकारादिति ।

दायभागानर्हस्यापि भूयिष्ठधनवत्त्वे योषिद्ग्राहो न दाप्य इत्याह—

कात्यायनः,

पूर्वं दद्याद्धनग्राहः पुत्रस्तस्मादनन्तरम् ।
योषिद्ग्राहः सुताभावे पुत्रे वात्यन्तनिर्धने ॥ इति ।

पूर्वं रिक्थग्राहो दद्यात्तदभावे बहुतरधनयुक्तो दायानर्हः पुत्रो द द्यात्तस्याभावे योषिद्ग्राहो दद्यादित्यर्थः ।

सत्यपि दायार्हे पुत्रे तस्य यदा दुश्चिकित्स्यरोगाद्युपद्रवेण बा· ल्येन वा ऋणदानासामर्थ्यं तस्यामवस्थायां तत्पितृधनं स्वसमीपे यः स्थापयति पितृव्यादिः स ऋणं दद्यात् । तस्याभावे योषिद्ग्राहो द· द्यादित्याह—

स एव,

ऋणं तु दापयेत्पुत्रः यदि स्यान्निरुपद्रवः ।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत् सुतम् ॥
व्यसनाभिप्लुते पुत्रे बाले वा यः प्रहृश्यते ।
द्रव्यहृद्दापयेत्तं तु तस्याभावे पुरन्ध्रिहृत् ॥ इति ।

कुटुम्बार्थे पितृव्यादिना कृतमृणं कुटुम्बिना दातव्यम् ।

तथा च बृहस्पतिः—

पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति ॥ इति ।

शिष्यशब्देनान्तेवास्यपि गृह्यते । छात्रमात्रस्य विवक्षितत्वात् । गृहीत्यनेन न गृहिमात्राभिधानम् किन्तु कुटुम्बिनस्तस्यैव विवक्षितत्वात् ।

अत एव नारदः—( व्य० प० १ )

शिष्यान्तेवासिदासस्त्रीप्रेष्यकृत्यकरैश्च यत् ।
कुटुम्बहेतोरुत्क्षिप्तं दातव्यं तत्कुटुम्बिना ॥ इति । (१२)

शिष्योऽत्र वेदविद्यार्थी । अन्तेवासी=शिल्पविद्यार्थी । कुटुम्बहेतोः कुटुम्बिना कुटुम्बार्थे कृतमृणम् । असन्निधानादिना स्वानुज्ञानाभावेऽपि देयमित्याह—

कात्यायनः,

प्रोषितस्यागतेनापि कुटुम्बार्थमृणं कृतम् ।
दासस्त्रीभ्रातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगुः ॥ इति ।

मनुरपि—

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं समाचरेत् ।
स्वदेशे वा विदेशे वा तं विद्वान्न विचालयेत्॥ इति ।(८।१६७)

अध्यधीनो=दासादिः । अन्यदपि कुटुम्बकृतं कुटुम्बिना दातव्यमृणं दर्शयति—

कात्यायनः,

कुटुम्बार्थमशक्ते तु गृहीतं व्याधिते तथा ।
उपप्लवनिमित्तं च विद्यादापत्कृतं तु तत् ॥
कन्यावैवाहिके चैव प्रेतकार्येषु यत्कृतम् ।
एतत् सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः ॥ इति ।

अशक्ते=कुटुम्बभरणासमर्थे कुटुम्बिनीत्यर्थः । कन्यावैवाहिके कन्याविवाहनिमित्तम् । यत्कृतम्=येन धनेन कृतम् । प्रभोः=कुटुम्बिनः । कुटुम्बार्थव्य-

तिरिक्ते ऋणविषये—

याज्ञवल्क्य आह,

न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा ॥ इति । (२।४६)

पतिपुत्राभ्यां कृतमृणं क्रमेण योषित् भार्या माता च न दद्यात् । तथा भार्याकृतं पतिः । कुटुम्बार्थादृत इति सर्वान्वयि । तथा च कुटुम्बिना कुटुम्बार्थं येन केनापि कृतं देयमित्यर्थः ।

नारदोऽपि—( व्य०प०१ )

न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा । इति । ( १६ )

विष्णुरपि—

न स्त्री पतिपुत्रकृतं न स्त्रीकृतं पतिपुत्राविति ।

पुत्रेण कृतं पिता नेत्यस्यापवादं क्वचिदाह—

बृहस्पतिः—

ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम् ।
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति ॥ इति ।

कात्यायनोऽपि—

ऋणं पुत्रकृतं पित्रा न देयमिति धर्मतः ।
देयं प्रतिश्रुतं यत् स्याद्यच्च स्यादनुमोदितम् ॥ इति ।

प्रतिश्रुतम्=अनुज्ञातम् । अनुमोदितम्=ऋणकरणानन्तरमङ्गीकृतम् । यत्पुत्रेणापदुद्धारार्थं कृतं तदपि देयमित्याह—

नारदः, (व्य०प०१)

पितुरेव नियोगाद्वा कुटुम्बभरणाय वा ।
कृतं वा यदृणं कृच्छ्रे दद्यात्पुत्रस्य तत्पिता ॥ इति ।

"न योषित्पतिपुत्राभ्याम्" इत्यस्यापवादमाह—

कात्यायनः,

भर्त्रा पुत्रेण वा सार्द्धं केवलेनात्मना कृतम् ।
ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥ इति ।

भर्त्रा पुत्रेण वा सार्द्धं कृतमृणं तयोरभावे देयम् । स्वयंकृतं तु तयोर्भावेऽपि देयमित्यर्थः । अत एव—

स एवाह,

देयं भार्याकृतमृणं भर्त्रा पुत्रेण मातृकम् ।
भक्तस्यार्थे कृतं यत् स्यादविधाय गते दिवम् ॥ इति ।

अविधाय=अनपाकृत्य दिवं गते=मृते सतीत्यर्थः ।

याज्ञवल्क्योऽपि—

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।
स्वयंकृतं वा यदृणं नान्यत् स्त्री दातुमर्हति ॥ इति । ( २।४९ )

प्रतिपन्नं=देयत्वेनाङ्गीकृतम् । तद्रिक्थग्रहणेऽनङ्गीकृतमपि देयमित्याह—

कात्यायनः,

मर्त्तुकामेन या भर्त्रा उक्ता देयमृणं त्वया ।
अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रिया ॥ इति ।

'न पतिः स्त्रीकृतं तथा' इत्यस्यापवादमाह—

याज्ञवल्क्यः,

गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥ इति । (२।४८)

शैलूषो=नटः । वृत्तिर्जीवनम् । गोपादिग्रहणं पत्न्यधीनजनानां तैलिकादीनामुपलक्षणम् ।

कात्यायनोऽपि—

शौण्डिकव्याधरजकगोपनाविकयोषिताम् ।
अधिष्ठाता ऋणं दाप्यस्तासां भर्तृक्रियासु तत् ॥ इति ।

अधिष्ठातात्र पतिरेव । भर्तृक्रियासु तत्=यतो भर्त्तुः कर्त्तव्येषु प्रयोजनेषु तदृणं जातं तासामित्यर्थः । भार्य्यया आपदुद्धारार्थं यत्कृतं तदपि देयमित्याह—

स एव,

न च भार्याकृतमृणं कथञ्चित्पत्युराभवेत् ।
आपत्कृतादृते पुंसां कुटुम्बार्थो हि दुस्तरः ।
अन्यत्र रजकव्याधगोपशौण्डिकयोषिताम् ॥
तेषां तु तत्परा वृत्तिः कुटुम्बं च तदाश्रयम् ॥ इति ।

आभवेत्=देयं भवेदित्यर्थः । "न स्त्री पतिकृतं ऋणं दद्यात्" इत्यस्यापवादमाह—

नारदः, ( व्य०प०१ )

दद्यादपुत्रा विधवा नियुक्ता या मुमूर्षुणा ।
यो वा तद्रिक्थमादद्याद्यतो रिक्थमृणं ततः ॥ इति । (१७)

मातृकृतमृणं पुत्रेण देयमित्याह—

विष्णुः,

पैतृकमविभक्ता मातृकं च । विभक्ताश्च दायानुरूपमिति ।
दद्युरित्यनुषङ्गः ।

मातुर्दौःस्थ्येऽपि निर्धनायास्तस्या ऋणं पुत्रेण दातव्यमित्याह—

नारदः,

पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री याऽन्यमाश्रयेत् ।
तस्या ऋणं हरेत् सर्वं निःस्वायाः पुत्र एव तु ॥ इति ।

अन्यं भर्त्तारमितिशेषः । तस्या एव सधनत्वे—

कात्यायन आह,

बालपुत्राधिकार्था या भर्त्तारं चान्यमाश्रिता ।
आश्रितस्तदृणं दद्याद्बालपुत्राविधिः स्मृतः ॥ इति ।

यदृणं कुटुम्बपोषणार्थमविभक्तैः कृतं तत् तद्दानाधिकारिणि कुटुम्बिनि प्रेते देशान्तरगते वा तद्रिक्थहरैर्देयमिति—

याज्ञवल्क्य आह,

अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ इति । (२।४५)

तत्रापि केषाञ्चिदभावे यस्तिष्ठति स एव दद्यात् ।

तथा च विष्णुः—

अविभक्तैः कृतमृणं यस्तिष्ठति स दद्यादिति ।
अविभक्तैरिति बहुवचनं पूर्वत्राविवक्षितम् ।

तथा च नारदः—(व्य०प०१)

पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम् ।
मात्रा वा यत्कुटुम्बार्थे दद्युस्तद्रिक्थिनोऽखिलम् ॥ इति । (३)

ऋणकर्तरि प्रेते प्रोषिते वेति शेषः । तस्मिन् प्रधानभूते स्थिते सत्येतेषां गुणभूतानामृणदानानधिकारात् । अत एव—

मनुः,

ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतो व्ययः ।
दातव्यं बान्धवैस्तत्स्यात् प्रविभक्तैरपि स्वतः ॥ इति । (८।१६६)

ऋणस्य ग्रहीता पितृव्यादिर्यदि नष्टः प्रोषितो मृतो वा स्यात् तदा तद्रिक्थिभिर्विभक्तैस्तत्कुटुम्बव्ययाय कृतमृणं दातव्यं स्वतः किमुताविभक्तैरित्यर्थः । एवं वृत्तिकारेण व्याख्यातम् । अस्मिन् व्याख्याने वचनान्तरे वृथैवाविभक्तग्रहणं स्यादिति महाभाष्यकारेण प्रविभक्तधनैः पितृव्यादिभिः स्वधनाद्दातव्यमित्यर्थः कृत इति स्मृतिचन्द्रिकायाम् । एतच्च ऋणप्रतिदानमुत्तमर्णाभावे तत्पुत्रादिषु कर्त्तव्यं तेषामभावे तत्सगोत्रे तेषामभावे तद्बन्धुषु मातुलादिष्वित्याह—

नारदः, ( व्य० प० १ )

ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः ।
निर्वपेत्तत्सकुल्येषु तदभावेऽस्य बन्धुषु ॥ इति ( ११२ )

ब्राह्मणग्रहणमुत्तमर्णोपलक्षणार्थम् । अन्वयः=पुत्रसन्ततिः दुहितृसन्ततिश्च । बन्धूनामभावे त्वाह—

स एव, ( व्य० प०१ )

यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः ।
तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निःक्षिपेत् ॥ इति ॥ (११३)

प्रजापतिरपि—

बन्ध्वभावे तु विप्रेभ्यो देयं क्षेप्यं जलेऽपि वा ।
जले क्षिप्तं तथाग्नौ च धनं स्यात्पारलौकिकम् ॥ इति ।

अग्नौ हुतमिति शेषः । न तु क्षिप्तमित्यस्यानुषङ्गः । अत एवोक्तम्-स्मृतिसङ्ग्रहे,

द्रव्यं यत्त्वधमर्णस्थं कश्चिद्ब्राह्मणगं भवेत् ।
सुतादिब्राह्मणान्तानां रिक्थभाजामसम्भवे ॥
पलाशस्य पलाशेन जुहुयान् मध्यमेन तु ।
यत्कुसीदमिति प्रास्येदथ वार्य्यैव तद्धनम् ॥ इति ।

मन्त्रस्य होमेनैव सम्बन्धो न तु प्रक्षेपेण "मध्यमेन पर्णेन जुहुयात् कुसीदम्" इति गोभिलेन होमसम्बन्धित्वेनैव स्मृतत्वात् । यस्त्वृणप्रतिदानकाले समग्रं सवृद्धिकं मूलं दातुमसमर्थस्तं प्रत्याह—

याज्ञवल्क्यः,

लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वर्णिको धनम् ।
धनी चोपगतं दद्यात् स्वहस्तपरिचिह्नितम् ॥ इति ॥ (२।९३)

अयमर्थः । यथाशक्ति दत्त्वा दत्त्वैतावत्सवृद्धिकं मया दत्तमिति मूलपत्रस्य पृष्ठे लिखेत् । यद्वा उत्तमर्ण एतावन्मया लब्धमिति स्वहस्ताक्षरचिह्नितं यथा भवति तथा मूलपत्रे लिखेत् । स्वहस्तालिखितमुपगताख्यं प्रवेशपत्रं वाधमर्णाय दद्यादिति । एतच्च प्रवेशपत्रदानं मूलपत्रासन्निधानविषयम् । अत एवाह—

विष्णुः,

असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वलिखितं दद्यादिति ।

प्रवेशपत्रादाने त्वाह—

नारदः, ( व्य० प० १ )

गृहीत्वोपगतं दद्यादृणिकायोदयं धनी ।
अददद्याच्यमानश्च शेषहानिमवाप्नुयात् ॥ इति ॥ ( ११४ )

उदयमृणिकदत्तं धनम्। उदयं गृहीत्वेत्यन्वयः। एतच्च शेषत्वमल्पस्य विषयम्। बाहुल्ये तु

धर्मादिनोद्ग्राह्य ऋणं यस्तूपरि न लेखयेत्।
न चैवोपगतं दद्यात्तस्य तद्वृद्धिमाप्नुयात्॥

इति बृहस्पत्युक्तोत्तमर्णस्य गृहीतांशवृद्धिदानमेव। उद्ग्राह्य=गृहीत्वा ऋणमसमग्रमिति शेषः। ऋणाप्रतिदाने आनिष्टमाह—

व्यासः,

तपस्वी चाग्निहोत्री वा ऋणवान् म्रियते यदि।
तपश्चैवाग्निहोत्रं च सर्वं तद्धनिनो भवेत्॥ इति।

तेनावश्यमृणमपाकरणीयमित्याशयः। अनेनैवाशयेन

कात्यायनोऽप्याह—

उद्धारादिकमादाय स्वामिने न ददाति यः।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे॥ इति।

आदिशब्देन निक्षेपादीनां ग्रहणम्। दासः=क्रीतः भृत्यो=वैतनिक इति तयोर्भेदः।

नारदोऽपि—( व्य० प० १ )

याच्यमानं न दद्याद्यदृणं वापि प्रतिग्रहम्।
तद्द्रव्यं वर्द्धते तावद्यावत्कोटिशतं भवेत्॥ (७)
(१) ततः कोटिशते पूर्णे वेष्टितस्तेन कर्मणा।
अश्वः खरो वृषो दासो भवेज्जन्मनि जन्मनि॥ इति। (८)

प्रतिग्रहः=प्रतिश्रुतम्। लेख्यारूढऋणप्रतिदानानन्तरं कर्त्तव्यमाह—

याज्ञवल्क्यः,

दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत्। इति। (२।९४)

लेख्यं मूलपत्रम्। शुद्ध्यै=ऋणापाकरणख्यापनार्थम्। अन्यत्=विशुद्धिपत्रं वोत्तमर्णात् गृह्णीयादित्यर्थः। मूलपत्रासन्निधाने कथञ्चिद्विशुद्धिपत्रासम्भवे किं कर्त्तव्यमित्यपेक्षिते—

नारद आह, ( व्य० प० १ )

लेख्यं दद्याद्विशुद्धर्णे तदभावे प्रतिश्रवम्।
धनिकार्णिकयोरेवं विशुद्धिः स्यात् परस्परम्॥ इति। (११६)

प्रतिश्रवः=प्रतिदानं कृतमिति साक्षिभिः श्रावणम्। साक्षिमदृणप्राति·

---

( १ ) कोटिशते तु सम्पूर्णे जायते तस्य वेश्मनि। ऋणसंशोधनार्थाय दासो जन्मनि जन्मनि। इति पाठो मु० ना० स्मृ०।

दातारं प्रत्याह—

याज्ञवल्क्यः,

साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम्। इति। (२।९४)

ससाक्षिकमृणं पूर्वसाक्षिणां समक्षं तेषां कथञ्चिदसम्भवे साक्ष्यन्तरसमक्षं वा दातव्यमित्यर्थः। उत्तमर्णेन साक्ष्यादिभिः साधितमृणं दापितवतो राज्ञोऽधमर्णाद्दण्डग्रहणमुत्तमर्णाद्भृतिग्रहणं चाह—

स एव,

राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम्।
पञ्चकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः॥ इति। (२।४२)

अधमर्णात् साधितार्थस्य यो दशमोंऽशस्तावद्द्रव्यं दण्डत्वेन गृह्णीयात्। उत्तमर्णात्तु साधितार्थस्य विंशतितममंशं भृतित्वेनेत्यर्थः।अत एव

विष्णुः,

उत्तमर्णश्चेद्राजानमियात्ततस्तद्विभाविते़ऽर्थे ऽधमर्णो राज्ञे धनदशमभागसमं दण्डं दद्यात् प्राप्तार्थश्चोत्तमर्णो विंशतितममंशमिति।

तद्विभाविते=उत्तमर्णेन साधिते सति। यत्तु मनुवचनम्—

यो यावन्निन्हुवीतार्थं मिथ्या वा यावति वदेत्।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम्॥ इति। (८।५९)

तत् बहुधनातिदुर्वृत्ताधमर्णोत्तमर्णविषयम्। यावन्निह्नुवीत यावति मिथ्या वा वदेत् मयैतावद्दत्तमित्यसत्यं वदेत्तावुभावपि तावतो धनस्य द्विगुणं धनं दण्ड्याविलर्थः। यत् पुनस्तस्यैव वचनम्—

अर्थेऽपव्ययमानं तु कारणेन विभावितम्।
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः॥ इति। (८।५१)

तत् दशमांशदानासमर्थसद्वृत्ताधमर्णविषयम्। अपव्ययमानमपलपन्तम्। यस्तु प्रभुत्वाद्यवलेपादुत्तमर्णेन याचितस्तदाऽसम्प्रतिपद्य राजसभायामानीतः स्वयमेव सम्प्रतिपद्यते सोऽभियुक्तार्थस्य विंशतितममंशं दण्डनीय इत्याह—

नारदः, ( व्य० प० १ )

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति।
राज्ञा दापयितव्यः स्याद्गृहीत्वांशं तु विंशकम्॥ इति। (१३२)

मनुरपि—

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति।
अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम्॥ इति।(८।१३९)

यः पूर्वमप्रतिपद्य राजसभायामानीतोऽधमर्ण ऋणं देयतया प्रति-

जानीते सत्यमस्मै धारयामीति स पञ्चकं शतमर्हति दातुमिति शेषः । यस्तु सभायामप्यपह्नुते नाहमस्मै धारयामीति पश्चाच्चाङ्गीकरोति स तद्द्विगुणं प्रतिपादितपञ्चकशतात् द्विगुणं दशकं शतं दण्डमर्हतीत्यर्थः । यस्तु याज्ञवल्क्यवचने—

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ॥ (२।११)

इति अपलपितुः समदण्ड उक्तः । स द्विगुणधनदानासमर्थदुर्वृत्ताधमर्णविषयः । अन्यथा निह्नवे द्विगुणदण्डप्रतिपादक "यो यावन्निह्नुवीतार्थम्" इतिपूर्वोदाहृतमनुवचनविरोधः स्यात् । अभियोगादभियुक्तधनात् ।

मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत् ।
कारणे विधिरेष स्याज्जितस्यैकतरस्य तु ॥
प्राङ्न्यायवादे च तथा यश्चासत्येन युज्यते ।

इति व्यासवचनविरोधश्च स्यात् । कारणे=कारणोत्तरे । असत्येन=मिथ्योत्तरेण । प्रत्यवस्कन्दने प्राङ्न्याये मिथ्योत्तरे च वादिप्रतिवादिनोर्मध्ये यस्यैकतरस्य पराजयस्तस्यापि पूर्वोक्तधनाद्द्विगुणो दण्ड इत्यर्थः ।

यत्तु मिताक्षरायां मिथ्योत्तरेऽपह्नोतुः पराजये समो दण्डः, मिथ्याभियोक्तुर्द्विगुणो दण्डः । एवं प्राङ्न्याये प्रत्यवस्कन्दने चार्थिनोऽपह्नववादित्वात् प्रत्यर्थिना प्राङ्न्यायकारणसाधने कृते प्रकृतधनसम एव दण्डः । यदि प्रत्यर्थी प्राङ्न्यायकारणे न साधयति तदा स मिथ्याभियोग्येवेति तस्य द्विगुणो दण्ड इत्युक्तम् । तत्पूर्वोक्तव्यासवचनविरोधाद्विभावनीयं विद्वद्भिरिति ।

इत्यृणादानाख्यं व्यवहारपदम् ।

## अथ निक्षेपाख्यं व्यवहारपदम् ।

तत्र निक्षेपो नाम स्वद्रव्यस्य विश्वासेन पुरुषान्तरे स्थापनम् । तथा च नारदः ( व्य० प० २।१ )

स्वं द्रव्यं यत्र विश्रम्भान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥ इति ।

न च न्यासोपनिध्योरतिव्याप्तिस्तयोर्लक्ष्यत्वात् । निक्षेप एव ग्राहकस्यासमक्षं समर्पितो न्यास इत्युच्यते । अत एव— बृहस्पतिः,

राजचौरारातिभयाद्दायादानां च वञ्चनात् ।
स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्त्तितः ॥ इति ।

अयमेवागणितद्रव्यस्थापने उपनिधिरित्युच्यते ।

तथा च नारदः, (१)

असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते ।
तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥ इति ।

असङ्ख्यातम्=अदर्शितम् । अविज्ञातम्=अनाख्यातम् ।

अत एव बृहस्पतिः,

अनाख्यातं व्यवहितमसङ्ख्यातमदर्शितम् ।
मुद्राङ्कितं च यद्द्रव्यं तदौपनिधिकं स्मृतम् ॥ इति ।

व्यवहितं=करण्डकादौ प्रक्षिप्य पिहितम् । अत एव--

याज्ञवल्क्यः,

वासनस्थमविज्ञातं(२) हस्तेऽन्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥ इति । (२।६५)

वासनं=द्रव्याधारभूतं करण्डकादि तत्स्थं वासनस्थम् । हस्तग्रहणमुपलक्षणम् । अत एव—

नारदः, ( व्य० प० २ )

निक्षिप्यते परगृहे तदौपनिधिकं स्मृतम् । इति । (५)

तथाचायमेतेषां भेदः । ग्राहकस्य समक्षं गणयित्वा स्थापितं निक्षेपः । गृहस्वामिनोऽसमक्षं गणितमगणितं वा तस्मिन्नागते एतद्दातव्यमित्युक्त्वाऽन्यस्य तत्पुत्रादेर्हस्ते दत्तं न्यासः । मुद्राङ्कितं समक्षमगणितं स्थापितमुपनिधिरिति । निक्षेपादीनां स्थापनप्रकारमाह—

मनुः,

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः ॥ इति । (८।१७९)

महापक्षे=बहुतरबन्धुयुक्ते । निक्षेपग्रहणमुपलक्षणम् ।

बृहस्पतिः,

स्थानं गृहं गृहस्थं च तद्वर्णं विविधान् गुणान् ।
सत्यं शौचं बन्धुजनं परीक्ष्य स्थापयेन्निधिम् ॥ इति ।

निधिरुपनिधिः । एतदप्युपलक्षणम् । निक्षेपादीनां रक्षणं कर्त्तव्यं ग्राहकेणेत्याह—

---

( १ ) अत्र मु० ना० स्मृतौ —अन्यद्रव्यव्यवहितं द्रव्यमध्याहृतं च यत् । निक्षिप्यते परगृहे तदौपनिधिकं स्मृतम् ॥ इति पद्यं वर्तते । ( व्य० प० २।५ )

( २ ) अनाख्यायेति मिताक्षरासम्मतः पाठः ।

बृहस्पतिः,

ससाक्षिकं रहोदत्तं द्विविधं समुदाहृतम् ।
पुत्रवत्परिपाल्यं तद्विनश्यत्यनवेक्षणे ॥ इति ।

पालयितुः फलमपालयितुर्दोषं चाह स एव—

ददतो यद्भवेत्पुण्यं हेमकुप्याम्बरादिकम् ।
तत्स्यात्पालयतो न्यासं तथैव शरणागतम् ॥
भर्तृद्रोहे यथा नार्याः पुंसः पुत्रसुहृद्वधे ।
दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥
न्यासद्रव्यं न गृह्णीयात्तन्नाशस्त्वयशस्करः ।
गृहीतं पालयेद्यत्नात् सकृद्याचितमर्पयेत् ॥ इति ।

न्यासग्रहणमुपलक्षणम् । तेन फलभृत्यादिकं(१) निक्षेपादित्रयसाधारणमिति मन्तव्यम् । दैवराजोपघाते ग्राहकस्य न दोष इत्याह—

बृहस्पतिः,

दैवराजोपघातेन यदि तन्नाशमाप्नुयात् ।
गृहीतद्रव्यसहितं न तद्दोषोऽत्र विद्यते ॥ इति ।

ग्रहीतुरिति शेषः । उपेक्षादिद्रव्यदोषाभावादिति भावः । गृहीतद्रव्यसहितमित्युपेक्षाभावनिश्चयायोक्तम् । तेन कथञ्चिन्निक्षिप्तमात्रस्य विनाशे प्रमाणान्तरादुपेक्षाभावे निश्चिते ग्रहीतुर्दोषो न विद्यते इति मन्तव्यम् । दैवराजग्रहणमसमाधेयनिमित्तोपलक्षणार्थम् । अत एव—

कात्यायनः,

राजदैविकचौरैर्वा निक्षिप्तं यत्र नाशितम् ।
ग्रहीतुः सह भाण्डेन दातुर्नष्टं तदुच्यते ॥ इति ।

भाण्डेन=अर्थेन ।

नारदोऽपि—(व्य०प०२)

ग्रहीतुः सह योऽर्थेन भ्रष्टो नष्टः स दायिनः ।
दैवराजकृते तद्वन्न चेत्तज्जिह्मकारितम् ॥ इति (९)

तद्वदिति पदेनैकमुपमेयमन्यदुपमानमित्यवगम्यते । तेनैवं योजना । ग्रहीतुरर्थेन सह यो नष्टः स दायिन एव । एवं दैवराजकृते यो नष्टः सोऽपि दायिन एव नष्ट इति । दैवग्रहणं तस्करोपलक्षणम् । अत एव—

याज्ञवल्क्यः,

न दाप्योऽपहृतं तं (२)तु राजदैविकतस्करैः । इति । (२।६६)

---

( १ ) भृतिः=पालनम् । ( २ ) तम्=उपनिधिम् ।

दैविकपदस्यार्थो विवृतो मनुना—

चौरैर्हृतं जलेनोढमग्निना दग्धमेव वा ।
न दद्याद्यदि तस्मात् स न संहरति किञ्चन ॥ इति ।(८।१८९)

यदि तस्मात्=निक्षेपादल्पमपि धनं न संहरति=न गृह्णाति तर्हि न दद्यादित्यर्थः ।

तथा च स एव—

(१)समुद्रे नाप्नुयात्किञ्चिद्यदि तस्मान्न संहरेत् । इति । (८।१८८)

क्वचिद्येन केनचिद्धेतुना नष्टमपि ग्रहीता मूल्यद्वारेण न दाप्य इत्याह—

कात्यायनः,

ज्ञात्वा द्रव्यवियोगं तु दाता यत्र विनिक्षिपेत् ।
सर्वोपायविनाशेऽपि ग्रहीता नैव दाप्यते ॥ इति ।

निक्षेपग्रहीतारं प्रत्याह—

कात्यायनः,

निक्षिप्तं यस्य यत्किञ्चित् तत्प्रयत्नेन पालयेत् ।
दैवराजकृतादन्यो विनाशस्तस्य कीर्त्यते ॥ इति ।

यस्य पार्श्वे यत् स्थापितं तत्तेनावहितेन रक्षणीयम् । यतो दैवराजकृतादन्यो विनाशस्तस्य=ग्राहकस्य दोषेण कृतत्वेन कीर्त्यते इत्यर्थः । न केवलं दुष्कीर्त्तिरेव तस्य । किन्तु विनाशे जाते वस्तुगत्या दोषो बह्वर्थहानिश्चेत्याह—

स एव,

यस्य दोषेण यत्किञ्चिद्विनश्येत ह्रियेत वा ।
तद्द्रव्यं सोदयं दाप्यो दैवराजकृताद्विना ॥ इति ।

दोषः=उपेक्षादिलक्षणः ।

बृहस्पतिरपि—

भेदेनोपेक्षया न्यासं ग्रहीता यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यं तत्सोदयं भवेत् ॥ इति ।

कात्यायनोऽपि—

न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम् ।
अज्ञाननाशितं चैव येन दाप्यः स एव तत् ॥ इति ।

अत्र विशेषमाहतुर्व्यासकात्यायनौ—

भक्षिते सोदयं दाप्यः समं दाप्य उपेक्षिते ।
किञ्चिदूनं प्रदाप्यं स्याद्द्रव्यमज्ञाननाशितम् ॥ इति ।

---

(१) समुद्रे=मुद्रासहिते ।

किञ्चिदूनं=चतुर्थांशन्यूनमिति मिताक्षरायाम्। याचनानन्तरमदत्तस्य प- श्चाद्दैवराजकृतेऽपि विनाशे स्थापकाय मूल्यमात्रं दातव्यमित्याह—

व्यासः,

याचनानन्तरं नाशे दैवराजकृतेऽपि सः।
ग्रहीता प्रतिदाप्यः स्यात्।

मूल्यमात्रमिति शेषः। प्रत्यर्पणविलम्बमात्रापराधे सवृद्धिकदान- स्यान्याय्यत्वात्। राज्ञे च तत्समो दण्डो देय इत्याह—

नारदः, (व्य०प०२)

याच्यमानस्तु यो दातुर्निक्षेपं न प्रयच्छति।
दण्ड्यः स राज्ञो भवति नष्टे दाप्यश्च तत्समम्॥ इति। (७)

नष्टे=दैवतो राजतो वेतिशेषः।

याज्ञवल्क्योऽपि—

भ्रेषश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम्॥ इति। (२।६६)

मार्गिते=याचितेऽदत्ते सति यदि भ्रेषो=दैवराजकृतो नाशो भवति त- थापि तद्द्रव्यं मूल्यपरिकल्पनेन धनिने ग्राहको दाप्यो राज्ञे च तत्समं द- ण्डमित्यर्थः। यः पुनः स्थापकाननुज्ञया निक्षेपमुपभुङ्क्ते तस्य दण्डमाह—

नारदः, (व्य०प०२)

यः स्वार्थं साधयेत्तेन निक्षेप्तुरननुज्ञया।
तत्रापि दण्ड्यः स भवेत्तं च सोदयमावहेत्॥ इति। (८)

दण्ड्यः=साधितद्रव्यानुसारेण।

याज्ञवल्क्योऽपि—

आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम्॥ इति। (२।६७)

आजीवन्=भोगवृद्ध्यर्थं प्रयोगादिना उपजीवन्। स्वेच्छया=स्वाम्यननु- ज्ञया। वृद्धिप्रमाणं चाह—

कात्यायनः,

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च।
याच्यमानं न चेद्दद्याद्वर्द्धते पञ्चकं शतम्॥ इति।

निक्षेपहर्त्तारं प्रत्याह—

विष्णुः,

निक्षेपापहारी वृद्धिसहितं धनं धनिकस्य दाप्यः।

अस्य दण्डमाह मनुः—

निक्षेपस्यापहर्त्तारं तत्समं दापयेद्दमम्।
तथोपनिधिहर्त्तारमविशेषेणैव पार्थिवः॥ इति। (८।१९२)

निक्षेपापह्नवे कर्त्तव्यमाह—

व्यासः,

निक्षेपं निन्हुते यस्तु नरो बन्धुबलान्वितः ।
साक्षिभिर्वाथ दिव्येन विभाव्य प्रतिदाप्यते ॥ इति ।

दण्डमाह बृहस्पतिः—

गृहीत्वापह्नुते यत्र साक्षिभिः शपथेन वा ।
विभाव्य दापयेन्न्यासं तत्समं विनयं तथा ॥ इति ।

विनयं=दण्डम् । ससाक्षिकनिक्षेपादौ स्थापकस्यानृतवादित्वे साक्षिभ्यो यथास्थितमर्थमवगत्य दण्डनीयः स राज्ञेत्याह—

मनुः,

निक्षेपो यः कृतो येन यावांश्च कुलसन्निधौ ।
तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हति ॥ इति । (८।१९४)

कुलं=साक्षिवृन्दम् । असाक्षिके त्वाह—

बृहस्पतिः,

रहोदत्ते निधौ यत्र विसंवादः प्रजायते ।
विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥ इति ।

उभयोर्मध्ये एकस्येत्यर्थः । उभयग्रहणं "रुच्या वान्यतरः कुर्यात्" इत्ययमेव पक्षो यथा स्यादिति । ग्रहीतृस्थापकयोरनृतवादित्वे दण्डमाह—

मनुः, (८।१९०।१९१)

निक्षेपस्यापहर्त्तारमनिक्षेप्तारमेव च ।
सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥
यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
उभौ तौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥ इति ।

चौरवच्छास्यौ=चौरवद्दण्ड्यौ चौरदण्डेन दण्ड्याविति यावत् । दण्डश्च प्रथमसाहस इत्युक्तं मनुवृत्तौ । यस्तु मत्स्यपुराणे-

यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ च द्विगुणं दमम् ॥

इति द्विगुणो दण्ड उक्तः स दुर्वृत्तविषयो ब्राह्मणातिरिक्तविषयो वा । अन्यथा समदण्डप्रतिपादकमनुवचनविरोधः स्यादिति ।

निक्षिप्तं द्रव्यमकाले ददतो द्विगुणो दम इत्याह—

कात्यायनः,

ग्राह्यस्तूपनिधिः काले कालहीनं तु वर्जयेत् ।

कालहीने ददद्दण्डं द्विगुणं च प्रदापयेत् ॥ इति ।

ग्राह्यः निक्षेपकारिणेति शेषः। यद्भयादुपनिधिरन्यस्य हस्ते न्यस्तस्तद्भयातीते काले स ग्राह्य इत्यर्थः। तद्भयातीतेऽपि काले स्वयमेव नायाचितमर्पणीयम्। "सकृद्याचितमर्पयेत्" इति बृहस्पतिस्मरणात्। तद्भये वर्त्तमाने स्वयमेवायाचितं दीयमानं कालहीनम् तस्य दानं दौष्ट्येनैवेति तद्ददतोऽपि दण्डो युक्तः। प्राड्विवाकं प्रत्याह—

मनुः, (८।१८१।१८३)

यो निक्षेपं याच्यमानो निक्षेप्तुर्न प्रयच्छति ।
स याच्यः प्राड्विवाकेन तन्निक्षेप्तुरसन्निधौ ॥
स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम् ।(१)
न तत्र विद्यते किञ्चिद्यत्परेणाभियुज्यते ॥ इति ।

यदा तु न प्रतिपद्येत तदा राजानं प्रत्याह—

स एव, (८।१८४।१९६)

तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि ।
द्वयं निगृह्य दाप्यः स्यादिति धर्मस्य धारणा ॥
निक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च ।
राजा विनिर्णयं कुर्यादक्षिण्वन्न्यासधारिणम् ॥ इति ।

तेषाम्=अभियोक्तॄणाम्। द्वयं=द्विगुणम्। निगृह्य=दण्डयित्वा। अक्षिण्वन्-अताडयन्। निक्षेपग्रहीतारं प्रत्याह—

बृहस्पतिः,

स्थापितं येन विधिना येन यच्च यथाविधि ।
तथैव तस्य तद्देयं न देयं प्रत्यनन्तरे ॥ इति ।

स्थपकेतरस्य यस्य स्थापितद्रव्यस्वाम्यमस्ति स इह प्रत्यनन्तर उच्यत इति स्मृतिचन्द्रिकायाम्। प्रत्यनन्तरे=पुत्रादाविति कल्पतरौ। स्थापकं प्रत्याह—

मनुः, (८।१८०।१९५।१९८)

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः ।
स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः ॥
मिथोदायः कृतो येन गृहीतो मिथ एव वा ।
मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः ॥
समुद्रे नाप्नुयात् किञ्चिद्यदि तस्मान्न संहरेत् ॥ इति ।

---

(१) यथाकृतम्=कथकाथाकारेण निर्मितम्।

दायो=दानं स्थापनमिति यावत्। ग्रहो=ग्रहणम्। मिथः=अन्योन्यमेव। एतदुक्तं भवति। ससाक्षित्वेन स्थापितं साक्षिसमक्षं ग्रहीतव्यम्, रहसि स्थापितं रहस्येवेति। समुद्रे=मुद्रासहिते निक्षेपे मूषकादिनोपहते निक्षेपस्थापयिता न किञ्चिद्दूषणमाप्नुयात्। यदि तस्मान्निक्षेपात् प्रतिमुद्राऽश्रावणादिना नापहरेत्किञ्चिदित्यर्थः।

स्थापयितुर्मरणे प्रत्यनन्तरे तद्देयमित्याह स एव—

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे।
न स राज्ञाऽभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः॥ इति। (८।१८६)

अनेन वचनेन वचोभङ्ग्या स्थापके मृते प्रत्यनन्तरे प्रत्यर्पणं ग्राहकेण कार्य्यमित्युक्तम्। स्वयमेव=याचनमन्तरेणेत्यर्थः। याचनमन्तरेण दानं भयादिकालापाये मन्तव्यम्। अन्यथा दोषापत्तेः। प्रत्यनन्तरबहुत्वे तु नैकस्मिन् प्रत्यनन्तरे देयम्। किन्तु सर्वप्रत्यनन्तरसन्निधाविति न निक्षेप्तृबन्धुभिरभियोक्तव्य इत्यनेन सूचयाम्बभूव।

यदा तु ग्राहकः स्वयमेव न ददाति तदा प्रत्यनन्तरकर्त्तव्यमाह—

स एव,

अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्वकम्।
विचार्य्य तस्य वा वृत्तं साम्नैव परिसाधयेत्॥ इति। (८।१८७)

अन्विच्छेत्=अवधारयेत्। परिसाधनं ग्राहकसकाशादादानं, तत् ग्राहकवृत्तं विचार्य्य सद्वृत्तग्राहकविषये साम्नैव कार्य्यं न भयादिप्रदर्शनेन। दुर्वृत्तग्राहकविषये तु ऋणादानप्रकरणोक्तेन भयादिप्रदर्शनाद्युपायान्तरेण छलादिना वा कार्य्यमित्यस्मादेव वचनादवगम्यते। तथा सद्वृत्ते विप्रतिपन्ने भूतानुसारेण साधयितुमशक्ये साक्ष्याद्यभावे प्रत्यनन्तरादिना साधयेत्। दुर्वृत्ते तु विप्रतिपन्ने शपथादिना परिहरेदिति वास्मादेव वचनादवगम्यते। सद्वृत्ते छलादिप्रयोगवच्छपथेन शोधनस्याप्यनुचितत्वात्। ग्राहके तु मृते पश्चाद्यदधीनं निक्षेपादि जायते तेनैव स्थापके प्रत्यनन्तरे वा प्रत्यर्पणीयमित्यतिस्थूलत्वात् स्मृतिकारैरुपेक्षितमित्यस्माद्दणकारणमुन्नेयम्। यदि ग्राहकवदसौ स्वयं न ददाति तदा स्थापकः प्रत्यनन्तरो वा पूर्वोक्तमार्गेणान्विच्छेत् असम्प्रतिपन्नं पूर्वोक्तेन प्रकारेण परिग्रहं साधयेदित्येतदपि स्मृतिकारैरुपेक्षितं ज्ञातुमशक्यत्वादिति स्मृतिचन्द्रिकायाम्।

निक्षेपेऽभिहितं धर्मं याचितादिष्वतिदिशति—

नारदः, (व्य० प० २)

एष एव विधिर्दृष्टो याचितान्वाहितादिषु।

शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥ इति । (१४)

याचितम्=उत्सवादिषु परकीयमलङ्कारादि याचित्वा समानीतम् । अन्वाहितं=स्वस्मिन् स्थितं परधनमन्यहस्ते कृतम् । शिल्पिषु न्यासे=कुण्डलादिकरणाय स्वर्णकारादिहस्तन्यस्तसुवर्णादावित्यर्थः । प्रतिन्यासे=मिथःकार्य्यापेक्षया त्वदीयमेतन्मया स्थाप्यते मदीयमेतत् त्वया स्थापनीयमिति स्थापिते । नारदेन निक्षेप एव विध्युपदेशादुपनिधिन्यासयोस्तदतिदेशः ।

याज्ञवल्क्योऽपि—

याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः । इति । (२।६७)

यद्यपि स्मृत्यन्तरे न्यासनिक्षेपयोर्विधिरुपदिष्टस्तथाप्यस्यां स्मृतौ नोपदिष्ट इत्युपनिधिधर्माणामतिदेशो युक्तः ।

बृहस्पतिरपि—

अन्वाहिते याचितके शिल्पिन्यासे सबन्धके ।
एष एवोदितो धर्मस्तथा च शरणागते ॥ इति ।

अनेनायाचितस्य शिल्पिन्यासस्य दैवादिना नाशे स्वर्णकारप्रभृतिस्तं न दाप्य इत्युक्तं, तस्य क्वचिदपवादमाह—

कात्यायनः,

यश्च संश्रीयते न्यासो दिवसैः परिनिष्ठितैः ।
तदूर्ध्वं स्थापयंश्छिल्पी दाप्यो दैवहतेऽपि तम् ॥ इति ।

रजकादिहस्ते नैर्मल्यार्थं दत्तस्य जीर्णवस्त्रादेर्यद्यवघातादिना नाशः अवघातादिश्च नैर्मल्याद्यर्थस्तदा शिल्पिदोषाभावात्तत्र शिल्पी न दाप्यः । नूतनादौ तु पटुतरावघातादिकृतनाशस्य शिल्पिदोषकृतत्वात्तन्मूल्यं दाप्य इत्यभिसन्धायाह—

स एव,

न्यासदोषाद्विनाशः स्याच्छिल्पिनं तं न दापयेत् ।
दापयेच्छिल्पिदोषात्तत्संस्कारार्थं यदर्पितम् ॥ इति ।

शिल्पिदोषादित्यत्र विनाशः स्यादित्यनुषज्यते । यत्र तन्त्वादि वस्त्राद्यर्थं कुविन्दादौ न्यस्तं खण्डपटादिदशायां नष्टं परिपूर्णदशायां वा कुविन्दादिना दीयमानं स्वामिना न गृहीतं पश्चान्नष्टं तत्राप्याहतुः—

मनुकात्यायनौ,

स्वल्पेनापि च यत्कर्म नष्टं चेद्भृतकस्य तत् ।
पर्य्याप्तं दित्सतस्तस्य विनश्येत्तदगृह्णतः ॥ इति ।

यत्कर्म=वस्त्रनिर्माणादि स्वल्पेनापि=प्रान्तवानादिनापि विकलं नष्टं चेत्

भृतकस्य शिल्पिन एव नष्टम् । पुनर्वेतनग्रहणं विनैव वानादिक्रियां कुर्य्यादित्यर्थः । यदि स्वामी तन्त्वादिकं पुनर्नार्थयति तदा पुनर्वानाद्यभावेऽपि शिल्पिने दत्तं वेतनं स न लभेत । पर्याप्तं परिपूर्णं वस्त्रादिकं दित्सतो भृतकस्य यः स्वामी तस्य दीयमानमगृह्णतस्तत्पर्याप्तं नश्यतीत्यर्थः । एवं चात्र भृतको नष्टं न दाप्य इति पर्य्यवसितोऽर्थः । एवं शिल्पिन्यासविषये विशेषमुक्त्वा याचितकविषयेऽप्याह—

स एव,

यदि तत्कार्यमुद्दिश्य कालं परिनियम्य वा ।
याचितोऽर्धकृतो यस्मिन्नप्राप्ते न तु दाप्यते ॥ इति ।

तात्पर्यं तावदुच्यते—

याच्यमानो न दद्याद्वा दाप्यं तत् सोदयं भवेत्—

इत्ययं धर्मो याचितकेऽतिदेशप्राप्तो ऽनेन वचनेन क्वाचित्प्रतिषिध्यते। प्रतिषेधकवचनस्यायमर्थः । यद्दीर्घकालसाध्यं कार्य्यं तत्कार्यार्थं याचितं, यदि वा वर्षपर्य्यन्तं दीयतामित्येवं कालं परिनियम्य याचितम् । तत्र कार्यमध्ये परिनियतकालमध्ये वा प्रतियाच्यमाने यो याचितकं न ददाति असौ सोदयं न दाप्यः । किन्तु कार्ये कृते परिनियतकालात्यये वा याचितकमात्रं दद्यादिति । यदि तदापि याचितकं न ददाति तदा दैवादिना नाशे हरणे वा जाते तन्मूल्यमात्रं देयमित्यप्याह—

स एव,

प्राप्तकाले कृते कार्य्ये न दद्याद्याचितोऽपि सन् ।
तस्मिन्नष्टे हृते वापि ग्रहीता मूल्यमावहेत् ॥ इति ।

क्वचित् कार्यमध्ये परिनियतकालमध्ये वा याचितकं दाप्य इत्याह—

स एव,

अथ कार्य्यविपत्तिस्तु तस्यैव स्वामिनो भवेत् ।
अप्राप्ते वै स काले तु दाप्यस्त्वर्द्धकृतेऽपि तत् ॥ इति ।

यदि याचितकाप्रतिदाने तत्स्वामिनः कार्य्यनाशः सम्भाव्यते तदा दद्यादित्यर्थः । याचितकाप्रतिदाने तु कर्त्तव्यमाह—

स एव,

यो याचितकमादाय न दद्यात् प्रतियाचितः ।
स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति यः ॥ इति ।

स बलान्निगृह्य दाप्यो दानोन्मुखीकर्त्तव्यः । एवमपि यो न ददाति स दण्ड्यश्चेत्यर्थः । प्रक्षालनार्थं नेजकहस्ते दत्तं यद्वस्त्रं तस्य तेन नाशे कृते तन्मूल्यं तस्माद् ग्राह्यम् । तदाह—

नारदः, (व्य०प०९)

मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः।
द्विः पादस्त्रिस्तृतीयांशश्चतुर्द्धौतेऽर्धमेव च॥ (८)
अर्धक्षयात्तु परतः पादांशापचयः क्रमात्॥ इति। (९)

सकृद्धौतस्य नाशेऽष्टमांशन्यूनं तन्मूल्यं ग्राह्यम्। द्विर्द्धौते चतुर्थांशन्यूनम्। एवं त्रिर्द्धौते तृतीयांशन्यूनमित्येवमुत्तरत्रापि योज्यम्। वस्त्राणां प्रक्षालनं नेजकेन न पाषाणे कार्यं किन्तु श्लक्ष्णे शाल्मले फलके। न च तेषां व्यत्यासः कार्यो नच तानि स्वगृहे रात्रौ स्थापनीयानि। अमुमेवार्थमभिसन्धायाह—

मनुः,

शाल्मले फलके श्लक्ष्णे निज्याद्वासांसि नेजकः।
न च वासांसि वासोभिर्निर्हरेन्न च वासयेत्(१)॥ इति। (८।३९६)

निज्यात्=प्रक्षालयेत्। अन्यवासांसि अन्यवासोभिर्न निर्हरेत्=न मेलयेदित्यर्थः।

शिल्पिन्यासोपभोगादौ शिल्पिनो दण्ड्यत्वमाह—

याज्ञवल्क्यः,

वसानस्त्रीन् पणान्दण्ड्यो नेजकस्तु परांशुकम्।
विक्रयावक्रयाधानयाचितेषु पणान्दश॥ इति। (२।२३८)

नेजको=वस्त्रप्रक्षालकः। अवक्रयः=कस्माच्चिद्भाटकं गृहीत्वा तस्योपभोगार्थं कालक्लृप्तिं विधाय समर्पणम्। आधानं=बन्धकीकरणम्। याचितम्=स्वसुहृद्भ्यो याचितत्वेन दानम्।

सुवर्णकारादिहस्ते कङ्कणादिनिर्माणार्थं यानि सुवर्णादीनि दत्तानि तेषां मध्ये सुवर्णं यत्परिमाणकं दत्तं तत्परिमाणक एव सुवर्णविकारः शिल्पिनो ग्राह्यः। रजतादयस्तु किञ्चिन्न्यूना ग्राह्याः। कम्बलादयस्तु ऊर्णापेक्षया किञ्चिदधिका ग्राह्याः। यद्येवं शिल्पी न ददाति तदा राज्ञा दाप्यो दण्डनीयश्चेत्येतत्सर्वं मनसि निधायाह—

स एव, (अ०२)

अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते।
अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि॥ (१७८)
शते दशपला वृद्धिरौर्णे कार्पाससूत्रके।
मध्ये पञ्चपला वृद्धिः सूक्ष्मे तु त्रिपला मता॥ (१७९)
कार्मिके रोमबन्धे च त्रिंशद्भागः क्षयो मतः।

(१) न वासयेत्=अन्यवासांसि अन्यस्मै परिधानार्थं न दद्यादित्यर्थः।

न क्षयो न च वृद्धिश्च कौशेये वाल्कलेषु च ॥ इति । (१८०)

अग्नौ प्रताप्यमानमिति शेषः। शतपले प्रताप्यमाने पलद्वयम् । त्रपुणि सीसे च पलाष्टकम्। ताम्रे पलपञ्चकम् । लोहे पलदशकं च क्षीयेत इत्यर्थः । कांस्यस्य तु त्रपुताम्रप्रभवत्वात्तदनुसारेण क्षयः कल्पनीय इति पृथङ्नोक्तः। स्थूलेषु ऊर्णाकार्पाससूत्रेषु शतपलेषु पलदशकम्, अनतिसूक्ष्मेषु तेषु पञ्चकम्, सूक्ष्मेषु पलत्रयं वर्धत इत्यर्थः। एतदप्रक्षालितविषयमित्युक्तं मिताक्षरायाम्। कार्मिकम्=चित्रेण कर्मणा निर्मितं कार्मिकम्। यत्र निर्मिते पटे स्वस्तिकादिकं चित्रं सूत्रैः क्रियते इत्यर्थः। यत्र प्रावारादौ(१)रोमाणि बध्यन्ते स रोमबन्धः। अनयोः सूत्रापेक्षया त्रिंशांशस्य क्षय इत्यर्थः ।

इति निक्षेपाख्यं व्यवहारपदम् ।

## अथास्वामिविक्रयाख्यं व्यवहारपदम् ।

तत्स्वरूपमाह नारदः, (व्य०प०७)

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा ।
विक्रीयतेऽसमक्षं यत्स ज्ञेयोऽस्वामिविक्रयः ॥ (१)

निक्षिप्तग्रहणं याचितादीनामुपलक्षणार्थम् । असमक्षं स्वामिन इति शेषः । अत एव—

व्यासः,

याचितान्वाहितन्यासं हृत्वा वान्यस्य यद्धनम् ।
विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रयः ॥ इति ।

स्वाम्यभावे=स्वाम्यसन्निधाने । अत्र विक्रयपदं दानबन्धकयोरप्युपलक्षणम्। वक्ष्यमाणकात्यायनवचने तयोरपि निवर्त्यत्वाभिधानात्। अस्वामिनं दर्शयति—

बृहस्पतिः,

निक्षेपान्वाहितं न्यासं हृतं याचितबन्धकम् ।
उपांशु येन विक्रीतमस्वामी सोऽभिधीयते ॥ इति ।

निक्षेपादिग्रहणं प्रनष्टाधिगतादेः परद्रव्यस्योपलक्षणम् । यत आह—

मनुः,

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः । इति ।(८।१९७)

उपांशु=अप्रकाशम् । इदमुपलक्षणम् । यो निक्षेपादिकं परद्रव्यं प्रकटमेव विक्रीणीते तस्यापि । अस्वामिकृतत्वादस्य निवर्त्यत्वमाह—

---

(१) प्रावार=उत्तरासङ्गः। "द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा" इत्यमरात्।

नारदः,

अस्वामिना कृतो यस्तु क्रयो विक्रय एव च ।
अकृतः स तु विज्ञेयो व्यवहारेषु नित्यशः ॥ इति ।

कात्यायनोऽपि—

अस्वामिविक्रयं दानमाधिं वा विनिवर्त्तयेत् । इति ।

अस्वामिविक्रयम्=अस्वामिना कृतं विक्रयम् । अस्वामिकृतत्वं दानाध्योरपि । तत्साहचर्यात् । अत एव—

यमः,

अस्वामिना कृतो यस्तु दायो विक्रय एव वा ।
अकृतः स तु विज्ञेयो व्यवहारेषु नित्यशः ॥ इति ।

दायो=दानम् । स्वामिना अस्वामिविक्रीतं स्वकीयं वस्तु यत्समीपे दृष्टं तस्माद्ग्राह्यमित्याह—

नारदः, (व्य०प०७)

द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात् ।
प्रकाशक्रयतः शुद्धिः क्रेतुः स्तेयं रहःक्रयात् ॥ इति । (२)

याज्ञवल्क्योऽपि—

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद्रहोहीनमूल्ये वेलाहीने च तस्करः ॥ इति । (२।१६८)

स्वामी स्वसम्बन्धि द्रव्यम् अन्यविक्रीतम्=अस्वामिविक्रीतं यदि पश्यति तदा लभेत=गृह्णीयात् । अस्वामिविक्रयस्य स्वत्वहेतुत्वाभावात् । क्रेतुः पुनरप्रकाशिते गोपिते क्रये दोषो भवति । हीनात्=आगमोपायहीनात् । रहसि=एकान्ते । हीनमूल्ये=अल्पतरेण द्रव्येणाधिकमूल्यक्रये । वेलाहीने=रात्र्यादौ कृते क्रये च क्रेता तस्करो भवति । तस्करवद्दण्डादिभाग्भवतीत्यर्थः ।

बृहस्पतिरपि—

येन क्रीतं तु मूल्येन प्राग्राज्ञे विनिवेदितम् ।
न तत्र विद्यते दोषः स्तेनः स्यादुपधिक्रयात् ॥ इति ।

यत्र हीनमूल्येन क्रीयमाणं क्रयात्प्रागेव राज्ञे निवेदितं तत्र न दोष इत्यर्थः । उपधिक्रयशब्दार्थं दर्शयति—

स एव,

अन्तर्गृहे बहिर्ग्रामान्निशायामसतो जनात् ।
हीनमूल्यं च यत्क्रीतं ज्ञेयोऽसावुपधिक्रयः ॥ इति ।

असतो जनात्=चाण्डालादेरित्यर्थः । असद्ग्रहणं दासादीनामुपलक्षणार्थम् ।

अत एव नारदः,

अस्वाम्यनुमताद्दासादसतश्च जनाद्ग्रहः ।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत् ॥ इति । (व्य०प०७श्लो०३)

अस्वाम्यनुमतात्=स्वाम्यनुमतिहीनात् । दासग्रहणं समानन्यायत्वादस्वतन्त्राणां बालादीनामुपलक्षणार्थम् ।

विष्णुरपि—

अज्ञानतः प्रकाशं यः परद्रव्यं क्रीणीयात् तत्रास्यादोषः स्वामी द्रव्यमवाप्नुयात् यद्यप्रकाशं हीनमूल्यं वा क्रीणीयात् तदा क्रेता विक्रेता च चोरवच्छास्य इति ।

क्रेतुः प्रकाशं क्रयादस्वामित्वाज्ञानम्, अप्रकाशनादौ तु तथाविधविक्रयस्य विक्रेत्रस्वामिबोधकत्वात्तज्ज्ञानमस्तीति दुष्टत्वात् क्रेतापि दण्ड्य इत्यर्थः । स्वामिना राजानं ज्ञापयित्वैव तद्द्रव्यं ग्राह्यमन्यथा चौरप्रच्छादकत्वेन स दण्ड्य इत्याह—

याज्ञवल्क्यः,

हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥ इति । (२।१७२)

यदा पुनः परहस्तादवाप्तुमसमर्थः स्वामी तदा त्वाह—

स एव,

नष्टापहृतमासाद्य हर्त्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत् ॥ इति । (२।१६९)

विनष्टमपहृतं वा स्वकीयं द्रव्यमधिगन्तुरपहर्त्तुर्हस्ते वा दृष्ट्वा अधिगन्तारमपहर्त्तारं वा राजपुरुषादिभिर्ग्राहयेत् । राज्ञो राजपुरुषाणां च दूरदेशावस्थितौ तु विज्ञापनकालात्प्राक् पलायनादिशङ्कायां स्वयमेव गृहीत्वा राज्ञे समर्पयेदित्यर्थः । हर्त्तृशब्देनात्र क्रेता विवक्षित इति मिताक्षरायां विज्ञानेश्वरः ।

नष्टधनस्वामिना तद्धने स्वस्वत्वसिद्ध्यर्थं प्रथमं साक्ष्यादिभिः प्रतिग्रहादिकं साधनीयमित्याह—

कात्यायनः,

अभियोक्ता धनं कुर्यात् प्रथमं ज्ञातिभिः स्वकम् । इति ।

ज्ञातिभिः साक्षिभूतैरिति शेषः । सांक्ष्यादिभिः स्वत्वहेतुभूतप्रतिग्रहादीनामसाधने दण्ड्यतामाह—

स एव,

यदि स्वं नैव कुरुते ज्ञातिभिर्नाष्टिको धनम् ।
प्रसङ्गविनिवृत्त्यर्थं चौरवद्दण्डमर्हति ॥

नाष्टिको=नष्टधनस्वामी । प्रसङ्गः=स्वत्वसन्देहः ।

व्यासोऽपि—

वादी चेन्मार्गितं द्रव्यं साक्षिभिर्न विभावयेत् ।
दाप्यः स्याद्द्विगुणं दण्डं क्रेता तद्द्रव्यमर्हति ॥ इति ।

साक्षिग्रहणं प्रमाणान्तरोपलक्षणार्थमिति केचित् । यत्तूक्तं साक्षिग्रहणमस्वामिविक्रयविवादे स्वत्वसाधने प्रमाणान्तरनिवृत्त्यर्थमिति मदनरत्ने । तदयुक्तम् । वस्तुतः स्वत्वहेतुभूतप्रतिग्रहादिसत्त्वे तत्साधकसाक्षिणामभावे दिव्याद्यवकाशस्य विद्यमानत्वात् ।

अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत् ।

इति कात्यायनवचनविरोधापत्तेश्च । न चैतद्यत्र दिव्यनिषेधकस्मृत्यभावस्तत्र दिव्यविधायकम् । अत्र तु—

प्रकाशं च क्रयं कुर्यात्साधुभिर्ज्ञातिभिः स्वकैः ।
न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी ॥

इति दिव्यनिषेधकस्मृतेः सत्त्वादिति वाच्यम् । एतद्वचनस्य क्रेत्रा क्रयसाधनं साक्षिसत्त्वे साक्षिभिरेव कर्त्तव्यं नान्यमानुषेण न दिव्येन वेत्येतत्परत्वात् ।

नन्वेतद्वचनस्यैतादृशविषयपरत्वे मानाभावः । न च "अलेख्यसाक्षिके दैवीं" इति वचनविरोधो मानम् । तस्य सामान्यशास्त्रत्वेनैतद्वचनानुरोधे तस्यैतदतिरिक्तविषयताया न्याय्यत्वादिति चेत्, न । साक्ष्याद्यभावे दिव्यस्य च निषेधे अनिर्णयप्रसङ्गस्यैव मानत्वात् । अन्यथा—

स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् ।

इति वचनस्य साक्ष्यादिसत्त्वे दिव्यनिषेधपरत्वं त्वदभिमतं न सिद्ध्येत् ।

यत्तु तेनैव वक्ष्यमाणे "प्रमाणहीने वादे" इति वचने प्रमाणहीनत्वाभिधानमपि अत्र दिव्याभावज्ञापकम् । दिव्याङ्गीकरणे प्रमाणहीनताया असम्भवादित्युक्तम् । तत्र तत् प्रमाणहीने=मानुषप्रमाणहीने अन्यतरेण दिव्याङ्गीकरणहीने चेति व्याख्येयम् । अन्यथा अनिर्णयः स्यात् । तस्मादत्रापि साक्ष्याद्यभावे दिव्यं भवत्येवेति । अत एव मिताक्षरायामुक्तम्—यदा पुनः साक्ष्यादिभिर्दिव्येन वा क्रयं न शोधयतीत्यादि ।

केचित्तु स्थावरविवादे "स्थावरेषु विवादेषु" इति वचनाद्दिव्याभाव एव । एवमकृतेऽपि "प्रमाणहीने वादे" इति वचनाद्दिव्याभाव एव अनिर्णयप्रसङ्गानुरोधेन वचनान्यथाकरणस्यानुचितत्वादित्याहुः । तच्चिन्त्यम् । अदृष्टार्थत्वप्रसङ्गात् ।

याज्ञवल्क्योऽपि—

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।
पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते ॥ इति । (२।१७१)

पञ्चबन्धः=नष्टद्रव्यस्य पञ्चमांशसमानो दण्डः । अत्र दण्डविप्रतिपत्तिरपराधाल्पत्वमहत्त्वानुसारेण व्यवस्थापनीया । स्वत्वहेतवः पूर्वमेव निरूपिताः ।

कृतस्वकीयस्य धनस्य स्वकीयत्वानपगतिरपि दानविक्रयाद्यभावे साधनीयेत्याह—

कात्यायनः,

नाष्टिकस्तु प्रकुर्वीत तद्धनं ज्ञातिभिः स्वकम् ।
अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनम् ॥ इति ।

अथैतत् दत्तं सम्प्रदानभूताय विध्युक्तप्रकारेण, त्यक्तं पारितोषिकादिरूपेण, विक्रीतं च न भवतीति प्रमाणैः प्रसाध्य स्वकीयं धनं नष्टस्वामी विक्रेत्रादेः सकाशाल्लभत इत्यर्थः । राजपुरुषानीतेन क्रेत्रा यत्कर्त्तव्यं तद्दर्शयति—

बृहस्पतिः,

पूर्वस्वामी तु यद्द्रव्यं यदागत्य विचारयेत् ।
तत्र मूलं दर्शनीयं क्रेतुः शुद्धिस्ततो भवेत् ॥ इति ।

मूलमत्र यस्मात्क्रीतमसावुच्यते । शुद्धि=र्योज्यत्वानिवृत्तिः ।

अत एव व्यासः—

मूले समाहृते क्रेता नाभियोज्यः कथञ्चन ।
मूलेन सहवादस्तु नाष्टिकस्य विधीयते ॥ इति ।

समाहृते=अस्मान्मया क्रीत इति निर्दिष्टे ।

याज्ञवल्क्योऽपि—

विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥ इति । (२।२७०)

अत्र स्वामी द्रव्यमित्यभिधानं यदि विक्रेता नष्टधनस्वामिना सह विवादं न कुर्याद्यदि वा कृते पराजयी स्यात्तदा नाष्टिकस्य स्वामित्वमवधारितमिति नाष्टिकादिभ्यो विक्रीतद्रव्यादीनि दातव्यानि नान्यथेति सूचनार्थम् । अत एवाह—

बृहस्पतिः,

विक्रेता दर्शितो यत्र हीयते व्यवहारतः ।
क्रेत्रे राज्ञे मूलदण्डौ प्रदद्यात् स्वामिने धनम् ॥ इति ।

यदातु मूलभूतो विक्रेता देशान्तरं गतस्तदा कात्यायन आह—

मूलानयनकालश्च देयो योजनसङ्ख्यया । इति ।

तत्र देयोऽध्वसङ्ख्ययेति मदनरत्ने पाठः। यदा तु बहुकालेनापि मूलं दर्शयितुमक्षमस्तदा साक्षिभिः क्रयसाधनं कुर्य्यादित्याह–

मनुः,

असमाहार्य्यमूलस्तु क्रयमेव विशोधयेत् ।

विशोधिते क्रये राज्ञा वक्तव्यः स न किञ्चन ॥ इति । (न लभ्यते)

क्रये विशोधिते=साक्षिभाषणेन प्रकाशिते सति राज्ञा न किञ्चन वक्तव्यो न दण्ड्य इत्यर्थः ।

यत्तु—

अभियोक्ता धनं कुर्यात् प्रथमं ज्ञातिभिः स्वकम् ।

पश्चादात्मविशुद्ध्यर्थं क्रयं क्रेता स्वबन्धुभिः ॥ इति ।

अभियोक्त्रा स्वत्वे साधिते सति पश्चात् क्रेत्रा क्रयसाधनं कर्त्तव्यमित्युक्तं तेनैव । तत् "असमाहार्य्यमूलस्तु" इत्यस्मादेव वचनान्मूलदर्शनाभावे मन्तव्यम् ।

नष्टधनमस्वामिविक्रीतं तु क्रेत्रा क्रये साधितेऽपि गृह्णीयादिति प्रदर्शयितुमाह—

मनुः,

(१)अथ मूलमनाहार्य्यं प्रकाशक्रयशोधितम् ।

अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥ इति । (८।२०२)

अनाहार्यम्=अनानेयम् । प्रकाशक्रयशोधितं नाष्टिको लभते क्रेता त्वदण्ड्यो भूत्वा राज्ञोऽपराधान् मुच्यत इत्यर्थः ।

क्वचित् क्रेतुः सकाशाद्धनग्रहणमर्धमूल्यं दत्त्वैवेत्याह—

कात्यायनः,

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।

अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥

स्वामी दत्त्वार्द्धमूल्यं तु प्रगृह्णीत स्वकं धनम् ॥ इति ।

वणिग्वीथीपरिगतं=वणिग्वीथ्यां प्राप्तम् । अनेन रहः क्रयो नास्तीति दर्शितम् । विज्ञातं राजपूरुषैः इत्यनेनाप्रकाशक्रयो नास्तीति दर्शितम् । अविज्ञाताश्रयात्=अविज्ञातस्थानकात् । यद्रहःक्रयादिरहितं सदविज्ञाताश्रयात् क्रीतं मृतविक्रेतृकं वा तदर्धमूल्यं दत्त्वा ग्राह्यमित्यर्थः । उभयोरर्धहानौ कारणमाह—

(१) मूलं=विक्रेतेत्यर्थः ।

स एव,

अर्द्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः ।
अविज्ञातक्रयो दोषस्तथा चापरिपालनम् ॥
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः । इति ।

हृतं=नाशितम् । व्यवहारतः=स्वापराधात् । अविज्ञातक्रयः=अविज्ञातस्थानकात् क्रयः । अपरिपालनमरक्षणम् । उपेक्षेति यावत् ।

मरीचिरपि—

अविज्ञातनिवेशत्वाद्यत्र मूलं न लभ्यते ।
हानिस्तत्र समाकल्प्या क्रेतृनाष्टिकयोर्द्वयोः ॥ इति ।

यत्र क्रेता मूलोपस्थापनं करिष्यामीत्युक्त्वा पश्चात् क्रयं साधयिष्यामीति वदति तत्र मूलोपस्थापनमेवादरणीयं न क्रयसाधनमित्याह—

कात्यायनः,

यदा मूलमुपन्यस्य पुनर्वादी क्रयं वदेत् ।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम् ॥ इति ।

यदा मूलदर्शनं क्रयप्रकाशनं वा न करोति तदा दण्ड्यतामाह—

स एव,

अनुपस्थापयन्मूलं क्रयं वाप्यविशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥

यत्तु प्रकाशितेन क्रयेण क्रेतुः स्वत्वप्रतिपादकं मरीचिवचनम्—

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
दिवा गृहीतं यत्क्रेत्रा स शुद्धो लभते धनम् ॥ इति,

यच्च मनुवचनम्—

विक्रयाद्यो धनं किञ्चिद्गृह्णीयात् कुलसन्निधौ ।
क्रयेण स विशुद्धो हि न्यायतो लभते धनम् ॥ इति, (८।२०१)

तद्वचनद्वयमपि नाष्टिकस्वत्वसाधनाभावविषयम् । अन्यथा "अथ मूलमनाहार्यं" इति पूर्वोदाहृतमनुवचनविरोधः स्यात् । यदा तु क्रेता साक्ष्यादिभिः क्रयं न साधयति नाष्टिको वा स्वकीयत्वं तदा निर्णयमाह—

बृहस्पतिः,

प्रमाणहीने वादे तु पुरुषापेक्षया नृपः ।
समन्यूनाधिकत्वे च स्वयं कुर्य्याद्विनिर्णयम् ॥ इति ।

अस्वामिविक्रेतुरिवास्वामिदत्तं स्वाम्यनुमतिमन्तरेणोपभुञ्जानस्य दण्ड्यतामाह—

नारदः,

उद्दिष्टमेव भोक्तव्यं स्त्रीपशुर्वसुधापि वा।
अनिर्पितं तु यो भुङ्क्ते भुक्तभोगं प्रदापयेत्॥
अनुद्दिष्टं तु यद्द्रव्यं दासक्षेत्रगृहादिकम्।
स्वबलेनैव भुञ्जानश्चौरवद्दण्डमर्हति॥
अनड्वाहं तथा धेनुं नावं वासं तथैव च।
अनिर्दिष्टं तु भुञ्जानो दद्यात्पणचतुष्टयम्॥
दासी नौका तथा धुर्यो बन्धकं नोपभुज्यते।
उपभोक्ता तु यद्द्रव्यं पण्येनैव विशोधयेत्॥
दिवसे द्विपणं दासीं धेनुमष्टपणं तथा।
त्रयोदशं त्वनड्वाहमश्वं भूमिं च षोडश॥
नौकामश्वांश्च धेनुं च लाङ्गलं कार्मिकस्य च।
बलात्कारेण यो भुङ्क्ते दाप्यश्चाष्टगुणं दिने॥
उलूखले पणार्धं तु मुसलस्य पणद्वयम्।
शूर्पस्य च पणार्धं तु जैमिनिर्मुनिरब्रवीत्॥ इति। (न लब्धानि)

पण्येन=पणसमूहेन। अत्रैको धेनुशब्दो गामभिधत्ते। अपरो दोग्ध्रीं-महिष्यादिकम्। कार्मिकस्य=कर्मोपजीविनः।

यदविज्ञातस्वामिकं नष्टमपहृतं वा राजपुरुषैः कथञ्चित्प्राप्य राज्ञे समर्पितं तत्स्वामी यदि वर्षमध्ये आगत्य स्वत्वं साधयति तदा राज्ञः सकाशात्प्राप्नोतीत्याह—

याज्ञवल्क्यः,

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम्।
अर्वाक् संवत्सरात्स्वामी हरेत परतो नृपः॥ इति। (२।१७३)

यत्तु मनुवचनम्—

प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत्।
अर्वाक्त्र्यब्दाद्धरेत् स्वामी परतो नृपतिर्हरेत्॥ इति। (८।३०)

तद्बहुश्रुतवृत्तसम्पन्नब्राह्मणविषयमिति मदनरत्ने। ब्राह्मणमात्रविषयमिति केचित्।

इत्यस्वामिविक्रयाख्यं व्यवहारपदम्।

## अथ सम्भूयसमुत्थानाख्यं व्यवहारपदम्।

तस्य स्वरूपमाह नारदः—

वाणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते।
तत्सम्भूयसमुत्थानं व्यवहारपदं स्मृतम्॥ इति। (व्य०प०३।श्लो०१)

वणिक्प्रभृतय इत्यनेन ऋत्विङ्नटनर्त्तककर्षकादीनां ग्रहणम् । यद्यपि फलभूतस्य स्वर्गस्य ऋत्विग्गामित्वाभावादात्मनेपदस्यानुपपन्नत्वेन प्रभृतिशब्देन ऋत्विग्ग्रहणमनुचितम् । तथापि आत्मनेपदाऽविवक्षयेदमुक्तम्। न च ऋत्विङ्मात्रे आत्मनेपदाविवक्षणे अन्यांशे च विवक्षणे वैरूप्यप्रसङ्ग इति वाच्यम् । सम्भूयकर्त्तृत्वमात्रस्य लक्षणत्वेनान्यत्र वास्तवतत्सत्त्वेऽपि लक्षणवैयर्थ्यप्रसङ्गेनाप्रवेशात् । न च चिन्तामणिकृता कर्त्रभिप्राय इत्यस्य कर्त्रभिप्रायविषये कर्त्रिच्छाविषये क्रियाफल इति व्याख्यातत्वात् ऋत्विजामपि सफलं यजमानस्य कर्म भवत्विति वेतनोपरागेणेच्छा सम्भवत्येवेत्यात्मनेपदविवक्षायामपि का क्षतिरिति वाच्यम् । कर्त्रभिप्राये कर्तृगामिनीत्यस्यैव व्याख्यानस्य महाभाष्याद्यनेकग्रन्थसम्मतत्वेनान्यादृशव्याख्यानस्य महाभाष्यादिविरुद्धत्वात् ।

सहवाणिज्यादिकरणे अधिकारिणो दर्शयति बृहस्पतिः--

कुलीनदक्षानलसैः प्राज्ञैर्नाणकवेदिभिः ।
आयव्ययज्ञैः शुचिभिः शूरैः कुर्यात्सह क्रियाम् ॥ इति ।

क्रियां=क्रतुकृषिशिल्पस्तेयवाणिज्यरूपाम् । नाणकविज्ञानं वाणिज्यक्रियायामुपयुज्यते । आयव्ययज्ञानमात्रं कृषिक्रियायाम् । शिल्पक्रियायां सङ्गीतक्रियायां च प्राज्ञत्वम् । क्रतौ तु कुलीनत्वप्राज्ञत्वशुचित्वानि । स्तेये तु शूरत्वमात्रमुपयुज्यते । दक्षत्वानलसत्वे सर्वत्रोपयुज्येते । अत एवादक्षादीन्निषेधति-

स एव,

अशक्तालसरोगार्त्तमन्दभाग्या निराश्रयाः ।
वाणिज्याद्या सहैतैस्तु न कर्त्तव्या बुधैः क्रिया ॥ इति ।

निराश्रयाः=मूलधनरहिताः । ये तु सम्भूय वाणिज्यादिक्रियां कुर्वन्ति ते द्रव्यानुरोधेन लाभादिभाजो भवन्तीत्याह—

नारदः,

समोऽतिरिक्तो हीनो वा तत्रांशो यस्य यादृशः ।
क्षयव्ययौ तथा वृद्धिस्तत्र तस्य तथाविधा ॥ इति । (व्य०प०३ । ३)

बृहस्पतिरपि--

प्रयोगं कुर्वते ये तु हेमधान्यरसादिना ।
समन्यूनाधिकैरंशैर्लाभस्तेषां यथाविधः ॥
समो न्यूनोऽधिको वांशो येन क्षिप्तस्तथैव सः ।
व्ययं दद्यात्कर्म कुर्याल्लाभं गृह्णीत चैवहि ॥ इति ।

यत्र पुनरस्य द्वौ भागौ अस्यैक इति संवित्कृता तत्र तदनुरोधेन

व्ययलाभौ प्रकल्प्याविल्याह--

याज्ञवल्क्यः,

समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।

लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥ इति । (२।२५९)

सम्भूयकारिणां कर्त्तव्यमाह व्यासः—

समक्षमसमक्षं वाऽवञ्चयन्तः परस्परम् ।

नानापण्यानुसारास्ते प्रकुर्य्युः क्रयविक्रयौ ॥

अगोपयन्तो भाण्डानि दद्युः शुल्कं च तेऽध्वनि ।

अन्यथा द्विगुणं दाप्याः शुल्कस्थानाद्बहिःस्थिताः ॥ इति ।

नारदोऽपि—

(१) भाण्डपिण्डव्ययोद्धारसारासारान्ववेक्षणम् ।

कुर्युस्तेऽव्यभिचारेण समये स्वे व्यवस्थिताः ॥ इति । (व्य०प०३।४)

अथ वा सर्वेषामनुज्ञया सर्वेषां कार्य्यमेक एव कुर्य्यात् ।

अत एव बृहस्पतिः—

बहूनां सम्मतो यस्तु दद्यादेको धनं नरः ।

करणं कारयेद्वापि सर्वैरेव कृतं भवेत् ॥ इति ।

करणं=लेख्यादिकम् । सम्भूयकारिणां मिथोविवादे निर्णयप्रकारमाह-

स एव,

परीक्षकाः साक्षिणश्च त एवोक्ताः परस्परम् ।

सन्दिग्धेऽर्थे वञ्चनायां न चेद्विद्वेषसंयुताः ॥ इति ।

यदा तु विद्वेषसंयुक्तास्तदाप्याह स एव—

यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।

शपथैः सोऽपि शोध्यः स्यात्सर्ववादेऽप्ययं विधिः ॥ इति ।

सर्ववादेऽपि=वचनरहितवादेऽपि । वञ्चकत्वे सिद्धे सति किं कार्य-मित्यपेक्षिते आह—

याज्ञवल्क्यः,

जिह्मं त्यजेयुर्निर्लाभम् ॥ इति । (२।२६५)

जिह्मं=वञ्चकं निर्लाभं कृत्वा त्यजेयुः=बहिः कुर्य्युरितरे सम्भूयकारिण इत्यर्थः । सम्भूयकारिष्वसमर्थं प्रत्याह—

स एव,

अशक्तोऽन्येन कारयेदिति ।

---

(१) भाण्डं=विक्रेयद्रव्यम् । पिण्डं=पाथेयम् ।

स्वांशानुरूपं कर्मेति शेषः । दैवराजकृतद्रव्यहानिविषये सर्वान् प्रत्याह-

बृहस्पतिः,

द्रव्यहानिर्यदा तत्र दैवराजकृताद्भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः ॥ इति ।

सम्भूयकारिभिः सर्वैरिति शेषः । क्षयहानिरिति पाठे क्षययैव हानिः क्षयहानिरुपचेयार्थव्यतिरिक्ता हानिरित्यर्थः । प्रातिस्विकदोषेण द्रव्यनाशे--

स एवाह,

अनिर्दिष्टो वार्य्यमाणः प्रमादाद्यस्तु नाशयेत् ।
तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम् ॥ इति ।

अनिर्दिष्टः=समवाय्यननुज्ञातः ।

याज्ञवल्क्योऽपि—

प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम् ।
स तद्दद्यादिति । (२।२६०)

पालने त्वाह स एव—

विप्लवाच्च रक्षिताद्दशमांशभाक् । इति । (२।२६०)

बृहस्पतिरपि—

दैवराजभयाद्यस्तु स्वशक्त्या परिपालयेत् ।
तस्यांशं दशमं दत्त्वा गृह्णीयुस्तेऽशतोऽपरम् ॥ इति ।

तस्य=तस्मै दशममंशम् दत्त्वा । ते=समवायिनः । पालयेत् समवायिद्रव्यमिति शेषः ।

अत एव कात्यायनः—

चौरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् ।
तस्यांशो दशमो देयः सर्वद्रव्येष्वयं विधिः ॥ इति ।

समाहरेत्=स्वशक्त्या प्रत्याहरेदित्यर्थः ।

नारदोऽपि—

दैवतस्करराजाग्निव्यसने समुपस्थिते ।
यस्तत् स्वशक्त्या रक्षेत तस्यांशो दशमः स्मृतः ॥ इति । (व्य०प०३।६)

यस्तु समवायिद्रव्यं समवायिभिः सह प्रतियाचनादिना न साधयति तस्य लाभहानिरित्याह—

बृहस्पतिः,

समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ।
न याचते च यः कश्चिल्लाभात् स परिहीयते ॥ इति ।

याचनग्रहणं येन यत्कर्म स्वांशानुरूपं कर्त्तव्यं तस्याप्युपलक्षणार्थम्। तेन तत्कर्माकरणेऽपि लाभहानिरित्यस्मादेव वचनात् प्रत्तिपत्तव्यमिति स्मृतिचन्द्रिकायाम् ।

सम्भूयकारिणामृत्विजां कर्त्तव्यमाह मनुः,—

ऋत्विजः समवेतास्तु यथा सत्रे निमन्त्रिताः ।
कुर्युर्यथार्हं तत्कर्म गृह्णीयुर्दक्षिणां तथा ॥ इति । (न लभ्यते)

अत्र सत्रशब्दो यज्ञमात्रविवक्षया प्रयुक्तो न पुनर्बहुयजमानकसत्राख्ययज्ञविशेषविवक्षया । तत्र यजमानानामेवाध्वर्य्वादिकर्मकारित्वेन दक्षिणार्हाणामृत्विजामभावात्। तथा=कर्मानुसारेण दक्षिणां गृह्णीयुरित्यर्थः। तथा च—

स एव,

सम्भूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः ।
अनेन कर्मयोगेन कर्त्तव्यांशप्रकल्पना ॥ इति । (८।२११)

स्वानि कर्माणि=यजमानव्यतिरिक्तानीतिशेषः । इयं चांशकल्पना "द्वादशशतं गावो दक्षिणा" इत्येवं क्रतुसम्बन्धित्वेन विधीयमानायां दक्षिणायामेव न ऋत्विग्विशेषोल्लेखेन विहितायाम्। तद्विधायकश्रुतिविरोधापत्तेः । अत एवाहतुः—

मनुबृहस्पती,

रथं हरेदथाध्वर्युर्ब्रह्माधाने च वाजिनम् ।
होता निविद्वरं चाश्वमुद्गाता चाप्यनः क्रये ॥ इति । (८।२०९)

निविद्वरं=निविच्छंसन् लब्धं वरम् उद्गातृशब्देनोद्गातृगणमध्यस्थः सुब्रह्मण्यो गृह्यत इति मदनरत्ने । अनः=शकटम् । क्रये=सोमक्रये । दक्षिणांशकल्पनायाः प्रकारमाह—

मनुः,

सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ॥ इति । (८।२१०)

सर्वेषां=षोडशानामृत्विजां मध्ये मुख्या=गणस्याग्र्याः होतृब्रह्माध्वर्यूद्गातारः आर्धिनः उक्तदक्षिणायाः किञ्चिन्न्यूनमर्धं गृह्णीयुः। समग्रार्धग्रहणे वक्ष्यमाणविभागकल्पनाविरोधः स्यात्। अपरे=द्वितीया मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारः तदर्धेन=मुख्यभागार्धेनार्धिनोऽर्धग्राहिणः। तृतीयिनोऽच्छावाकाग्नीध्रनेष्टृप्रतिहर्त्तारो मुख्यभागात्तृतीयांशभाजः । पादिनः=अन्त्याः ग्रावस्तोतृउन्नेतृपोतृसुब्रह्मण्याख्या मुख्यभागस्य चतुर्थांशग्राहिण इत्यर्थः । मुख्यानां चतुर्णां मिथो विभागः समः । एवं द्वितीया-

दीनामपि सम एव विभागः । तथा च "गोशतं दक्षिणा"(१) इति पक्षमाश्रित्य कात्यायनसूत्रम्—"यथारम्भं द्वादशद्वादशाद्येभ्यः षट् षट् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्य"(अ०१०।सू०४९)इति। सङ्गृहीतमेतद्बौधायनकारिकायामपि—

पञ्चविंशतिधा कृत्वा वर्गीया दक्षिणाः क्रमात् ।
द्वादशैवाथ षट्कं च चतस्रस्तिस्र एव च ॥ इति ।

द्वादशाधिकगोशतरूपाया दक्षिणायाः प्रथमं चत्वारो भागाः कर्त्तव्याः। तत्रैको भागो होतृवर्गस्यापरो भागो ब्रह्मवर्गस्यापरोऽध्वर्युवर्गस्यापर उद्गातृवर्गस्य। पुनरेकैकस्य भागस्य पञ्चविंशतिर्भागाः कर्त्तव्याः। तेष्वाद्यानां होत्रादीनां द्वादश भागाः द्वितीयानां षट् तृतीयानां चत्वारश्चतुर्थानां त्रय इत्यर्थः। पशुबन्धादौ तु विषमविभागानभिधानात् "समं स्यादश्रुतत्वात्" ( जै०सू०अ०१०।पा०३अधि०१३सू०५३ ) इति न्यायेन समत्वेनैव विभाग इति मन्तव्यम् ।

स्वकीयकर्मकलापांशकर्त्तृकृतानुसारेण भागो देय इत्याह—

मनुः,

ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत् ।
तस्य कर्मानुरूपेण देयोऽशः सह कर्तृभिः ॥ इति ॥ (८।२०६)

सहकर्तृभिः=सम्भूयकारिभिरित्यर्थः । यद्वा कर्तृभिः सह देयः दक्षिणाकाले देयो यजमानेनेत्यर्थः । अथ वा कर्म परित्यक्त्वांशकर्तृभिरित्यर्थः। यदा तु ऋत्विक् कर्मैकदेशं दक्षिणादानानन्तरं त्यजति तदाऽवशिष्टतद्गणवर्त्तिनां मध्ये सन्निहितेनान्येन कारयेदित्याह—

स एव,

दक्षिणासु च दत्तासु स्वकर्म परिहापयेत् ।
कृत्स्नमेव लभेतांशमन्येनैव च कारयेत् ॥ इति । (८।२०)

कर्ममध्ये ऋत्विङ्मरणे कर्त्तव्यमाह —

नारदः,

ऋत्विजां व्यसनेऽप्येवमन्येन कर्म निस्तरेत् ।
लभेत दक्षिणादानं स तस्मात् सम्प्रकल्पितम् ॥ इति । (व्य०प०३।८)

---

(१) अत्र पूर्वं द्वादशशतं गावो दक्षिणा इत्युक्तमत्र तु गोशतमित्युच्यते इति पूर्वापरविरोधो न शङ्कनीयः। गोशतदक्षिणा "तं शतेन दीक्षयन्ति" इतिश्रुतिवचनसिद्धा द्वादशाधिक्यं तु शाखान्तरीयम्। अत एव—"गवां शतं द्वादशं वातिक्रामति" (का० श्रौ०अ० १०। सू०३५) इति कातीयसूत्रव्याख्याने कर्काचार्यैरुक्तम्-द्वादशं तु शाखान्तरादिति।

अन्येन=स्वस्वगणमध्यवर्त्तिनां मध्ये प्रत्यासन्नेन । येन केनचिदन्येन कार्यमाणे त्वध्वर्य्वादिसमाख्याबाधापत्तेरिति ध्येयम् ।

यत्तु शङ्खलिखितयोर्वचनम्—

अथ चेदनुप्राप्ते सवने ऋत्विक् म्रियेत तस्य सगोत्रोऽथ शिष्यस्तत्कार्यमनुपूरयेत् । अथ चेदबान्धवस्ततोऽन्यमृत्विजं वृणुयादिति ।

यच्च बृहस्पतिवचनम्—

एवं क्रियाप्रवृत्तानां यदा कश्चिद्विपद्यते ।
तद्बन्धुना क्रिया कार्या सर्वैर्वा सहकारिभिः ॥ इति ।

तदेकान्तरगणरहितर्त्विककर्तृकदर्शपौर्णमासादियागविषयमित्यभिहितं स्मृतिचन्द्रिकायाम् । जीवत्येव तु ऋत्विजि यजमानेन ऋत्विगन्तरकरणे कस्य दक्षिणेति वीक्षायामाह—

शङ्खः,

अथ ऋत्विजि वृते पश्चादन्यं वृणुयात्पूर्वाहूतस्यैव दक्षिणा पश्चादाहूतः किञ्चिल्लभत इति ।

यदा त्वकारणमृत्विग्याज्यं त्यजति याज्यो वा ऋत्विजं तदा तयोर्दण्डमाह—

मनुः,

ऋत्विजं यस्त्यजेद्याज्यो याज्यमृत्विक् त्यजेद्यदि ।
शक्तं कर्मण्यदुष्टं च तयोर्दण्डः शतं शतम् ॥ इति ।(८।३८८)

नारदोऽपि, (व्य०प०३)

ऋत्विक् च त्रिविधो दृष्टः पूर्वजुष्टः स्वयङ्कृतः ।
यदृच्छया च यः कुर्यादार्त्विज्यं प्रीतिपूर्वकम् ॥ (१०)
ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम् ।
अदुष्टं वर्त्विजं याज्यो विनेयौ तावुभावपि ॥ इति । (९)

ये कृषिसाधने स्वसमानास्तैः सह कृषिः कार्येत्याह—

बृहस्पतिः,

वाह्यकर्षकबीजाद्यैः क्षेत्रोपकरणेन च ।
ये समानास्तु तैः सार्द्धं कृषिः कार्या विजानता ॥ इति ।

वाह्याः=लाङ्गलादिवाहका बलीवर्दाः । कर्षकाः=कृष्यर्थं स्वीकृताः पुरुषाः। आदिशब्देन कृषिसाधनानामन्येषां ग्रहणम् । सम्भूयकारिणां कृषकाणां कर्त्तव्यमाह—

बृहस्पतिः,

पर्वते नगराभ्याशे तथा राजपथस्य च ।
ऊषरं मूषकव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥ इति ।

पर्वते=पर्वतसमीपे। कल्पतरुकृता तु विवीत इति पठित्वा विवीतशब्देन यवसाद्यर्थं रक्षितः प्रदेश इति व्याख्यातम्। नगराभ्याशे=नगरसमीपे। राजपथस्य समीप इति शेषः। एतदुक्तं भवति। पर्वताद्यासन्नमनासन्नमपि ऊषरं मूषकव्याप्तं च क्षेत्रं वर्जयेदिति। वाह्येऽपि वर्जनीयानाह—

स एव,

कृशातिवृद्धं क्षुद्रं च रोगिणं प्रपलायिनम्।
काणं खञ्जं च नादद्याद्वाह्यं प्राज्ञः कृषीवलः॥ इति।

काणः=एकाक्षः। खञ्जः=भग्नचरणः। क्वचिदत्रैकस्य हानिमाह—

स एव,

वाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनाम्॥ इति।

सम्भूयकारिणामिति शेषः। वाह्यबीजग्रहणं कृषिसाधनानामुपलक्षणार्थम्। सम्भूयकारिणां शिल्पिनां स्वरूपं दर्शयंस्तेषां लाभविभागेऽशपरिकल्पनाप्रकारमाह—

स एव,

हिरण्यकुप्यसूत्राणां काष्ठपाषाणचर्म्मणाम्।
संस्कर्ता तत्कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः॥
हेमकाराद्यो यत्र शिल्पं सम्भूय कुर्व्वते।
कर्मानुरूपं निर्वेशं लभेरंस्ते यथांशतः॥ इति।

कुप्यं=हेमरूप्यव्यतिरिक्तत्रपुसीसादिकम्। हेमरूप्य इति प्रस्तुत्य "ताभ्यां यदन्यत्तत्कुप्यं" इत्यमरसिंहेनोक्तत्वात्। निर्वेशो=भृतिः।

कात्यायनोऽपि

शिक्षकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम्॥ इति।

हर्म्यादिनिर्मातॄणां मध्ये मुख्ये भागद्वयमाह—

बृहस्पतिः,

हर्म्यं देवगृहं वापि वाहिकोपस्कराणि च।
सम्भूयकुर्वतां तेषां प्रमुख्यो द्व्यंशमर्हति॥ इति।

नर्त्तकेष्वपि मुख्यस्यांशद्वयभागित्वमतिदिशन् विशेषान्तरमप्याह—

स एव,

नर्त्तकानामेष एव धर्मः सद्भिरुदाहृतः।
तालज्ञो लभतेऽध्यर्धं गायनास्तु समांशिनः॥ इति।

अध्यर्द्धम्=अर्द्धाधिकमेकमंशम् । सम्भूयकारिणां चौराणां लाभवि-भागेंऽशपरिकल्पनाप्रकारमाह—

कात्यायनः,

परराष्ट्राद्धनं यत्स्याच्चौरैः स्वाम्याज्ञया हृतम् ।
राज्ञे दशांशमुद्धृत्य विभजेरन् यथाविधि ॥
चौराणां मुख्यभूतस्तु चतुरोंऽशांस्ततो हरेत् ।
शूरोंऽशांस्त्रीन् समर्थो द्वौ शेषास्त्वेकैकमेव च ॥ इति ।

एतद्वचनं दुर्बलवैरिदेशादाहृतधनविषयम् । प्रबलतरवैरिदेशादाहृते त्वाह—

बृहस्पतिः,

स्वाम्याज्ञया तु यच्चौरैः परदेशात् समाहृतम् ।
राज्ञे दत्त्वा तु षड्भागं भजेयुस्ते यथांशतः ॥
चतुरोंऽशान् भजेन्मुख्यः शूरस्त्र्यंशमवाप्नुयात् ।
समर्थस्तु हरेत् द्व्यंशं शेषास्त्वन्ये समांशिनः ॥ इति ।

समर्थः=शक्तः । एतेषां हानिरप्येवमेवेत्याह—

कात्यायनः,

तेषां चेत्प्रसृतानां च ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशतः ॥ इति ।

इयमंशपरिकल्पना ऋत्विग्भिन्नसम्भूयकारिणां समयाभावविषया । कृते तु समये तदनुसारेणैव । अत एव—

तेनैवोक्तम्,

वणिजां कर्षकाणां च चौराणां शिल्पिनां तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेष निर्णयः ॥ इति ।

अनियम्य=लाभहान्योः समयेन प्रतिपुरुषमंशमकृत्वेत्यर्थः ।

इति सम्भूयसमुत्थानाख्यं व्यवहारपदम् ।

## अथ दत्ताप्रदानिकाख्यं व्यवहारपदम् ।

तत्र बृहस्पतिः—

एषाऽखिलेनाभिहिता सम्भूयोत्थाननिष्कृतिः ।
अदेयदेयदत्तानामदत्तस्य च कथ्यते ॥ इति ।

अदेयादीनां स्वरूपादिकमधुना कथ्यत इत्यर्थः । तस्य स्वरूपमाह—

नारदः,

दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम व्यवहारपदं हि तत् ॥ इति । (व्य०प०४।१)

असम्यक्=अशास्त्रीयमार्गाश्रयणेनेत्यर्थः । दानप्रकारस्य देयादिभेदैश्चतुर्विधत्वमाह—

स एव,

अदेयमथ देयं च दत्तं चाऽदत्तमेव च ।
व्यवहारेण विज्ञेयो दानमार्गश्चतुर्विधः ॥ इति । (व्य०प०४।२)

तत्र तावददेयस्य स्वरूपभेदानाह—

बृहस्पतिः,

सामान्यं पुत्रदाराधिसर्वस्वं न्यासयाचिते ।
प्रतिश्रुतमथान्यस्य न देयं त्वष्टधा स्मृतम् ॥ इति ।

(१)सामान्यं=साधारणम् । प्रतिश्रुतं=वाचा दत्तम् ।

नारदोऽपि—(व्य०प०४)

अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपः पुत्रदाराश्च सर्वस्वं चान्वये सति ॥ (४)
आपत्स्वपि हि कष्टासु वर्त्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥ इति । (५)

साधारणं=बहुस्वामिकं रिक्थादिकं न त्वविभक्तस्वामिकं सुवर्णादिकम् । तस्याविभक्तसर्वसम्मतौ देयत्वेन वक्ष्यमाणत्वात् । अत्र पुत्रादानमेकपुत्रविषयम् । तद्दाने सन्ततिविच्छेदप्रसङ्गात् । अत एव—

विष्णुः,

शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतो न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषामिति ।

अतश्च—

सुतस्य सुतदाराणां वशित्वं त्वनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥

इत्यादीनि स्मृत्यन्तरोक्तवचनानि सुतस्यादेयत्वप्रतिपादकानि एकपुत्रविषयाणीति ज्ञेयानि । अनेकपुत्रेष्वपि मातापितृवियोगसहनक्षम एव देयः । अत एव—

---

(१) अनेकस्वामिकमित्यर्थः ।

कात्यायनः,

विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्वस्वमात्मनैव तु योजयेत् ॥ इति ।

यथा दारान् विक्रयं दानं वा भर्त्ता न नयेत्तथा मातापितृभ्यां पुत्रा अपि पितृवियोगानिच्छवो न नेया इत्यर्थ उक्तः स्मृतिचन्द्रिकायाम् । न नेया स्युरनिच्छव इत्येतदनापद्विषयम् ।

आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चयः ॥

इति तानेवाधिकृत्य तेनैवाभिधानात् । मात्रापि पत्यनुज्ञया देयमित्याह—

विष्णुः,

न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुरिति ।
अन्वाहितादिवत् स्त्रीधनमदेयम् । अत एव—

दक्षः,

सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् ।
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ॥
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥ इति ।

अदेयदाने प्रतिग्रहे च दण्डमाह—

मनुः,

अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम् ॥ इति ।

अदेयग्रहणमदत्तस्याप्युपलक्षणार्थम् । अत एव—

नारदः,

गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति ।
(१)दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता ॥ इति ।
(व्य० पं० ४।१२)

अदत्तादेयग्रहणाद्गृहीतस्य परावर्त्तनमपि कार्यमिति गम्यते । अदत्तग्रहणे दाने च दानसिद्ध्यभावात्परस्वत्वानुत्पत्तेरित्युक्तं स्मृतिचन्द्रिकायाम् । देयस्वरूमाह—

स एव,

कुटुम्बभरणाद्द्रव्यं यत्किञ्चिदतिरिच्यते ।

(१) अदेयदायको दण्ड्यस्तथादत्तप्रतीच्छकः । इति मु० ना० स्मृ० पाठः ।

तद्देयमुपहृत्यान्यद्ददद्दोषमवाप्नुयात् ॥ इति । (व्य०प०४।६)

अन्यदुपहृत्य=भर्त्तव्यकुटुम्बमवरुध्येत्यर्थः । उपरोधश्च भोजनाच्छादनादिराहित्यनिबन्धनतोऽत्राभिमतो न तु ताम्बूलादिभोगसाधनवैकल्यनिबन्धनः । अत एव—

बृहस्पतिः,

कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते । इति ।

भक्तं=भोजनम् । वसनम्=आच्छादनम् । भक्तवसनाद्यदतिरिच्यते इत्यन्वयः ।

याज्ञवल्क्योऽपि—

स्वं कुटुम्बाविरोधेन देयं दारसुतादृते । इति । (२।१७५)

कुटुम्बाविरोधेन=कुटुम्बानुरोधेन कुटुम्बभरणावशिष्टं स्वं देयमित्यर्थः । स्थावरविषये देयमाहतुः—

प्रजापतिबृहस्पती,

सप्तागमाद्गृहक्षेत्राद्यद्यत् क्षेत्रं प्रदीयते ।

पित्र्यं वाथ स्वयम्प्राप्तं तद्दातव्यं विवक्षितम् ॥ इति ।

सप्तागमात्=पूर्वोक्तसप्तविधागमयुक्तात् । क्षेत्रग्रहणमुपलक्षणम् । पित्र्यं=वंशपरम्परायातम् । स्वयम्प्राप्तं=स्वयमर्जितम् । पित्र्यस्वयम्प्राप्तयोरुपादानं क्रीतादीनामुपलक्षणार्थम् । पित्र्यं वा स्वयम्प्राप्तं वा यद्गृहक्षेत्रादिकं प्रदीयते तत्सप्तागमान्विताद् गृहक्षेत्रादुद्धृत्य दातव्यमिति स्मृतिशास्त्रं विवक्षितमित्यर्थः । अत्र सप्तागमाद्गृहक्षेत्रादित्यभिधानं गृहक्षेत्रादिदानं कुटुम्बपर्याप्ते सागमके गृहक्षेत्राद्यन्तरे सत्येव नान्यथेत्येवमर्थम् ।

यत्तु कात्यायेनेनोक्तम्—

सर्वस्वं गृहवर्ज्जं तु कुटुम्बभरणाधिकम् ।

यद्द्रव्यं तत् स्वकं देयमदेयं स्यात्ततोऽन्यथा ॥ इति ।

तद्गृहाद्यन्तराभावविषयम् । स्वकं=स्वकीयम् । यथेष्टविनियोगार्हद्रव्यमिति यावत् । स्वयम्प्राप्तं त्वविभक्तधनैर्भ्रातृभिरननुज्ञातमपि देयम् ।

स्वेच्छादेयं स्वयम्प्राप्तं बन्धाचारेण बन्धकम् ।

इति बृहस्पतिस्मरणात् । स्वेच्छादेयं=भ्रात्राद्यनुज्ञामन्तरेणापि देयम् । बन्धकं बन्धाचारेणाधिरूपेण देयमित्यर्थः ।

यत्तु तेनैवोक्तम् —

विभक्ता अविभक्ता वा दायादाः स्थावरे समाः ।

एकोऽप्यनीशः सर्वत्र दानाधमनविक्रये ॥ इति ।

तत् सप्तानधिकाविभक्तस्थावरविषयम् । आधमनमाधीकरणम् । वि·

भक्ता अपि स्थावरे समाः किमुताविभक्ता इति दण्डापूपन्यायेन व्याख्येयम् । अन्यथा विभागो निरर्थकः स्यात् । अतश्च यदुक्तं स्मृत्यन्तरे--

एकोऽपि स्थावरे कुर्य्याद्दानाधमनविक्रयम् ।
आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः ॥ इति ।

तत्क्रमायाताविभक्तस्थावरविषयं सप्तानधिकस्थावरविषयं वेति मन्तव्यम् । स्वार्जितमपि किञ्चित् प्राप्तव्यवहारेषु पुत्रेषु सत्सु तदनुमत्यैव दातव्यमित्याह—

भगवान् व्यासः,

स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् ।
असम्भूय सुतान् सर्वान्न दानं न च विक्रयः ॥
ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः ॥ इति ।

अत्रोत्तरपद्यं पूर्वप्रदर्शितबृहस्पतिवचनार्थस्य दण्डापूपन्यायप्रदर्शनेन दृढीकराणर्थम् ।

किञ्चिद्भर्त्रा पत्न्यनुज्ञातमेव देयम् । किंचिन्मुख्येनापि भ्रात्राद्यनुज्ञातमेव देयम् । किञ्चिद्दासेनापि स्वार्जितं स्वाम्यनुज्ञातमेव देयम् ।

तथा च बृहस्पतिः,

सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत् ।
स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात् ॥ इति ।

सौदायिकं=वैवाहिकं यस्याः परिणयने लब्धं तस्या अनुज्ञयैव दातव्यम् । क्रमायातं=पितृपितामहादिक्रमायातम् । स्त्रीज्ञात्यनुमतं न सकलं देयम् ।

वैवाहिके क्रमायाते सर्वदानं न विद्यते ।

इति तेनैवोक्तत्वात् । देयोक्तिप्रसङ्गेन प्रतिग्रहे प्रकारविशेषं दर्शयति—

याज्ञवल्क्यः,

प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः । इति ॥ (२।१७६)

प्रकाशः=प्रकटः ससाक्षिक इति यावत् । पुत्रप्रतिग्रहे प्रकारविशेष उक्तो

वसिष्ठेन,

पुत्रं ग्रहीष्यन्बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवमसन्निकृष्टमेव गृह्णीयादिति ।

अदूरबान्धवं=सन्निहितमातुलादिबान्धवम् । असन्निकृष्टम्=असन्निकृष्टभ्रातृपुत्रादिव्यतिरिक्तमेव प्रतिगृह्णीयादित्यर्थः । प्रासङ्गिकमुक्त्वा प्रकृतमप्याह—

याज्ञवल्क्यः,

देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत् पुनः ॥ इति । (२।१७६)

इदं ते दास्यामीति यत् प्रतिश्रुतं तदवश्यं तस्मै दातव्यं यदि धर्म्मप्रच्युतो न भवति । प्रच्युते पुनर्न दातव्यम् । "प्रतिश्रुत्याप्यधर्म्मसंयुक्ताय न दद्यात्" इति गौतमस्मरणात् । दत्त्वा नापहरेत्पुनः=न्यायमार्गेण यत् दत्तं तत् सप्तविधमपि पुनर्नापहर्त्तव्यम् । किन्तु तथैवानुमन्तव्यमित्यर्थः ।

यत्पुनः प्रतिश्रुतं न ददाति दत्तं वाऽपहरति तस्य दोषमाह—

हारीतः,

प्रतिश्रुतार्थादानेन दत्तस्याच्छेदनेन च ।
विविधान्नरकान् याति तिर्यग्योनौ च जायते ॥
वाचैव यत्प्रतिज्ञातं कर्म्मणा नोपपादितम् ।
ऋणं तद्धर्म्मसंयुक्तमिह लोके परत्र च ॥ इति ।

यद्धनं धर्म्मसंयुक्तं प्रतिग्रहीतुः प्रवृत्तधर्म्मसम्पत्यर्थं वाचा प्रतिज्ञातं न पश्चादर्पितं तदिह परत्र च ऋणवन्नापैतीत्यर्थः ।

प्रतिश्रुतमददद्राज्ञा तद्दाप्यो दण्ड्यश्चेत्याह—

कात्यायनः,

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।
न दद्यादृणवद्दाप्यः प्राप्नुयात्पूर्वसाहसम् ॥ इति ।

मत्स्यपुराणेऽपि—

प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः । इति ।

अनयोर्दण्डयोरपराधानुसारेण व्यवस्था । दत्तं सप्तविधमदत्तं षोडशप्रकारमित्याह—

नारदः,

दत्तं सप्तविधं ज्ञेयमदत्तं षोडशात्मकत् । इति । ( व्य० प० ४।३ )

तत्र दत्तभेदानाह स एव—

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात् प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थं च दत्तं (१)दानविदो विदुः ॥ इति । (व्य० प० ४।८)

पण्यमूल्यं=क्रीतद्रव्यस्य मूल्यम् । भृतिस्वरूपं कात्यायनेन दर्शितम्—

अविज्ञातोपलब्ध्यर्थं दानं यत्र निरूपितम् ।
उपलब्धिक्रियालब्धं सा भृतिः परिकीर्तिता ॥ इति ।

प्रयोजनक्रियानिष्पादनार्थं भृतिरिष्यत इत्यर्थः । तुष्ट्या=परितो-

(१) दत्तं सप्तविधं स्मृतम् इति मु० ना० स्मृ० पाठः ।

षेण वन्दिप्रभृतिभ्यो दत्तमिति शेषः । स्नेहात्=प्रीत्या दुहित्रादिभ्यो दत्तम् । प्रत्युपकारतः=कृतोपकाराय प्रत्युपकारिणा दत्तम् । तत्प्रदर्शनार्थमाह—

कात्यायनः,

भयत्राणाय रक्षार्थं तथा कार्यप्रसाधनात् ।
अनेन विधिना लब्धं विद्यात्प्रत्युपकारकम् ॥ इति ।

भयत्राणादिना लब्धम् उपकारकरणेन लब्धमिति यावत् । स्त्रीशुल्कं=विवाहार्थं कन्याबन्धुभ्यो दत्तम् । अनुग्रहार्थं='परोपकारः कर्त्तव्य' इति विधिबलाद्यत्र कुत्राप्यनुग्रहार्थं दत्तम् । तत्सफलं भवतीति दर्शयितुं—

नारद आह,

मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दत्तं तु सफलं भवेत् ॥ इति ।

उपकारिणि=परोपकारपरे । सफलं=फलातिशयोपेतमित्यर्थः । तदेतत्पण्यादि सप्तविधं दत्तमेव दानविदो विदुः अपरावर्त्तनीयं विदुरित्यर्थः ।

बृहस्पतिरपि—

भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे ।
श्रद्धानुग्रहसम्प्रीत्या दत्तं सप्तविधं विदुः ॥ इति ।

अदत्तानि दर्शयति नारदः—(व्य०प०४)

अदत्तं तु भयक्रोधशोकवेगरुगन्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥ (९)
बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितम् ।
कर्त्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥ (१०)
(१)अपात्रे पात्रमित्युक्तेऽकार्ये वा धर्म्मसंहिते ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत् स्मृतम् ॥ इति । (११)

रुक्=उपतापः भयादिकृतो य उपतापस्तदन्वितैरित्यन्वयः । अपवार्ज्जितं=दत्तम् । बालादिभिरपवर्जितमित्यन्वयः । एतदुक्तं भवति । भयोपतप्तेन बन्दिग्राहादिभ्यो दत्तं क्रोधोपतप्तेन क्रोधविषयीभूतानां पुत्रभ्रात्रादीनां व्ययं कर्त्तुमितरेभ्यो दत्तम् । पुत्रादिवियोगजनितशोकवेगादुपतप्तेन किं स्थितेन धनेनेति तात्कालिकया बुद्ध्या दत्तम् । उत्कोचेन राजकीयादिभ्यो दत्तम् । उपहासेन दत्तम् । व्यत्यासेन एकः स्वद्रव्यमन्य-

(१) अपात्रे इति तस्य तत्त्वविवक्षायां सप्तमी । अपात्रायेत्यर्थः । एवम् अकार्ये इत्यत्रापि अकार्यकर्त्रे इत्यर्थः । धर्मसंहिते इति धर्मः संहितो येनेति आहिताग्न्यादिः ।

स्मै ददाति अन्योऽपि स्वीयं तस्मै ददातीति दानव्यत्यासेन दत्तम्। छलयोगतः शतदानमभिसन्धाय सहस्रमिति परिभाष्य दत्तम्। बालेनाप्राप्तव्यवहारेण दत्तम्। मूढेन लोकवेदानभिज्ञेन दत्तम्। अस्वतन्त्रेण=दासादिना दत्तम्। आर्त्तेन=रोगोपहतेन दत्तम्। मत्तेन=धुस्तूरादिभक्षणादिना मत्तेन दत्तम् उन्मत्तेन=वातपित्ताद्युद्रेकादिना चलितधिया दत्तम्। अयं मदीयं कर्म करिष्यतीति प्रतिलाभेच्छया प्रतिलाभमकुर्व्वाणाय दत्तम। अपात्रायायोग्याय योग्योऽहमित्युक्तिमात्रेण दत्तम्। यज्ञादिकं करिष्यामीत्युक्त्वा धनं गृहीत्वा द्यूतादिकर्म्माणि विनियुञ्जानाय दत्तम्। इत्येवं षोडशप्रकारमपि दत्तं पुनः प्रत्याहरणीयत्वाददत्तमुच्यत इत्यर्थः। पुनः प्रत्याहरणीयत्वमेवंविधानामाह—

कात्यायनः,

कामक्रोधास्वतन्त्रार्त्तक्लीबोन्मत्तप्रमोहितैः।
व्यत्यासपरिहाराय यद्दत्तं तत्पुनर्हरेत्॥
या तु कार्यप्रसिद्ध्यर्थमुत्कोचात्स्यात्प्रतिक्रिया।
तस्मिन्नपि प्रसिद्धेऽर्थे न देया स्यात्कथञ्चन॥
अथ प्रागेव दत्ता स्यात्प्रतिदाप्यस्ततो बलात्।
दण्डं चैकादशगुणमाहुर्गार्गीयमानवाः॥ इति।

उत्कोचस्वरूपमाह स एव—

स्तेयसाहसिकोद्वृत्तपारदारिकशंसनात्।
दर्शनाद्धृतनष्टस्य तथाऽसत्यप्रवर्त्तनात्॥
प्राप्तमेतैस्तु यत्किञ्चिदुत्कोचाख्यं तदुच्यते।
न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव दोषभाक्॥ इति।

एतदुक्तं भवति। यदि मह्यं न प्रयच्छसि तदा त्वत्कृतं स्तेनादि कथयामीति भीतिमुत्पाद्य स्तेनादिकर्त्तृसकाशाद्धनमादत्ते, तथा त्वं यदि मह्यं न प्रयच्छसि तदा पलायमानं त्वां दर्शयामीति भीतिमुत्पाद्य पलायिनः सकाशाद्यत्किञ्चिदादत्ते, तथा तव सत्यमपि स्वामिनिकटेऽसत्यमिति वदिष्यामीत्युक्त्वा यत्किञ्चिदादत्ते तदुत्कोचाख्यम्। तद्राज्ञा दात्रे दाप्यम्, उत्कोचापादकग्राहकौ च दण्डनीयाविति पुनः प्रत्याहरणीयमिति।

बृहस्पतिरप्याह—

प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया।
कार्य्ये चाधर्म्मसंयुक्ते स्वामी तत्पुनराप्नुयात्॥ इति।

आर्त्तदत्तस्यादत्तत्वं धर्म्मकार्य्यव्यतिरिक्तविषयम्।

तथा च कात्यायनः—

स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥ इति ।

मनुरपि सोपाधिकदानादेर्निवर्त्तनीयतामाह—

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यस्य वाप्युपधिं पश्येत्तत्सर्वं विनिवर्त्तयेत् ॥ इति । (८।१६५)

योग=उपाधिः । येनागामिनोपाधिविशेषेणाधिविक्रयादानप्रतिग्रहाः कृतास्तदुपाधिविगमे ते सर्वेऽपि निवर्त्तेरन्नित्यर्थः ।

इति दत्ताप्रदानिकाख्यं व्यवहारपदम् ।

## अथाभ्युपेत्याशुश्रूषाख्यं व्यवहारपदम् ।

तस्य स्वरूपमाह नारदः–( व्य० प० ५ )

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते ॥ इति । (१)

शुश्रूषामाज्ञाकारित्वम् । तत्र पञ्चविधः शुश्रूषकः शिष्यः अन्तेवासी भृतकः अधिकर्म्मकृत् दासश्चेति । तेषां मध्ये दासभिन्नाः कर्म्मकराः । ते च शुभकर्म्मकृतः । दासाः पुनः पञ्चदशविधा गृहजातादिभेदेन । ते त्वशुभकर्म्मकृतः । तदेतत् सर्वं मनसि निधाय स एवाह—

शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः ।
चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः ॥ (२)
शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्म्मकृत् ।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥ (३)
सामान्यमस्वतन्त्रत्वं तेषामाहुर्म्मनीषिणः ।
जातिकर्म्मकृतस्तूक्तो विशेषो वृत्तितस्तथा ॥ (४)
कर्म्मापि द्विविधं ज्ञेयमशुभं शुभमेव च ।
अशुभं दासकर्म्मोक्तं शुभं कर्मकृतां(१) स्मृतम् ॥ (५)
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ॥ (६)
इच्छतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः ।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ॥ इति । (७)

तेषामिति निर्द्धारणे षष्ठी । त्रिपञ्चकाः=पञ्चदश । शिष्यो=वेदविद्यार्थी ।

---

( १ ) कर्मकृताम्=शिष्यान्तेवास्यादिचतुर्णां कर्मकराणामित्यर्थः ।

अन्तेवासी=शिल्पशिक्षार्थी। मूल्येन यः कर्म करोति स भृतकः। अधिकर्मकृत्=कर्मकुर्वतामधिष्ठाता। वृत्तितः=जीवनोपायतः। अशुचिस्थानम्=उच्छिष्टप्रक्षेपणार्थं गर्त्तादिकम्। अवस्करो=गृहमार्जितपांस्वादिनिचयस्थानम्। चतुर्भिरपि गृहद्वारादिभिः शोधनपदं सम्बध्यते। उज्झनं=त्यागः। अन्ततः पर्यन्ते स्वामिनः इच्छतः स्वाम्यनुज्ञया मूत्रपुरीषादिस्थले निर्माजनार्थमङ्गैरुपस्थानं हस्ताद्यर्पणम्। तेषां कर्मकराणां दासानां चास्वतन्त्रत्वलक्षणं धर्मं मनीषिणः साधारणमाहुः। जातिकर्मकृतः कर्मकृतो वृत्तिकृतश्च विशेषः शिष्यान्तेवासिनामेवोक्त इत्यर्थः। तत्र शिष्याणां त्रैवर्णिकान्यतमलक्षणो जातिकृतो विशेषो "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादिशास्त्रासिद्धोऽवगन्तव्यः। कर्मकृतविशेषं त्वाह—

बृहस्पतिः,

विद्या त्रयी समाख्याता ऋग्यजुःसामलक्षणा।
तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्रचोदिताम्॥ इति।

शिष्य इतिशेषः। तथा च नारदः—

आविद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम्।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैवच॥ इति। (व्य०प०५।८)

वृत्तितो विशेषमाह स एव—

समावृत्तश्च गुरवे प्रदाय गुरुदक्षिणाम्।
प्रतीयात् स्वगृहानेषा शिष्यवृत्तिरुदाहृता॥ इति। (व्य०प०५।१४)

वृत्तिरत्र धर्म्मः। मनुरपि—(अ०२)

प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।
प्रदक्षिणं परीत्याग्निं चरेत् भैक्षं यथाविधि॥ (४८)
भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यं तु राजन्यो वैश्यश्च भवदुत्तरम्॥ इति। (४९)

कः पुनरन्तेवासिनां जातिकर्मकृतो विशेष इत्यपेक्षिते—

बृहस्पतिराह,

विज्ञानमुच्यते शिल्पे हेमकुप्यादिसंस्कृतिः।
भृत्यादिकं च तत्प्राप्तुं कुर्यात्कर्म गुरोर्गृहे॥ इति।

कङ्कणकटकादिनिर्माणविषयं नृत्यगीतादिकरणविषयं च आदिशब्दात् स्तम्भकुम्भादिविरचनविषयं च विज्ञानं शिल्पविज्ञानमुच्यते। तत्प्राप्त्यर्थमन्तेवासी गुरोर्गृहे कङ्कणकरणादिकं कुर्यादित्यर्थः। अनेन हेमकारादिजातिकृतः कङ्कणकरणादिकर्मकृतश्च विशेषोऽन्तेवासिनां दर्शितः। तेषां कर्मकृतं वृत्तिकृतं च विशेषं दर्शयति—

नारदः,

स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥ इति । (व्य०प०५।१६)

अन्ते=समीपे । कृत्वा सुनिश्चितम्=एतावन्तं कालं मत्समीपे स्थातव्यमित्याचार्य्योक्तकालपरिमाणं सुनिश्चितं कृत्वेत्यर्थः । आचार्य्यस्यापि कर्त्तव्यमाह—

स एव, (व्य०प०५)

आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।
न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ॥ इति (१७)

अन्यत्=शिल्पकर्मव्यतिरिक्तं कर्म । एवं चान्तेवासिना कङ्कणकरणादिकर्मफलार्पणमात्रेण शुश्रूषा कार्येत्यवगन्तव्यम् । स्वगृहे दत्तभोजनमिति वृत्तिर्दर्शिता । अन्यकर्मकारकमाचार्यं प्रत्याह—

कात्यायनः,

यस्तु न ग्राहयेच्छिल्पं कर्म्माण्यन्यानि कारयेत् ।
प्राप्नुयात् साहसं पूर्वं तस्माच्छिष्यो निवर्त्तते ॥ इति ।

शिष्योऽत्रान्तेवासी । परिभाषितकालात्प्रागेव विद्याप्राप्तावपि परिभाषितकालसमापनं कार्यमित्याह—

नारदः, (व्य०प०५)

शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् ।
तत्र कर्म्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥ इति । (१६)

याज्ञवल्क्योऽपि—

कृतशिल्पोऽपि निवसेत्कृतकालं गुरोर्गृहे ।
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः ॥ इति ।(२।१८४)

दुष्टमन्तेवासिनं प्रत्याह नारदः—( व्य० प० ५ )

शिक्षयन्तमदुष्टं च यस्त्वाचार्यं परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति । इति । (१८)

वासयितव्यः=स्थापनीयः । आचार्यपार्श्वे इतिशेषः । वधोऽत्र ताडनं न प्राणच्छेदः । अपराधस्याल्पत्वात् । शुश्रूषासमाप्त्यनन्तरमन्तेवासिनः कृत्यमाह—

स एव, ( व्य० प० ५ )

गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणम् ।
शक्तितश्चानुमान्यैनमन्तेवासी निवर्त्तते ॥ इति । (२०)

भृतकानां त्वन्तेवासिवन्न जातिकृतो वृत्तिकृतो वा विशेषः। किन्तु भृतिकृतः कर्म्मकृतः कालकृतश्च विशेषः। तदेतदाह—

बृहस्पतिः,

यो भुङ्क्ते परदासीं तु स ज्ञेयो वनिताभृतः।
कर्म्म तत्स्वामिनः कुर्याद्यथान्योऽर्थभृतो नरः॥
बहुधार्थकृतः प्रोक्तस्तथा भागभृतोऽपरः।
हीनमध्योत्तमत्वं च सर्वेषामेव चोदितम्॥
दिनमासार्धषण्मासत्रिमासाब्द भृतस्तथा।
कर्म्म कुर्यात्प्रतिज्ञातं लभते परिभाषितम्॥ इति।

अयमर्थः। यः परदास्युपभोगेन तत्स्वामिनः कर्म करोति स वनिताभृतः। यो धनग्रहणेन कर्म करोति स अर्थभृतः। यः परिकल्पितांशग्रहणेन कर्म्म करोति स भागभृतः। एतावन्तं कालमेतत् कर्म्म करिष्यामीति प्रतिज्ञातं कर्म तावन्तं कालं कुर्य्यात्। एवं च परिकल्पितां भृतिं लभत इति। अर्थभृतस्य बहुविधत्वमथाल्पत्वमहत्त्वाभ्यां ज्ञेयम्। ते चाल्पत्वमहत्त्वे शक्तिभक्त्यनुसारेण द्रष्टव्ये।

भृतकस्त्रिविधो ज्ञेय उत्तमो मध्यमोऽधमः।
शक्तिभक्त्यनुरूपा स्यादेषां कर्माश्रया भृतिः॥ (व्य०प० ५।२२)

इति नारदस्मरणात्। भागभृतकस्य विभागमाह—

स एव,

द्विप्रकारो भागभृतः कृषिगोबीजिनां स्मृतः।
जातशस्यात्तथा क्षीरात् स लभेत न संशयः॥ इति। (न लब्धम्)

हीनमध्योत्तमत्वलक्षणः कर्मकृतो भेदो रक्षणादिकर्मनिबन्धन इत्याह—

स एव,

आयुधी तूत्तमः प्रोक्तो मध्यमस्तु कृषीबलः।
(१)भारवाहोऽधमः प्रोक्तस्तथा च गृहकर्मकृत्॥ इति। (व्य०प०५।२३)

कृषीबलः=कर्षकः। अधिकर्मकृतस्तु स्वरूपमाह—

नारदः,

सर्वेष्वधिकृतो यः स्यात् कुटुम्बस्य तथोपरि।
सोऽधिकर्मकृतो ज्ञेयः स च कौटुम्बिकः स्मृतः॥ इति।
(व्य० प० ५।२४)

सर्वेषु=भृतकेषु अधिकृत=उपरिकृतोऽधिष्ठातृत्वेन कृत इति यावत्। अर्थेष्वधिकृत इति केचित्पठन्ति। अर्थेषु=क्षेत्रहिरण्यादिषु अधिकृतः पा·

(१) अधमो भारवाहः स्यादित्येष त्रिविधो भृतः। इति मु० ना० स्मृ० पाठः।

लकत्वेन नियुक्त इति। कुटुम्बस्योपरीत्यत्राधिकृत इत्यनुषङ्गः। सर्वभूतकेष्वधिष्ठातृत्वेन नियुक्तो यः सोऽधिकर्मकृतो ज्ञेयः। कुटुम्बरक्षणाय व्ययकारित्वेन स्थापितो यः स तु कौटुम्बिक इत्यर्थः। शिष्यान्तेवासिभृतकाधिकर्मकरेभ्यो दासानां भेदं दासशब्दव्युत्पत्तिप्रदर्शनमुखेनाह—

कात्यायनः,

स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः। इति।

यथा भर्त्तुः सम्भोगार्थं स्वशरीरदानाद्दारत्वम्। तथा स्वतन्त्रस्यात्मनः परार्थत्वेन दानाद्दासत्वमिति भृगुराचार्यो मन्यत इतिशेषः। अनेनात्यन्तपारार्थ्यमासाद्य शुश्रूषका दासाः, पारार्थ्यमात्रमासाद्य शुश्रूषकास्तु कर्मकरा इति भेदोऽप्युक्त इत्यवगन्तव्यम्। अत्यन्तपारार्थ्यं तु तेषां भवति यैः स्वपुरुषार्थवृत्तिनिरोधेन परार्थत्वमाश्रितमिति स्मृतिचन्द्रिकायाम्। दासत्वं ब्राह्मणव्यतिरिक्तेष्वेव।

त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित्।

इति तेनैवाभिधानात्। अनेन दासानां जातितो भेद उक्तः। विप्रेतरेष्वपि दास्यमानुलोम्येनैव भवति।

वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः।
राजन्यवैश्यशूद्राणां त्यजतां च स्वतन्त्रताम्॥

इति तेनैवोक्तत्वात्। स्वतन्त्रतां त्यजताम्=अत्यन्तपारार्थ्यं भजतामित्यर्थः। न प्रतिलोमत इति स्वधर्मपरित्यागिभ्योऽन्यत्र द्रष्टव्यम्।

अत एव नारदः,

वर्णानां प्रतिलोम्येन दासत्वं न विधीयते।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता॥ इति।

(व्य० प० ५।३९)

यथोत्तमवर्णं प्रति हीनवर्णा सवर्णा वा भार्या भवति न पुनर्हीनवर्णं प्रत्युत्तमवर्णा तथैव दासोऽपि भवेदित्यर्थः। एतच्च प्रव्रज्यावसितो हीनवर्णस्यापि दासो भवतीत्यभिधानं क्षत्रियवैश्यप्रव्रज्यावसितविषयं न तु ब्राह्मणप्रव्रज्यावसितविषयम्। तस्य निर्वास्यत्वाभिधानेन दासत्वाभावात्। तस्य निर्वास्यत्वं दर्शितम्—

कात्यायनेन,

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविड् भृगुः॥ इति।

कारयेद्राजेतिशेषः। क्षत्रं च विट् च क्षत्रविट्। "सर्वो द्वन्द्वो विभाषैकवद्भवति" इति वचनादेकवद्भावः। निर्वासनं च श्वपदेनाङ्कयित्वा

कर्त्तव्यमित्याहतुः—

दक्षनारदौ,

पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तु राजा शीघ्रं प्रवासयेत् ॥ इति ।

न चैवं सति

राज्ञ एव तु दासः स्यात् प्रव्रज्यावसितो नरः ।
न तस्य प्रतिमोक्षोऽस्ति न विशुद्धिः कथञ्चन ॥ (व्य० प० ५।३५)

इति नारदेन प्रव्रज्यावसितो राज्ञ एव दासो नान्यस्येत्याभिधानात् "स्वधर्मत्यागिनोऽन्यत्र" इति यत्तेनैवोक्तं तन्निर्विषयमिति वाच्यम् । यतोऽवेष्टयधिकरणन्यायेन (पू० मी० अ० २ पा० ३ अधि० २) क्षत्रियमात्रवचनेनापि राजशब्देनात्र लक्षणया प्रजापालस्य ग्रहणात् प्रजापालकत्वं च राजाधिकृते वैश्यादावपि सम्भवाद्यः क्षत्रियः प्रव्रज्यावसितः स हीनवर्णस्यापि प्रजापालस्य दासो भवतीति प्रतिपादनार्थत्वात् ।

केचित्तु प्रव्रज्यावसितस्य ब्राह्मणस्य दासत्वनिर्वासनयोर्विकल्पमाहुः । तन्न । पूर्वोक्तप्रकारेण सम्भवन्त्यां गतौ अष्टदोषदुष्टविकल्पाङ्गीकरणस्यान्याय्यत्वात् । "दास्यं विप्रस्य न क्वचित्" इति निषेधाच्च ।

"दारवद्दासता मता" इति वचनाद्ब्राह्मणस्य सवर्णं प्रति दासत्वं प्राप्तम् । तन्निषेधार्थमाह—

कात्यायनः,

सवर्णोऽपि हि विप्रं तु दासत्वं नैव कारयेत् । इति ।

यदि ब्राह्मणः स्वेच्छया दास्यं भजते तदाऽसावशुभं कर्म न कुर्यादित्याह—

स एव,

शीलाध्ययनसम्पन्नस्तदूनं कर्म कामतः ।
तत्रापि नाशुभं कर्म प्रकुर्वीत द्विजोत्तमः ॥ इति ।

यस्मात्परोपकारः कर्त्तव्य इति विधिः तस्मात्तदूनं कर्म मध्यमोत्तमव्यतिरिक्तमपि कर्म कामतो वेतनमन्तरेण स्वेच्छया परोपकारार्थं कुर्यादित्यर्थः पूर्वार्द्धस्य । तत्रापि तेष्वपि हीनकर्मसु यदशुभं कर्म गृहद्वारशोधनादिकं तन्न कुर्यादित्युत्तरार्द्धार्थः ।

क्षत्रियवैश्यविषये स्वामिनः कर्तव्यमाह—

मनुः,

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्शितौ ।
बिभृयादानृशंस्येन स्वानि कर्माणि कारयन् ॥ इति ॥ (८।४११)

आनृशंस्येन=अक्रौर्येण। अयमर्थः। वृत्तिकर्षितं क्षत्रियं वैश्यं च दासीभूतमक्रौर्येण स्वानि कर्म्माणि कारयन् स्वामी पोषयेदिति। अत्र स्वानीत्यनेन न सम्बन्धिजनककर्माणि कारयेदित्याह। कर्म्माणीति सामान्याभिधानेन जघन्यकर्माण्येव कारयितव्यानीति नियमो नास्तीति सूचयति। वृत्तिकर्षितावित्यनेन गत्यन्तराभावे एव क्षत्रियवैश्ययोर्दासत्वाङ्गीकारः कार्यो न तु गत्यन्तरसम्भव इति दर्शयति। बलाद्दासीकरणे दण्डमाह—

मनुः—

दास्यं तु कारयेन्मोहाद्ब्राह्मणः संस्कृतान् द्विजान्।
अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि षट्॥ इति (८।४१२)

प्रभवतो भावः प्राभवत्यं तस्मात् प्रभुत्वादित्यर्थः। "साधारणादिभ्यः स्वार्थे ष्यञ्वक्तव्य" इति वार्त्तिकात् ष्यञ्(१) द्विजानितिपदेन दण्डः शूद्रविषय इति दर्शयति। अत एवाह—

स एव,

शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव वा।
दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वयम्भुवा॥ (८।४१३)

स च दासः पञ्चदशप्रकारक इत्याह—

नारदः, ( व्य० प० ५ )

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः।
अनाकालभृतश्चैव आहितः स्वामिना च यः॥ (२६)
मोक्षितो महतश्चर्णात् युद्धे प्राप्तः पणे जितः।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः॥ (२७)
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः॥ इति। (२८)

(२)गृहजातः=स्वगृहे दास्यां जातः। क्रीतो मूल्येन स्वाम्यन्तरात् प्राप्तः। लब्धः=तत एव प्रतिग्रहादिना। दायादुपागतः=रिक्थग्राहित्वेन लब्धः। अनाकालभृतः=दुर्भिक्षे यो भरणाद्दासत्वाय रक्षितः। आहितः स्वामिना=ऋणदातर्याधितां नीतः। ऋणमोचनेन दासत्वमभ्युपगतो ऋणदासः। युद्धप्राप्तः=समरे विजित्य गृहीतः। पणे जितः=दासत्वपणके द्यूतादौ जितः। तवाहमित्युपगतः=तवाहं दासोऽस्मीति स्वयमेवोपगतः। प्रव्रज्यावसितः=प्रव्र-

---

( १ ) अत्र "गुणवचनब्राह्मणादिभ्यः कर्मणि च" ( ५।१।१२४ ) इत्यनेन भावे ष्यञ् इत्येव सुवचम्।

( २ ) अत्र पत्नीपरकगृहशब्दस्य दास्यां लक्षणा। अत एव व्याख्यातं दास्यामिति।

ज्यातश्च्युतः । कृतः=एतावन्तं कालं तव दासो भवामीत्यभ्युपगतः । भक्तदासः=सर्वकालं भक्तार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः । भक्षितं यावत्ते मूल्यद्वारेण ददामि तावद्दास इत्यभ्युपगत इति स्मृतिचन्द्रिकायाम् । वडवाहृतः=बडवा गृहदासी तया हृतस्तल्लोभेन तामुद्वाह्य दासत्वेन प्रविष्टः । यः आत्मानं विक्रीणीते असावात्मविक्रेतेत्येवं धर्मशास्त्रे दासभेदाः पञ्चदशप्रकाराः स्मृता इत्यर्थः । अत्राद्यानां गृहजातक्रीतलब्धदायागतानां चतुर्णां दासत्वापगमः स्वामिप्रसादादेव नान्यथेत्याह—

स एव,

तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥ इति । (व्य०प७५।२९)

आत्मविक्रेतुरपि दासत्वं स्वामिप्रसादादन्यतो नापैतीत्याह—

स एव,

विक्रीणीते स्वतन्त्रः सन् य आत्मानं नराधमः ।
स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ॥ इति । (व्य०प०५।३७)

अत्र प्रसादात् स्वामिनोऽन्यत्र इत्यनुषज्यते । ततश्चायमर्थः । आत्मविक्रेतापि गृहजादिवत् स्वामिप्रसादं विना दास्यान्न विमुच्यत इति । एवञ्च गृहदासादयोऽप्यात्मविक्रेतृपञ्चमाः स्वामिप्रसादादनाकालभृता इव दास्यान् मुच्यन्त इति वचोभङ्ग्या दर्शितमिति मन्तव्यम् । स्वामिप्राणरक्षणाद्गृहजातादयोऽकालभृताश्च सर्वेऽपि दास्यान् मुच्यन्त इत्याह—

स एव,

यो वैषां स्वामिनं कश्चिन्मोचयेत् प्राणसंशयात् ।
दासत्वात् स विमुच्येत पुत्रभागं लभेत च ॥ इति । (व्य०प० ५।३०)

एषामिति निर्द्धारणे षष्ठी । पञ्चदशानां मध्ये अन्यतम इत्यर्थः । यत्तु—

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ ।
पैतृको दण्डदासश्च सप्तैते दासयोनयः ॥ ( ७।४१५ )

इति मनुवचने सप्तविधत्वमुक्तम् , तत् तेषां दासत्वप्रतिपादनार्थं न परिसङ्ख्यार्थम् । ध्वजा=गृहदासी । एतच्च स्वामिप्रसादात् प्राणरक्षणात् वा दास्यापगमनं प्रव्रज्यावसितभिन्नदासेषु द्रष्टव्यम् । तस्य दासत्वान्मोकाभावात् । अत एव—

याज्ञवल्क्यः,

प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः । इति । ( २।१८३ )

राज्ञो दासः=पार्थिवस्यैव दासो नान्यस्येत्यर्थः । अनाकालभृतादीनां

प्रव्रज्यावसितात्मविक्रेतृव्यतिरिक्तानां नवानां दास्यापनयनप्रकारमाह—
नारदः, (व्य०प०५)

अनाकालभृतो दास्यान् मुच्यते गोयुगं ददत्।
सम्भक्षितं यद्दुर्भिक्षे न तच्छुध्येत कर्मणा॥ (३१)
आहितोऽपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत्। (३२)
ऋणं तु सोदयं दत्त्वा ऋणी दास्यात् प्रमुच्यते॥ (३३)
तवाहमित्युपगतो युद्धप्राप्तः पणेजितः।
प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा॥ (३४)
कृतकालव्यपगमात् कृतो दासो विमुच्यते॥ (३५)
भक्तस्योत्क्षेपणात् सद्यो भक्तदासः प्रमुच्यते।
निग्रहाद्वडवायास्तु मुच्यते वडवाभृतः॥ इति। (३६)

एतदुक्तं भवति। दुर्भिक्षे पोषणेन कारितो दासो गोयुगप्रदाना-न्मुच्यते। आहितदासस्तु स्वामिनो गृहीत ऋणे प्रत्यर्पिते सति उत्तमर्ण-दास्याद्विमुच्यते। ऋणदासस्तु स्वकृतमृणं येनोत्तमर्णाय यावद्धनं दत्त्वा-पाकृतं तस्मै तावद्धनं सवृद्धिकं दत्त्वा विमुच्यते। तवाहमित्युपगताद-यस्त्रयो दासाः स्वनिर्वर्त्याश्लीलव्यापारनिर्वर्त्तकदासान्तरप्रदानाद्वि-मुच्यन्ते। कृतकालस्तु दासो दास्यावधित्वेन परिभाषितकालस्यातिक्र-मणाद्विमुच्यते। भक्तदासस्तु भक्तस्योत्क्षेपणाद्भक्षितभक्तमूल्यसमर्पणाद्विमु-च्यते। गृहदासीलोभेन दासत्वं प्राप्तस्तत्सम्भोगत्यागाद्विमुच्यत इति।

दासाभासानां त्यागमाह याज्ञवल्क्यः—

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते। इति। (२।१८२)

अपिशब्देन दत्ताहितौ गृह्येते। ततश्चायमर्थः। बलात्कारेण यो दा-सीकृतः यश्च चौरैरपहृत्य दासत्वेन विक्रीत आहितो दत्तो वा स यस्य पार्श्वे दासभावेन तिष्ठति तेन प्रागुक्तमोचनहेतुमन्तरेणैव शीघ्रं मोच-नीय इत्यर्थः। यदि तेन लोभादिवशादसौ न मुक्तस्तदा राज्ञा मोच-यितव्य इत्याह—

नारदः,

चौरापहृतविक्रीता ये च दासीकृता बलात्।
राज्ञा मोचयितव्यास्ते दासत्वं तेषु नेष्यते॥ (व्य०प०५।३८)
चौरापहृताश्च ते विक्रीताश्चेति कर्मधारयः।

यस्त्वेकस्य दास्यं पूर्वमङ्गीकृत्यापरस्यापि दासत्वमङ्गीकरोति असावप-रेणापि विवर्जनीय इति वचोभङ्ग्या—

स एवाह,

तवाहमिति चात्मानं योऽस्वतन्त्रः प्रयच्छति ।
न स तं प्राप्नुयात्कामं पूर्वस्वामी लभेत तम् ॥ इति ॥ (व्य०प०५।४०)

अस्वतन्त्रः=परदासत्वेनास्वतन्त्रः । कामं=नूतनस्वामिदास्यं कामयमानम् इतरदासीभवन्तं तं दासं पूर्वस्वामी गृह्णीयादित्यर्थः । एवं यद्येतद्दासमधिकृत्योक्तं तत्सर्वं दास्यामपि समानन्यायत्वाद्योजनीयम् । दासीस्वामिनमधिकृत्य विशेषमाह—

कात्यायनः,

स्वां दासीं यस्तु सङ्गच्छेत् प्रसूता च भवेत्ततः ।
अवेक्ष्य बीजं कार्य्या स्याददासी सान्वया तु सा ॥ इति ।

स्वकृतगर्भाधानमनुसन्धाय सा दासी सन्तानसहिता दासत्वविमोकविधिना स्वकृतगर्भादेर्दासत्वपरिहारार्थमदासीत्वेन कार्या स्यादित्यर्थः । कः पुनर्दासत्वविमोचको विधिरित्याकाङ्क्षायामाह—

नारदः, (व्य०प०५श्लो०४२।४३)

स्वं दासमिच्छेद्यः कर्त्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा ॥
साक्षताभिः सपुष्पाभिर्मूर्द्धन्यद्भिरवाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥ इति ।

अत्रापि दासशब्देन दास्या अपि ग्रहणम् । लिङ्गस्योद्देश्यविशेषणत्वेन ग्रहाधिकरणन्यायेनाविवक्षितत्वात् । (पू०मी०अ०३पा०१अधि०७) एवमुत्सर्गे सति यद्भवति तदाह—

स एव,

ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नोऽप्यप्रतिग्राह्यो भवत्यभिमतः सताम् ॥ इति ।

स्वाम्यनुग्रहेण दासापाकरणरूपेण । वक्तव्यः=सम्भाषणार्हः । अदास्यपि दासेन परिणीता या सा दासीत्वमेव भजतीत्याह—

कात्यायनः,

दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात् ।
यस्माद्भर्त्ता प्रभुस्तस्याः स्वाम्यधीनः पतिर्यतः ॥ इति ।

दासधनस्यापि तत्स्वामिधनत्वमित्याह—

स एव,

दासस्य तु धनं यत्स्यात् स्वामी तस्य प्रभुः स्मृतः । इति ।

ब्राह्मण्यादिषु दासीकरणे दण्डमाह—

कात्यायनः,

आदद्याद्ब्राह्मणीं यस्तु विक्रीणीत तथैव च ।
राज्ञा तदकृतं कार्य्यं दण्ड्याः स्युः सर्व एव ते ॥
कामात्तु संश्रितां यस्तु कुर्य्याद्दासीं कुलस्त्रियम् ।
सङ्क्रामयेत चान्यत्र दण्ड्यस्तच्चाकृतं भवेत् ॥
बालधात्रीमदासीं च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं वा प्राप्नुयात्पूर्वसाहसम् ॥ इति ।

तत्कार्य्यम् अकृतं निवर्त्तनीयमित्यर्थः । ते राज्ञा दण्ड्याः स्युरित्यन्वयः ।

विष्णुरपि—

यस्तूत्तमवर्णं दास्ये नियोजयति तस्योत्तमसाहसो दण्ड इति ।

क्वचिद्दासीविक्रयणे दण्डमाह—

कात्यायनः,

विक्रोशमानां यो भक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सन् प्राप्नुयात् द्विशतं दमम् ॥ इति ।

द्विशतं पणानामितिशेषः । भक्तामित्यनेन दुष्टाया विक्रयणे दण्डाभाव इति दर्शितम् ।

इति अभ्युपेत्याशुश्रूषाख्यं व्यवहारपदम् ।

## अथ वेतनानपाकर्म्माख्यं व्यवहारपदम् ।

तत्र मनुः,

अतः परं प्रवक्ष्यामि वेतनस्याऽनपक्रियाम् । इति ।

तत्स्वरूपमाह नारदः—

भृतानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ इति (व्य०प०६।१)

वेतनं कर्ममूल्यं तस्यानपाकर्म भृत्यायासमर्पणं समर्पितस्य वा परावर्त्तनम् । तत्र समर्पणे विशेषमाह—

स एव,

भृत्याय वेतनं दद्यात्कर्मस्वामी यथाक्रमम् । (१)
आदौ मध्येऽवसाने तु कर्मणो यद्विनिश्चितम् ॥ इति । (व्य०प०६।२)

तुभ्यमेतावदहं दास्यामीति यद्वेतनं परिमाणतो निश्चितं तत् त्रिधा विभज्य कर्मण आदिमध्यान्तेषु त्रिषु कालेष्वन्यतमकाले दद्यादित्यर्थः । एतच्चैतावद्वेतनं दास्यामीति भाषायाः सत्त्वे । असत्त्वे त्वाह—

(१) यथाकृतमित्यपि पाठः ।

स एव,

भृतावनिश्चितायां तु दशभागमवाप्नुयुः ।
लाभं गोवीर्यशस्यानां वणिग्गोपकृषीबलाः ॥ इति । (व्य०प०६।३)

दशभागं=दशमं भागम् । गोवीर्य्यं=पाल्यमानगवादिभवं पयोदध्यादि । यदि कर्मस्वामी भृत्याय दशमं भागं न प्रयच्छति तदाऽसौ राज्ञा दाप्य इत्याह—

याज्ञवल्क्यः,

दाप्यस्तु दशमं भागं वाणिज्यपशुशस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥ इति ॥ (२।१९४)

यस्तु स्वामी वेतनपरिच्छेदमकृत्वैव भृत्यं कारयति स तस्माद्वाणिज्यपशुसस्यलक्षणात्कर्मणः सकाशाद्यल्लब्धं तस्य दशमं भागं भृत्याय महीक्षिता राज्ञा दापनीय इत्यर्थः ।

यत्तु—

त्रिभागं पञ्चभागं वा गृह्णीयात्सीरवाहकः ।

इति बृहस्पतिवचनम् । तद्बहायाससाध्याकृष्टक्षेत्रविषयम् । व्यवस्थितविकल्पश्चायम् । कथमत्र व्यवस्थेत्याकाङ्क्षायामाह—

स एव,

भक्ताच्छादभृतः सीराद्भागं गृह्णीत पञ्चमम् ।
जातशस्यात्त्रिभागं तु प्रगृह्णीयादथाभृतः ॥ इति ।

अशनाच्छादनाभ्यां भृतः कृषीबलो लाङ्गलविकृष्टक्षेत्रजातशस्यात्पञ्चमं भागं गृह्णीयात् । ताभ्यामभृतस्तु तृतीयं भागमित्यर्थः । अथवा यत्रैतावद्दास्यामीति नास्ति परिभाषा तत्र बृद्धमनूक्तं द्रष्टव्यम् ।

समुद्रयानकुशला देशकालार्थदर्शिनः ।
नियच्छेयुर्भृतिं यां तु सा स्यात्प्रागकृता यदि ॥ इति ।

एतावद्दास्यामीति परिभाषितेऽपि क्वचित्कृतान्न्यूनमपि स्वबुद्धिमात्रपरिकल्पितं देयं क्वचित्ततोऽधिकमपि देयमित्याह—

याज्ञवल्क्यः,

देशं कालं च योऽतीयाल्लाभं कुर्य्याच्च योऽन्यथा ।
तत्र स्यात् स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥ इति । (२।१९५)

यो भृत्यः स्वाम्यनुज्ञां विना स्वातन्त्र्येण वाणिज्यादिकर्मणः फलसाधकत्वापादकं देशं कालं चातिक्रामति लाभं वा बहुतरव्ययेन स्वल्पं करोति तस्मै पूर्वपरिभाषितभृतिमध्ये स्वामी स्वेच्छानुसारेण किञ्चिद्दद्यात् । यस्तु स्वातन्त्र्येण बहुलाभं करोति तस्मै परिभाषितमूल्यादधिकं किञ्चिद्देयं स्वामिना पारितोषिकमित्यर्थः ।

अनेकभृत्यसाध्यकर्मणि वेतनार्पणप्रकारमाह—

स एव,

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् ।
उभयोरप्यसाध्यं चेत्साध्ये कुर्याद्यथाश्रुतम् ॥ इति । (२।१९६)

उभयोरपीत्यपिना बहूनां ग्रहणम् । अस्मिन् गृहादौ कृते भवतामेतावद्दास्यामीति परिभाषिते द्विबहुभिरारब्धं कर्म यदि व्याध्यादिवशान्न समापितं तदा तेषु यो यावत्कर्म करोति तस्मै तत्कर्म्मानुसारेण मध्यस्थपरिकल्पितं वेतनं देयम् । न तु साम्येन दानं न च परिसमाप्त्यभावाददानम् । यदि तैः समापितं तदा यथापरिभाषितं देयं न तु प्रत्येकं कृत्स्नं दातव्यं नापि कर्मानुसारेण परिकल्प्य दातव्यमित्यर्थः ।

यस्तु वेतनं गृहीत्वा समर्थोऽपि न कर्म करोति तं प्रत्याह—

बृहस्पतिः,

गृहीतवेतनः कर्म न करोति यदा भृतः ।
समर्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनम् ॥ इति ।

दमं=शक्त्यनुसारेण राज्ञे दद्यात् । गृहीतं च वेतनं द्वैगुण्येन स्वामिने दद्यादित्यर्थः ।

नारदोऽपि—

भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमावहेत् । इति । (व्य०प०६।५)

याज्ञवल्क्योऽपि—

गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत् । इति । (२।१९३)

अस्मिन्नेव विषये वेतनाग्रहणे त्वाह स एव,—

अगृहीते समं दाप्य इति ।

यावता वेतनेन भृत्यत्वमङ्गीकृतं तावदेव स्वामिने दद्यान्न तु राज्ञे दण्डमित्यर्थः । यद्वाङ्गीकृतां भृतिं दत्त्वा बलात्कारयितव्य इत्याह—

नारदः,

कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात् । इति । (व्य०प०६।५)

प्रतिश्रुत्येति प्रारम्भस्याप्युपलक्षणार्थम् । अत एव—

कात्यायनः,

कर्म्मारम्भं तु यः कृत्वा सिद्धिं नैव तु कारयेत् ।
बलात्कारयितव्योऽसावकुर्वन् दण्डमर्हति ॥ इति ।

कियद्द्रव्यं दण्ड्य इत्यपेक्षायामाहतुर्वृद्धमनुबृहस्पती—

प्रतिश्रुत्य न कुर्याद्यः स कार्यः स्याद्बलादपि ।
स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद्द्विशतं दमम् ॥ इति ।

द्विशतं=कार्षापणद्विशतमित्यर्थः। यत्तु मनुवचनम्—

भृतोऽनार्त्तो न कुर्य्याद्यो दर्पात्कर्म यथोदितम्।
स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनम्॥ इति। (८।२१५)

तदल्पदण्डत्वाद्भागासिद्धिविषयमिति स्मृतिचन्द्रिकायाम्। अर्धन्यूनकर्मकरणविषयमिति मदनरत्ने। किञ्चिन्न्यूनकर्मकरणे त्वाह—

स एव,

यथोक्तमार्त्तः सुस्थो वा यस्तत्कर्म न कारयेत्।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः॥ इति। (८।२१७)

सुस्थो वा कर्म न कारयेदिति वदता सुस्थेऽपि स्वयं कर्त्तृत्वनियमो नास्तीति दर्शयति। आर्त्तो यदि आर्त्युपशमानन्तरं स्वाङ्गीकृतं कर्म करोति तदार्त्तेर्दीर्घकालतया कालक्षेपेऽपि भृत्यदोषाभावाद्वेतनमसौ निर्विवादं लभत इत्याह—

स एव,

आर्त्तस्तु कुर्यात् सुस्थः सन् यथाभाषितमादितः।
सुदीर्घस्यापि कालस्य तल्लभेतैव वेतनम्॥ इति। (८।२१६)

आदितः=आदौ। यथाभाषितं=यथा प्रतिज्ञातं तथा कुर्यादित्यर्थः। सुदीर्घस्यापि कालस्य अत्ययेऽपीति शेषः। यस्तु कालविशेषावधिकं कर्म प्रतिज्ञाय तत्कालापूर्त्तावेव कर्म त्यजति तं प्रत्याह—

नारदः,

कालेऽपूर्णे त्यजन् कर्म भृतेर्नाशमवाप्नुयात्। इति।

अत्र दण्डमप्याह विष्णुः,

भृतकश्चापूर्णे काले त्यजन् सकलमेव मूल्यं जह्यात् राज्ञे च पणशतं दद्यादिति।

मूल्यं=वेतनम्। स्वामिदोषात्त्यागे तु यावति काले कर्म कृतं तत्कालानुसारेण कल्पितं वेतनं लभत इत्याह—

नारदः,

स्वामिदोषादपक्रामन् यावत्कृतमवाप्नुयात्। इति।

स्वामिदोषो=विनापराधं निष्ठुरभाषणादि। अत्र दण्डमप्याह—

विष्णुः,

स्वामी चेद्भृतकमपूर्णे काले जह्यात् तस्य सर्वमेव मूल्यं दद्यात् पणशतं च राजन्यन्यत्र भृतकदोषादिति।

स्वामिद्रव्यस्य भृत्यदोषेण नाशे यत् कर्त्तव्यं तदाह—

स एव,

तद्दोषेण यद्विनश्येत्तत् स्वामिने देयमन्यत्र दैवोपघातादिति।

दैवोपघातो राजकृतस्याप्युपलक्षणम् । स्वामिने देयं मूल्यद्वारेणेतिशेषः । अत्र दासविशेषाद्विशेषमाह—

वृद्धमनुः,

प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम् । इति ।

प्रमादान्नाशितमनवधाननाशितं सममेव दद्यात् । द्रोहनाशितं तीव्रप्रहारादिना द्रोहेण नाशितं द्विर्दाप्यो द्विगुणं दाप्य इत्यर्थः । भृत्यदोषाभावे यदन्यत एव नष्टं तन्न देयमित्याह—

स एव,

न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वा । इति ।

ऊढं=नीतम् । यस्तु वाहको वाह्यं द्रव्यं प्रज्ञाहीनत्वादिना स्वदोषेण नाशयति तं प्रत्याह—

नारदः,

भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः ।
दाप्यो यत्तत्र नष्टं स्यात् देवराजकृतादृते ॥ इति । (व्य०प०६।९)

भाण्डं=वहनीयं द्रव्यं क्रमुकादि । व्यसनं=नाशम् । अत्र भाण्डवाहकयोर्ग्रहणं क्रमेण बलीवर्दकृषीबलयोरुपलक्षणमिति मदनरत्ने । अत्रापि—

प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम् ।

इति वृद्धमनूक्तो विशेषोऽवगन्तव्यः । यस्तु वाहकः स्वदोषेण प्रस्थानविघ्नं करोति स द्विगुणां भृतिं दाप्य इत्याह—

कात्यायनः,

विघ्नं यो वाहको दाप्यः प्रस्थाने द्विगुणां भृतिम् । इति ।

विघ्नं करोतीतिशेषः । वाहकग्रहणं प्रदर्शनार्थं न तु विवक्षितम् । तेनायुधीयादिविघ्नकारिणोऽप्येतदिति मन्तव्यम् । अत एव—

नारदः,

द्विगुणां तु भृतिं दाप्यः प्रस्थाने विघ्नमाचरन् । (व्य०प०६।८)

इति सामान्येनोक्तवान् ।

याज्ञवल्क्योऽपि—

प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् । इति । (२।१९७)

एतच्च भृत्यान्तरसम्पादनकालासम्भवविषयम । अङ्गीकृतकर्माकरणस्यापि यदा सहायान्तरलाभेन प्रस्थानविघ्नानापादकत्वं तदा त्वाह—

स एव,

प्रक्रान्ते सप्तमं भागं चतुर्थं पथि सन्त्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च ॥ इति (२।१९८)

प्रक्रान्ते कर्माणि स्वाङ्गीकृतं कर्म त्यजन् भृत्यो भृतेः सप्तमं भागं

दाप्यः। गमने प्रारब्धे पथि त्यजन् भृतेश्चतुर्थं भागम्। अर्धपथे त्यजन् सर्वां भृतिमित्यर्थः। त्याजकोऽपिचेत्यस्यायमर्थः। गमनारम्भानन्तरं स्वामी यदि त्याजयति तदा पूर्वोक्तक्रमेण भृत्याय सप्तमभागादिकं दापनीय इति। एतच्चाव्याधितादिविषयम्। व्याधितस्यापराधाभावात्। यच्च स्वामिना त्याजने चतुर्थभागदापनमुक्तं तदविक्रीतभाण्डस्वामिविषयम्। विक्रीतभाण्डस्वामिना यत् कर्त्तव्यं तदाह—

वृद्धमनुः,

पथि विक्रीय तद्भाण्डं वणिक् भृत्यं त्यजेद्यदि।
अथ तस्यापि देयं स्याद्भृतेरर्धं लभेत सः॥ इति।

पथि भाण्डस्य चौरादिभिः प्रतिरोधे राजादिभिरपहृते स्वामिनः कर्त्तव्यमाह—

कात्यायनः,

यदा च पथि यद्भाण्डमासिद्धेन ह्रियेत वा।
यावानध्वा गतस्तेन प्राप्नुयात्तावतो धनम्॥ इति।

भाटकस्वीकृतेन यानादिना भाण्डनेतारं प्रत्याह—

नारदः,

अनयन् भाटयित्वा तु भाण्डवान्यानवाहने।
दाप्यो भृतिचतुर्भागं सर्वामर्धपथे त्यजन्॥ इति (व्य०प०६।७)

यानं=शकटादि। वाहनम्=अश्वादि। अयमर्थः। यो यानादिना भाण्डनयनं कर्त्तुं परकीयं यानादिकं भाटयित्वा प्रापणादिकार्योपाधिकं परिक्रयं कृत्वा तं न नयति स यानस्वामिने परिकल्पितस्य भाटकस्य चतुर्थांशं दाप्यः। यस्तु तं नीत्वाऽर्द्धमार्गे त्यजति स सर्वां भृतिं दाप्य इति। यस्तु शकटादिकं भाटयित्वा तमेवोपकारशून्यमादाय देशान्तरं गच्छति भाटकं च न प्रयच्छति तं प्रत्याह—

वृद्धमनुः,

यो भाटयित्वा शकटं नीत्वा वान्यत्र गच्छति।
भाटं न दद्याद्दाप्यः स्यादनूढस्यापि भाटकम्॥ इति।

अनूढस्यापि अकृतोपकारस्यापीत्यर्थः। यस्तु कृते कृत्ये समनन्तरं वाहनादेः समर्पणं न करोति तस्य समर्पणपर्यन्तभाटकदानमाह—

कात्यायनः,

हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः।
नार्पयेत् कृतकृत्यः संस्तावद्दाप्यः स भाटकम्॥
गृहवार्यापणादीनि गृहीत्वा भाटकेन यः।
स्वामिने नार्पयेद्यावत्तावद्दाप्यः सभाटकम्॥ इति।

वारिशब्देन तदाधारभूतं पात्रं लक्ष्यते । नार्पयेत् कृतकृत्यः सन्निस्यनुषङ्गः । परभूमौ गृहनिर्माणाय भाटकदातारं प्रत्याह—

नारदः,

परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ॥ इति । (व्य०प०६।२०)

स्तोमं=भाटकम् । स्तोमाप्रदानेऽप्याह—

स एव, (व्य०प०६।२१)

स्तोमाद्विना वसित्वा तु परभूमावनिश्चितः ।
निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात् कथञ्चन ॥
यान्येव तृणकाष्ठानि त्विष्टका विनिवेशिताः ।
विनिर्गच्छंस्तु तत्सर्वं भूमिस्वामिनि वेदयेत् ॥ इति । (न लब्धम्)

स्वामिने निवेदयेदित्यर्थः । अनिश्चित इति वदता तृणकाष्ठादिग्रहणाग्रहणपरिभाषाविहीनविषयमेतदिति दर्शितम् । परिभाषाविषयं तु यथापरिभाषितं कर्त्तव्यम् । भाटकेन गृहीतानां जलपात्रादीनां भङ्गे नाशे च विशेषमाह—

स एव,

स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत् ।
ग्रहीतुराभवेद्भग्नं नष्टं चान्यत्र संप्लवात् ॥ इति । (व्य०प६।२२)

स्तोमवाहीनि=भाटकगृहीतानि । पूर्णपरिभाषितभाटकालानि तत्स्वामिनं प्रापयेदिति पूर्वार्द्धार्थः । भग्नमेकदेशेन विकृतम् । नष्टम्=कात्स्न्र्येन विकृतम् । संप्लवः=परस्परसङ्घर्षः । तद्भिन्नप्रकारेण यद्भग्नं नष्टं च तद्भाटकग्रहीतुर्भवति । संप्लवेन तु यद्भग्नं नष्टं च तद्भाटकदात्रा पूर्ववत्कृत्वा मूल्यद्वारेण चादेयमित्यर्थः । व्याधितस्य भृत्यस्य स्वामिना पथित्यागे दण्डमाह—

कात्यायनः,

त्यजेत्पथि सहायं यः श्रान्तं रोगार्त्तमेव वा ।
प्राप्नुयात् साहसं पूर्वं ग्रामे त्र्यहमपालयन् ॥ इति ।

स्वाम्यनुज्ञातेन भृत्येनापराधे कृते सोऽपराधः स्वामिनएवेत्याह—

बृहस्पतिः,

प्रभुणा विनियुक्तः सन् भृतको विदधाति यः ।
तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥ इति ।

स्वामी कृतकर्मणे भृतकाय यदि न वेतनं ददाति तदाऽसौ राज्ञा दापनीयः । इत्याह—

स एव,

कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृते ।
राज्ञा दापयितव्यः स्याद्वेतनं चानुरूपतः ॥ इति ।

वेश्यातदुपभोक्तृविषये नारद आह—
शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् ।
(१)अनिच्छन् शुल्कदातापि शुल्कहानिमवाप्नुयात् ॥ इति । (व्य०प०६।१८)

एतद्व्याधितादिविषयम् । व्याधितादिविषये त्वाह—
बृहस्पतिः,

व्याधिता सश्रमा व्यग्रा राजकार्यपरायणा ।
आमन्त्रिता च नागच्छेदवाच्या वडवा स्मृता ॥ इति ।

आमन्त्रिता=आहूता । वडवा=दासी । तद्ग्रहणमत्र पण्यस्त्रीप्रदर्शनार्थम् ।
उपभोक्तारं प्रत्याह—
नारदः, (व्य०प०६)

अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम् । (१८)
अक्रमेण तु सङ्गच्छेद्घातदन्तनखादिभिः ॥ (इदं नास्ति)
अयोनौ यः समाक्रामेद्बहुभिर्वापि वासयेत् ।
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु ॥ इति । (१९)

वेश्यायास्त्वपराधे दण्डादिकं मत्स्यपुराणे दर्शितम्—

गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ।
तां दमं दापयेद्दद्यादितरस्यापि भाटकम् ॥ इति ।

इतरस्य=दत्तशुल्कस्य । तत्रैव विशेषान्तरमुक्तम्—

अन्यमुद्दिश्य वेश्यां यो नयेदन्यस्य कारणात् ।
तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम् ॥
नीत्वा भोगं न यो दद्याद्दाप्यो द्विगुणवेतनम् ।
राज्ञश्च द्विगुणं दण्डं तथा धर्मो न हीयते ॥
बहूनां व्रजतामेकां सर्वे तद्द्विगुणं धनम् ।
तस्यै दद्युः पृथक् राज्ञे दण्डं च द्विगुणं परम् ॥ इति

अत्र निर्णेतॄनाह नारदः—

वेश्याः प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः ।
तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः ॥ इति ।

इति वेतनादानाख्यं व्यवहारपदम् ।

---

(१) इदमर्धं मु० ना० स्मृ० नास्ति ।

## अथ संविद्व्यतिक्रमाख्यं व्यवहारपदम् ।

तस्य स्वरूपं व्यतिरेकमुखेन दर्शयति—

नारदः,

पाखण्डनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ इति (व्य०प०१०।१)

पाखण्डाः=वैदिकमार्गद्वेषिणः क्षपणकादयः। नैगमाः=सार्थिका वणिज इति मदनरत्ने । नैगमाः=वेदप्रामाण्याभ्युपगन्तारः पाशुपतादय इति मिताक्षरायाम् । आदिशब्देन विद्वद्ब्राह्मणसमूहादीनां ग्रहणम् । समयस्यानपाकर्म अव्यतिक्रमः समयपरिपालनमिति यावत् । तद्व्यतिक्रम्यमाणं विवादपदं भवतीत्यर्थः । तदुपयोग्यर्थमाह—

बृहस्पतिः,

वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत् तत्र तेषां वृत्तिं प्रकल्पयेत् ॥ इति ।

याज्ञवल्क्योऽपि—(२।१८५)

राजा कृत्वा पुरे स्थानं ब्राह्मण्यं न्यस्य तत्र तु ।
त्रैविद्यं वृत्तिमद् ब्रूयात् स्वधर्मः पाल्यतामिति ॥

ब्राह्मणानां समूहो ब्राह्मण्यम् । "ब्राह्मणमाणववाडवाद्यत्" इति (अ०४ पा०२सू०४२)सूत्रेण यत् । विद्या वेदाः तिसृणां विद्यानां समाहारस्त्रिविद्यम् । त्रिविद्यमधीते इति त्रैविद्यम्। "तदधीते तद्वेद" इत्यनेन सूत्रेण (अ०४पा०२ सू०५९) अण् प्रत्ययः । ननु "द्विगोर्लुगनपत्ये" (अ०४पा०१सू०८८) इति सूत्रेणाणो लुक्कस्मान्न भवति । द्विगुनिमित्तत्वाभावादिति गृहाण । तेषां वृत्तिं प्रकल्पयेदित्यस्यार्थो बृहस्पतिनैवं विवृतः—

अनाच्छेद्यकरास्तेभ्यः प्रदद्याद्गृहभूमिकाः ।
युक्ता भव्याश्च नृपतिर्लेखयित्वा स्वशासनम् ॥ इति ।

अनाच्छेद्यकराः=अग्राह्यकराः । एतदुक्तं भवति । आगामिनृपतिभिरग्राह्यकराः स्वेन विसृष्टकराश्च गृहभूमीः प्रदद्यादिति । एवं नियुक्तैर्यत्कर्त्तव्यं तदाह—

याज्ञवल्क्यः,

निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥ इति (२।१८६)

निजधर्माविरोधेन=श्रौतस्मार्त्तकर्माविरोधेन । सामयिकः=समयान्निष्पन्नो यो धर्मो गोप्रचारोदकरक्षणदेवगृहपालनादिरूपः सोऽपि यत्नेन पालनीयः । यश्च राज्ञा कृतो निजधर्माविरोधेनैव यः सामयिको धर्मो याव

त्पथिकं भोजनं देयमस्मद्रातिमण्डले तुरगादयो न प्रस्थापनीया इत्येवंरूपः सोऽपि यत्नेन रक्षणीय इत्यर्थः ।

बृहस्पतिरपि—

नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं तथा ।
पौराणां कर्म कुर्य्युस्ते सन्दिग्धे निर्णयं तथा ॥ इति ।

पौराणां=पुरवासिनामित्यर्थः । एवं राजनियुक्तसमुदायविशेषस्य कार्य्यविशेष उक्तः । सर्वसमुदायनां च कार्य्यमाह—

स एव,

ग्रामश्रेणिगणानां च सङ्केतः समयक्रिया ।
बाधाकाले तु सा कार्य्या धर्मकार्य्ये तथैव च ॥
चाटचौरभये बाधाः सर्वसाधारणाः स्मृताः ।
तत्रोपशमनं कार्य्यं सर्वैर्नैकेन केनचित् ॥ इति ।

गणानां चेत्यत्र चशब्दः पाखण्डनैगमादीनां समुच्चयार्थः । ततश्च गणपाखण्डनैगमादीनां समयकरणमन्तरेण यद्युपद्रवो दुष्परिहरः धर्मकार्य्यं च दुःसाध्यं तदा पारिभाषिकी समयक्रिया सर्वैर्मिलितैः कार्य्या । चाटो वृकः । चाटचौरादिभ्यो भये प्राप्ते तदुपशमनं सर्वैः कार्यमित्यर्थः ।

धर्मकार्यमपि सम्भूय कार्यमित्युक्तं तेनैव—

सभाप्रपादेवगृहतडाकारामसंस्कृतिः ।
तथानाथदरिद्राणां संस्कारो यजनक्रिया ॥
कुलायननिरोधश्च कार्यमस्माभिरंशतः ।
यत्रैतल्लिखितं पत्रे धर्म्या सा समयक्रिया ॥
पालनीया समस्तैस्तैर्यः समर्थो विसंवदेत् ।
सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरात् ॥ इति ।

सभा=मण्डपः । प्रपा=पानीयशालिका । आरामः=उपवनम् । संस्कृतिः=जीर्णोद्धारः । संस्कार=उपनयनादिकः प्रेतदहनादिकश्च । यजनक्रिया=सोमयागादिकर्तृभ्यो दानम् । कुलायननिरोधः=कुलायनस्य दुर्भिक्षाद्यपगमपर्यन्तस्य धारणम् । कुल्यायननिरोधश्चेति कल्पतरौ पाठः । कुल्यायनानिरोधः=कुल्यायाः प्रवर्त्तनप्रतिबन्धौ । एवंकृता समयक्रिया न केवलं समुदायिभिरेव पालनीया अपि तु राज्ञापीत्याह—

नारदः,

पाखण्डनैगमश्रेणिपूगव्रातगणादिषु ।
संरक्षेत्समयं राजा दुर्गे जनपदे तथा ॥ इति । (व्य०प०१०।२)

पाखण्डा=वेदोक्तलिङ्गधारणव्यतिरिक्ताः सर्वे लिङ्गिनः । तेषु विहित-

भिक्षाचरणाद्याः सन्ति। नैगमाः=सार्थिका वणिक्प्रभृतयः। तेषु सकञ्चुकसन्देशहरपुरुषतिरस्कारिणो दण्ड्या इत्येवमादयो बहवः समया विद्यन्ते। अथ वा नैगमाः=आप्तप्रणेतृत्वेन ये वेदं प्रमाणमिच्छन्ति पाशुपतादयः। श्रेणयः=एकशिल्पोपजीविनः। तास्विदमनयैव श्रेण्या विक्रेयमित्येवमादिकाः समया वरीवर्त्तन्ते। पूगाः=हस्त्यश्वारोहादयः। व्रातगणशब्दयोरर्थमाह—

कात्यायनः,

नानायुधधरा व्राताः समवेतास्तु कीर्त्तिताः।
कुलानां हि समूहस्तु गणः सम्परिकीर्त्तितः॥ इति।

पूगे व्राते चान्यमुत्सृज्य समरे न गन्तव्यमित्येवमादयः समयो वर्त्तन्ते। गणे तु पञ्चमे दिने पञ्चमे वर्षे वा कर्णवेधः कर्त्तव्य इत्येवमादिः समयोऽस्ति। गणादीत्यत्रादिशब्देन ब्रह्मपुरीनिविष्टस्य महाजनादेः परिग्रहः। तत्र गुरुदक्षिणाद्यर्थमागतो माननीय इत्यादिः समयोऽस्ति। दुर्गे तु धान्यादिकं गृहीत्वा अन्यत्र न तद्विक्रेयमित्यादिरस्ति समयः। जनपदे तु कश्चिद्विक्रेतृसकाशात्कश्चित्क्रेतृसकाशाच्छुल्कग्रहणमित्याद्यनेकविधः समयो वरीवर्त्तते। तदेतत्समयजातं यथा न भ्रश्यति तथा राजा कुर्य्यादित्यर्थः। समुदायादिपुरुषविषये विशेषमाह—

बृहस्पतिः,

कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम्।
विश्वासं प्रथमं कृत्वा कुर्य्युः कार्याण्यनन्तरम्॥ इति।

कोशेन=देवतास्नानोदकपानेन। लेख्यक्रियया=समयपत्रेण। मध्यस्थैः=प्रतिभूभिः। कार्याणि=समूहकार्याणि। एतदुक्तं भवति। समुदायिभिः परस्परं समयातिक्रमाभावाय कोशादिभिर्विश्वासमुत्पाद्य सामयिककार्याणि कर्त्तव्यानीति।

कात्यायनोऽपि—

समूहानां तु यो धर्मस्तेन धर्मेण ते सदा।
प्रकुर्युः सर्वकर्माणि स्वधर्मेषु व्यवस्थिताः॥ इति।

सामयिकधर्मनिजधर्मानतिक्रमेण समूहकार्याणि समुदायिनः कुर्युरित्यर्थः।

याज्ञवल्क्योऽपि—

निजधर्माविरोधेन यस्तु सामयिको भवेत्।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः॥ इति। (२।१८६)

निजधर्माविरोधेनेत्यनेन निजधर्मविरोधी सामयिको धर्मो यथा

सन्ध्यावन्दनवेलायां सर्वैरेव स्वव्यापारपरिहारेण राजभवनं प्रत्यागन्तव्यं यो नायास्यति तस्य प्रथमसाहसो दण्ड इति नासौ रक्ष्य इत्यर्थादुक्तम् ।

कात्यायनोऽपि—

अविरोधेन धर्म्मस्य निर्जितं राजशासनम् ।
तस्यैवाचरणं पूर्वं कर्त्तव्यं तु नृपाज्ञया ॥ इति ।

धर्म्मस्य=श्रौतस्मार्त्तादिधर्मस्य । निर्जितं=कृतमित्यर्थः । राज्ञा प्रवर्त्तितान् धर्म्मान् यो नानुपालयति तस्य दण्ड्यतामाह—

स एव,

राज्ञा प्रवर्त्तितान् धर्म्मान्यो नरो नानुपालयेत् ।
गर्ह्यः स पापो दण्ड्यश्च लोपयन् राजशासनम् ॥ इति ।

विचित्रबुद्धिभिः समुदायिभिरनेकैरैकमत्येन कार्य्यकरणासम्भवात् द्वित्राः पञ्च वा कार्यचिन्तकाः कर्त्तव्या इत्याह—

बृहस्पतिः,

द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः ।
कर्त्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः ॥ इति ।

कार्य्यचिन्तकेषु हेयोपादेयान् दर्शयति—

स एव,

विद्वेषिणो व्यसनिनः शालीनालसभीरवः ।
लुब्धातिवृद्धबालाश्च न कार्य्याः कार्य्यचिन्तकाः ॥
शुचयो वेदधर्मज्ञाः दक्षा दान्ताः कुलोद्भवाः ।
सर्वकार्य्यप्रवीणाश्च कर्त्तव्याश्च महत्तमाः ॥ इति ।

शालीनाः=अधृष्टाः । कार्यचिन्तकाः=समुदायकार्यसाधकबाधकविचारकाः । कार्यचिन्तकानामपि समूहहितवादिनां वचनं सर्वैः समूहिभिः कार्य्यमित्याह—

याज्ञवल्क्यः,

कर्त्तव्यं वचनं सर्वैः समूहहितवादिनाम् । इति ।

समूहिनः प्रतिकूलस्य प्रथमसाहसं दण्ड इत्याह—

स एव,

यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् ॥ इति । (२।१८८)

प्रथमं=पूर्वसाहसम् ।

कात्यायनोऽपि,

युक्तियुक्तं वचो हन्याद्वक्तुर्योऽनवकाशतः ।

अयुक्तं चैव यो ब्रूयात्स दाप्यः पूर्वसाहसम्॥ इति।

बृहस्पतिरपि—

यस्तु साधारणं हिंस्यात् क्षिपेत्त्रैविद्यमेव वा।
सन्धिक्रियां विहन्याच्च स निर्वास्यस्ततः पुरात्॥ इति।

साधारणम्=समुदायग्राह्यं दण्डादिद्रव्यम्। हिंस्यात्=दण्ड्यादेः साहाय्यकरणान्नाशयेत्। क्षिपेत्=तिरस्कुर्यादित्यर्थः। समूहिनामप्यधर्म्मेण द्वेषादिना कार्य्यकरणे दण्डमाह—

स एव,

बाधां कुर्य्युर्यदैकस्य सम्भूता द्वेषसंयुताः।
राज्ञा तु विनिवार्य्यास्ते शास्याश्चैवानुबन्धतः॥ इति।

अनुबन्धतः=निग्रहतारतम्यानुसारेण। मुख्यानामपराधविशेषे दण्डविशेषमाह—

याज्ञवल्क्यः,

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्॥ इति। (२।१८७)

मुख्यदण्डने समूहस्यैवाधिकारः। अत एव—

कात्यायनः,

साहसी भेदकारी च गणद्रव्यविनाशकः।
उच्छेद्याः सर्व एवैते विख्याप्यैव नृपे भृगुः॥ इति।

नृपे विख्याप्य गणेनोच्छेद्या इत्यर्थः। समूहाशक्तौ तस्य दण्डो राज्ञा विधेयः। अत एव—

मनुः, (८।२१९।२२०।२२१)

यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम्।
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत्॥
निगृह्य दापयेदेनं समयव्यभिचारिणम्।
चतुःसुवर्णान् षण्निष्कांश्छतमानं च राजतम्॥
एवं धर्मविधिं कुर्याद्धार्मिकः पृथिवीपतिः।
ग्रामजातिसमूहेषु समयव्यभिचारिणाम्॥ इति।

एतेषां प्रवासनचतुःसुवर्णषण्निष्कशतमानरूपाणां चतुर्णां दण्डानां जातिविद्यागुणाद्यपेक्षया व्यवस्था कल्पनीया। यत्तु कश्चिदेतेषां चतुर्णां दण्डानां क्रमेण ब्राह्मणादिचतुर्वर्णविषयत्वमित्याह। तदज्ञानविलसितम्। एतादृशव्यवस्थायां प्रमाणाभावात्। ब्राह्मणस्य प्रवासनं क्षत्रियादीनां चतुःसुवर्णादिदण्ड इत्यस्यानुचितत्वाच्च।

मर्मोद्घाटकादीनां पुरान्निर्वासनमेव दण्ड इत्याह—

बृहस्पतिः,

अरुन्तुदः सूचकश्च भेदकृत्साहसी तथा ।
श्रेणिपूगनृपद्विष्टः क्षिप्रं निर्वास्यते ततः ॥ इति ।

अरुन्तुदः=मर्मोद्घाटकः। सूचकः=पिशुनः। "पिशुनौ खलसूचकौ" इत्यभिधानात्। भेदकृत्=समुदायिषु वैमत्यकृत्। समूहस्थानान्निर्वास्यते समूहेनेतिशेषः। न च समूहस्य दण्डकरणेऽनधिकारात्समूहेनेतिशेषकरणमयुक्तमिति वक्तव्यम्। पूर्वोक्तकात्यायनवचनेन समूहस्यैव मुख्यदण्डनेऽधिकारस्य प्रतिपादितत्वात्।

पूगश्रेणिगणाध्यक्षाः पुरदुर्गनिवासिनः ।
वाग्धिग्दण्डपरित्यागं प्रकुर्युः पापकारिणाम् ॥
तैः कृतं यत्स्वधर्म्मेण निग्रहानुग्रहं नृणाम् ।
तद्राज्ञाप्यनुमन्तव्यं निसृष्टार्था हि ते स्मृताः ॥

इति बृहस्पतिनाप्यभिधानाच्च। वाग्दण्डः=पापिष्ठोऽसीत्यादिभाषणम्। धिग्दण्डो=धिक्त्वामित्यभिभाषणम्। परित्यागोऽसह्यहार्य्यत्वकरणं निर्वासनं वा। उभयत्रापि लोके परित्यागशब्दप्रयोगदर्शनात्। एतच्चार्थदण्डादेरुपलक्षणार्थम्। निग्रहानुग्रहमित्येतेन पुनः साम्येनाभिधानात्। निसृष्टार्था=अनुज्ञातकार्य्याः।

नारदोऽपि—

पृथग्गणांस्तु ये भिन्द्युस्ते विनेया विशेषतः ।
आवहेयुर्भयं घोरं व्याधिवत्ते ह्युपेक्षिताः ॥ इति ।

गणान्=श्रेण्यादिरूपान् समुदायान्।

बृहस्पतिरपि—

तत्र भेदमुपेक्षां वा यः कश्चित्कुरुते नरः ।
चतुःसुवर्णषण्निष्कास्तस्य दण्डो विधीयते ॥ इति ।

सुवर्णचतुष्टयषण्निष्कयोः शक्त्यादितारतम्यानुसारेण गुणवदगुणवद्विषयत्वेन वा व्यवस्था मन्तव्या।

पाखण्ड्यादिसर्वसमूहेषु राज्ञा यथा वर्त्तितव्यं तदाह—

नारदः, (व्य०प०१०)

यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः ।
यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा ॥ इति । (३)

धर्मश्चैत्यवन्दनादिः। कर्म=प्रातःपर्युषितभिक्षाटनादि। उपस्थानविधिः=समूहकार्यार्थं मृदङ्गादिध्वनिमाकर्ण्य मण्डपादौ मेलनम्। वृत्त्युपादानं=जी-

वनाय तापसवेषपरिग्रहः । तेषां पाखण्डिनामित्यर्थः । अन्यदपि राज-कृत्यमाह—

स एव,

प्रतिकूलं च यद्राज्ञः प्रकृत्यवमतं च यत् ।
बाधकं च यदर्थानां तत्तेभ्यो विनिवर्त्तयेत् ॥ इति । (व्य०प०१०।४)

यद्राज्ञः प्रतिकूलं यथा,

यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम् ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशश्च नश्यति ॥ इति ।

एवञ्च सार्थिकादिशूद्रकर्तृकं चोरादीनां विवादे धर्म्मविवेचनं यद्राज्ञ इत्यस्योदाहरणं मन्तव्यम् । प्रकृत्या=स्वभावत एवावमतम्=अवज्ञातार्थं पाखण्ड्यादिषु ताम्बूलभक्षणादिकम् । यच्चार्थानां बाधकं धननाशकरादिकं रसवादादिकं तत्तेभ्यो विनिवर्त्तयेत् यथा ते न कुर्वन्ति तथा कुर्यादित्यर्थः । अन्यदपि निवर्त्यमाह—

स एव, (व्य०प०१०)

दोषवत्करणं यत्स्यादनाम्नायं प्रकल्पितम् ।
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत् ॥ (७)

यत् लोभादिदोषवत्करणं श्रुतिस्मृतिविरुद्धं विधवादौ वेश्यात्वादिकं पाषण्डादिभिः प्रकल्पितम् तद्बहुकालप्रवृत्तमपि राज्ञा निवर्त्तनीयमित्यर्थः ।

त्रैविद्यानां प्रतिपादितं धर्मं श्रेण्यादिष्वतिदिशति —

याज्ञवल्क्यः,

श्रेणिनैगमपाखण्डिगणानामप्ययं विधिः ।
भेदं चैषां नृपो रक्षेत्पूर्ववृत्तं च पालयेत् ॥ इति । (२।१९२)

समूहकार्यार्थमागताय यद्राज्ञा समूहपूजार्थं दत्तं तद्यदि समूहायासौ न ददाति तदा एतद्दत्तमेकादशगुणं दाप्य इत्याह—

स एव, (२।१८९।१९०)

समूहकार्य आयातान् कृतकार्यान् विसर्जयेत् ।
स दानमानसत्कारैः पूजयित्वा महीपतिः ॥
समूहकार्य्ये प्रहितो यल्लभेत तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत् स्वयम् ॥ इति ।

यल्लभेत समूहसम्माननार्थमितिशेषः । यतो राजदत्तं सर्वसाधारणमतो यथांशतो विभागं कृत्वा ग्राह्यं निःस्वादिभ्यो वा दातव्यमित्याह—

बृहस्पतिः,

ततो लभ्येत यत्किञ्चित् सर्वेषामेव तत्समम् ।
षाण्मासिकं मासिकं वा विभक्तव्यं यथांशतः ॥

देयं वा निःस्ववृद्धान्धस्त्रीबालातुररोगिषु।
सान्तानिकादिषु तथा धर्म्म एष सनातनः॥ इति।

(१)एकस्य पुरुषस्य षण्मासनिर्वाहाय पर्य्याप्तं कुटुम्बस्य वैकस्य मासनिर्वाहाय पर्य्याप्तं लब्धं यथांशतः स्वस्वांशानुरूपेण विभजनीयम् निःस्वादिभ्यो वा देयमिति तात्पर्य्यार्थः। राजप्रसादलब्धधनमपि सर्वेषां सममित्याह—

स एव,

यत्तैः प्राप्तं रक्षितं वा गणार्थे वा ऋणं कृतम्।
राजप्रसादलब्धं च सर्वेषामेव तत्समम्॥ इति।

अयमर्थः। तैः समूहकार्य्यार्थं प्रहितैर्यत्सीमाविवादावधिकं क्षेत्रारामादिकं धर्म्माधिकरणे न्यायतः प्राप्तम्। यच्च परैरपह्रियमाणं रक्षितं, यच्च समूहप्रयोजनार्थमुपात्तमृणम्, यच्च राजप्रसादलब्धं तत् सर्वं सर्वेषां समुदायिनाम्। गणकृतमृणं सर्वेषां सममित्यस्य क्वचिदपवादमाह—

कात्यायनः;

गणमुद्दिश्य यत्किञ्चित्कृत्वर्णं भक्षितं भवेत्।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत्॥ इति।

तैः=मुख्यैः। ये तु समुदायानुग्रहार्थं तदन्तर्भावं प्राप्ताः ये च समुदायक्षोभादिना ततो बहिर्भूतास्तान् प्रत्याह—

स एव,

गणानां श्रेणिवर्गाणां गताः स्युर्येऽपि मध्यताम्।
प्राक्कृतस्य धनर्णस्य समांशाः सर्व एव ते॥
तथैव भोज्यवैभाज्यदानधर्मक्रियासु च।
समूहस्थोऽशभागी स्यात् प्रगतस्त्वंशभाङ् न तु॥ इति।

इति संविद्व्यतिक्रमाख्यं व्यवहारपदम्। ८

## अथ क्रीतानुशयाख्यं व्यवहारपदम्। ९

तत्स्वरूपमाह नारदः—

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते।
क्रीतानुशय इत्येतद्विवादपदमुच्यते॥ इति। (व्य०प० ९।१)

न बहु मन्यते=सम्यगसम्यगिति पूर्वं विचार्य न गृहीतमित्यर्थः। क्रीतं परीक्षणीयमित्याह—

(१) अत्र षण्मासैकमासनिर्वाहपर्याप्ते धने अंशानुरूपेण विभज्य सर्वैर्ग्रहीतव्ये ततोऽल्पं धनं तु निःस्वादिभ्यो देयमिति व्यवस्था इत्यपरार्कः।

बृहस्पतिः,

परीक्षेत स्वयं क्रीतमन्येषां च प्रदर्शयेत्।
परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत्॥ इति।

अन्येषां=पण्यगुणदोषविदामितिशेषः।

नारदोऽपि—

क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः॥ इति। (व्य०प०९।४)

चर्मादीनां परीक्षा सद्यः कार्या। तथा च—

व्यासः,

चर्मकाष्ठेष्टकासूत्रधान्यासवरसस्य च।
वसुकुप्यहिरण्यानां सद्य एव परीक्षणम्॥ इति।

अत्र वसुशब्देन रूप्यं गृह्यते। कुप्यं=हेमरूप्यव्यतिरिक्तं त्रपुसीसादिकम्। तथा च हेमरूप्ये प्रस्तुत्यामरसिंहः—"ताभ्यां यदन्यत्तत्कुप्यम्" इति।

क्रीतपण्यद्रव्यविशेषेण परीक्षणकालावधिमाह—

नारदः, (व्य०प०९)

त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु।
मुक्तावज्रप्रबालानां सप्ताहं स्यात्परीक्षणम्॥ (५)
द्विपदामर्धमासं तु पुंसां तद्द्विगुणं स्त्रियाः।
दशाहं सर्वबीजानामेकाहो लोहवाससाम्॥ (६)
अतोऽर्वाक्पण्यदोषस्तु यदि सञ्जायते क्वचित्।
विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयात्॥ इति। (न लब्धम्)

त्र्यहात्=क्रयदिनादारभ्येतिशेषः। पञ्चाहादित्यादावप्येवमेव शेषोऽवगन्तव्यः। "विक्रेतुः प्रतिदेयं" इत्यादि विधिदर्शनात् त्र्यहाद्दोह्यमित्यादिपरीक्षणं प्रीतिदोह्यादिद्रव्यविषयमिति गम्यत इति स्मृतिचन्द्रिकायाम्। दोह्यं=महिष्यादिकम्। वाह्यं=बलीवर्दादिकम्। मुक्ताग्रहणं रत्नोपलक्षणम्। द्विपदां पुंसां दासानामित्यर्थः। तद्द्विगुणं मासमित्यर्थः। स्त्रियाः=दास्या इत्यर्थः। पूर्वोदाहृत 'चर्मकाष्ठे' त्यादि व्यासवचनेन भक्षणाद्यर्थं गृहीतानां धान्यादीनां सद्यःपरीक्षणाभिधानात् सर्वबीजानामित्यत्र बीजशब्दो वापाद्यर्थगृहीतधान्यपरः। अन्यथा सद्यःपरीक्ष्यत्वप्रतिपादकव्यासवचनविरोधः स्यात्। अतोऽर्वाक् त्र्यहादेरभ्यन्तर इत्यर्थः।

कात्यायनोऽपि—

भूमेर्दशाहोऽनुशयः क्रेतुर्विक्रेतुरेव च। इति।

भूमेर्गृहक्षेत्रादिरूपायाः। अनुशयः=परावर्त्तनयोग्यः कालः परीक्षाकाल इतियावत्। यथोक्तपरीक्षाकालातिक्रमे दोषदर्शने न प्रतिदानमित्याह—

स एव,

अविज्ञातं तु यत् क्रीतं दुष्टं पश्चाद्विभावितम् ।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा नतु ॥ इति ।

अविज्ञातं=परीक्षाशैथिल्यात्तत्त्वतोऽपरिज्ञातम् । दुष्टं विभावितं=दोषवत्तया ज्ञातमित्यर्थः । काले=परीक्षाकाले । अन्यथा=तत्कालात्यये दुष्टतया परिभावितमपि तत्स्वामिने न देयम् ।

"अविज्ञातं तु यत् क्रीतम्" इत्यनेन यत् क्रयात् प्राक् अपरीक्ष्य क्रीतं तत् परीक्षासमये दोषदर्शने परावर्त्तनीयम् । यत्तु परीक्ष्य गृहीतं तन्न परावर्त्तनीयमिति दर्शितमर्थं—

नारद आह, (व्य०प०९।)

क्रीत्वा नानुशयं कुर्य्याद्वणिक् पण्यविचक्षणः ।
क्षयं वृद्धिं च जानीयात् पण्यानामागमं तथा ॥ (१६)
क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः ।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनः ॥ इति (४)

अनुशयं=पश्चात्तापम् । पण्यानाम्=अश्वादीनाम् अस्मिन्देशे मूल्यहानिरस्मिन्देशे तदाधिक्यमिति क्षयवृद्धी एतद्देशसम्भवमित्यागमं च क्रयात् प्रागेव जानीयादित्यर्थः ।

दोषदर्शनमन्तरेण परीक्षाकाल एव प्रत्यर्पणे विशेषमाह—

कात्यायनः,

क्रीत्वा चानुशयात्पण्यं त्यजेद्दोषादृते नरः ।
अजुष्टमेव काले तु स मूल्याद्दशमं वहेत् ॥
क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागते ।
षड्भागं तस्य मूल्यस्य दत्त्वा क्रीतं त्यजेन्नरः ॥ इति ।

अजुष्टमनभियुक्तम् । काले=परीक्षाकाले । अत्र मूल्यदशमभागदानं यदुपभुज्यमानमपि न नश्यति भूम्यादिकं तद्विषयम्, उपभोगविनश्वरबीजादिविषयं षड्भागदानमिति व्यवस्था ज्ञेया ।

ननु विजानताऽप्यनुशयो न कार्यः "क्रीत्वा नानुशयं कुर्य्यात्" इतिनिषेधसद्भावादिति चेत्, सत्यम् । अपवादस्य सत्त्वात् । स चापवादो दर्शितो—

नारदेन, (व्य०प०९।२)

क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥ इति ।

मन्यत इत्यनेन वस्तुतो दोषाभाव उक्तः । द्वितीयादिदिवसे प्रत्यर्पणे विशेषमाह—

स एव, (व्य०प०९।३)

द्वितीयेऽह्नि ददत् क्रेता मूल्यात्त्रिंशांशमावहेत्।
द्विगुणं तत्तृतीये ऽह्नि परतः क्रेतुरेव तत् ॥ इति ।

परतः=तृतीयाह्नः परतः । क्रेतुरेव तत् क्रीत्वा अनुशयादिकं जानन्नपि न कुर्य्यादित्यर्थः ।

यत्तु मनुवचनम्—

क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत्।
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वा ॥ इति । (८।२२२)
तदुपभोगानश्वरक्षेत्रगृहयानशयनादिविषयम्।

यत्तूपभोगेन सदोषमपि विकारप्रापितं तत् परीक्षाकालमध्येऽपि न प्रतिदेयमित्याह—

नारदः, (व्य०प०९।७)

परिभुक्तं तु यद्वासः कृष्णरूपं मलीमसम्।
सदोषमपि तत् क्रीतं विक्रेतुर्न भवेत्पुनः ॥ इति ।

वासोग्रहणमुपलक्षणमिति मदनरत्ने । वासोविषयतैवास्येति माधवीये ।

पण्यानां देशकालवशादुपचयापचयौ ज्ञातव्यावित्याह—

नारदः, (व्य०प०९।१६)

क्षयं वृद्धिं च जानीयात्पण्यानामागमं तथा । इति ।

अश्वादिपण्यानामस्मिन् कालेऽस्मिन्देशे च क्षयं वृद्धिं वा जानीयात् तथा आगमं कुलीनत्वादिज्ञानार्थम् उत्पादकजन्मभूम्यादिकं च जानीयादित्यर्थः ।

क्रयकाले मूल्यक्षयवृद्धिदोषदर्शनमन्तरेण क्रीतविक्रीतयोः प्रत्यर्पणे पुनर्ग्रहणे दण्डमाह—

याज्ञवल्क्यः,

वृद्धिं क्षयं वा वणिजां पण्यानामविजानता ।
क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक् ॥ इति । (२।२५८)

वृद्धिं=मूल्यवृद्धिम् । अविजानता क्रेत्रा । एवं मूल्यक्षयमविजानता विक्रेत्रेत्यर्थः । परीक्षाकालातिक्रमेण प्रत्यर्पणे दण्डमाह—

मनुः,

परेण तु दशाहस्य न दद्यान्नापि दापयेत्।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥ इति । (८।२२३)

दशाहग्रहणं परीक्षाकालस्य पूर्वोक्तस्योपलक्षणम् । सर्वमेतदपरिभाषणे । परिभाषणे तु तदनुसारेणैव प्रतिदानतदभावादिकं मन्तव्यम् ।

इति क्रीतानुशयाख्यं व्यवहारपदम् ।

## अथ विक्रीयासम्प्रदानाख्यं व्यवहारपदम् ।

तत्स्वरूपमाह नारदः—

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते ।
विक्रीयासम्प्रदानं तद्विवादपदमुच्यते ॥ इति । (व्य०प०८।१)

तत्र विक्रेयद्रव्यस्य द्वैविध्यषड्विधत्वे क्रमेणाह—

स एव, (व्य०प०८)

लोकेऽस्मिन् द्विविधं पण्यं जङ्गमं स्थावरं तथा । ( २ )
षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः ।
गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया ॥ इति । (३)

दानं विक्रयः । आदानं क्रयः । गणयित्वा यस्य क्रयविक्रयौ तद्गणिमम् । एवं तुलिमादिकम् । गणिमं=संख्येयं क्रमुकफलादिकम् । तुलिमं तुलाधृतं हेमचन्दनादिकम् । मेयं व्रीह्यादिकम् । क्रियया वाहनदोहनादिरूपया युक्तमिति शेषः। रूपतः=रूपेण युक्तं वस्तु पण्याङ्गनादि । श्रिया=दीप्त्या युक्तं पद्मरागादिकम् ।

यदा विक्रेता मूल्यं गृहीत्वा याचमानाय क्रेत्रे विक्रीतं वस्तु न ददाति तदा यत्कर्त्तव्यं तदाह—

स एव, (व्य०प०८।४)

विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥ इति ।

यो गृहीतमूल्यो विक्रेता अजातानुशयाय क्रेत्रे प्रार्थयमानाय नार्पयति तच्च पण्यं यदि स्थावरात्मकं तदा क्षयेण सहितमसौ दाप्यः । यदि तु जङ्गमात्मकं तदा क्रियाफलेन सहितमित्यर्थः। विक्रयानन्तरं जात उपभोगोऽत्र क्षयः । क्रियाफलं दोहनादिक्रियाफलं क्षीरादिकम् । इदं च क्रयकालापेक्षया अर्पणकाले मूल्याधिक्ये वेदितव्यम् । मूल्यह्रासे त्वन्यथाभिधानात् ।

तथाच स एव—

अर्घश्चेदवहीयेत सोदयं पण्यमावहेत् । इति ।

अर्वाक् चेदपचीयेतेति कल्पतरौ पाठः । अर्वाक्=विक्रीतस्य क्रेते समर्पणात्पूर्वं अपचीयेत हीनमूल्यं भवेत्सोदयं पण्यमावहेत्=विक्रयकाले यावन्मूल्यं गृहीतं तावता मूल्येनार्पणसमये मूल्यह्रासवशाद्यावदुपचयसहितं लभ्यते तावद्द्यादित्यर्थः । यदा तु मूल्यसाम्यं तदा पण्योपचयरूपस्योदयस्यासम्भवात्—

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानमदत्तं चेद्वर्द्धते पञ्चकं शतम् ॥

इति वचनोक्तवृद्धिसहितं पण्यं दाप्यः । अत एव—

याज्ञवल्क्यः, ( २।२५४ )

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।
सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते ॥ इति ।

गृहीतमूल्यं पण्यं विक्रेता यदि प्रार्थयमानाय स्वदेशवाणिजे क्रेत्रे न समर्पयति तच्च पण्यं यदि क्रयकाले बहुमूल्यं सत्कालान्तरे अल्पमूल्येनैव लभ्यते तदा सोदयं वृद्ध्या सहितं विक्रेता क्रेत्रे दापनीयः । यदा मूल्यह्रासकृतः पण्यस्योदयो नास्ति किन्तु क्रयकाले यावदेवैयतो मूल्यस्येयत्पण्यमिति प्रतिपन्नम् तावदेव तदा तत्पण्यमादाय तस्मिन्देशे विक्रीणानस्य यो लाभस्तेनोदयेन सहितं दापनीय इति चरणत्रयस्यार्थः । चतुर्थस्य तु यो देशान्तरात्क्रयणार्थमागत्य क्रीणाति तस्मै देशान्तरे तत्पण्यविक्रये यो लाभस्तेन सहितं तत्पण्यं दापनीय इत्यर्थः । देशान्तरलाभसहितपण्यदानं न केवलमर्घसाम्य एव किन्तु मूल्यस्य वृद्धौ क्षयेऽपीत्याह—

नारदः,

स्थायिनामेष नियमो दिग्लाभं दिग्विचारिणाम् । इति । (व्य०प०८.५)

स्थायिनां=विक्रेतृदेशस्थायिनाम् । एष नियमः "स्थावरस्य क्षयं दाप्य" इत्यादिवचनोक्तो नियम इत्यर्थः ।

विष्णुर्विक्रेतुर्दण्डमप्याह—

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव दद्यात्तस्य सोदयं दाप्यो राज्ञा च पणशतं दण्ड्य इति ।

एतच्चानुशयरहितदत्तविक्रेतृविषयमिति मदनरत्ने । यस्तु विक्रीयानुशयवशान्नार्पयति यश्च क्रीत्वाऽनुशयवशान्न गृह्णाति तौ प्रत्याह—

कात्यायनः,

क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम् ।
स मूल्याद्दशभागं तु दत्त्वा स्वं द्रव्यमाप्नुयात् ॥
अप्राप्तेऽर्थक्रियाकाले कृते नैव प्रदापयेत् ।
एष धर्मो दशाहात्तु परतोऽनुशयो नतु ॥ इति ।

अदूषितं जलादिनेतिशेषः । दोह्यवाह्यादिपण्यस्य दोहनवाहनादिरूपः कालोऽर्थक्रियाकालस्तस्मिन्नप्राप्ते सति अग्रहणेऽदाने वा कृते सति न दशमभागं प्रदापयेत् । किन्तु तमदत्त्वैव स्वीयं द्रव्यं प्राप्नुयादिति । एष धर्मो दशाहात् प्राग्वेदितव्यः । तत ऊर्ध्वमनुशयो न कर्त्तव्यः ।

विक्रीयासम्प्रयच्छतो यद्विक्रीतं पण्यं विक्रेतृपार्श्वे स्थितं तस्य यदि नाशः स्यात्तदा विक्रेतुरेव हानिरित्याह—

याज्ञवल्क्यः,

राजदैवोपघातेन पण्ये दोषमुपागते ।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥ इति । (२।२५६)

अत्र याचितस्येतिविशेषणोपादानात् याचनाभावे न विक्रेतुर्हानिरित्यर्थाद्गम्यते ।

नारदोऽपि (व्य०प०८।६)

उपहन्येत वा पण्यं दह्येतापह्रियते वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयासम्प्रयच्छतः ॥ इति ।

यथा याचितस्याप्रयच्छतो विक्रेतुर्हानिस्तथा दीयमानं पण्यमगृह्णतः क्रेतुरपीत्याह—

स एव, (व्य०प०८।९)

दीयमानं न गृह्णाति क्रीतं पण्यं च यः क्रयी ।
स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः ॥ इति । (इदमर्धं न दृश्यते)

अप्रयच्छतः विक्रेतुर्यो दोषः स एवास्य भवेदित्यन्वयः । क्रेतुर्दोषाभिधानस्य फलं पण्यस्य मूल्यं क्रेत्रे विक्रेत्रा न प्रत्यर्पणीयमिति । दीयमानं न गृह्णातीतिवदता दीयमानग्रहणे न मूल्यहानिरिति दर्शितम् । क्रयानन्तरं क्रेत्रा न याचितं विक्रेत्रा च न समर्पितं जातश्च चौराद्युपद्रवस्तत्र द्वयोः समा हानिः क्रेतृविक्रेत्रोरुभयोरपि याचनानर्पणशैथिल्येन सापराधत्वादित्युक्तं देवलभट्टैः स्मृतिचान्द्रिकायाम् ।

याज्ञवल्क्योऽपि—(२।२५५)

हानिश्चेत् क्रेतृदोषेण क्रेतुरेव हि सा भवेत् । इति ।

क्रेतृदोषो दीयमानस्याग्रहणम् । यत्र पुनर्जातानुशयः क्रेता विक्रेत्रा दीयमानं न गृह्णाति तत्राप्याह—

नारदः, (व्य०प०८।९)

दीयमानं न गृह्णाति क्रीतं पण्यं च यः क्रयी ।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ॥ इति ।

क्रयी जातानुशय इतिशेषः ।

याज्ञवल्क्योऽपि—

विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति ॥ इति । (२।२५५)

यस्त्वदुष्टं पण्यं दर्शयित्वा सदोषं विक्रीणीते, यश्चान्यहस्ते विक्रीतं तत्क्रेत्रनुशयाभाव एवान्यत्र विक्रीणीते तयोः समानो दण्ड इत्याह—

नारदः, (व्य०प०८।७।८)

निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति ।
मूल्यं तद्द्विगुणं दाप्यो विनयं तावदेव तु ॥
तथान्यहस्ते विक्रीय योऽन्यस्मै तत्प्रयच्छति ।
सोऽपि तद्द्विगुणं दाप्यो विनयं तावदेव तु ॥ इति ।

याज्ञवल्क्योऽपि—

अन्यहस्ते च विक्रीतं दुष्टं वाऽदुष्टवद्यदि ।
विक्रीणीते दमस्तस्य मूल्यात्तु द्विगुणो भवेत् ॥ इति । (२।२५७)

बुद्धिपूर्वविषयमेतत् ।

ज्ञात्वा सदोषं यः पण्यं विक्रीणीते विचक्षणः ।
तदैव द्विगुणं दाप्यस्तत्समं विनयं तथा ॥

इति बृहस्पतिनोक्तत्वात् । अबुद्धिपूर्वकविक्रये तु क्रयपरावर्त्तनमेव । अन्यत्रापि विषयविशेषे परावर्त्तनमाह—

बृहस्पतिः,

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।
अस्वतन्त्रेण मूढेन त्याज्यं तस्य पुनर्भवेत् ॥ इति ।

एतत्सर्वं दत्तमूल्ये पण्ये द्रष्टव्यम् । अत एव—

नारदः, (व्य०प०८।१०)

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्त्तितः । इति ।

यत्र पुनर्मूल्यं न दत्तं तत्रापि—

स एवाह, (व्य०प०८।१०)

अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः ॥ इति ।

अदत्तमूल्ये तु पण्ये वाङ्मात्रेण क्रये कृते न परावर्त्तनीयमित्येवमादिसमयाभावे सति प्रवृत्तौ निवृत्तौ न कश्चिद्दोष इत्यर्थः । यत्र पुनर्वाङ्मात्रक्रयपरिहारार्थं विक्रेतुर्हस्ते क्रेत्रा किञ्चिद्द्रव्यं दत्तं तत्र क्रेतृदोषवशेन क्रयासिद्धौ त्वाह—

व्यासः,

सत्यङ्कारं च यो दत्त्वा यथाकालं न दृश्यते ।
पण्यं भवेन्निसृष्टं तद्दीयमानमगृह्णतः ॥ इति ।

निसृष्टं भवेत्=उत्सृष्टं भवेदित्यर्थः । अत्र पण्यद्रव्यस्योत्सर्गः सत्यङ्कारद्रव्योत्सर्गोऽभिमतः अन्यथा वाङ्मात्रक्रयकर्त्तृतुल्यत्वेन विक्रेतुः सत्यङ्कारद्रव्यग्राहकत्वकृतमन्यत्र विक्रयणाद्यपराधनिमित्तकं सत्यङ्कारद्रव्यस्य द्वैगुण्येन प्रतिदानं न स्यात् । अत्रापि विक्रीतमविक्रेयमित्यनुसन्धेयम् ।

अस्मिन्नेव विषये विक्रेतृदोषवशेन क्रयासिद्धौ त्वाह—

याज्ञवल्क्यः,

सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥ इति । (२।६१)

सत्यङ्कारः=सत्यापनं कृतस्य क्रयस्य सत्याकरणमिति यावत् । "क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम्" इत्यमरकोषाभिधानात् । सत्यङ्काराय कृतं समर्पितं सत्यङ्कारकृतं क्रयं सत्यं कर्त्तुं यद्विक्रेतृहस्ते कृतमित्यर्थः ।

इति विक्रीयासम्प्रदानाख्यं व्यवहारपदम् । १०

## अथ स्वामिपालविवादाख्यं व्यवहारपदम् । ११

तत्र मनुस्तदभिधानप्रतिज्ञां करोति—

पशुषु स्वामिनां चैव पालानां च व्यतिक्रमे ।
विवादं सम्प्रवक्ष्यामि यथावद्धर्म्मतत्त्वतः ॥ इति । (८।२२९)

स्वामिपालयोः प्रतिदिनकृत्यमाह—

नारदः, (व्य०प०६।११)

उपानयेद्गां गोपाय प्रत्यहं रजनीक्षये ।
चीर्णाः पीताश्च ता गोपः सायाह्ने प्रत्युपानयेत् ॥ इति ।

चीर्णास्तृणादिकं भक्षितवतीः । पीताः=पीतवतीः । स्वामिना प्रातर्यावत्यः समर्पितास्तास्तावत्यो गोपालेन सायं प्रत्यर्पणीया इत्यर्थः । गोग्रहणं पशुमात्रोपलक्षणार्थम् । तथाच—

याज्ञवल्क्यः,

यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत्तथा । इति । (२।१६४)

गवादिपरिपालकस्य भृतिपरिमाणमाह—

नारदः, (व्य०प०६।१०)

गवां शताद्वत्सतरी धेनुः स्याद्द्विशते भृतिः ।
प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽहनि ॥ इति ।

प्रतिसंवत्सरं=संवत्सरे संवत्सरे गोशतपरिपालने वत्सतरी=द्विहायनी गौर्भृतिः । द्विशतपरिपालने धेनुर्दोग्ध्री सवत्सेति यावत् । अष्टमे दिवसे सन्दोहः=सर्वासां गवां दोहश्च भृतित्वेन कल्पनीय इत्यर्थः ।

बृहस्पतिरपि—

तथा धेनुभृतः क्षीरं लभते ह्यष्टमेऽखिलम् ॥ इति ।

धेनुभृतः=धेन्वा भृतः द्विशतपालक इत्यर्थः । तथा च सन्दोहो धेन्वा समुच्चीयते न वत्सतर्य्येति मदनरत्ने । कल्पतरौ तु धेनुभृतो गोपाल इति

व्याख्यातम् । तेन वत्सतर्यापि समुन्नीयत इति गम्यते । गोग्रहणं महि- ष्यादीनामुपलक्षणम् । न्यूनाधिकपरिपालने तु तदनुसारेण भृतिकल्पना द्रष्टव्या । इयं च वत्सतर्यादिभृतिकल्पना परिभाषितभृत्यभावविषया । परिभाषिते तु परिभाषानतिक्रमेणैव देया । मनुस्तु प्रकारान्तरेण भृतिपरिमाणमाह—

गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् ।
गोस्वाम्यनुमतो भृत्यः सा स्यात्पालेऽभृते भृतिः ॥ इति (८।२३१)

दशानां दोग्ध्रीणां मध्ये वरामुत्कृष्टां स्वीकृत्य तत्क्षीरं क्षीरभृतो भृत्यो गोपो दशदोग्ध्रीपालनकृद् गृह्णीयाद् भृत्यर्थम् । सैषा भृतिः पूर्वं द्रव्यान्तरेणाभृते ज्ञेया । यस्तु द्रव्यान्तरेण भृतः तत्र तदेव भृतिरित्यर्थः ।

यस्तु भृतिं गृहीत्वा पशून्मारयेत् विनाशयति वा तं प्रत्याह— याज्ञवल्क्यः,

प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः । इति । (२।१६४)

प्रमादग्रहणं पशुपालकदोषोपलक्षणार्थम् । मनुना प्रमादनाशः स्पष्टीकृतः—

नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम् ।
हीनं पुरुषकारेण प्रदद्यात्पाल एव तु ॥ इति । (८।२३२)

श्वहतम्=शुना हतम् । विषमे=दुर्गमप्रदेशे । पुरुषकारः=पुरुषप्रयत्नः । यत्पुरुषप्रयत्नेन हीनं सन्नाशादिकं प्राप्तं तद्दातव्यमित्यर्थः । पुरुषकारश्च बृहस्पतिना दर्शितः—

कृमिचौरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत् ।
व्यायच्छेच्छक्तितः क्रोशेत् स्वामिने वा निवेदयेत् ॥ इति ।

व्यायच्छेत्=व्यसनाभावाय यतेतेत्यर्थः । चौरैर्बलात्कारेणापहृते न दाप्य इत्याह—

मनुः, (८।२३३)

विघुष्य तु हृतं चौरैर्न पालो दातुमर्हति ।
यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥ इति ।

विघुष्य=शृङ्गकादिभिर्घोषं कृत्वा । देशे=स्वाम्यवस्थानदेशे । काले=अपहरणकालाव्यवहितकाले । विषयविशेषे पशुपालस्य दण्डमाह—

व्यासः,

गृहीतमूल्यो गोपालस्तांस्त्यक्त्वा निर्जने वने ।
ग्रामचारी नृपैर्बाध्यः शलाकी च वनेचरः ॥ इति ।

शलाकी नापित इति कल्पतरौ । पुरुषेण प्रयत्नाकरणे दण्डमाह—

नारदः, (व्य०प०६।१२।१३)

स्याच्चेद्व्यसनं गोपो व्यायच्छेत्तत्र शक्तितः।
अशक्तस्तूर्णमागम्य स्वामिने तन्निवेदयेत्॥
अव्यायच्छन्नविक्रोशन् स्वामिने चानिवेदयन्।
वोढुमर्हति गोपस्तं विनयं चैव राजनि॥ इति।

तम्=गवादिकम्। पशूनां दैवान्मरणे पालकस्य दोषाभावत्वज्ञानोपायमाह—

व्यासः,

मृतेषु च विशुद्धः स्याद्वालशृङ्गादिदर्शनात्।

आदिशब्देन कर्णादीनां ग्रहणम्। तथा च—

मनुः,

कर्णौ चर्म च बालांश्च वस्तिं स्नायुं च रोचनाम्।
पशुस्वामिषु दद्यात्तु मृतेष्वङ्काभिदर्शनम्॥ इति। (८।२३४)

अङ्कादि दर्शयेदिति क्वचित्पाठः। अङ्कः=शृङ्गकर्णादिरूपं चिह्नम्। आदिशब्दः साक्षिसङ्ग्रहार्थः। पशुषु मृतेष्वङ्कादिकं स्वामिने दर्शयेत्। रोचनादिकं यत्सप्रयोजनं तत्तस्मै दद्याच्चेत्यर्थः। नष्टगवादिदानं च तत्स्वामिने मूल्यद्वारेण ज्ञातव्यम्। अत एव—

विष्णुः,

दिवा पशूनां वृकाद्युपघाते पाले त्वनायति पालकदोषो विनष्टपशूनां मूल्यं स्वामिने दद्यादिति।

अनायति=अनागच्छति। विनयद्रव्यप्रमाणमाह—

याज्ञवल्क्यः,

पालदोषविनाशे तु पाले दण्डो विधीयते।
अर्धत्रयोदशपणः स्वामिने द्रव्यमेव च॥ इति। (२।१६५)

अर्धत्रयोदशपणः=अर्धरहितत्रयोदशपणः। सार्धद्वादशपण इतियावत्। "तास्तृतीयपूर्वपदाः समानाधिकरणेन समस्यन्त उत्तपदलोपश्च" इति वार्तिकादुत्तरपदलोपी कर्मधारयः। यत्तु केनचिदर्धाधिकत्रयोदशपणो दण्ड इति व्याख्यातम्। तत् सार्धद्विमात्रादिषु अर्धत्रिमात्रादीति महाभाष्यकारशब्दप्रयोगदर्शनादुपेक्ष्यम्।

पालदोषमाह मनुः—

अजाविके तु संरुद्धे वृकैः पाले त्वनायति।
यां प्रसह्य वृको हन्यात् पाले तत्किल्बिषं भवेत्॥ इति (८।२३५)

अनायति=उपद्रवनिवारणाय अनागच्छतीत्यर्थः। याम्=अजाविकजा-

तीयाम् । सुगमस्थलस्थविषयमेतत् । दुर्गमस्थलस्थविषये त्वाह—

स एव,

तासां चेदवरुद्धानां चरन्तीनां मिथो वने ।
यामुत्पत्य वृको हन्यान्न पालस्तत्र किल्बिषी ॥ इति । (८।२३६)

अवरुद्धानां=पालकेन स्थापितानामित्यर्थः । गवादिप्रचारणार्थं भूमिमाह—

याज्ञवल्क्यः,

ग्राम्येच्छया गोप्रचारो भूमी राजवशेन वा । (२।१६६)

ग्राम्येच्छया ग्रामीणजनवशेन राजेच्छया वा । गोप्रचारो गवां तृणादिभक्षणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः । गवां स्थानासनसौकर्य्याय ग्रामक्षेत्रयोरन्तरमाह—

स एव,

धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ।
द्विशते खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥ इति । (२।१६७)

परीणाहशब्देनात्र सर्वासु दिक्षु अनुप्तशस्यं स्थलं गृह्यते । एतादृशं धनुःशतपरिमितं ग्रामक्षेत्रयोरन्तरं कार्यम् । खर्वटस्य शतद्वयपरिमितं, नगरस्य शतचतुष्टयपरिमितमित्यर्थः । खर्वटः अनेककारुकृषीवलयुक्तो ग्राम इति मदनरत्ने । माधवाचार्यैस्तु प्रचुरकण्टकसन्तानो ग्राम इति व्याख्यातम् । तत्र शस्योत्पत्तेः प्रागेवावरणं कार्य्यमित्याह—

कात्यायनः,

अजातेष्वेव शस्येषु कुर्य्यादावरणं महत् ।
दुःखेन विनिवार्य्यन्ते लब्धस्वादुरसा मृगाः ॥ इति ।

एवं पशुनिवारणार्थं कृतमप्यावरणमतिक्रम्य पशुभिः शस्यादिविनाशे कृते कर्त्तव्यमाह—

मनुः,

पथिक्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः ।
सपालः शतदण्डार्हो विपालं वारयेत्पशुम् ॥ इति । (८।२४०)

पथिक्षेत्रे=मार्गसमीपक्षेत्रे । ग्रामान्तीये=ग्रामसमीपवर्त्तिनि । सपालः पशुः पणशतदण्डार्हः । तत्पशुपालः पणशतं दण्डनीय इत्यर्थः। अयं च दण्डः पशुपालेन समर्थेन सता पशावनिवार्य्यमाणे वेदितव्यः । अत एव—

नारदः, (व्य०प०११।२८)

उत्क्रम्य तु वृतिं यः स्वाच्छस्यघातो गवादिभिः ।
पालः शास्यो भवेत्तत्र न चेच्छक्तो निवारयेत् ॥ इति ।

आवरणाभावेनापरिहार्ये शस्योपघातेऽपि न पालस्य दण्डः ।

तथा च मनुः—

तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥ इति । (८।२३८)

अनेनावृतक्षेत्रशस्यापघाते पशुरक्षिणां दण्ड इत्यर्थादुक्तं भवति। अदीर्घकालप्रचारविषयमेतत् । दीर्घकालप्रचारे तु अपरिवृतेऽपि पशुपालो दण्डार्हो भवति । अत एवाल्पकालप्रचारे दोषाभावं दर्शयति—

विष्णुः,

पथिग्रामविवीतान्ते न दोषोऽल्पकालमिति ।

पशुविशेषेण दण्डपरिमाणमाह—

याज्ञवल्क्यः, (२।१५९।१६०)

माषानष्टौ तु महिषी शस्यघातस्य कारिणी ।
दण्डनीया तदर्द्धं तु गौस्तदर्द्धमजाविकम् ॥
भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः ।
सममेषां (१)विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥ इति ।

परशस्यघातकारिण्या महिष्याः स्वामी अष्टौ माषान् दण्ड्यः । गोस्वामी चतुरः । छागस्वामी द्वौ द्वौ । मेषस्वामी च द्वौ द्वौ । एतेषां पशूनां शस्यभक्षणादारभ्य तत्रैव शयितानां स्वामी यथोक्तदण्डाद्द्विगुणं दण्डं ग्राह्यः । विवीतस्थतृणाद्युपघातेऽपि शस्योपघातवद्दण्डनीयः । खरस्वाम्युष्ट्रस्वामी महिषीस्वामिवद्दण्डनीयः । अत्र पशुस्वामिनो दण्ड इत्यभिधातव्ये महिष्यादिग्रहणं प्रतिपशु दण्डप्राप्त्यर्थम् । भक्षयित्वोपविष्टसवत्साविषये यथोक्ताच्चतुर्गुणो दण्डः । तथा च—

स्मृत्यन्तरम्,

वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः । इति ।

अत्रापराधानुसारेण दण्डनार्थं ताम्रिकमाषो ग्राह्यो न पुनः सौवर्णो राजतो वेति स्मृतिचन्द्रिकायाम् । ताम्रिकमाषश्च कर्षपरिभाषितस्य षाडशो भागो भवति । अयमेव पलस्य "पञ्च वापि प्रकीर्त्तिता" इति याज्ञवल्क्योक्तं पञ्चसुवर्णपरिमितत्वपक्षे पलचतुर्थांशस्य विंशतिमाषात्मककार्षापणस्य "माषो विंशतिमो भागः पलस्य परिकीर्त्तितः" इति नारदोक्तो विंशो भागोऽपि भवति। एतेन स्मृतिचन्द्रिकायाम् अपराधानुसारेण दण्डनार्थं "माषो विंशतिमो भागः पलस्य परिकीर्त्तित" इति नारदोक्तो माषः कैश्चित् स्वीकृत इत्येकीयमतत्वेनोपन्यस्य—

---

(१) प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशो विवीतः । विशेषेण वीतं व्यापनं तृणकाष्ठादेरस्मिन्निति व्युत्पत्तेः ।

सङ्ख्या रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा ॥

इति बृहस्पतिवचनविरोधेन दूषितम् । तदुभयथाप्यर्थभेदाभावेन विरोधाभावान्निरस्तं मन्तव्यम् । यत्तु मनुनोक्तं "सपादं पणमर्हति" इति । तत् स्वामिमतिपूर्वं पशुव्यतिक्रमविषयम् । याज्ञवल्क्यवचनं त्वबुद्धिपूर्वविषयमिति न तयोर्विरोधः ।

यत्तु,

पणस्य पादौ द्वौ गां तु द्विगुणं महिषीं तथा ।
तथाजाविकवत्सानां पादो दण्डः प्रकीर्त्तितः ॥

इति स्मृत्यन्तरम् । तद्भक्षयित्वोपविष्टगवादिविषयम् । यत्पुनर्नारदेनाभिहितम्—

माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा ।
तथाजाविकवत्सानां दण्डः स्यादर्द्धमाषिकः ॥ इति,

तन्मुहूर्त्तमात्रभक्षणविषयम् । अत एवाहतुः—

शङ्खलिखितौ,

रात्रौ चरन्ती गौः पञ्च माषान्दिवा त्रीन्मुहूर्त्तं माषं ग्रासे त्वदण्डइति

ग्रासे त्वदण्ड इत्यस्यायमर्थः । महिष्यादिभिः परशस्येषु कवलमात्रभक्षणे कथञ्चित्कृते पालस्य स्वामिनो वा स्वल्पोऽपि दण्डो नास्तीति । आतुरपशुविषये बहुसस्यनाशेऽप्येवमेव । दण्डाभावप्रतिपादनमुखेनाह—

नारदः, (व्य०प०११।३६।३७)

राजग्राहगृहीतो वा वज्राशनिहतोऽपि वा ।
अथ सर्पेण वा दष्टो वृक्षाद्वा पतितो भवेत् ॥
व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः ।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनाम् ॥ इति ।

गोमिनां=गोस्वामिनाम् । आतुराणामनिवार्यत्वादित्यभिप्रायः । अनातुराणामपि केषाञ्चित्पशूनां दण्डाभावमाह—

स एव, (व्य०प०११।३०)

गौः प्रसूता दशाहात्तु महोक्षा वाजिकुञ्जराः ।
निवार्याः स्युः प्रयत्नेन तेषां स्वामी न दण्डभाक् ॥ इति ।

दशादिनपर्य्यन्तं प्रसूताया निरोद्धुमशक्यत्वान्न स्वामी दण्डभाक् । महोक्षस्य सर्वासां गर्भाधानार्थं सर्वदा बन्धनायोगात् तत्स्वामी न दण्डभाक् । वाजिकुञ्जराणां स्वामिनोऽदण्डभागित्वे हेतुमाहोशना—

अदण्ड्या हस्तिनो ह्यश्वाः प्रजापाला हि स्मृताः । इति ।

स्वामिग्रहणं पालकस्याप्युपलक्षणार्थम् । यदाह—

मनुः,

अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा ।
सपालान्वा विपालान्वा अदण्ड्यान्मनुरब्रवीत् ॥ इति (८।२४२)

वृषा=महोक्षाः । यद्वा वृषोत्सर्गविधानेनोत्सृष्टाः । देवपशवः=देवालयेषु देवोपभोगार्थं स्थापिताः पशवः ।

याज्ञवल्क्योऽपि—

महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः ।
पालो येषां न ते मोक्ष्या दैवराजपरिप्लुताः ॥ इति ।

सूतिका=प्रसूता अनिर्दशाहा । आगन्तुकः=स्वयूथात्परिभ्रष्टः सन् देशान्तरात् समागतः । येषां पालो नास्ति तेऽपि दैवराजोपहताः शस्यादिनाशकारिणो न दण्ड्या इत्यर्थः । आदिशब्देन मृतवत्सादीनां ग्रहणम् ।

अत एवोशना—

अदण्ड्या मृतवत्सा च संज्ञू(१) रोगवती कृशा ।
अदण्ड्याः काणकूटाश्च वृषाश्च कृतलक्षणाः ।
अदण्ड्यागन्तुकी गौश्च सूतिका चाभिसारिणी ॥ इति ।

कूटः=एकशृङ्गः । कृतलक्षणः=प्रतप्तायसेन कृतलाञ्छनः । अभिसारिणी=स्वयूथात्प्रच्युता पुनःस्वयूथगामिनी । परशस्यविनाशे न केवलं पशुस्वामी दण्डनीयः सदमपि दापनीय इत्याह—

बृहस्पतिः,

शस्यान्निवारयेद्यास्तु चीर्णे दोषो द्वयोर्भवेत् ।
स्वामी सदमं दाप्यः पालस्ताडनमर्हति ॥ इति ।

सदश्च दमश्च सददमम् । समूलशस्यनाशविषयमेतत् । अत एव—

नारदः, (व्य०प०११।२९ )

समूलशस्यनाशे तु तत्स्वामी प्राप्नुयात् सदम् ।
वधेन गोपो मुच्येत दण्डं स्वामिनि पातयेत् ॥ इति ।

तत्स्वामी=शस्यस्वामी सदं प्राप्नुयात् । पशुस्वामिनः सकाशादिति शेषः । वधोऽत्र कशादिना ताडनम् । न प्राणच्छेदः । "पालस्ताडनमर्हति" वचनात् । सदश्च सामन्तादिभिः परिकल्पितो देयः । अत एव—

स एवाह, (व्य०प०११।३८)

गोभिस्तु भक्षितं शस्यं यो नरः प्रतियाचते ।
सामन्तानुमतं देयं धान्यं यत्तत्र वापितम् ॥ इति ।

---

(१) संज्ञुः=संहतजानुका ।

यत्तु शदयाचननिषेधकम्—

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते ।
पितरस्तस्य नाश्नन्ति नाश्नन्ति त्रिदिवौकसः ॥

इत्युशनोवचनं तत् ग्रामादिसमीपस्थानावृतक्षेत्रविषयमिति माधवाचार्याः । श्राद्धकालादौ गोभक्षितविषयमिति मदनरत्नकृतः । सर्वासां गवामुत्सवे श्राद्धदिवसे चादण्ड्यत्वमाह—

स एव,

अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैवच । इति ।

गोभिः श्राद्धकालादौ भुक्तमतिश्रेयस्करमित्याशयेनाह—

व्यासः,

आक्रम्य च द्विजैर्भुक्तं परिक्षीणं च बान्धवैः ।
गोभिश्च नरशार्दूल ! वाजपेयाद्विशिष्यते ॥ इति ।

एतत्पदमुपसंहरति मनुः—

एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः ।
स्वामिनां च पशूनां च पालानां च व्यतिक्रमे ॥ इति । (८।२४४)

इति स्वामिपालविवादाख्यं व्यवहारपदम् । ११

## अथ सीमाविवादाख्यं व्यवहारपदम् । १२

तत्स्वरूपमाह नारदः—

सेतुकेदारमर्यादाविकृष्टाकृष्टनिश्चयः ।
क्षेत्राधिकारो यत्र स्याद्विवादः क्षेत्रजस्तु सः ॥ इति ।
( व्य०प०११।१ )

अस्यार्थः । सेतुर्जलप्रवाहबन्धः । केदारः=क्षेत्रम् । मर्य्यादा=सीमा । विकृष्टो=लाङ्गलप्रहतो देशः । आकृष्टस्तद्रहितः । एतेषां निश्चयो यत्र विवादे स्यात् स क्षेत्राधिकारः=क्षेत्रविषयको विवादः क्षेत्रज उच्यत इति । अयं विवादः षड्विधः । तथाच—

कात्यायनः,

आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च ।
अभोगभुक्तिः सीमा च षड् भूवादस्य हेतवः ॥

ममेतोऽधिका भूरस्तीत्युक्ते नेतिविवाद आधिक्यविवादः । एतावती भूस्तव नेत्युक्ते ममैतावतीति यो विवादः स न्यूनताविवादः । अत्र ममांशोऽस्तीत्युक्ते नास्तीति यो विवादः सोऽस्तित्वविवादः । अत्र तवांशो नास्तीत्युक्ते विद्यत इत्येवंविधो विवादो नास्तित्वविवादः । मामिका भूस्त्वया प्रा-

गभुक्तं वेदानीं भुज्यत इत्युक्ते प्रागपि भूर्भुक्तेत्येवंविधो विवादोऽभोगभुक्तिविवादः। इयं मर्यादा मामिकाया भुव इत्युक्ते नेति विवादः सीमाविवाद इति षड्विधो विवाद इत्यर्थः। तत्र सीमा चतुर्विधा। देशसीमा ग्रामसीमा क्षेत्रसीमा गृहसीमा चेति। तस्याश्चतुर्विधाया अपि यथासम्भवं पञ्चविधत्वमाह—

नारदः,

ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्ज्जिता।
राजशासननीता च सीमा पञ्चविधा स्मृता॥ (न लब्धम)

ध्वजिनी=वृक्षादिचिह्निता। वृक्षाश्च न्यग्रोधादयः। तदाह—

मनुः—

सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान्।
शाल्मलीन् सालतालांश्च क्षीरिणश्चैव पादपान्॥ इति। (८।२४६)

मत्स्यिनी=जलचिह्निता। नैधानी=निखाततुषाङ्गारादिलक्षिता। भयवर्जिता=अर्थिप्रत्यर्थिपरस्परसम्प्रतिपत्तिनिर्मिता। राजशासननीता=ज्ञातृचिह्नाद्यभावे राजेच्छया निर्मिता। तथा च--

व्यासः,

ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः।
समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्त्तिता॥
स्वच्छन्दगा बहुजला झषकूर्मसमन्विता।
नित्यप्रवाहिणी यत्र सीमा सा मत्स्यिनी मता॥
तुषाङ्गारकपालैस्तु कुम्भैरायतनैस्तथा।
सीमा प्रचिह्निता कार्य्या नैधानी सा निगद्यते॥ इति।

नित्यप्रवाहिणीत्यनेन कूपवाप्यादीनि प्रकाशचिह्नान्युपलक्ष्यन्ते। तानि च बृहस्पतिना दर्शितानि---

वापीकूपतडागानि चैत्यारामसुरालयाः।
स्थलं निम्नं नदीस्रोतः शरगुल्मनगादयः॥
प्रकाशचिह्नान्येतानि सीमायां कारयेत् सदा।
निहितानि तथान्यानि यानि भूमिर्न भक्षयेत्॥
अश्मनोऽस्थीनि गोबालांस्तुषान् भस्मकपालिकाः।
करीषमिष्टकाङ्गारशर्करा बालुकास्तथा॥
तानि सन्धिषु सीमाया अप्रकाशानि कारयेत्।

चैत्यम्=इष्टकादिभी रचितं चत्वरादिकम्। स्थलम्=उन्नतो भूप्रदेशः। निम्नं=परिखा। नगा=अश्वत्थादयो वृक्षाः। आदिशब्देन मार्गादीनां ग्रह-

णम् । अस्थीनि=पशुमनुष्याद्यस्थीनि । तुषाङ्गारकपालैरिति करीषादीनामन्येषां लिङ्गानामप्युपलक्षणम् । तानि च तेनैव दर्शितानि--

करीषास्थितुषाङ्गारशर्कराश्मकपालिकाः ।
सिकतेष्टकगोबालकार्पासास्थीनि भस्म च ॥
प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत् ।
ततः पौगण्डबालानां प्रयत्नेन प्रदर्शयेत् ॥
वार्द्धके च शिशूनां ते दर्शयेयुस्तथैव च ।
एवं परम्पराज्ञाने सीमाभ्रान्तिर्न जायते ॥ इति ।

प्रदर्शयेत् इदं तु छान्दसं बहुत्व एकवचनम् । एतेषां लिङ्गानां कथञ्चिदभावे निश्चयोपायमाह—

नारदः,

( व्य०प०११।६ )

निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु ।
तत्प्रदेशानुमानैश्च प्रमाणैर्भोगदर्शनैः ॥

निम्नगाया नद्या अपहृतेन अपहरणेन उत्सृष्टानि स्वस्थानान्नष्टानि चिह्नानि यासां तास्तथोक्ताः । प्रमाणैः साक्षिसामन्तादिभिः । एवंनिरूपितैर्लिङ्गैर्निर्णयं कुर्य्यादित्याह--

मनुः, ( ८।२५२।२५३ )

एतैर्लिङ्गैर्नयेत् सीमां राजा विवदमानयोः ।
पूर्वभुक्त्या च सततमुदकस्यागमेन च ॥
यदि संशय एव स्याल्लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्यात्सीमावादविनिर्णयः ॥

साक्षिप्रत्ययः=साक्षिहेतुकः । लिङ्गाभावपक्षपरिग्रहार्थोऽपिशब्दः । ते च साक्षिणः सीमाविषयाः सीमालिङ्गविषया वा । साक्षिषु विशेषमाह-

बृहस्पतिः,

आगमं च प्रमाणं च भोगकालं च नाम च ।
भूभागलक्षणं चैव ये विदुस्तेऽत्र साक्षिणः ॥

प्रमाणमियत्ता । उभयेषामपि साक्षिणामभावे सामन्तवशान्निर्णयं कुर्यादित्याह--

मनुः, ( ८।२५८ )

साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवासिनः ।
सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ ॥

यदा पुनर्लिङ्गानि न सन्ति वर्त्तमानानि वा सन्दिग्धानि तदा नि-

अथोपायमाह--

याज्ञवल्क्यः,

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥ ( २।१५२ )

सामन्ताः=सन्निहितग्रामक्षेत्राद्युपभोक्तारः । समग्रामाश्चत्वारोऽष्टौ इत्यादिप्रकारेण समसङ्ख्याकाः । तथा च--

कात्यायनः,

(१)ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्त्तितम् ।
गृहं गृहस्य निर्दिष्टं समन्तात्परिरभ्य हि ॥

ग्रामस्य समन्ताच्चतसृषु दिक्षु परिरभ्य सम्बध्य स्थितो ग्रामः सामन्तः । क्षेत्रादावप्येवमेव ज्ञेयम् । सामन्तानां यदा रागद्वेषादिना प्रकटदोषसद्भावस्तदा सामन्तसंसक्तवशान्निर्णयः कार्यः । तदाह—

स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्संसक्तैस्तु कर्त्तव्य उद्धारो नात्र संशयः ॥

तत्संसक्तैः=सामन्तसंसक्तैः । सीमाया उद्धारः सीमाया निर्णय इत्यर्थः । तथा चैतदुक्तं भवति । चतसृषु दिक्षु स्थितसामन्तग्रामादिभ्योऽनन्तरत्वेन तद्दिशि स्थितग्रामादिभोक्तारस्तत्संसक्तास्तत्प्रदर्शितसीमालिङ्गैर्ग्रामादेः सीमां निर्णयेदिति । यदा तु सामन्तसामन्तानामपि प्रकटो दोषस्तदा तत्सामन्तैर्निर्णयस्तदाह—

स एव,

संसक्तसक्तदोषे तु तत्संसक्ताः प्रकीर्त्तिताः । इति ।

तत्संसक्ताः=संसक्तसंसक्तसक्ता इत्यर्थः । एवं चैतदुक्तं भवति । चतसृषु दिक्षु स्थितसंसक्तसक्तग्रामादिभ्योऽनन्तरत्वेन तद्दिशि स्थितग्रामादिभोक्तारः संसक्तसक्तसंसक्तास्तैः प्रदर्शितसीमालिङ्गैर्ग्रामादेः सीमां निर्णयेदिति । यदा पुनरेतेषामपि प्रकटदोषत्वं तदा मौलादिवशान्निर्णयः कार्य इत्यप्याह—

स एव,

कर्त्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता ।
त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह ॥
सम्मिश्रय कारयेत्सीमामेवं धर्मविदो विदुः ।

अन्यान्=सामन्ततत्सामन्तव्यतिरिक्तान् सीमालिङ्गाभिज्ञान् नागरादीनित्यर्थः । नागरादयश्च दर्शिता—

---

(१) अत्र ग्रामादिशब्दानां तत्स्थेषु पुरुषेषु लक्षणा ।

नारदेन, ( व्य० प० ११।२ )

नगरग्रामगणिनो ये च वृद्धतमा नराः ।

सीमालिङ्गज्ञा इति शेषः । मौलादिभिः मौलवृद्धोद्धृतैः । सम्मिश्र्य-मेलयित्वा । मौलादीनां च लक्षणं दर्शितम्—

कात्यायनेन,

ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्त्तिताः ॥
निष्पाद्यमानं यैर्दृष्टं तत्कार्य्यं नृगुणान्वितैः ।
वृद्धा वा यदि वाऽवृद्धास्ते तु वृद्धाः प्रकीर्त्तिताः ॥(१)

नृगुणान्वितैः=पुरुषगुणान्वितैः । वाकारोऽनास्थायाम् । वयोवृद्धत्वस्या-प्रयोजकत्वात् । ये परम्परया कार्यज्ञातारस्ते उद्धर्त्तार इत्याशयः । तथा च संसक्तसंसक्तेषु स्फुटदोषदुष्टेषु पूर्वसामन्ताद्युपेतनागरिकग्राम्यजन-श्रेणिवयोवृद्धदर्शितैः सम्यक् लिङ्गैः सीमानिर्णयः कार्य्यः ।

यदा तु प्रतिवादिना सामन्तेषु कश्चिद्दोष उद्भावितः ते च न प्रकट-दोषयुक्तास्तदोक्तो विशेषो—

तेनैव,

सामन्ताः साधनं पूर्वमनिष्टोक्तौ गुणान्विताः ।
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः ॥

अनिष्टोक्तौ=प्रतिवादिना गुप्तदोषाभिधाने तत्सामन्तास्ततो द्विगुणा ग्रा-ह्यास्तेष्वपि दोषाभिधाने तत्सामन्तास्ततो द्विगुणा ग्राह्याः । तत्रापि त-थात्वे मौलवृद्धादयः सामन्तास्त्रिगुणा ग्राह्या इत्यर्थः । साक्ष्यादीनामे-तेषां यदा अभावस्तदा त्वाह—

मनुः, ( ८।२५९।२६० )

सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम् ।
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ॥
व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखानकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान् ॥

वनगोचराणां ग्रहणं सीमासन्निहितदेशकर्षकाणामसत्त्वे विज्ञेयम् । अत एवोक्तम्—

---

(१) अत्र—उपश्रवणसम्भोगकार्याख्यानोपचिह्निताः । उद्धरन्ति पुनर्यस्मादुद्धृतास्ते ततः स्मृताः ॥ इत्युद्धृतलक्षणबोधकं कात्यायनवचनमपेक्षितम् । अत्रेयं स्थितिरिति स-भ्येभ्यः श्रवणमुपश्रवणम् । उपश्रवणं च संभोगकार्यं च तयोराख्यानं तेनोपलक्षिता इत्यर्थः ।

नारदेन, ( व्य० प० ११।३ )

ग्रामसीमासु च बहिर्ये स्युस्तत्कृषिजीविनः ।
गोपाः शाकुनिका व्याधा ये चान्ये वनगोचराः ॥ इति ।

अत्र च सर्वत्र स्थावरविवादे सेत्वादिविवादे च सामन्तादयो निर्णायकाः । तथा च—

कात्यायनः,

तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः ।
स्थावरे षट्प्रकारेऽपि कार्य्या नात्र विचारणा ॥
क्षेत्रवास्तुतडागेषु कूपोपवनसेतुषु ।
समन्तभावात् सामन्तैः कुर्यादत्र विनिर्णयम् ।
ग्रामसीमासु च तथा तद्वन्नगरदेशयोः ॥

तेषां=साक्षिणाम् ।

याज्ञवल्क्योऽपि,

आरामायतनग्रामनिपानोद्यानवेश्मसु ।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥ ( २।१५४ )

आयतनं=निवेशनम्। निपानं=पानीयस्थानम् । वर्षाम्बुप्रवहो=वृष्ट्युद्भूतजलप्रवाहः ।

पुनः कात्यायनोऽपि—

क्षेत्रकूपतडागानां केदारारामयोरपि ।
गृहप्रसादावसथेष्वेवं देवगृहेषु च ॥

केदारः=क्षुद्रसेतुयुक्तः क्षेत्रविशेषः । गोबलीवर्दन्यायेन भिन्नोक्तिः । प्रसादः=प्रासादः ।

बृहस्पतिरपि—

सर्वत्र स्थावरे वादे विधिरेष प्रकीर्त्तितः ।

राज्ञा ग्रामीणानां वादिप्रतिवादिनोश्च समक्षं सामन्तादयः प्रष्टव्याः। तैर्यदुक्तं तत्पत्रे लेखनीयमित्याह—

मनुः, ( ८।२५४।२५५ )

ग्रामेयककुलानां तु समक्षं सीम्नि साक्षिणः ।
प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः ॥
ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम् ।
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥

सीमलिङ्गम् साक्ष्यभिप्रायेण सीमालिङ्गानीत्युक्तम् । सीमासाक्षिणस्तु सीमां ब्रूयुः । तथा च—

बृहस्पतिः,

शपथैः शापिताः स्वैः स्वैर्ब्रूयुः सीमाविनिर्णयम् ।
दर्शयेयुश्च लिङ्गानि तत्प्रमाणमिति स्थितिः ॥

स्वैः स्वैः="सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।" इत्यादिनोक्तव्यवस्थानतिक्रमेणेत्यर्थः । यदा तु ये सीमालिङ्गसाक्षिणः सीमाचिन्हानि दर्शयितुं न शक्नुवन्ति केवलं सीमामात्रं जानन्ति तदा ते कथं ब्रूयुरित्याकाङ्क्षायामाह—

मनुः, (८।२५६)

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
स्वकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम् ॥ इति ।

उर्वीं=मृदम् । सीमां क्रममाणा इति शेषः । नयेयुरिदं द्वयोर्निरासार्थं बहुवचनं न त्वेकस्य ।

नारदेन— (व्य० प० ११।१०)

एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत् ।
रक्तमाल्याम्बरधरो भूमिमादाय मूर्द्धनि ॥

इति एकस्याभ्यनुज्ञानात् ।

बृहस्पतिरपि—

ज्ञातृचिह्नैर्विना साधुरेकोऽप्युभयसम्मतः ।
रक्तमाल्याम्बरधरो मृदमादाय मूर्धनि ॥
सत्यव्रतः सोपवासः सीमां तां दर्शयेन्नरः ।

ज्ञातृचिह्नैर्विना=सीमाया ज्ञातॄणां लिङ्गानां चासत्त्वे ।

ननु कथमेकस्य सीमानिर्णायकत्वम्—

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्य्यस्य क्रियैषा बहुषु स्थिता ॥ (व्य०प०११।९)

इत्येकस्य नारदेन निषेधादिति चेत्, मैवम् । स उभयानुमतधर्मविद्व्यतिरिक्तविषय इति न काप्यनुपपत्तिः । अयं च निर्णयः सीमाक्रमणदिनादारभ्य पक्षत्रयपर्य्यन्तं साक्षिसामन्तादीनां दैविकराजिकोपद्रवाभावे अवसेयः । न तु सीमाक्रमणाव्यवहितोत्तरमेव । तथा च—

कात्यायनः,

सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च ।
त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते ॥ इति ।

यथासङ्ख्यमिति शेषः । यदा तु साक्ष्यादीनां पक्षत्रयाभ्यन्तरे दैविकराजिकोपद्रवः अन्यथा वा मिथ्यावादित्वनिश्चयस्तदा ते पणशतद्वयं

दण्डं प्रत्येकं दाप्याः। तथा च—

मनुः,

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः।
विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम्॥ (८।२५७)

यथोक्तेन="शिरोभिस्ते गृहीत्वोर्वीम्" इत्यादिनोक्तप्रकारेण नयन्तो=निर्णयं कुर्वन्तः। यथाभूतेनार्थेनेतिशेषः। द्विशतं=पणशतद्वयम्। पणशतद्वयं दण्डं प्रत्येकं यथोक्तेन शिरोभिस्ते गृहीत्वा दाप्या इत्यर्थः। सामन्तानां मिथ्यावादित्वे राज्ञा मध्यमसाहसिकाख्येन दण्डेन दण्डनीयाः। तथा चाह—

याज्ञवल्क्यः,

अनृते तु पृथक् दण्ड्या राज्ञा मध्यमसाहसम्। (२।१५३)

सामन्ता यद्यनृतं मिथ्याभूतं सीमानिर्णयं कुर्युः तदा मध्यमसाहसं कार्षापणानां चत्वारिंशदधिकानि पञ्चशतानि दण्डनीयाः।

नारदोऽपि—(व्य०प०११।७)

अथ चेदनृतं ब्रूयुः सामन्ताः सीमानिर्णये।
सर्वे पृथक् पृथक् दण्ड्या राज्ञा मध्यमसाहसम्॥

सामन्तव्यतिरिक्तानां तत्संसक्तादीनां मिथ्यावादित्वे पूर्वसाहसाख्येन दण्डेन प्रत्येकं ते दण्डनीयाः। तथा च—

नारदः,

शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि।
प्रत्येकं तु जघन्यास्ते विनेयाः पूर्वसाहसम्॥ इति। (न लब्धम्)
मौलादीनामनृतवादित्वे तमेव दण्डं—

स एवाह, (व्य०प०११।८)

मौलवृद्धादयश्चान्ये दण्डनीयाः पृथक् पृथक्।
विनेयाः प्रथमेनैव साहसेनानृते स्थिताः॥ इति।

आदिग्रहणेन गोपशाकुनिकादिवनगोचराणां ग्रहणम्। दण्डनीयाः=मिथ्यावादित्वेन दण्डयितुमर्हाः। मौलवृद्धादयः पृथक् पृथक् प्रथमेन साहसेन विनेयाः=दण्ड्या इत्यर्थः। यद्यपि सामन्तादीनां साक्ष्यपेक्षया दण्डाल्पत्वं वक्तुं युक्तं तथापि तेषां वाचनिकं दण्डाधिक्यमिति न कोऽपि दोषः। यद्यपि शाकुनिकादयो बहुधा पापरतत्वाल्लिङ्गप्रदर्शनोपयोगेनान्यथासिद्धा न साक्षात् सीमानिर्णये उपयुज्यन्ते। तथापि वृक्षादिलिङ्गप्रदर्शन एव मिथ्याभाषित्वसंभवात् तदभिप्रायेणैव दण्डविधानम्। लोभादिना भेदेनोक्तौ अनुक्तौ च साक्ष्यादीनां दण्डमाह—

कात्यायनः,

बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।

कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥ इति ।

एवमज्ञानादिना अनृतवचने साक्ष्यादीन् दण्डयित्वा पुनः सीमाविचारः प्रवर्त्तयितव्यः । तथा च—

स एवाह,

अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत् ।

कीर्त्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम् ॥

साक्ष्यादीनां सर्वेषामज्ञानोक्तौ भेदेनोक्तौ च पुनर्विचारणं लेख्यप्रमाणेन कर्त्तव्यम् । अत एव—

शङ्खलिखितावपि,

सामन्तविरोधे लेख्यप्रत्यय इति ।

यदा पुनः सामन्तप्रभृतयो ज्ञातारश्चिह्नानि च न सन्ति तदा राजा स्वेच्छया निर्णयं कुर्यात् । तथा च—

याज्ञवल्क्यः,

अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्त्तिता । (२।१५३)

ज्ञातॄणां सामन्तादीनां लिङ्गानां च वृक्षादीनामभावे राजैव स्वातन्त्र्येण सीमानं प्रवर्त्तयेत् ।

नारदोऽपि—(व्य०प०११।११)

यदा च न स्युर्ज्ञातारः सीमाया न च लक्षणम् ।

तदा राजा द्वयोः सीमामुन्नयेदिष्टतः स्वयम् ॥

इष्टतः=इच्छया सार्वविभक्तिकस्तसिः । ग्रामद्वयमध्यवर्त्तिनीं विवादास्पदीभूतां भुवं समं प्रविभज्यास्येयं भूरित्युभयोः समर्प्य तन्मध्ये सीमालिङ्गानि कुर्यात् । यदा तस्यां भूमावुपकारातिशयो दृश्यते तदा तत्रैव सा सकला भूर्योजनीया न तूभयत्र ।

तथा च मनुः—(८।२६५)

सीमायामविषह्यायां स्वयं राजैव धर्मवित् ।

प्रदिशेद्भूमिमेकेषामुपकारादिति स्थितिः ॥ इति ।

अविषह्यायां=ज्ञातृचिह्नरहितायाम् । प्रदिशेत्=प्रवेशयेदित्यर्थः । अयं च निर्णयो राज्ञा निर्णयान्तरवदव्यवहितोत्तरमेव न कर्त्तव्यः किन्तु सीमालिङ्गानि यदा आवरकाद्यभावात् स्फुटं दृश्यन्ते तदा कर्त्तव्यः । तथा च—

मनुः—(८।२४५)

सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः ।

ज्येष्ठे मासि नयेत् सीमां सुप्रकाशेषु सेतुषु ॥

द्वयोर्ग्रामाधिपयोर्विवादे सीमां प्रति समुत्पन्ने ज्येष्ठे मासीत्युपलक्षणम्। मासान्तरेऽपि सेतुषु वृतिषु सीमालिङ्गेषु व्यक्तेषु विवादाध्यासितां सीमां निर्णयेदित्यर्थः। ग्रामग्रहणं नगरादरुपलक्षणार्थम्। अत एव—

कात्यायनः,

सामन्ताभावेऽसामन्तैः कुर्यात् क्षेत्रादिनिर्णयम्।

ग्रामसीमादिषु तथा तद्वन्नगरदेशयोः॥ इति।

यदा पुनर्ग्रामादीनां सीमात्वेन परिकल्पिता नदी कदाचित् ग्रामान्तरं भित्त्वा प्रवहन्ती दक्षिणभागे स्थितां पूर्वं काञ्चिद् भूमिं वामभागनिविष्टां करोति तथा यत्रैकग्रामसम्बन्धिनी भूरन्यत्र राज्ञा योज्यते तत्र निर्णयोपायमाह—

बृहस्पतिः,

अन्यग्रामात् समाहृत्य दत्ताऽन्यस्य यदा मही।

महानद्याथवा राज्ञा कथं तत्र विचारणा॥

नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही।

अन्यथा न भवेल्लाभो नराणां राजदैविकः॥

क्षयोदयौ जीवनं च दैवराजवशान्नृणाम्।

तस्मात् सर्वेषु कार्येषु तत्कृतं न विचालयेत्॥

न च नदीकृतस्य दैवकृतत्वाभावः शङ्कनीयः। दैवशब्दस्य भाग्यवाचित्वान्नदीकृतमपि दैवकृतं भवत्येव। तथा चाह—

स एव,

ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी।

कुरुते दानहरणं भाग्याभाग्यवशान्नृणाम्॥

एकत्र कूलपातं तु भूमेरन्यत्र संस्थितिम्।

नदीतीरं प्रकुरुते तस्य तां न विचालयेत्॥

तस्य=नदीवशात्प्राप्तभूमिकस्य तां=प्राप्तां भूमिं न विचालयेत्=नान्यथा कुर्यात् पूर्वस्वामी। नापच्छिन्द्यादित्यर्थः। एतदनुप्तशस्यतीरविषयम्। उप्तशस्यविषये पुनः—

स एवाह,

क्षेत्रं सशस्यमुल्लङ्घ्य भूमिश्छिन्ना यदा भवेत्।

नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम्॥

तां=सशस्यां भूमिम्। उप्तशस्यफललाभपर्य्यन्तमेतत्। तत्फललाभानन्तरं तु न पूर्वस्वामी तां भूमिं लभेत इत्यवगन्तव्यम्। राजदत्तविषये क्वचित् प्रतिप्रसवमाह—

स एव,

> या राज्ञा क्रोधलोभेन छलन्यायेन वा हृता ।
> प्रदत्ताऽन्यस्य दुष्टेन न सा सिद्धिमवाप्नुयात् ॥

स्वत्वहेतुप्रतिग्रहादिलब्धक्षेत्रविषयमेतत् । स्वत्वहेतुप्रतिग्रहादि-प्रमाणाभावे पुनः—

स एवाह,

> प्रमाणरहितां भूमिं भुञ्जानो यस्य या हृता ।
> गुणाधिकाय वै दत्ता तस्य तां न विचालयेत् ॥

प्रमाणरहितां=स्वत्वहेतुप्रतिग्रहादिप्रमाणरहिताम् । गृहादिविषयकं निर्णयमाह—

स एव,

> निवेशकालादारभ्य गृहवार्यापणादिकम् ।
> येन यावद्यथा भुक्तं तस्य तं न विचालयेत् ॥

येन=स्वामिना यावत्=प्रचारभूम्यादियुक्तं यथा येन=पूर्वादिदिग-भिमुखद्वारादियुक्तत्वादिरूपेणोपभुक्तं तत्तस्य स्वामिनः सकाशान्न विचालयेत्=नान्यथा कुर्यादित्यर्थः । अत्र निवेशकालादारभ्येत्यभिधानान्मध्ये कृतायाः व्यवस्थाया निवर्त्यत्वं दर्शितम् । निवेशकालादारभ्य स्थिता-नि गवाक्षादिकानि प्रातिवेशिकाद्यनिष्टकारीण्यपि न निवर्त्यन्ते इत्युक्तं-

तेनैव,

> वातायनं प्रणाली च तथा निर्व्यूहवेदिका ।
> चतुःशालस्यन्दनिकां प्राङ्निविष्टां न चालयेत् ॥

वातायनं=गवाक्षः । प्रणाली=पाषाणादिनिर्मितजलनिर्गमोपायः । निर्व्यू-हो=द्वारनिर्गतकाष्ठविशेष इति कृत्यकल्पतरौ । निर्व्यूहो गृहकोण इति स्मृति चन्द्रिकायाम् । वेदिका=रथ्यादिप्रदेशसंस्कृतोत्तरा भूमिः । चतसृणां शाला-नां समाहारः चतुःशालम् । तस्मात् स्यन्दनिका=वृष्टिजलनिपातः । चतुः शालपदं तृणगृहस्योपलक्षणम् ।

कात्यायनोऽपि—

> मेखलाभ्रमनिष्काशगवाक्षान्नोपरोधयेत् ।
> प्रणालीं गृहवास्तुं च पीडयन्दण्डभाग्भवेत् ॥

मेखला=कुड्यमूलबन्धः । भ्रमः=जलनिर्गमः । निष्काशः=हर्म्यादिभित्ति-षु निर्गतं काष्ठादिनिर्मितमस्पृष्टभूमिकमुपवेशनस्थानम् । नोपरोधयेत्= न निरुन्ध्यात् । गृहवास्तुः=वासभूमिः । पूर्वमविद्यमानाः परानिष्टकारिण्य एते न कर्त्तव्या इत्यप्याह—

स एव,

निवेशसमयादूर्ध्वं नैते योज्याः कदाचन ।
दृष्टिपातं प्रणालीं च न कुर्य्यात्परवेश्मसु ॥

दृष्टिपातो=गवाक्षः । परवेश्मसु परवेश्माभिमुख्येन । परकुड्यनिकटे पुरीषोत्सर्गादिकमपि न कर्त्तव्यम् । तथा च—

बृहस्पतिः,

वर्चःस्थानं वह्निचयं गर्त्तोच्छिष्टाम्बुसेचनम् ।
अत्यारात्परकुड्यस्य न कर्त्तव्यं कथञ्चन ॥

वर्चःस्थानम्=पुरीषोत्सर्गस्थानम् । अत्यारादतिसमीपे । अरत्निद्वयसम्मितप्रदेश इत्यर्थः । तथा च—

कात्यायनः,

विण्मूत्रोदकसेकं च वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥

संसरणशब्दार्थनिर्वचनपुरःसरं तस्यानिरोद्धव्यत्वमाह—

बृहस्पतिः,

यान्त्यायान्ति जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥

तथा च सम्यगनिवारितं सरन्त्यस्मिन्निति संसरणनिर्वचनमित्यर्थः । चतुष्पथादयोऽपि न निरोद्धव्याः । तथा च—

नारदः, ( व्य०प०११।१५ )

अवस्करस्थलश्वभ्रश्रमस्यन्दनिकादिभिः ।
चतुष्पथसुरस्थानराजमार्गान्न रोधयेत् ॥

अवस्करः=पुरीषम् । गृहादिशोधनार्थं पांशुसमूह इति हरिहरादयः । स्थलं=वेदिका । श्वभ्रं=गर्त्तः । श्रमो=जलनिर्गममार्गः । स्यन्दनिका=पटलप्रान्तः । अन्यदपि आदिशब्देन तादृशं ग्राह्यम् । रथ्यामार्गो राजमार्गः न तु चतुष्पथ इति कल्पतरुः । न च चतुष्पथराजमार्गयोरभेद इति शङ्कनीयम् । तयोर्भेदात् । तथा च—

कात्यायनः,

सर्वे जनाः सदा येन प्रयान्ति स चतुष्पथः ।
अनिषिद्धा यथाकालं राजमार्गः स उच्यते ॥

अनिषिद्धा इत्यस्य पूर्वेणान्वयः । यत्र राजकीयैरकाले गमनं प्रतिषिध्यते स राजमार्ग इत्यर्थः । क्षेत्रस्य समीपे मध्ये वा यस्य सर्वदा मार्गोऽस्ति तत्र निरोधो न कर्त्तव्यः । तथा च—

शङ्खलिखितौ,

मार्गक्षेत्रे पथिविसर्गो राजमार्गे रथस्य परिवर्त्तनमिति ।

पथिविसर्गः=पथो विसर्गः । राजमार्गे यावता प्रदेशेन रथः परिवर्त्तते तावान् प्रदेशस्त्यक्तव्य इत्यर्थः । संसरणाद्यवरोधकारिणां तु दण्डो-माषिको दाप्यः । तदाह—

बृहस्पतिः,

यस्तत्र सङ्करं श्वभ्रं वृक्षारोपणमेव च ।
कामात्पुरीषं कुर्याच्च तस्य दण्डस्तु माषकः ॥

सङ्करोऽत्र शकटादिसङ्कीर्णता । वृक्षोपादानं लतादीनामप्युपलक्ष-कम् । माषोऽत्र ताम्रिकः । द्रव्यस्य अपराधानुसारेण कल्पयितुमु-चितत्वात् । ये तु राजमार्गे पुरीषोत्सर्गादिकं कुर्वते तेषामाधिको दण्डः । तथा च—

मनुः, ( ९।२८२ )

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥

आपद्गतादिषु तु दण्डस्तेनैवोक्तः—

आपद्गतस्तथा वृद्धा गर्भिणी बाल एव च ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥ ( ९।२८३ )

परिभाषणं=क्रूरभाषणम् । तडागादौ ततोऽप्यधिको दण्डः । तथा च

कात्यायनः,

तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत् पूर्वसाहसम् ॥

ये पुनर्मलिनवस्त्रप्रक्षालनादिना तीर्थानि दूषयन्ति तस्याप्ययमेव दण्ड इत्याह—

स एव,

दूषयेत्सिद्धतीर्थानि स्थापितानि महात्मभिः ।
पुण्यानि पावनीयानि प्राप्नुयात् पूर्वसाहसम् ॥

मर्यादाप्रभेदनादौ दण्डमाह—

याज्ञवल्क्यः, ( २।१५५ )

मर्य्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥

अनेकक्षेत्रव्यवच्छेदिका साधारणी भूमर्य्यादा तस्याः प्रकर्षेण भेद-ने सीमातिक्रमणे=सीमानमतिलङ्घ्य कर्षणे क्षेत्रस्य च भयादिप्रदर्शनेन हरणे यथाक्रमेणाधमोत्तममध्यमसाहसा दण्डा वेदितव्याः ।

यत्तु विष्णुवचनम्—

सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां कारयेदिति।

तत्र हि सीमामतिलङ्घ्य कर्षकः पुनः सीमाकरणं पुनस्तत्र कर्षणस्याकरणमित्येवं व्याख्येयम्। तेन न पूर्ववचनविरोधः। क्षेत्रग्रहणं गृहारामाद्युपलक्षणार्थम्। अज्ञानात् क्षेत्रादिहरणेऽधर्म एव। यथाह—

मनुः, (८।२६४)

गृहं तडागमारामं क्षेत्रं वा भीषया हरन्।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः॥

वृद्धमनुः—

स्थापितां चैव मर्यादामुभयोर्ग्रामयोस्तथा।
अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतो दमः॥

अपह्रियमाणक्षेत्रादिभूयस्त्वे उत्तमोऽपि दण्डः प्रयोक्तव्यः।

वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसम्॥

इति स्मरणात्।

यत्तु शङ्खलिखिताभ्यां सीमातिक्रमणे दण्डाधिक्यमुक्तम्—

सीमाव्यतिक्रमे त्वष्टसहस्रमिति।

तत् सम्पूर्णसीमातिक्रमविषयम्। सीमासन्धिषूत्पन्नवृक्षादिफलं नैव ग्राह्यम्। यथाह—

कात्यायनः,

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः।
फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत्॥

सामान्यं=साधारणम्। क्षेत्रयोः स्वामिषु क्षेत्रस्वामिषु। तथाचान्यतरेणैव तद्वृक्षीयफलादिग्रहणे तदनुरूपेण दण्ड्य इति ध्वनितम्। यदा पुनरन्यक्षेत्रे वृक्षादिरुत्पन्नोऽन्यक्षेत्रे शाखादिकाः प्रसृताः तत्र कः स्वामीत्याकाङ्क्षायां—

स एवाह,

अन्यक्षेत्रे तु जातानां शाखा यत्रान्यसंस्थिताः।
स्वामिनं तं विजानीयाद् यस्य क्षेत्रस्य संश्रिताः॥

संश्रिताः=प्ररूढाः। परक्षेत्रे प्रार्थनया क्रियमाणं सेतुकूपादिकं क्षेत्रस्वामिना नासेद्धव्यम्। तदाह—

याज्ञवल्क्यः, (२।१५६)

न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः॥

अल्पबाधः=अल्पपीडाकरः। कल्याणकारको बहूपकारकः। स्वल्पक्षेत्रः=स्वल्पक्षेत्रवर्त्ती। आभ्यां विशेषणाभ्यां यः सेतुः क्षेत्रमध्यवर्त्तितया बहुपीडाकरो नद्यादिसन्निहितक्षेत्रवर्त्तितया अल्पोपकारको वा तदा निषेद्धव्य इति दर्शितम्। तत्र—

नारदोऽपि,

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते।
महागुणोऽल्पदोषश्चेद्वृद्धिरिष्टा क्षये सति॥ (व्य०प०११।१७)

क्षये=अल्पक्षेत्रक्षय सत्यपि वृद्धिर्यत इष्टा अतो महागुणः। स्वक्षेत्रेऽपि उपकारकरोऽल्पदोषश्चेत्तदा न प्रतिषेद्धव्य इत्यर्थः। अन्यक्षेत्रे सेतुकूपादिप्रवर्त्तनं तत्स्वाम्याद्याज्ञालाभपूर्वकं कर्त्तव्यमित्याह—

याज्ञवल्क्यः, (२।१५७)

स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत्।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः॥

यस्तु क्षेत्रस्वामिनं तद्वंश्यं वा तदभावे राजानं वाऽप्रार्थ्य अर्थादानेन वा तत्क्षेत्रे सेत्वादिकं करोति स सेत्वाद्युत्पन्नफलोपभोगं इष्टमपि वा न लभते किन्तु तत्स्वाम्येव तल्लभते; तदभावे राजा। अतस्तदाज्ञां गृहीत्वा सेत्वादिकं कर्त्तव्यमित्यर्थः।

जीर्णानामन्यदीयानां सेत्वादीनामुद्धारोऽपि तत्स्वाम्याद्यनुज्ञां गृहीत्वा कार्य्य इत्याह—

नारदः, (व्य०प०११)

पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं तु यः।
सेतुं प्रवर्त्तयेत्कश्चिन्न स तत्फलभाग्भवेत्॥ (२०)
मृते तु स्वामिनि पुनस्तद्वंश्ये वापि मानवे।
राजानमामन्त्र्य ततः कुर्यात् सेतुप्रवर्त्तनम्॥ (२१)
अतोऽन्यथा क्लेशभाक्स्यात् मृगव्याधनिदर्शनात्।
मृगव्याधदृष्टान्तः स्फुटीकृतस्तेनैव—
इषवस्तस्य नश्यन्ति यो विद्धमनुविध्यति॥

तस्य=मृगव्याधस्य।

कात्यायनोऽपि—

अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः।
गृहोद्यानतडागानां संस्कर्त्ता लभते न तु॥
देयं स्वामिनि चायाते न निवेद्य नृपे यदि।
अथावेद्य प्रयुक्तस्तु तद्गतं लभते व्ययम्॥

नृपे अनावेद्य कृतं यत्तडागादिसंस्कारार्थं व्ययं तत्स्वामिनि ग्रामान्तराद्गागते तेन(१) देयमपि न प्राप्नोति । नृपे निवेद्य संस्करणे तदर्थं व्ययं प्राप्नोति फलं तु स्वाम्यनुमत्यलाभे न प्राप्नोतीत्यर्थः । परक्षेत्रमहमिदं कृषामीत्यूरीकृत्य पश्चान्न कृषति नाप्यन्येन कर्षयति तं प्रत्याह—

याज्ञवल्क्यः,

फालाहतमपि क्षेत्रं यो न कुर्यान्न कारयेत् ।
तं प्रदाप्याकृष्टफलं क्षेत्रमन्येन कारयेत् ॥ (२।१५८)

यद्यपि फालाहतं किञ्चिद्धलेन विदारितं सस्यग्बीजावापयोग्यं न भवति तथाप्यकृष्टक्षेत्रस्य फलं यावत्तत्रोत्पत्तियोग्यं सामन्तादिकल्पितं तावदसौ स्वामिने दापनीयः। तच्च पूर्वकर्षकादाच्छिद्य परेण कारयेत्।

व्यासोऽपि—

क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत् ।
स्वामिने स शदं दाप्यो राज्ञ दण्डं च तत्समम् ॥

शदं=क्षेत्रफलम् । तत्समं=तदनुरूपमित्यर्थः । स्वामिग्राह्यं क्षेत्रफलमपि कियदित्याकाङ्क्षायां—

स एवाह,

चिरावसन्ने दशमं कृष्यमाणे तथाष्टकम् ।
सुसंस्कृतेऽपि षष्ठं स्यात्परिकल्प्यं यथास्थिति ॥ इति ।

चिरावसन्ने=चिरकालमकृष्टे क्षेत्रेऽहमिदं कृषामीत्यूरीकृत्योपेक्षिते सामन्तैर्यथास्थिति=क्षेत्रस्थित्यनुसारेणैतावदत्रोत्पत्तुं योग्यमिति परिकल्प्य क्षेत्रस्वामिने तस्य दशमभागं, कृष्यमाणे अचिरावसन्ने स्वीकृत्योपेक्षिते तु अष्टमं भागं, सुसंस्कृते तूपेक्षिते षष्ठं भागं दाप्य इत्यर्थः ।

यस्तु क्षेत्रस्वामिनः सामर्थ्यवैकल्यादिनाऽर्धखिलावस्थां प्राप्ते क्षेत्रे स्वाम्यनिवारितः सन् स्वयमेव तत्कर्षणादिकं करोति तदा स क्षेत्रस्वामिने फलं न दापनीयः । किन्तु तस्य फलं स्वयमेव गृह्णीयादित्याह—

नारदः,

अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः ।
क्षेत्रं चेद्विकृषेत्कश्चिदश्नुवीत स तत्फलम् ॥ ( व्य०प०११।२३)

प्रेता=मृताः । नष्टाः=कुत्र गता इति चिरमपरिचिताः । क्षेत्रिकेषु=क्षेत्रस्वामिषु । तेन क्षेत्रस्वामिना तत्पुत्रादिना वा समागतेनैवंविधाय कर्षादिखिलभञ्जनार्थं व्ययं दत्त्वैव स्वीयं क्षेत्रं ग्राह्यमिति—

स एवाह, (व्य०प०११।२४)

---

(१) तच्छब्दोऽयं स्वामिपरामर्शकः ।

विकृष्यमाणे क्षेत्रे तु क्षेत्रिकः पुनराव्रजेत् ।
खिलोपचारं तत्सर्वं दत्त्वा क्षेत्रमवाप्नुयात् ॥
अर्द्धखिलाद्यवस्था कदा क्षेत्रस्य भवतीत्याकाङ्क्षायां—

स एवाह,

संवत्सरेणार्द्धखिलं खिलः स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसन्नं तु क्षेत्रं स्यादटवीसमम् ॥

कर्षणरहितं संवत्सरेणाऽर्द्धखिलं भवति यत्नसाध्यं भवति । वर्षत्रये तद्रहितं खिलं महायत्नसाध्यं भवति । वर्षपञ्चके तद्रहितं क्षेत्रमटवीतुल्यं स्यात् अतिदुष्कर्षं भवेदित्यर्थः ।

खिलभञ्जनार्थं व्ययदानासामर्थ्ये क्षेत्रस्वामिनः क्षेत्रफलस्याष्टमो भागः कर्षकेण वर्षाष्टकं स्वामिने देयः अवशिष्टं सर्वं स्वयमेव ग्राह्यम् । क्षेत्रं च वर्षाष्टकानन्तरं तत्स्वामिने देयम् । तथा च—

कात्यायनः,

अशक्तितो न दद्याच्च खिलार्थे यः कृतो व्ययः ।
तदष्टभागहीनं तु कर्षकः फलमाप्नुयात् ॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतः स्वामिने तु तत् । इति ।

इति सीमाविवादाख्यं व्यवहारपदम् । १२

## अथ दण्डपारुष्याख्यं व्यवहारपदम् । १३

तत्स्वरूपं दर्शयति नारदः—( व्य०प०१५।४ )

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥ इति ।

परगात्रेषु=स्थावरजङ्गमात्मकेषु । हस्तपादायुधैः=आदिशब्दात् पाषाणादीनां ग्रहणम् । अभिद्रोहो=हिंसनं दुःखोत्पादनम् । तथा भस्मादिभिरित्यादिग्रहणाद्रजःपङ्कपुरीषादीनां ग्रहणम् । उपघातः=संस्पर्शनरूपं मनोदुःखोत्पादनम् । तदुभयं दण्डपारुष्यमित्यर्थः । तस्य त्रैविध्यमाह—

स एव, ( व्य० प० १५।५।६ )

तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात् ।
अवगोरणनिःशङ्कपातनक्षतदर्शनैः ॥
हीनमध्योत्तमानां च द्रव्याणां समतिक्रमात् ।
त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधनम् ॥ इति ।

अवगोरणं=ताडनायुद्योगः । निःशङ्कपातनं=निःशङ्कप्रहरणम् । त्रीण्येव साहसानि=त्रिप्रकाराण्येव सहसाकृतानि दण्डपारुष्याणीत्यर्थः । अन्यानपि

भेदानाह—

परिशिष्टकारः,

दुःखं रक्तं व्रणं भङ्गं छेदनं भेदनं तथा ।
कुर्य्याद्यः प्राणिनां तद्धि दण्डपारुष्यमुच्यते ॥ इति ।

स्थावरजङ्गमप्राणिनां प्राण्यन्तरकृतनखादिना छेदनादिभवं दुःखं रक्तव्रणादिकं च दण्डपारुष्यमुच्यत इत्यर्थः ।

व्यासोऽपि—

भस्मादीनां प्रक्षिपणं ताडनं च करादिना ।
आवेष्टनं चांशुकाद्यैर्दण्डपारुष्यमुच्यते ॥ इति ।

आदिग्रहणाद्दुःखकरं कर्दमपांशुमलादिद्रव्यं गृह्यते । करादिनेत्यादिशब्देन पाषाणेष्टकायुधादि द्रव्यम् । अंशुकाद्यैरित्यादिशब्देन रज्जुशृङ्खलादि द्रष्टव्यम् ।

दण्डपारुष्यस्य पञ्चप्रकारा विधयो नारदेन दर्शिताः ।

( व्य०प०१५।श्लो०७-१४ )

विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि ।
पारुष्ये सति संरम्भादुत्पन्ने क्रुद्धयोर्द्वयोः ॥
स मान्यते यः क्षमते दण्डभाग्योऽतिवर्त्तते ।
पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् ॥
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ।
द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः ॥
स तयोर्दण्डमाप्नोति पूर्वो वा यदि वेतरः ।
पारुष्यदोषावृतयोर्युगपत्सम्प्रवृत्तयोः ॥
विशेषश्चेन्न लक्ष्येत विनयः स्यात्समस्तयोः ।
श्वपाकषण्डचाण्डालव्यङ्गेषु वधवृत्तिषु ॥
हस्तिपव्रात्यदासेषु गुर्वाचार्यनृपेषु च ।
मर्य्यादातिक्रमे सद्यो घात एवानुशासनम् ॥
यमेव ह्यतिवर्त्तेरन्नेते सन्तं जनं नृषु ।
मला ह्येते मनुष्याणां धनमेषां मलात्मकम् ॥
अतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेत् । इति ।

अयमर्थः । वाग्दण्डपारुष्ययोरुभयोरपि द्वयोः प्रवृत्तकलहयोर्मध्ये यः क्षमते न तस्य केवलं दण्डाभाव एव किन्तु पूज्यत्वमपि । तथा पूर्वं कलहे प्रवृत्तस्य दण्डगुरुत्वम् । कलहे च बद्धवैरानुसन्धातुरेव दण्डभाक्त्वम् । तथा तयोर्द्वयोरपराधविशेषापरिज्ञाने सम एव दण्डः ।

तथा श्वपचादिभिरार्याणामपराधे कृते सज्जना एव दण्डदापने अधिकारिणस्तेषामशक्यत्वे तान् राजा घातयेदेव नार्थं गृह्णीयादिति ।

यत्तु बृहस्पतिवचनम्—

आक्रुष्टस्तु समाक्रोशंस्ताडितः प्रतिताडयन् ।
हत्वापराधिनं चैव नापराधी भवेन्नरः ॥ इति ।

तत्पूर्वं प्रवृत्तस्य समो दण्डः पश्चात् प्रवृत्तस्य नेत्येवंपरं न तु दण्डाभावपरम् ।

दण्डपारुष्यस्वरूपसन्देहे निर्णायकमाह—

याज्ञवल्क्यः, ( २ २१२ )

असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च ।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयात् ॥ इति ।

यदा कश्चिद्रहस्यहमनेनाहत इति राज्ञे निवेदयति तदा चिन्हैर्व्रणादिभिस्तत्स्वरूपगतैर्लिङ्गैः युक्तिभिः=कारणप्रयोजनपर्य्यालोचनादिभिः आगमेन=जनप्रवादेन चशब्दाद्दिव्येन वा कूटचिह्नकृतसम्भावनाभयात् परीक्षा कार्य्येत्यर्थः ।

एवं निश्चिते साधनविशेषेण दण्डविशेषमाह—

स एव, ( २।२१३।२१४ )

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः स्मृतः ॥
(१)समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्द्धदमो मोहमदादिभिरदण्डनम् ॥ इति ।

अमेध्यानि=अश्रुश्लेष्मादीनि । पार्ष्णिः=पादस्य पश्चिमो भागः। निष्ठ्यूतं=मुखनिःसारितजलम् । मोहश्चित्तवैकल्यम् । मदो=मद्यपानजन्योऽवस्थाविशेषः । आदिशब्देन ग्रहावेशादीनां ग्रहणम् । पुरीषादिस्पर्शने त्वाह—

कात्यायनः,

छर्दिमूत्रपुरीषाद्यैः स्पर्शने स चतुर्गुणः ।
षड्गुणः कायमध्ये स्यान्मूर्ध्नि त्वष्टगुणः स्मृतः ॥ इति ।

ताड़नाय हस्तस्योद्गूरणे दण्डमाह—

---

(१) समेषु=सवर्णेषु एवंभूतः पूर्वोक्तो दण्डो ज्ञेयः । परभार्यासु चाविशेषेण । तथोत्तमेषु=स्वापेक्षयाधिकश्रुतवृत्तेषु पूर्वोक्ताद्दशपणात् विंशतिपणाच्च दण्डाद्द्विगुणो दण्डो वेदितव्यः । हीनेषु=स्वापेक्षया न्यूनश्रुतवृत्तादिषु पूर्वोक्तस्यार्धदमः पञ्चपणो दशपणश्च वेदितव्यः । इति मिताक्षरा ।

स एव,

उद्गूरणे तु हस्तस्य कार्यो द्वादशको दमः ।
स एव द्विगुणः प्रोक्तः पातने तु सजातिषु ॥ इति ।

बृहस्पतिरपि—

उद्यतेऽश्मशिलाकाष्ठे कर्त्तव्यः प्रथमो दमः । इति ।

विष्णुरपि—

हस्तेनोद्गूरयित्वा दश कार्षापणान् पादेन विंशतिं काष्ठेन प्रथमसाहसं शस्त्रेणोत्तममिति ।

दण्ड इत्यनुवर्त्तते । अधमः शस्त्रेणोत्तमस्य यदोद्गूरणं करोति तदासावुत्तमसाहसं दण्ड्य इत्यर्थः ।

बृहस्पतिरपि—

मध्यमः शस्त्रसम्पाते संयोज्यः क्षुब्धयोर्द्वयोः ।
कार्यः कृतानुरूपस्तु लग्ने घाते दमो बुधैः ॥
इष्टकोपलकाष्ठेन ताड़ने तु द्विमाषकः ।
द्विगुणः शोणितोद्भेदे दण्डः कार्यो मनीषिभिः ॥ इति ।

बिष्णुरपि—

शोणितेन विना दुःखमुत्पादयित्वा द्वात्रिंशत्पणान् सहशोणितेन चतुःषष्टिमिति ।

अत्र सर्वत्र दण्डभेदोऽपराधाल्पत्वमहत्त्वानुसारेण व्यवस्थापनीय इति ।

ताडनार्थं हस्तपादाद्युद्योगे दण्डविशेषमाह—

याज्ञवल्क्यः, ( २।२१६ )

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः ॥ इति ।

हस्ते पादे वा **ताडनार्थमुद्यते यथाक्रमं** दशविंशतिपणकौ दमौ । **परस्परवधार्थं** शस्त्र उद्यते सर्वेषां **वर्णानां** मध्यमसाहसो **दण्ड इत्यर्थः** ।

काष्ठादिभिस्ताडनेऽप्याह—

स एव ( २।२१८ )

शोणितेन विना दुःखं कुर्वन् काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणं दण्ड्यो द्विगुणो दर्शनेऽसृजः ॥ इति ।

**त्वङ्मांसास्थिभेदे** मनुराह—(८।२८४)

त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ।
मांसभेत्ता तु षण्निष्कान् प्रवासयस्त्वस्थिभेदकः ॥ इति ।

मांसभेत्ता=व्रणकर्त्ता ।

कात्यायनोऽपि—

कर्णोष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ॥ इति ।

पादाद्याघर्षणादौ त्वाह याज्ञवल्क्यः—(२।२१७)

पादकेशांशुककरोल्लुञ्चनेषु पणान्दश ।
(१)पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥

पादकेशवस्त्रकराणामन्यतमं गृहीत्वा यः कर्षयत्यसौ दशपणान् दण्ड्यः । यो वस्त्रेणावेष्ट्य गाढं सम्पीड्याकृष्य च पादेन घट्टयति स शतं पणान् दण्ड्य इत्यर्थः । करादिभङ्गे त्वाह—

स एव, (२।२१९–२२१)

करपाददतो भङ्गे छेदने कर्णनासयोः ।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥
चेष्टाभोजनवाग्रोधे नेत्रादिप्रतिभेदने ।
कन्धराबाहुसक्थ्नां च भङ्गे मध्यमसाहसः ॥
एकं घ्नतां बहूनां च यथोक्ताद्द्विगुणो दमः । इति ।

करपाददन्तानां प्रत्येकं भेदे कर्णनासिकयोश्च छेदने मृतकल्पहते च मध्यमसाहसो दण्डः । गमनभोजनभाषणनिरोधने नेत्रादिप्रतिभेदने च ग्रीवाबाहूरुभङ्गे च मध्यमसाहस एव दण्डः । मिलित्वैकस्याङ्गभङ्गं कुर्वतां बहूनां यस्मिन्नपराधे यो दण्ड उक्तस्तत्र तत्र तस्माद्द्विगुणो दण्डः प्रत्येकं मन्तव्य इत्यर्थः ।

कात्यायनोऽपि—

मनुष्याणां पशूनां च दुःखाय प्रहते सति ।
यथा यथा महद्दुःखं दण्डं कुर्यात्तथा तथा ॥ इति ।

प्रातिलोम्यापराधे दण्डमाह याज्ञवल्क्यः—(२।२१५)

विप्रपीडाकरं छेद्यमङ्गमब्राह्मणस्य तु ।
उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्द्धिकः ॥ इति ।

अब्राह्मणस्य=क्षत्रियादेः । संस्पर्शे=शस्त्रादिस्पर्शे । तदर्द्धिकः=प्रथमसाहसादर्द्धदण्ड इत्यर्थः । ब्राह्मणवधार्थमुद्यते शस्त्रे प्रथमसाहसाभिधानं न शूद्रविषयम् । अत एव—

---

(१) पीडा च आकर्षश्च अंशुकावेष्टश्च पादाध्यासश्च पीडाकर्षांशुकावेष्टपादाध्यासं तस्मिन् समुच्चिते शतं दण्ड इति मिताक्षरा ।

मनुः,(८।२७९।२८०)

येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥
पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन प्रहरन् कोपात्पादच्छेदनमर्हति ॥ इति ।

अत्र क्षत्रियवैश्ययोः पीडाकारिणोऽपि शूद्रस्यायमेव दण्डः । श्रेयांसमिति सामान्येनोपादानात् । समानन्यायत्वाच्च । क्षत्रियपीडाकारिणो वैश्यस्य तु याज्ञवल्क्यप्रतिपादित एव दण्डः । भस्मादिसंस्पर्शे पुनः क्षत्रियवैश्ययोः—

प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः ।
इति वक्ष्यमाणवाक्पारुष्यन्यायेन कल्प्यः ।

नारदोऽपि—(व्य०प०१५श्लो०२५।३१)

येनाङ्गेनावरो वर्णो ब्राह्मणस्यापराध्नुयात् ।
तदङ्गं तस्य छेत्तव्यमेवं बुद्धिमवाप्नुयात् ॥
राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्मतिः ।
शूल्यं तमग्नौ विपचेद्ब्रह्महत्याशतानि च ॥ इति ।

कृतागसि=कृतापराधे । शूलमारोप्य यत्संस्क्रियेत तच्छूल्यम् । प्रातिलोम्यानुलोम्यविषये वाक्पारुष्ये उक्तान्दण्डानत्राप्यतिदिशति—

कात्यायनः,

वाक्पारुष्ये यथैवोक्ताः प्रातिलोम्यानुलोमतः ।
तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रमम् ॥ इति ।

शूद्रस्य तत्राप्यङ्गच्छेद एव । तथा चाहतुः—

मनुनारदौ, (म०८।२८२।२८३)

अवनिष्ठीवतो दर्पात् द्वावोष्ठौ छेदयेन्नृपः । (व्य०प०१५)
अवमूत्रयतो मेढ्रमवशर्द्धयतो गुदम् ॥ (२७)
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयोर्दाढिकायां च ग्रीवायां वृषणेषु च ॥ इति । (२८)

ताडने दुःसहव्रणाद्युत्पत्तौ त्वाह—

कात्यायनः,

देहेन्द्रियविनाशे तु यथा दण्डं प्रकल्पयेत् ।
तथा तुष्टिकरं देयं समुत्थानं च पण्डितैः ॥ इति ।

तुष्टिकरं=व्रणितुष्टिकरम् । समुत्थानं=व्रणारोपणम् । तन्निमित्तकश्च व्ययः व्रणगौरवाद्यनुसारेण पण्डितैरौषधार्थं पथ्यार्थं च कल्पित आ·

व्रणशोषणं देयः ।

समुत्थानव्ययं चासौ दद्यादाव्रणरोपणम् ।

इति तेनैवोक्तत्वात् । यत्कलहकालेऽपहृतं तत्तत्स्वामिने दातव्यमित्याह—

बृहस्पतिः,

अङ्गावपीडने चैव भेदने छेदने तथा ।
समुत्थानव्ययं दाप्यः कलहापहृतं च यत् ॥ इति ।

याज्ञवल्क्योऽपि—

कलहापहृतं देयं दण्डश्च द्विगुणस्ततः । (२।२२१)
दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् ।
दाप्यो दण्डं च यो यस्मिन् कलहे समुदाहृतः॥ इति। (२२२)

ग्राम्यपश्वभिद्रोहे दण्डमाह—

विष्णुः,

ग्राम्यपशुघाती कार्षापणं दण्ड्यः पशुस्वामिने तु तन्मूल्यं दद्यादिति ।

मूल्यदानं मृतपशुविषयम् । मरणाभावे तु समुत्थानव्ययं दद्यात् । तथा च—

स एव,

सर्वे पुरुषपीडाकराः समुत्थानव्ययं दाप्या ग्राम्यपशुपीडाकराश्चेति ।

बहुभिरेकस्य हनने दण्डमाह—

स एव,

एकं बहूनां घ्नतां प्रत्येकश उक्तो दण्डो द्विगुण इति ।

सम्भूय ताडन उच्चैः क्रोशन्तं ताड्यमानमुपेक्षमाणानां तत्समीपवर्त्तिनामपि तमेव दण्डं—

स एवाह,

द्विगुण उक्तः क्रोशन्तमनभिधावतां तत्समीपवर्त्तिनां सतां चेति ।

क्वचिदशक्यप्रतीकारविषये प्राणिघातनिबन्धनो दण्डो नेत्याह—

मनुः, ( ८।२९१।२९२ )

छिन्ने नस्ये युगे भग्ने तिर्य्यक्प्रतिमुखागते ।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥
छेदने चैव यन्त्राणां योक्ररश्म्योस्तथैव च ।
आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीत् ॥ इति ।

छिन्ने नस्ये=बलीवर्दादेर्नासिकास्थरज्ज्वादौ त्रुटिते । युगे भग्ने शकटादियुगकाष्ठे भग्ने । यन्त्राणि शकटादिकाष्ठानां बन्धनानि रज्ज्वादीनि ।

शक्यप्रतीकारे तु प्रेक्षकस्याह स एव—

यत्रापवर्त्तते युग्यं वैगुण्यात्प्राजकस्य तु ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम् ॥ इति । (८।२९३)

प्राजकः=शकटादिनेता । द्विशतग्रहणं तत्प्राणिहिंसायां विशेषविहित-दण्डोपलक्षणार्थमिति स्मृतिचन्द्रिकायाम् । यत्र समर्थप्राजकदोषेण प्राणि-हिंसा न तत्र स्वामिनो दण्डः किन्तु प्राजकस्येत्याह—

स एव, (८।२९४)

प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति । इति ।

आप्तः=समर्थ इत्यर्थः । स्थावरप्राणिपीडायां—

स एवाह, (८।२९५)

वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा ॥ इति ।

वनस्पतिग्रहणं स्थावरप्राणिमात्रोपलक्षणम् । उपभोगो यथा यथेत्यनेन येषामाम्रादीनां फलमुपभुज्यते तेषां हिंसायामधिको दण्डः । येषां च-म्पकादीनां पुष्पमुपभुज्यते तेषां ततो न्यून इति दर्शितम् । एतदेव वि-वरणपूर्वकं—

विष्णुराह,

फलोपभोगद्रुमच्छेदी तूत्तमसाहसं पुष्पोपभोगच्छेदी मध्यमसाहसं वल्लीगुल्मलताच्छेदी कार्षापणशतं तृणच्छेद्येकं सर्वे तत्स्वामिनां तदु-त्पात्तिमिति ।

दण्ड इत्यनुवर्त्तते । सर्वे=फलोपभोगद्रुमच्छेद्यादयः तत्स्वामिनां=छिन्न-द्रुमादिस्वामिनां तदुत्पत्तिं फलभोगद्रुमाद्युत्पत्तिं पुनः प्रतिरोपितभोगकाल-पर्य्याप्तां दद्युरिति शेषः । पश्वभिद्रोहे दण्डमाह—

याज्ञवल्क्यः, (२।२२५।२२६)

दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनां तु द्विपणप्रभृतिः क्रमात् ॥
लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥ इति ।

क्षुद्रपशूनाम्=अजाविप्रभृतीनाम् । दुःखे=ताडनेन दुःखोत्पादने, शोणितो-त्पादे=रक्तस्रावणे । शाखाशब्देनात्र शृङ्गादिकं गृह्यते । अङ्गानि=करचरणादीनि तेषां छेदने च यथाक्रमं द्विपणप्रभृतिर्दण्डः । द्विपणश्चतुष्पणः षट्पण इत्येवंरूपः । तेषां लिङ्गच्छेदने मारणे च मध्यमसाहसो दण्डः स्वामिने मू-ल्यदानं च । महापशूनाम्=गोगजवाज्यादीनाम् एतेषु स्थानेषु पूर्वोक्ताद्दण्डा-द्विगुणो दण्डो वेदितव्य इत्यर्थः ।

विष्णुरपि,

पशूनां पुंस्त्वोपघातीति ।

कार्षापणशतमत्र प्रकृतम् ।

स एव,

गजाश्वोष्ट्रगोघाती त्वेककरपादः कार्यो विमांसविक्रयी ग्रामपशुघाती च कार्षापणशतं दण्ड्यः। पशुस्वामिने च तन्मूल्यं दद्यात्। आरण्यपशुघाती पञ्चाशत् कार्षापणान्। पक्षिघाती मत्स्यघाती च दश कार्षापणान् कीटोपघाती कार्षापणमिति ।

विमांसं=शृगालादिमांसमिति कल्पतरौ ।

कात्यायनोऽपि—

द्विपणद्वादशपणा वधे तु मृगपक्षिणाम् ।
सर्पमार्जारनकुलशूकराश्ववधे नृणाम् ॥
गोकुमारीदेवपशुमुक्षाणं वृषभं तथा ।
वाहयन् साहसं पूर्वं प्राप्नुयादुत्तमं वधे ॥ इति ।

परकुड्याभिघाते परगृहे कण्टकादिप्रक्षेपे च दण्डमाह—

याज्ञवल्क्यः, ( २।२२३।२२४ )

अभिघाते तथा छेदे भेदे कुड्यावपातने ।
पणान्दाप्यः पञ्चदश विंशतिं तद्व्ययं तथा ॥
दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरं तथा ।
षोडशाद्यः पणान्दण्ड्यो द्वितीयो मध्यमं दमम् ॥ इति ।

मुद्गरादिना कुड्यस्याभिघाते विदारणे द्वैधीकरणे च यथाक्रमं पञ्चपणो दशपणो विंशतिपणो दण्डः। कुड्यस्यावपातने तु समुच्चिता एते त्रयो दण्डा ग्राह्याः। कुड्यसम्पादनार्थं धनमपि तत्स्वामिने दद्यात्। परगृहे कण्टकादिप्रक्षेपणे षोडशपणो दण्डः। विषभुजङ्गादिप्रक्षेपणे मध्यमसाहसो दण्ड इत्यर्थः। स्थावराभिद्रोहे दण्डमाह—

स एव, (२।२२७।२२८।२२९)

प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे ।
उपजीव्यद्रुमाणां तु विंशतेर्द्विगुणो दमः ॥
चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥
गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ।
पूर्वस्मृतादर्द्धदण्डः स्थानेषूक्तेषु कर्त्तने ॥ इति ।

प्ररोहिशाखिनां=वटादीनां शाखाच्छेदने स्कन्धच्छेदने समूलवृक्षच्छेदने

च यथाक्रमं विंशतिपणदण्डादारभ्य पूर्वस्मादुत्तरोत्तरो द्विगुणो दण्डः। विंशतिपणश्चत्वारिंशत्पणोऽशीतिपण इत्येवंरूपः। अप्ररोहिशाखिनामाम्रादीनाम् उपजीव्यद्रुमाणां पूर्वोक्तेषु स्थानेषु छेदने पूर्वोक्ता एव दण्डाः। चैत्यादिस्थानेषूत्पन्नानां वृक्षाणां शाखादिच्छेदने पूर्वोक्ताद्दण्डात् द्विगुणः। विश्रुते चाश्वत्थपलाशादिके द्विगुणो दण्डः। गुल्माः=मालत्यादयः गुच्छाः= कुरण्टकादयः क्षुपाः=करवीरादयः लताः=द्राक्षातिमुक्तादयः प्रतानाः=काण्ड प्ररोहरहिताः सारिवादयः ओषध्यः=फलपाकान्ताः शालिप्रभृतयः वीरुधः= गुडूचीप्रभृतयः। एतेषां पूर्वोक्तेषु स्थानेषु कर्त्तने छेदने पूर्वोक्ताद्दण्डादर्द्धदण्डो वेदितव्य इत्यर्थः।

भार्य्यादीनामपराधे रज्जुवेणुदलाभ्यामधमाङ्गे ताडयेत्। अन्येनोत्तमाङ्गे च ताडयन् दण्ड्य इत्याह—

यमः,

भार्या पुत्रश्च दासश्च दासी शिष्यश्च पञ्चमः।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा॥
अधस्तात्तु प्रहर्त्तव्यं नोत्तमाङ्गे कथञ्चन।
अतोऽन्यथा प्रवृत्तस्तु यथोक्तं दण्डमर्हति॥ इति।

मनुरपि (८।२९९।३००)

भार्या पुत्रश्च शिष्यश्च दासो भ्राताऽथ सोदरः।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम्॥ इति।

शिष्यानुवृत्तावापस्तम्बोऽपि—

अपराधेषु चैनं सततमुपालभेत अतित्रास उपवास उदकोपस्पर्शनमिति दण्डा यथा तन्मात्रनिवृत्तिरिति।

अपराधनिवृत्तिपर्य्यन्तमपराधानुरूपं दण्डपातनं कर्त्तव्यमित्यर्थः।

यत्र तु आत्मनः कश्चिद्द्वेषात्ताडनादि चिह्नं विधाय परमभिद्रवति तत्र साक्ष्यादिभिर्दिव्येन वा परीक्षणं कर्त्तव्यमित्याहतुः—

नारदबृहस्पती,

कश्चित् कृत्वात्मनश्चिह्नं द्वेषात्परमभिद्रवेत्।
हेत्वर्थगतिसामर्थ्यैस्तत्र युक्तं परीक्षणम्॥ इति।(ना०व्य०प०१।१७६)

याज्ञवल्क्योऽपि (२।२१२)

असाक्षिकहते चिह्नै युक्तिभिश्चागमेन च।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयात्॥ इति।

कात्यायनोऽपि—

हेत्वादिभिर्न पश्येच्चेद्दण्डपारुष्यकारणम् ।
तदा साक्षिकृतं तत्र दिव्यं न विनियोजयेत् ॥ इति ।

इति दण्डपारुष्याख्यं व्यवहारपदम् । १३

## अथ वाक्पारुष्याख्यं व्यवहारपदम् । १४

तस्य च स्वरूपमाह नारदः–(व्य०प०१५।१)

देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥ इति ।

आक्रोशः=आक्षेपः भर्त्सनमिति यावत् । कलहप्रियाः गौडा इति देशाक्रोशः । अत्यन्तलोलुपा ब्राह्मणा इति जात्याक्रोशः । क्रूरचरिता वैश्वामित्रा इति कुलाक्षेपः । न्यङ्गमवद्यम् । तदुभययुक्तं यदुद्वेगजननार्थं वाक्यं तद्वाक्पारुष्यमित्यर्थः । तस्य त्रैविध्यमाह—

स एव, (व्य०प०१५।२)

निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम् ।
गौरवानुक्रमात्तस्य दण्डोऽपि स्यात् क्रमाद्गुरुः ॥ इति ।

निष्ठुरादीनां स्वरूपमाह स एव, (व्य०प०१५।३)

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् ।
पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मनीषिणः ॥ इति ।

धिङ्मूर्ख ! जाल्म ! इत्यादि साक्षेपं भाषणं निष्ठुरम् । न्यङ्गसंयुतम्=अवद्यभगिन्यादिगमनसंयुतम् अश्लीलम् । पतनीयैः=सुरापानादिभिरुपाक्रोशैः तीव्रं वाक्पारुष्यमित्यर्थः ।

कात्यायनोऽपि—

यत्त्वसत्संश्रितैरङ्गैः परमाक्षिपति कश्चित् ।
अभूतैर्वाथ भूतैर्वा निष्ठुरा वाक् स्मृता तु सा ॥
न्यग्भावकरणं वाचा क्रोधात्तु कुरुते यदा ।
वृत्तदेशकुलानां तु अश्लीला सा बुधैः स्मृता ॥
महापातकयोक्त्री च रागद्वेषकरी च या ।
जातिभ्रंशकरी चाथ तीव्रा सा प्रथिता तु वाक् ॥ इति ।

कल्पतरौ न्यङ्गावगूरणमिति पठित्वा निकृष्टाङ्गप्रकाशनेन तिरस्करणमिति व्याख्यातम् । न्यग्भावकरणमिति तु माधवादिसंमतः पाठः ।

प्रथममध्यमोत्तमभेदेन त्रैविध्यमाह—

बृहस्पतिः,

देशग्रामकुलादीनां क्षेपः पापेन योजनम् ।
द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥
भगिनीमातृसम्बन्धमुपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनम् ॥ इति ।

द्रव्यं विनेत्यत्र द्रव्यशब्दोऽभिधेयपरः । तेनोच्यमानार्थव्यतिरेकेणैवंविधमभिधानं वाक्पारुष्यमित्यर्थ इति कल्पतरौ । द्रव्यं विना द्रव्यवैशिष्ट्यं विनेति मदनरत्ने । अभिघट्टनम्=उत्पाटनम् । निष्ठुराक्रोशे दण्डमाह—

याज्ञवल्क्यः, (२।२०४)

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम् ।
क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदशान् ॥ इति ।

अन्यथास्तोत्रं=निन्दास्तुतिः । न्यूनाङ्गाः कुष्ठ्यादयः । अर्द्धत्रयोदशान्=अर्द्धाधिकद्वादशपणानित्यर्थः । एतत् सवर्णविषयम् । अत एव—

बृहस्पतिः,

समजातिगुणानां तु वाक्पारुष्ये परस्परम् ।
विनयो विहितः शास्त्रे पणा अर्द्धत्रयोदशाः ॥ इति ।

विष्णुरपि—

समवर्णाक्रोशने द्वादशपणान्दण्ड्य इति ।

परस्परमिति शेषः ।

मनुनारदावपि—(म०८।२६९।ना०व्य०प०१५।१७)

समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे ।
वादेष्ववचनीयेषु तदेव द्विगुणं भवेत् ॥ इति ।

शङ्खलिखितावपि—

समवर्णव्यतिक्रमे द्वादशपणा यथारूपविशिष्टाक्षेपे ह्यविशिष्टस्य चतुर्विंशतिरविशिष्टस्यातिक्रमे च विशिष्टस्य ततोऽर्द्धमिति ।

अत्र द्वादशसार्धद्वादशयोरुत्कृष्टानुत्कृष्टत्वेन व्यवस्था द्रष्टव्या ।

कात्यायनोऽपि—

योऽगुणान् कीर्त्तयेत् क्रोधान्निर्गुणे वा गुणज्ञताम् ।
अन्यसंज्ञानियोजी च वाग्दुष्टं तं नरं विदुः ॥ इति ।

नारदोऽपि—

दुष्टस्यैव तु यो दोषान् कीर्त्तयेत् क्रोधकारणात् ।
अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः ॥ इति । (न लब्धम्)

अत्र क्रोधकारणादित्यनेन दुष्टपरित्यागार्थं दोषकीर्त्तने न दोष इति सूचितम्। अत एवोक्तम्—

कात्यायनेन,

यच्च स्यात्परिहासार्थं पतितत्वेन कीर्त्तितम्।
वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेत्॥ इति।

वचनात्=दोषकीर्त्तनात्। यत्राभियोगादौ पातित्यादिकं साधयेत्तत्रापि वचनाद्दोषो न स्यादिति यत्र विभावयेदित्यस्यार्थ उक्तः स्मृतिचन्द्रिकायाम्। अत्रापि दण्डपारुष्यन्यायेन युगपत् प्रवृत्तयोर्दण्डतुल्यत्वम्। अयुगपत्प्रवृत्तयोः पूर्वप्रवृत्तस्य दण्डाधिक्यमिति द्रष्टव्यम्। जातिगुणकृते विशेषे दण्डवैषम्यमाह—

बृहस्पतिः,

समानयोः समो दण्डो न्यूनस्य द्विगुणो दमः।
उत्तमस्यार्धिकः प्रोक्तो वाक्पारुष्ये परस्परम्॥ इति।

हीनस्योत्तमाक्षेपे द्विगुणः। उत्तमस्य हीनाक्षेपेऽर्द्धपरिमितो दण्ड इत्यर्थः।

याज्ञवल्क्योऽपि—(२।२०६)

अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च।
दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः॥ इति।

अर्द्धः=सार्द्धद्वादशपणात्मक इत्यर्थः। पूर्ववाक्ये "पञ्चविंशतिकं दमम्" इति पञ्चविंशतेः प्रकृतत्वात्। वर्णा=ब्राह्मणादयः। जातयो=मूर्द्धावसिक्ताद्याः। ते च ते उत्तराधराश्च वर्णजात्युत्तराधरास्तैरन्योन्याक्षेपे क्रियमाणे दण्डस्य प्रणयनम् ऊहनं ज्ञातव्यम्। उत्तराधरभावमालोच्य दण्डः कल्पनीय इत्यर्थः। तमेव कल्पनीयं दण्डं प्रदर्शयति—

मनुः, (८।२६८।२६९)

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति।
वैश्योऽप्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति॥
विप्रः पञ्चाशतं दण्ड्यः क्षत्रियस्याभिशंसने।
वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः॥ इति।

बृहस्पतिरपि—

क्षिपन्विप्रादिकं दद्यात् पञ्चाशत्पणिकं दमम्। इति।

शङ्खलिखितावपि—

आक्रोशे ब्राह्मणस्य क्षत्रियः पणशतं दण्ड्यः शतार्द्धं वैश्यस्य पञ्चविंशतिं शूद्रस्येति।

बृहस्पतिरपि—

विप्रे शतार्द्धं दण्डस्तु क्षत्रियस्याभिशंसने ।
विशस्तथार्द्धं पञ्चाशच्छूद्रस्यार्द्धत्रयोदश ॥
सच्छूद्रस्यायमुदितो विनयोऽनपराधिनः ।
गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात् ॥
वैश्यस्तु क्षत्रियाक्रोशे दण्डनीयः शतं भवेत् ।
तदर्द्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति ॥
शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिको दमः ।
वैश्यस्य चैतद्विगुणः शास्त्रविद्भिरुदाहृतः ॥
वैश्यमाक्षारयन् शूद्रो दाप्यः स्यात् प्रथमं दमम् ।
क्षत्रियं मध्यमं चैव विप्रमुत्तमसाहसम् ॥ इति ।

जिह्वाच्छेदनरूपोऽत्रोत्तमसाहसो द्रष्टव्यः । तथा च—

स एव,

धर्म्मोपदेशकर्त्ता च वेदोदाहरणान्वितः ।
ओङ्काशकस्तु विप्राणां जिह्वाच्छेदेन दण्ड्यते ॥ इति ।

शूद्र इत्यनुषङ्गः ।

आपस्तम्बोऽपि—

जिह्वाच्छेदनं शूद्रस्यार्थं धार्म्मिकमाक्रोशत इति ।

गौतमोऽपि—

शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गं मोच्यो येनोपहन्यादिति ।

अभिसन्धाय=बुद्धिपूर्वं वाचातिक्रम्य अभिहत्य=उग्रेण दण्डेन ताडयित्वा । अङ्गं मोच्यः तेनाङ्गेन वियोजनीय इत्यर्थः । गुर्वाद्याक्रोशे त्वाहतुः—

शङ्खलिखितौ,

तथाऽधिकृतान् विप्रान् गुरूंश्च निर्वासनं मुण्डनं ताडनं वा गोमयानुलेपनं खरारोहणं दर्पहरणं वाग्दण्डो वेति ।

दण्डः=कार्षापणशतरूपः । अत एव—

विष्णुः—

गुरूनाक्षारयन् कार्षापणशतमिति ।

पुत्रादिभिर्मात्रादीनामाक्रोशे दण्डमाह—

मनुः, ( ८।२७५ )

मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् ।
आक्षारयन् शतं दाप्यः पन्थानं चाददद्गुरोः ॥ इति

भ्रातरं=ज्येष्ठभ्रातरम्। एतच्च सापराधेषु मात्रादिषु निरपराधायां जायायामिति मिताक्षरायामभाणि। श्वश्र्वाद्यधिक्षेपे दण्डमाह—

बृहस्पतिः,

क्षिपन् श्वश्र्वादिकं दद्यात् पञ्चाशत्पणिकं दमम्। इति।

बाहुग्रीवादिच्छेदननिष्ठुरभाषाभिभाषणे दण्डमाह–

याज्ञवल्क्यः, (२।२०८)

बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः।
शत्यस्तदर्द्धिकः पादनासाकर्णकरादिषु॥ इति।

बाह्वादिविनाशे वाचिके=करिष्यामीति वाचा प्रतिपादिते शत्यः=शतपरिमितो दण्डः। पादादिभङ्गं करिष्यामीत्याक्षेपे पञ्चाशत्परिमितो दण्ड इत्यर्थः। एवंवादिनोऽशक्तस्य दशपणा दण्डनीया इत्याह—

स एव, (२।२०२)

अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दश। इति।

यः पुनः शक्तोऽशक्तस्य बाह्वादिभङ्गाक्षेपं करोति न केवलं स दण्ड्यः किन्तु अशक्तक्षमार्थं प्रतिभुवमपि दापनीय इत्याह—

स एव, (२।२०९)

तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु। इति।

अश्लीलभाषणे दण्डमाह स एव—(२।२०५)

अभिगन्तास्मि भगिनीं मातरं वा तवेति ह।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम्॥ इति।

तीव्राक्रोशे दण्डमाह–स एव—(२।२१०)

पतनीयकृते क्षेपे दण्ड उत्तमसाहसः।
उपपातकयुक्ते तु दाप्यः प्रथमसाहसम्॥ इति।

पतनीयैः पातित्यहेतुभिर्ब्रह्महत्यादिभिः। उपपातकानि=गोवधादीनि।

मनुरपि—(८।२७६।२७७)

ब्राह्मणक्षत्रियाभ्यां तु दण्डः कार्यो विजानता।
ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेष मध्यमः॥
विट्शूद्रयोस्त्वेवमेव स्वजातिं प्रति तत्त्वतः।
छेदवर्जं प्रणयनं दण्डस्येति विनिश्चयः॥ इति।

व्यासोऽपि—

पापोपपातवक्तारो महापातकशंसकाः।
आद्यमध्योत्तमान्दण्डान्दद्युस्ते ते यथाक्रमम्॥ इति।

विष्णुरपि—

परस्परं पतनीयाक्षेपे कृते तूत्तमसाहसमुपपातकयुक्ते तु मध्यमम् त्रैविद्यवृद्धानां क्षेपे जातिपूगानां च, ग्रामदेशयोः प्रथममिति।

देशाद्याक्रोशे दण्डमाह बृहस्पतिः—

देशादिकं क्षिपन्दाप्यः पणानर्द्धत्रयोदश।
पापेन योजयन् दर्पाद्दाप्यः प्रथमसाहसम्॥
एष दण्डः समाख्यातः पुरुषापेक्षया मया।
समन्यूनाधिकत्वेन कल्पनीयो मनीषिभिः॥ इति।

याज्ञवल्क्योऽपि—( २।२१० )

मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः। इति।

राज्ञ आक्रोशे दण्डमाह नारदः—( व्य०प०१५।३० )

अवक्रुश्य च राजानं वर्त्मनि स्वे व्यवस्थितम्।
जिह्वाच्छेदाद्भवेच्छुद्धिः सर्वस्वहरणेन वा॥ इति।

याज्ञवल्क्योऽपि ( २।३०२ )

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकं तथा।
तन्मन्त्रस्य च भेत्तारं छित्वा जिह्वां प्रवासयेत्॥ इति।

सत्यदोषाभिधानेऽपि वाक्पारुष्यदण्डोऽस्त्येव। तथा च—
नारदः, ( व्य०प०१५।२१ )

पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत्॥ इति।

मनुनारदावपि—(म०८।२७४।ना०व्य०प०१५।१८ )

काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम्।
तथ्येनापि ब्रुवन्दाप्यो दण्डं कार्षापणावरम्॥ इति।

विष्णुरपि—

काणखञ्जादीनां तथ्यवाच्यपि कार्षापणद्वयमिति।

एतच्च दुर्वृत्तविषयमिति माधवीये विद्यारण्यश्रीपादैरभ्यधायि। मिथ्यावदनशीलानां दण्डमाह—

कात्यायनः,

अनृताख्यानशीलानां जिह्वाच्छेदो विशोधनम्। इति।

हारीतोऽपि—

मिथ्यादूषिणां मेलकानां च राजा जिह्वां छिन्द्याद्दण्डयेद्वेति।

मेलको=भक्षकः। कस्यचिद्वाक्पारुष्यकृतोऽर्द्धदण्डमाहोशना—

मोहात्प्रमादात्संहर्षात् प्रीत्या वोक्तं मयेति यः।
नाहमेवं पुनर्वक्ष्ये दण्डार्धं तस्य कल्पयेत्॥ इति।

वक्ष्ये इत्यत्र वक्तीतिशेषः।

इति वाक्पारुष्याख्यं व्यवहारपदम्। १४

## १५ अथ स्तेयाख्यं व्यवहारपदम् ।

तल्लक्षणमाह मनुः—(८।३३२)

स्यात्साहसं त्वन्वयवत् प्रसभं कर्म यत् कृतम् ।
निरन्वयं भवेत् स्तेयं कृत्वा यन्निन्हुते भयात् ॥ इति ।

अस्यायमर्थः । अन्वयवत् द्रव्यरक्षकराजाध्यक्षादिसमक्षं बलावष्टम्भेन यत्परधनापहरणादिकं क्रियते तत् साहसम् । स्तेयं पुनर्निरन्वयं स्वाम्याद्यसमक्षं यद्वञ्चयित्वा परधनाद्यपहरणं तदुच्यते । यच्च राजाध्यक्षादिसमक्षमपहृत्य न मयेदं कृतमिति भयान्निह्नुते तदपि स्तेयमिति । अत एव—

नारदः, (व्य०प० १४।१७)

उपायैर्विविधैरेषां छलयित्वापकर्षणम् ।
सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः ॥ इति ।

एषामित्येतच्छब्दनिर्दिष्टान्याह स एव—(व्य०प० १४।श्लो०१४-१६)

मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् ।
शमीधान्यं कृतान्नं च क्षुद्रं द्रव्यमुदाहृतम् ॥
वासः कौशेयवर्ज्जं च गोवर्ज्जं पशवस्तथा ।
हिरण्यवर्ज्जं लोहं च मध्यं व्रीहियवादि च ॥
हिरण्यं रत्नकौशेयस्त्रीपुंगोगजवाजिनः ।
देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम् ॥ इति ।

बलात्कारकृतमपहरणं साहसान्तर्गतं स्तेयमित्याह—

स एव, (व्य० प० १४ श्लो० १२)

तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र तूच्यते ।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु ॥ इति ।

तस्यैव=साहसस्यैव । आधिः=पीड़ा धनापहरणादिद्वारा । आक्रम्य=प्रसह्य परस्य क्रियमाणः क्लेशः साहसरूपं स्तेयम् । छलेन क्रियमाण आधिः केवलस्तेयमित्यर्थः ।

तस्करज्ञानोपायमाह याज्ञवल्क्यः (अ०२ श्लो०२६६—२६८)

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा ।
पूर्वकर्मापराधी च तथा चाशुद्धवासकः ॥
अन्येऽपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥
परद्रव्यगृहाणां च पृच्छका गूढचारिणः ।
निरायव्ययवन्तश्च विनष्टद्रव्यविक्रयाः ॥ इति ।

ग्राहकैः=राजपुरुषैः लोप्त्रेणापहृतभाजनादिना चौर्य्यचिह्नेन नष्टद्रव्यदेशादारभ्य चोरपदानुसारेण वा ग्रहीतव्यः । यश्च पूर्वकर्मापराधी प्राक्प्रख्यातचौर्यः । अशुद्धवासकः=अप्रज्ञातस्थानवासी । जातिनिह्नवो=नाहं शूद्र इत्येवंरूपः । नामनिह्नवो=नाहं डित्थ इत्येवंरूपः । आदिग्रहणात् स्वदेशग्रामकुलाद्यपलापेन च लक्षिता ग्राह्याः । द्यूतपण्याङ्गनामद्यपानादिष्वतिप्रसक्ताः तथा कुतस्त्योऽसि त्वमिति चोरग्राहिभिः पृष्टो यदि शुष्कमुखो भिन्नस्वरो वा भवति । बहुवचनात् स्विन्नललाटादीनां ग्रहणम् । तथा ये निष्कारणं कियदस्य द्रव्यं किं वास्य गृहमित्येवं पृच्छन्ति । ये च वेषान्तरधारणेनात्मानं गूहयित्वा चरन्ति । ये चायाभावेऽपि बहुव्ययकारिणः, ये च विनष्टद्रव्याणां जीर्णवस्त्रभिन्नभाजनादीनामनिर्ज्ञातस्वामिकानां विक्रयकारिणः ते सर्वेऽपि चौर्यसम्भावनया ग्राह्या इत्यर्थः । एवंविधलिङ्गयुक्तान् पुरुषान् गृहीत्वैते चौरा भवन्ति न वेति सम्यक् परीक्षेत । न तावन्मात्रेण निश्चिनुयात् । अचौरस्यापि लिङ्गसम्बन्धसम्भवात् । अत एव—

नारदः,

अन्यहस्तात्परिभ्रष्टमकामादुत्थितं भुवि ।
चौरेण वा प्रतिक्षिप्तं लोप्त्रं यत्नात्परीक्षयेत् ॥ ( अ० १।७१ )
असत्याः सत्यसङ्काशाः सत्याश्चासत्यसन्निभाः ।
दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणम् ॥ इति ।

स्तेयस्य त्रैविध्यमाह स एव—(व्य०प०१४ श्लो० १३)

तदपि त्रिविधं ज्ञेयं द्रव्यापेक्षं मनीषिभिः ।
क्षुद्रमध्योत्तमानां तु द्रव्याणामपकर्षणात् ॥ इति ।

चौरस्य द्वैविध्यमाह बृहस्पतिः—

प्रकाशाश्चाप्रकाशाश्च तस्करा द्विविधाः स्मृताः ।
प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते सहस्रधा ॥ इति ।

प्रकाशतस्करानाह स एव—

नैगमा वैद्यकितवाः सभ्योत्कोचकवञ्चकाः ।
दैवोत्पातविदो भद्राः शिल्पज्ञाः प्रतिरूपकाः ॥
अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः ।
प्रकाशतस्करा ह्येते तथा कुहकजीविनः ॥ इति ।

प्रतिरूपकाः=प्रतिरूपकाराः । अत एव—

नारदः, (परिशि० श्लो० २।३)

प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः ।

उत्कोचकाः सोपधिका वञ्चकाः पण्ययोषितः ॥
प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः ।
इत्येवमादयो ज्ञेयाः प्रकाशस्तस्करा भुवि ॥ इति ।

नैगमादिव्याजेन ये परद्रव्यापहारकास्ते नैगमाद्याः प्रकाशतस्करा इत्यर्थः । अप्रकाशस्वरूपभेदानाह—

व्यासः,

साधनाङ्गान्विता रात्रौ विचरन्त्यविभाविताः ।
अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नतस्कराः ॥
उत्क्षेपकः सन्धिभेत्ता पान्थमुड् ग्रन्थिभेदकः ।
स्त्रीपुंसोऽश्वपशुस्तेयी चौरो नवविधः स्मृतः ॥ इति ॥

रात्राविति प्रायिकम् । अरण्यादौ दिवापि सम्भवात् । उत्क्षेपकः=धनिनामनवधानतां निश्चित्य तत्समीपस्थं धनमुत्कृत्य ग्राहकः । सन्धिभेत्ता=गृहयोः सन्धौ स्थित्वा तत्रत्यभित्तिभेत्ता । पान्थमुड्=कान्तारादौ पथिकानां धनप्रत्यापहारकः । ग्रन्थिभेदकः=परिधानीयादिग्रथितं धनं ग्रहीतुं तद्ग्रन्थिमोचक इति ।

प्रकाशतस्कराणां दण्डमाह स एव—

स्त्रीपुंसौ वञ्चयन्तीह मङ्गलादेशवृत्तयः ।
गृह्णन्ति छद्मनाचार्थमनार्य्यास्त्वार्यलिङ्गिनः ॥
नैगमाद्या भूरिधना दण्ड्या दोषानुरूपतः ।
यथा ते न निवर्त्तन्ते तिष्ठन्ति समये तथा ॥ इति ।

दोषानुरूपतो दण्ड्या नतु धनानुरूपत इत्यभिप्रायः । केषां चित् प्रकाशतस्कराणां दण्डमाह—

बृहस्पतिः,

प्रच्छाद्य दोषं व्यामिश्र्य पुनः संस्कृत्य विक्रयी ।
पण्यं तद्द्विगुणं दाप्यो वणिग्दण्डं च तत्समम् ॥
अज्ञातौषधिमन्त्रस्तु यश्च व्याधेरतत्त्ववित् ।
रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चोरवद्भिषक् ॥
कूटाक्षदेविनः क्षुद्रा राजभाव्यहराश्च ये ।
गणका वञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः ॥
अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्व एव ते ॥
ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणाम् ।
श्रावयन्त्यर्थलोभेन विनेयास्ते प्रयत्नतः ॥

दण्डाजिनादिभिर्युक्तमात्मानं दर्शयन्ति ये।
हिंसन्ति छद्मना नृणां वध्यास्ते राजपूरुषैः॥
अल्पमूल्यं तु संस्कृत्य नयन्ति बहुमूल्यताम्।
स्त्रीबालकान्वञ्चयन्ति दण्ड्यास्तेऽर्थानुसारतः॥
हेमरत्नप्रवालाद्यान् कृत्रिमान् कुर्वते तु ये।
क्रेतुर्मूल्यं प्रदाप्यास्ते राज्ञा तद्द्विगुणं दमम्॥
मध्यस्था वञ्चयन्त्येकं स्नेहलोभादिना यदा।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणं दमम्॥ इति।
भाव्यं=करविशेषः।

मनुरपि, (९।२९२)

सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः।
अवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैः॥ इति।

विष्णुरपि—

द्यूते च कूटाक्षदेविनां करच्छेद इति।

अप्रकाशतस्कराणां दण्डमाह स एव—

उत्क्षेपकस्य सन्दंशश्छेत्तव्यो राजपूरुषैः।
सन्दंशोऽत्र करः।

तथा च याज्ञवल्क्यः—

उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ।
कार्य्यौ द्वितीयापराधे करपादैकहीनकौ॥ इति॥ (२।२७४)

अङ्गुष्ठतर्जन्योर्ग्रन्थिमोचने साधकतमत्वेनात्र सन्दंशशब्देन तयोर्ग्रहणम्। प्रथमापराधे तौ क्रमेण पाणिसन्दंशाभाववन्तौ कर्त्तव्यौ। द्वितीयापराधे उभावप्येकपाणिपादाभाववन्तौ कर्त्तव्यावित्यर्थः।

सन्धिभेत्तॄणां दण्डमाह मनुः—(२।२७६)

सन्धिं भित्त्वा तु ये चौर्य्यं रात्रौ कुर्वन्ति तस्कराः।
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत्॥ इति।

तानिति शेषः। बृहस्पतिरपि—

सन्धिच्छेदकृतो ज्ञात्वा शूलमाग्राहयेत् प्रभुः। इति।

आग्राहयेत्=आरोपयेदित्यर्थः। पान्थमुषो दण्डमाह—
स एव,

तथा पान्थमुषो वृक्षं गले बद्ध्वावलम्बयेत्। इति।

पान्थमुषः=पथिकलुण्ठकान्। ग्रन्थिभेदकस्य दण्डमाह—
मनुः,

अङ्गुली ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥ इति । (९।७७)

अङ्गुली=तर्जन्यङ्गुष्ठौ । अत एव—

नारदः, (परिशि० श्लो० ३२)

प्रथमे ग्रन्थिभेदानामङ्गुष्ठहस्तयोर्वधः । इति ।

स्त्रीहर्त्तुर्दण्डमाह व्यासः—

स्त्रीहर्त्ता लोहशयने दग्धव्यो वै कटाग्निना । इति ।

पुरुषहर्त्तुर्दण्डमाह स एव—

नरहर्त्ता हस्तपादौ छित्वा स्थाप्यश्चतुष्पथे । इति ।

गोहर्त्तुर्दण्डमाह बृहस्पतिः—

गोहर्त्तुर्नासिकां छित्वा बद्ध्वाम्भसि निमज्जयेत् । इति ।

नारदः—(परि० श्लो० २८)

सर्वस्वं हरतो नारीं कन्यां तु हरतो वधः ।
(१)वाजिवारणलोहानां चाददीत बृहस्पतिः ॥ इति ।

सर्वस्वमित्यनुषङ्गः । पशुहर्त्तुर्दण्डमाह—

व्यासः,

पशुहर्त्तुस्त्वर्द्धपादं तीक्ष्णशस्त्रेण कर्त्तयेत् । इति ।

पशुहर्त्ता पश्वनुसारेण दण्डनीय इत्याह—

नारदः, (परि० श्लो० २९)

महापशून् स्तेनयतो दण्ड उत्तमसाहसः ।
मध्यमो मध्यमपशून्पूर्वः क्षुद्रपशून् हृतः ॥ इति ।

हृत इति षष्ठी । बन्दिग्राहादीनां दण्डमाह—

याज्ञवल्क्यः, (२।२७३)

बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः ।
प्रसह्यघातिनश्चैव शूलानारोपयेन्नरः ॥ इति ।

अङ्गच्छेदादय उत्तमसाहसत्वाद् ब्राह्मणव्यतिरिक्तेषूत्तमद्रव्यापहारविषयाः ।

साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात् ॥ (व्य० प० १४।२१)

इति नारदेनोत्तमसाहसस्योत्तमद्रव्यविषयत्वेन व्यवस्थापनात् । तेन क्षुद्रमध्यमद्रव्योत्क्षेपकादीनां तदनुरूपो न करच्छेदादिः । तस्करस्यापहृतं धनं तत्स्वामिने दापयित्वा दण्डः कर्त्तव्य इत्याह—

(१) इदमर्धं० मु० ना० स्म० न दृश्यते ।

याज्ञवल्क्यः, (२।२७०)

चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः । इति ।

धान्याद्यपहरणे दण्डमाह—

मनुः, (८।३२०)

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः ।
शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनात् ॥ इति ।

कुम्भो=विंशतिप्रस्थाः । शेषे=दशकुम्भाधिकान्न्यूने । तस्य=धान्यस्वामिनः । रत्नहरणे दण्डमाह—

स एव, (८।३२३)

मुख्यानां चैव रत्नानां हरणे वधमर्हति । इति ।

स एव, (अ०८)

सुवर्णरजतादीनामुत्तमानां च वाससाम् । (३२१)
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ॥
शेषेऽप्येकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् । (३२२)
पुरुषाणां कुलीनानां नारीणां च विशेषतः ॥ इति ।(३२३)

अत्र सुवर्णादीनां सङ्ख्या कर्षकृतेत्याहुर्वृद्धा इति मदनरत्ने । अत्राङ्गच्छेदादिदण्डो ब्राह्मणव्यतिरिक्तविषयः ।

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् । (२।२७०)

इति याज्ञवल्क्यस्मरणात् । चिन्हं=ललाटे श्वपदाकाराङ्कनम् । तथा च

मनुः—(९।२३७)

गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान् ॥ इति ।

एतच्च प्रायश्चित्तमकुर्वतां दण्डोत्तरकालं न तु प्रायश्चित्तं चिकीर्षताम् ।

प्रायश्चित्तं च कुर्वाणाः पूर्वे वर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटे तु दाप्यमुत्तमसाहसम् ॥ (९।२४०)

इति मनुस्मरणात् । जात्यादिभेदेन चौरे दण्डतारतम्यमाह—

स एव, (८।३३७।३३८)

अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम् ।
षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य तु ॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत् ।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणवेदिनः ॥ इति ।

यस्मिन्नपराधे यो दण्ड उक्तः स शूद्रकर्तृके तस्मिन्नष्टगुणं दापनीयः ।

वैश्यकर्त्तृके षोडशगुणः क्षत्रियकर्त्तृके द्वात्रिंशद्गुणः। ब्राह्मणकर्त्तृके चतुःषष्टिगुणः। शतगुणो वा अष्टाविंशत्युत्तरशतगुणो वेत्यर्थः। माषान्न्यूनमूल्यानां क्षुद्राणां मूल्यात् पञ्चगुणो दम इत्याह—

नारदः, ( परि० २२।२३।२४ )

काष्ठभाण्डतृणादीनां मृन्मयानां तथैव च।
वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्मणाम्॥
शाकानामार्द्रमूलानां हरणे फलमूलयोः।
गोरसेक्षुविकाराणां तथा लवणतैलयोः॥
पक्वान्नानां कृतान्नानां मत्स्यानामौषधस्य च।
सर्वेषामल्पमूल्यानां मूल्यात्पञ्चगुणो दमः॥ इति।

यत्पुनः क्षुद्रद्रव्यविषये द्विगुणदण्डप्रतिपादकं मनुवचनम्—

सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च।
दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च॥
वेणुवैणवभाण्डानां लवणानां तथैव च।
मृन्मयानां च हरणे मृदो भस्मन एव च॥
अजानां पक्षिणां चैव लवणस्य घृतस्य च।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम्॥
अन्येषां चैवमादीनां मद्यानामोदनस्य च।
पक्वान्नानां च सर्वेषां तन्मूल्याद्द्विगुणो दमः॥ इति।

( अ० ८। श्लो० ३२६–३२९ )

तदल्पप्रयोजनविषयम्। पान्थादीनामल्पप्रयोजनद्रव्यापहारे न दण्डः। तथाच—

स एव,

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति॥ (८।३४१)
चणकव्रीहिगोधूमयवानां मुद्गमाषयोः।
अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेका पथि स्थितैः॥
तथैव सप्तमे भक्ते भक्तानि षडनश्नता।
अश्वस्तनविधानेन हर्त्तव्यं हीनकर्मणा॥ इति। (११।१६)

न केवलं चौरस्यैव दण्डः किन्त्वचौरस्यापि चौरोपकारिण इत्याह—

याज्ञवल्क्यः, ( २।२७६ )

भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्।
दत्त्वा चौरस्य वा हन्तुर्जानतो दम उत्तमः॥ इति।

भक्तम्=अशनम्। अवकाशो निवासस्थानम्। अग्निश्चौरस्य शीतापनो

दन्नाद्यर्थः । उदकं तृषितस्य । मन्त्रश्चौर्यप्रकारोपदेशः । उपकरणं=चौर्यसाधनम् । व्ययः अपहारार्थे देशान्तरं गच्छतः पाथेयम् । एतानि चौरस्य हन्तुर्वा दुष्टत्वं ज्ञानन्नपि यः प्रयच्छति तस्योत्तमसाहसो दण्ड इत्यर्थः।

कात्यायनोऽपि,

चौराणां भक्तदा ये स्युस्तथाग्न्युदकदायिनः।
छेत्तारश्चैव भाण्डानां प्रतिग्राहिण एव च ॥
समदण्डाः स्मृता ह्येते ये च प्रच्छादयन्ति तान् । इति ।

चौरोपेक्षाकारिणं प्रत्याह नारदः—( व्य० प० १४ )

शक्ताश्च यदुपेक्षन्ते तेऽपि तद्दोषभागिनः । ( १९ )
उत्क्रोशतां जनानां तु ह्रियमाणे धने तथा ।
श्रुत्वा ये नाभिधावन्ति तेऽपि तद्दोषभागिनः ॥ इति । (२०)

इति स्तेयाख्यं व्यवहारपदम् । १५

## अथ साहसाख्यं व्यवहारपदम् । १६

तस्य स्वरूपमाह नारदः ( व्य० प० १४। श्लो० १ )

सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥ इति ।

तस्य चातुर्विध्यमाह बृहस्पतिः—

मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥ इति ।

उभयपारुष्यं=वाग्दण्डपारुष्ये । तस्य त्रैविध्यमाह—

नारदः, ( व्य० प० १४। श्लो० ३ )

तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा ।
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥ इति ।

एतेषां स्वरूपमाह स एव ( व्य० पं० १४।४।५।६ )

फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपावमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥
वासः पश्वन्नपालानां गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥ इति ।

भङ्गः=फलादिस्वरूपनाशनम् । आक्षेपः=आक्रोशो वाक्तिरस्करणमिति यावत् । अवमर्दः=स्वरूपावशेषेण मर्दनम् । एतेनैव प्रकारेण भङ्गादिनेत्यर्थः । त्रिविधेऽपि साहसे दण्डमाह—

नारदः, ( व्य० प० १४ श्लो० ७।८ )

तत्र दण्डः क्रियापेक्षः प्रथमस्य शतावरः।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः॥
उत्तमे साहसे दण्डः सहस्रावर इष्यते।
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने॥
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे॥ इति।

स एव, ( व्य० प० १४। श्लो० ९ )

अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति॥ इति।

यमोऽपि—

न शारीरो ब्राह्मणस्य दण्डो भवति कस्यचित्। इति।

महत्यपराधे ब्राह्मणस्य दण्डमाह—

स एव,

गुप्ते तु बन्धने बद्धा राजा भक्तं प्रदापयेत्। इति।

नारदोऽपि, ( व्य० प० १४ श्लो० १० )

शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात्।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च॥ इति।

परद्रव्यापहरणरूपं साहसस्वरूपमुक्त्वा तत्र दण्डमाह—

याज्ञवल्क्यः, ( २।२३० )

सामान्यद्रव्यप्रसभहरणं साहसं स्मृतम्।
तन्मूल्याद्द्विगुणो दण्डो निह्नवे तु चतुर्गुणः॥ इति।

बहुभिर्जनैः प्रहरादिकालक्रमेण रक्ष्यमाणस्य बलात्कारेण हरणं साहसरूपं स्तेयमिति पूर्वार्द्धार्थः। तन्मूल्यात्=अपहृतद्रव्यमूल्यात्। निन्हवे=अपलापे यः साहसं करोति तद्द्विगुणं दमम्। यस्तु साहसं कृत्वा निह्नुते स चतुर्गुणं दाप्य इत्युत्तरार्द्धार्थः। साहसिकस्य प्रयोजयितारं प्रत्याह—

स एव, ( २।२३१ )

यः साहसं कारयति स दाप्यो द्विगुणं दमम्।
यश्चैवमुक्त्वा हन्तारं कारयेत्स चतुर्गुणम्॥ इति।

द्विगुणं दमं=साहसिकदण्डाद्द्विगुणं दण्डम्। साहसिकविशेषं प्रत्याह—

स एव, ( अ० २ )

अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्याप्रहारकः।
सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकृत्॥ ( २३२ )
सामन्तकुलिकादीनामपकारस्य कारकः।

पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः ॥ ( २३३ )
स्वच्छन्दं विधवागामी विक्रुष्टेनाभिधावकः ।
अकारणेन विक्रोष्टा चण्डालश्चोत्तमान् स्पृशन् ( २३४ )
शूद्रप्रव्रजितानां च दैवे पित्र्ये च भोजकः ।
अयुक्तं शपथं कुर्वन् अयोग्यो योग्यकर्मकृत् ॥ ( २३५ )
वृषक्षुद्रपशूनां च पुंस्त्वस्य प्रतिघातकृत् ।
साधारणस्यापलापी दासीगर्भविनाशकृत् ॥ ( २३६ )
पितृपुत्रस्वसृभ्रातृदम्पत्याचार्यशिष्यकाः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥ इति । (२३७)

अज्ञातकर्तृके साहसिके त्वाह—

बृहस्पतिः,

हतस्तु दृश्यते यत्र घातकश्च न दृश्यते ।
पूर्ववैरानुसारेण ज्ञातव्यः स महीभुजा ॥
प्रतिवेश्यानुवेश्यौ च तस्य मित्रारिबान्धवाः ।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ॥
विज्ञेयोऽसाधुसंसर्गाच्चिह्नैर्होढेन वा नरैः ।
एषोदिता घातकानां तस्कराणां च भावना ॥
गृहीतः शङ्कया यस्तु न तत्कार्यं प्रपद्यते ।
शपथेनावबोद्धव्यः सर्ववादेष्वयं विधिः ॥ इति ।

चिन्हं=रक्तलेपादि । होढो=मृतस्य धनादिकम् । ज्ञानानन्तरकर्त्तव्यमाह·

व्यासः,

ज्ञात्वा तु घातकं सम्यक् ससहायं सबान्धवम् ।
हन्याच्चित्रवधोपायैरुद्वेजनकैर्नृपः ॥ इति ।

बृहस्पतिः—

प्रकाशघातका ये तु तथा चोपांशुघातकाः ।
ज्ञात्वा सम्यग्धनं हृत्वा हन्तव्या विविधैर्वधैः ॥ इति ।
ब्राह्मक्षत्रियादिविषयमेतत् । यत आह—

बौधायनः,

क्षत्रियादीनां ब्राह्मणस्य च वधः सर्वस्वहरणम् । तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपं दण्डं च कल्पयेदिति ।

तेषां=क्षत्रियादीनाम् । तुल्यापकृष्टवधे=सजातीयहीनजातीयवधे । दण्डं=शारीरदण्डम् । एकघातार्थप्रवृत्तानां बहूनां दोषानुरूपं दण्डमाह—

कात्यायनः,

एकं चेद्बहवो हन्युः संरब्धाः पुरुषं नराः ।
मर्मघाती तु यस्तेषां स घातक इति स्मृतः ॥
यो मर्मघातकः स एव वधापराधदण्डभागित्यर्थः ।

स एव,

आरम्भकृत्सहायश्च दोषवक्ताऽनुदेशकः ।
आश्रयः शस्त्रदाता च भक्तादायी विकर्म्मिणाम् ॥
युद्धोपदेशकश्चैव तद्विनाशप्रवर्त्तकः ।
उपेक्षाकार्य्ययुक्तश्च दोषवक्तानुमोदकः ॥
अनिषेद्धा क्षमो यः स्यात्सर्वे ते कार्यकारिणः ।
यथाशक्त्यनुरूपं तु दण्डमेषां प्रकल्पयेत् ॥ इति ।

बृहस्पतिरपि—

एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः ।
मर्मप्रहारको यस्तु घातकः स उदाहृतः ॥
मर्मघाती तु यस्तेषां यथोक्तं प्रापयेद्दमम् ।
आरम्भकृत्सहायश्च दोषभागी तदर्द्धतः ॥
क्षतस्याल्पमहत्त्वं च मर्मस्थानं च यत्नतः ।
सामर्थ्यं चानुबन्धं च ज्ञात्वा चिह्नैः प्रसाधयेत् ॥ इति ।

विषयविशेषे मनुष्यवधकर्त्तुर्दण्डाभावं दोषाभावप्रदर्शनमुखेनाह-मनुः, ( अ० ८ श्लो० ३४८।३४९ ) ।

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥
आत्मनश्च परित्राणे दक्षिणानां च सङ्करे ।
स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति ॥ इति ।

यत्र=देशे काले च धर्मस्तटाकारामादिरूपो भेदनच्छेदनादिना उपरुध्यते तत्र, तथा शूद्रेतरवर्णसङ्करे परदाराक्रमणादिरूपे राजाभावकालकारिते । तथात्मनः परतः प्राणसंशये । तथा दक्षिणानां सङ्करे=गोग्रहणनिमित्तके युद्धे । तथा स्त्रीविप्राभ्युपपत्तौ दुर्बलहिंसानिवारणे । धर्म्माद्धेतोः घ्नन् न दुष्यति यतः अतस्तत्र द्विजातिभिः क्षत्रधर्माश्रयणरहितैरपि समर्थैः शस्त्रं ग्राह्यमित्यन्वयः । अत्र द्विजातिग्रहणं ब्राह्मणवैश्यविषयम् । प्रजापालनार्थं क्षत्रियस्य वचनान्तरेणैव शस्त्रग्रहणस्य प्राप्तत्वादित्यभिसन्धायैव—

बौधायन आह,

ब्राह्मणार्थे गवामर्थे वर्णानां चापि सङ्करे ।

गृह्णीयातां विप्रविशौ शस्त्रं धर्म्मव्यतिक्रमे ॥ इति ।

यत्तु "परीक्षार्थमपि ब्राह्मण आयुधं नाददीत" इत्यापस्तम्बवचनम्, बौधायनवचनम्—

हास्यार्थमपि ब्रह्म आयुध नाददीतेति ।

तद्वयमपि धर्म्मोपरोधादिभिन्नविषयम् । साहसस्तेयस्य क्रोधलोभकृतत्वमाह—

बृहस्पतिः,

साम्प्रतं साहसं स्तेयं श्रूयतां क्रोधलोभजम् । इति ।

स्त्रीसङ्ग्रहणाख्यसाहसस्वरूपमाह—

स एव,

अनिच्छन्त्या यत्क्रियते मत्तोन्मत्तप्रमत्तया ।
प्रलपन्त्या वा रहसि बलात्कारकृतं तु तत् ॥ इति ।

अनिच्छन्त्या परपुरुषेण सहेतिशेषः । अनिच्छन्त्या यानि चिह्नानि तस्याः कर्त्तव्यं राजकर्त्तव्यं चाह—

सम्बर्त्तः,

नेच्छन्त्या यानि चिह्नानि बलात्कारकृतानि च ।
परपुंसः प्रसङ्गेषु नारीणां तानि शृणवतः ॥
नखदन्तक्षतक्षामा सकचग्रहवीक्षिता ।
सद्योविश्वासिता नारी बलात्कारेण दूषिता ॥
उच्चैर्विक्रोशयन्ती च रुदन्ती लोकसन्निधौ ।
तस्य नामावदन्ती च यथाहं तेन दूषिता ॥
शोचेदेवंविधैर्लिङ्गैर्व्रणीकृतपयोधरा ।
चिह्नालङ्कारकेशैश्च व्याकुलीकृतलोचना ॥
राज्ञा सभ्यैः सभां नीत्वा स्वयमन्विष्य तत्क्षणात् ।
यद्ब्रूयात् सहजं तत्र तत् कर्त्तव्यं प्रयत्नतः ॥
विवादे साक्षिणामत्र प्रकुर्वीत परिग्रहम् ।
प्रार्थनादभिशस्तस्य न दिव्यं दातुमर्हति ॥ इति ।

अत्र दण्डमाह मनुः—( अ० ८ श्लो० ३७८ )

सहस्रं ब्राह्मणो दण्ड्यो विप्रां गुप्तां बलाद्व्रजन् । इति ।

गुप्तां=स्वनियमेन रक्षिताम् । क्षत्रियादिसवर्णाविषये दण्डमाह—

बृहस्पतिः,

सहसा कामयेद्यस्तु धनं तस्याखिलं हरेत् ।
उत्कृत्य लिङ्गवृषणौ भ्रामयेद्गर्दभेन तु ॥ इति ।

कामयेत्=परस्त्रियं गच्छेत् । अयमेव दण्डोऽनुलोमप्रतिलोमजात्योः सजातीयपरभार्यागमने वेदितव्य इति मदनरत्ने । हीनजातीयपरस्त्रीगमने ब्राह्मणादिष्वेतदर्द्धपरिमितो दण्डः । उत्कृष्टजातीयपरदारगमने अयमेव दण्डो वधसहितः कार्य इत्याह—

स एव,

दमो नेयः समायां तु हीनायामधिकस्ततः ।
पुंसः कार्योऽधिकायां तु गमने सप्रमापणम् ॥ इति ।

दमः "सहसा कामयेत्" इति वाक्योक्तः । नेयः=प्रापणीयः । यत्तु वधमात्राभिधायकं कात्यायनवचनम्—

स्त्रीषु कृतोपभोगः स्यात्प्रसह्य पुरुषो यदा ।
वधस्तत्र प्रवर्तेत कार्यातिक्रमणं हि तत् ॥ इति,

तन्निर्गुणस्य भार्यागमने वेदितव्यम् ।

इति साहसाख्यं व्यवहारपदम् । १६

## अथ स्त्रीसङ्ग्रहणाख्यं व्यवहारपदम् । १७

तस्य त्रैविध्यमाह बृहस्पतिः—

पापमूलं सङ्ग्रहणं त्रिप्रकारं निबोधत ।
बलोपधिकृते द्वे तु तृतीयमनुरागजम् ॥ इति ।

एतेषां स्वरूपं दर्शयति स एव—

अनिच्छन्त्या यत् क्रियते मत्तोन्मत्तप्रमत्तया ।
प्रलपन्त्या वा रहसि बलात्कारकृतं तु तत् ॥
छद्मना गृहमानीय दत्त्वास्या मदकारणम् ।
संयोगः क्रियते यत्र तदुपाधिकृतं विदुः ॥
अन्योन्यचक्षूरागेण दूतीसम्प्रेषणेन वा ।
कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम् ॥ इति ।
अनुरागजसङ्ग्रहणस्य त्रिविधत्वं दर्शयति—

स एव,

तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम् । इति ।

व्यासोऽपि—

सङ्ग्रहस्त्रिविधो ज्ञेयः प्रथमो मध्यमस्तथा ।
उत्तमश्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥ इति ।

एतेषां स्वरूपमाहतुर्व्यासबृहस्पती—

अपाङ्गप्रेक्षणं हास्यं दूतीसम्प्रेषणं तथा ।
स्पर्शो भूषणवस्त्राणां प्रथमः सङ्ग्रहः स्मृतः ॥

प्रेषणं गन्धमाल्यानां फलधूपान्नवाससाम् ।
सम्भाषणं च रहसि मध्यमं सङ्ग्रहं विदुः ॥
एकशय्यासनं क्रीडा चुम्बनालिङ्गनं तथा ।
एतत् सङ्ग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ॥ इति ।

स्त्रीसङ्ग्रहणस्य ज्ञानोपायमाह याज्ञवल्क्यः—( २।२८३ )

पुमान् सङ्ग्रहणे ग्राह्यः केशाकेशि परस्त्रिया ।
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥ इति ।

परभार्यया सह केशाकेशिक्रीडनेन सद्यः अभिनवैः कामजैः कररुहदशनादिकृतव्रणादिलिङ्गैर्द्वयोः सम्प्रतिपत्त्या वायं स्त्रीसङ्ग्रहणवान् इति प्रतिपत्तव्य इत्यर्थः । उपायान्तरमाह—

स एव, (२।२८४ )

नीवीस्तनप्रावरणसक्थिकेशावमर्शनम् ।
अदेशकालसम्भाषं सहैकस्थानमेव च ॥ इति ।

कुर्वाण इति शेषः । सक्थि=ऊरुः ।

मनुरपि— ( ८।३५८ )

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तथा ।
परस्परस्यानुमते सर्वं सङ्ग्रहणं स्मृतम् ॥ इति ।

यस्तु दर्पादिना मयेयं भुक्तेति वदति सोऽपि तथाविधत्वेन ग्राह्य इत्याहतुः—

मनुनारदौ, ( ना० व्य० प० १२ श्लो० ६९ )

दर्पाद्वा यदि वा मोहात् श्लाघया वा स्वयं वदेत् ।
पूर्वं मयेयं भुक्तेति तच्च सङ्ग्रहणं स्मृतम् ॥ इति ।

बलात्कारकृतस्य स्त्रीसङ्ग्रहणस्य साहसान्तर्भूतत्वेन तत्रैव दर्शितत्वादुपधिकृते दण्डमाह—

बृहस्पतिः,

छद्मना कामयेद्यस्तु तस्य सर्वहरो दमः ।
अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः ॥ इति ।

सर्वहरः=सर्वस्वहरः । एतत् सजातीयविषयम् । हीनोत्कृष्टगमने तु क्रमेणानुपूर्व्येण सर्वस्वहरणरूपो वधसहितसर्वस्वहरणरूपो वा दण्डोऽवगन्तव्यः । "दमो नेयः समायां तु" इति साहसवादनिरूपणदर्शितवचनात् । तत्र वचनेषु पुरुषस्यायमुक्तो दण्डो न स्त्रिया इति नोक्तस्तस्या दण्डः । तेन साहसे स्त्रीसङ्ग्रहणवत् छद्मकृतेऽपि सजातीयोपभुक्तायाः संव्यवहार्यता प्रायश्चित्ताचरणानन्तरमिति ज्ञातव्यमित्युक्तं मदनरत्ने ।

अनुरागजत्रिविधसङ्ग्रहणे दण्डमाह—

स एव,

त्रयाणामपि चैतेषां प्रथमो मध्य उत्तमः ।
विनयः कल्पनीयः स्यादधिको द्रविणाधिके ॥ इति ।

अधिकः=प्रथमसाहसादिभ्योऽधिकः । सम्भोगे दण्डमाह—

याज्ञवल्क्यः, ( २।२८६ )

सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्त्तनम् ॥ इति ।

चतुर्णामपि वर्णानां बलात्कारेण सजातीयगुप्तपरभार्यागमने साशीतिपणसाहस्रो दण्डः । यदा त्वानुलोम्येन हीनजातीयां स्त्रियमगुप्तां गच्छति तदा मध्यमसाहसः । उत्कृष्टजातीयागमने गन्तुर्वधः तस्याः कर्णादिकर्त्तनमित्यर्थः । एतच्चानुरागजसङ्ग्रहणविषयम् । स्त्रिया अपि दण्डाभिधानात् । बलात्कारोपधिकृतयोस्तु स्त्रिया अनपराधित्वेन दण्डाभावात् । अस्मादेव प्रातिलोम्येन गमने पुरुषस्य वधं विधाय स्त्रियास्तदर्द्धतुल्यकर्णनासादिकर्त्तनविधानात् सजातीयागमने पुरुषस्य यावुक्तावुत्तममध्यमसाहसौ दण्डौ तदर्द्धं स्त्रिया दण्ड इति सूचितम् ।

अत एव कात्यायनः,

सर्वेषु चापराधेषु पुंसो ह्यर्थदमः स्मृतः ।
तदर्द्धं योषितो दद्युर्वधे पुंसोऽङ्गकर्त्तनम् ॥ इति ।

स्त्रिया इति शेषः । यदा पुनः सवर्णामगुप्तामानुलोम्येन गुप्तां वा व्रजति तदा विशेषमाह—

मनुः, ( ८।३७८।३८३ )

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद् व्रजन् ।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ॥
सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् ।
शूद्रायां क्षत्रियविशोः सहस्रं तु भवेद्दमः ॥ इति ।

ते=क्षत्रियवैश्ये । एतच्च गुरुसखिभार्य्यादिव्यतिरिक्तविषयम् । तत्र दण्डान्तरविधानात् । तदाह—

नारदः, ( व्य०प० १२ श्लो०७३।७४।७५ )

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताचार्यभार्य्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥

आसामान्यतमां गच्छन् गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते ॥ इति ।

यत्तु प्रातिलोम्ये उत्कृष्टस्त्रीगमने क्षत्रियादेः पुरुषस्य वध इत्युक्तं योगीश्वरवचने । तद्गुप्ताविषयमन्यथा धनदण्डः ।

तथा च मनुः, ( ८।३७७।३७६ )

उभावपि हि तावेव ब्राह्मण्या गुप्तया सह ।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥
ब्राह्मणीं यद्यगुप्तां तु सेवेतां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्यात् क्षत्रियं तु सहस्रिणम् ॥ इति ।

पञ्चशतं=पणशतपञ्चकदण्डभाजमित्यर्थः । एवं सहस्रिणमित्यत्रापि। क्षत्रियस्य गुप्तवैश्यागमने वैश्यस्य च गुप्तक्षत्रियागमने क्रमेण पणसहस्रपणशतपञ्चकं तयोर्दण्ड इत्याह—

स एव, ( ८।३८२ )

वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥ इति ।

शूद्रस्यागुप्तोत्कृष्टस्त्रीगमने लिङ्गच्छेदनसर्वस्वापहरणे गुप्तागमने तु वधसर्वस्वापहारौ । तथा च—

स एव, ( ८।३७४ )

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् ।
(१)अगुप्तैकाङ्गसर्वस्वी गुप्ते सर्वेण हीयते ॥ इति ।

अयंच वधाद्युपदेशः प्रजापालनाधिकाराद्राज्ञ एव न द्विजातिमात्रस्य । "ब्राह्मणः परीक्षार्थमपि शस्त्रं नाददीत" इति शस्त्रग्रहणस्य निषिद्धत्वात् । यदा तु राज्ञो निवेदने कालविलम्बेन कार्य्यातिपातस्तदा द्विजातिमात्रस्यापि शस्त्रग्रहणेऽधिकारोऽस्त्येव ।

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते । ( मनु० ८।३४८ )

तथा,

नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥
प्रच्छन्नं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति । ( ८।३५१ )

इति शस्त्रग्रहणाभ्यनुज्ञानात् । परस्त्रिया सह सम्भाषणकर्तुर्दण्डमाह—

मनुः,( अ० ८ श्लो० ३५४ )

परस्य पत्न्या पुरुषः संलापं योजयन् रहः ।
पूर्वमाक्षारितो दोषैः प्राप्नुयात् पूर्वसाहसम् ॥ इति ।

---

( १ ) अगुप्तमङ्गसर्वस्वैर्गुप्तं सर्वेण हीयते । इति मिताक्षरासंमतः पाठः ।

आक्षारित=अभिशस्तः । दोषैः=नानास्त्र्युपभोगवाञ्छाभिः पापबुद्ध्या· यः सम्भाषणं करोति तद्विषयमेतत् । अत एव—

स एव,

यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् ।
न दोषं प्राप्नुयात् किञ्चिन्न हि तस्य व्यतिक्रमः ॥ इति(८।३५५) ।

मनुबृहस्पत्युक्तपूर्वसाहसमध्यमसाहसयोरुत्कृष्टसजातीयासम्भाषणा· दिविषयत्वेन व्यवस्था परिकल्पनीया ।

परपुरुषेण सह पित्रादिभिर्निषिद्धं सम्भाषणं या करोति सा पण· शतं दण्ड्या । परस्त्रिया सहपित्रादिभिर्निषिद्धसम्भाषणं यः पुरुषः करोति स पणशतद्वयं दण्डनीयः । द्वयोरपि निषिद्धपरस्परसम्भा· षणादि कुर्वतोः सम्भोगे यो दण्डः स एव दण्ड इत्याह—

याज्ञवल्क्यः, (२।२८५)

स्त्री निषेधे शतं दद्याद् द्विशतं तु दमं पुमान् ।
प्रतिषेधे तयोर्दण्डो यथा सङ्ग्रहणे तथा ॥ इति ।

निषिध्यत इति निषेधः कर्मणि "हलश्च" इति घञ् (३।३।१२१) । चारणादिस्त्रीव्यतिरिक्तविषयमेतत् ।

नैष चारणदारेषु विधिरात्मोपजीविषु ।
सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च ॥ (८।३६२)

इति मनुस्मरणात् । चारणा=नटाः । आत्मोपजीविनः=वेषोपजीविनः । एते· षां दारेषु एष विधिर्न अभिभाषणादिनिमित्तकदण्डविधिः । यतस्ते नारीः स्वाभार्याः सज्जयन्ति पुरुषान्तरे संयोजयन्ति प्रच्छन्नीकृत्य चारयन्ति चेत्यर्थः ।

साधारणस्त्रीगमने दण्डमाह—

याज्ञवल्क्यः (२।२९०)

अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।
गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकं दमम् ॥ इति ।

स्वामिना याः शुश्रूषार्थं गृह एव स्थातव्यमित्येवं पुरुषान्तरोपभो· गतो निरुद्धा अवरुद्धाः । पुरुषान्तरेणावरुध्य भुज्यमाना भुजिष्याः । या दास्यो भुजिष्या अवरुद्धा वा तासु सर्वपुरुषगम्यास्वपि गमने पञ्चाश· त्पणं दण्ड्यः । तासां परपरिगृहीतत्वेन परस्त्रीतुल्यत्वात् । चशब्दाद्वे· श्यास्वैरिणीनामपि ग्रहणम् । तास्वपि सर्वपुरुषसाधारणासु परपरिगृ· हीतासु गमनेऽयमेव दण्ड इति मन्तव्यम् । एतदेवाभिप्रेत्याह—

नारदोऽपि (व्य०प०१२। श्लो०७८।७९)

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः॥
आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत्।
गम्यास्वपि हि नोपेयाद्यत्ताः परपरिग्रहाः॥ इति।

अब्राह्मणीति स्वैरिण्या विशेषणम्। स्वैरिणी=स्वतन्त्रा पुंश्चली। निष्कासिनी=कुटुम्बाद्विर्गतेति मदनरत्ने। स्वाम्यनवरुद्धा दासीति विज्ञानेश्वरमाधवाचार्य्यप्रभृतयः। भुजिष्यासु आस्वेवेति सम्बन्धः।

व्यासोऽपि,

परोपरुद्धागमने पञ्चाशत्पणिको दमः।
प्रसह्य वेश्यागमने दण्डो दशपणः स्मृतः॥ इति।

प्रसह्य=वेतनदानं विना। अत्रानवरुद्धासु वेश्यादिषु गम्यत्वाभिधानं न पापाभावप्रतिपादनार्थं किन्तु राजदण्डाभावप्रतिपादनार्थम्।

पशुवेश्यादिगमने प्राजापत्यं विधीयते।

इत्यादिवचनैः प्रायश्चित्तस्मरणात्। बलात्कारेण अनवरुद्धदास्यभिगमने दण्डमाह—

याज्ञवल्क्यः, (२।२९१)

प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः।
बहूनां यद्यकामासौ चतुर्विंशतिकः पृथक्॥ इति।

पुरुषसम्भोगजीविकासु दासीषु स्वैरिण्यादिषु शुल्कदानमन्तरेण बलात्कारेणाभिगच्छतो दशपणो दण्डः। यद्यनिच्छन्तीमेकं बलात्कारेण बहवो गच्छन्ति तर्हि प्रत्येकं चतुर्विंशतिपणात्मको दण्ड इत्यर्थः। यदि पुनः सा स्वेच्छया भाटकं गृहीत्वा पश्चान्नेच्छति तदा बलाद्व्रजतामपि बहूनामदोषः। यदि तस्या व्याध्याद्यभिभवो न भवेत्। अत एव—

नारदः,

व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा।
आमन्त्रिता चेन्नागच्छेददण्ड्या वडवा स्मृता॥ इति।

पारदार्यप्रसङ्गात् कन्यायामपि दण्डमाह—

याज्ञवल्क्यः (२।२८७)

अलङ्कृतां हरन् कन्यामुत्तमं त्वन्यथाधमम्।
दण्डं दद्यात् सवर्णासु प्रातिलोम्ये वधः स्मृतः॥ इति।

अलङ्कृता=विवाहाभिमुखी तां सवर्णां कन्यामपहरन् उत्तमसाहसं दण्डनीयः। तदनभिमुखीं हरन् प्रथमसाहसम्। उत्कृष्टवर्णजातां हरतः क्षत्रियादेर्वध इत्यर्थः। आनुलोम्येन सकामाहरणे प्रथमसाहसो दण्डः। तथा च—

स एव, (२।२८८)

सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः। इति।

कन्यादूषणे दण्डमाह—

स एव—(२।२८८।२२८९)

दूषणे तु करच्छेद उत्तमायां वधः स्मृतः।

शतं स्त्रीदूषणे दद्याद्वे तु मिथ्याभिशंसने॥

पशून् गच्छन् शतं दाप्यो हीनां स्त्रीं गां च मध्यमम्॥ इति।

यद्यकामां कन्यां नखक्षतादिना प्रसह्य दूषयति तदा करच्छेदः। यदा तु अङ्गुलिप्रक्षेपेण तामेव योनिक्षतां कुर्वन् दूषयति तदा विशेषमाह—

मनुः, (८।३६७)

अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः।

तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम्॥ इति।

सकामादूषणेऽप्याह—

स एव, (८।३६८)

सकामां दूषयन् कन्यां नाङ्गुलिच्छेदमर्हति।

द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये॥ इति।

यदा कन्या विदग्धा वा कन्यां दूषयति तदाप्याह—

स एव, (८।३६९।३७०)

कन्यैव कन्यां या कुर्यात्तस्यास्तु द्विशतो दमः।

या तु कन्यां प्रकुर्य्यात् स्त्री सा सद्यो मौण्ड्यमर्हति।

अङ्गुल्योरेव वा च्छेदः खरेणोद्वासनं तथा॥ इति।

कुर्य्यात् योनिक्षतवतीमिति शेषः। यदा पुनरुत्कृष्टजातीयां कन्यां सकामामकामां वाभिगच्छति तदा हीनस्य क्षत्रियादेर्वधः। यदा सकामां सवर्णामभिगच्छति तदा शुल्कं गोमिथुनं तत्पित्रे दद्यात्। अनिच्छति तस्मिन् दण्डरूपेण राज्ञे दद्यात्। सवर्णामकामां गच्छतो वध एव। तदाह—

मनुः, (८।३६६।३६४)

उत्तमां सेवमानस्तु जघन्यो वधमर्हति।

शुल्कं दद्यात् सेवमानः समामिच्छेत् पिता यदि॥

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति।

सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः॥ इति।

चाण्डाल्यादिगमने दण्डमाह—

याज्ञवल्क्यः—(२।२९४)

अन्त्याभिगमने त्वङ्क्य कुबंधेन प्रवासयेत् ।
शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्यागमे वधः ॥ इति ।

अन्त्या=चाण्डाली तद्गमने त्रैवर्णिकान् प्रायश्चित्तानभिमुखान् "सहस्रं त्वन्त्यजस्त्रियम्" इति मनुवचनानुसारेण पणसहस्रं दण्डयित्वा कुत्सितवर्णेन भगाकारेणाङ्कयित्वा स्वराष्ट्रान्निर्वासयेत् । शूद्रः पुनश्चाण्डालीं गच्छंश्चण्डाल एव । अङ्क्य एवेति माधवीये पाठः । चाण्डालस्य तूत्कृष्टजातिस्त्र्यभिगमने वध एवेत्यर्थः । योनिव्यतिरिक्तस्थले गच्छतो दण्डमाह—

स एव, (२।२९३)

अयोनौ गच्छतो योषां पुरुषं वाभिमेहतः ।
चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे ॥ इति ।

यस्तु स्वयोषां मुखादावभिगच्छति पुरुषं वाभिमुखो मेहति तथा प्रव्रजितां च गच्छति असौ चतुर्विंशतिपणान्दण्डनीय इत्यर्थः । स्त्रीकृते सङ्ग्रहणे दण्डमाह—

बृहस्पतिः,

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्द्धदमः स्मृतः ॥ इति ।

वचसा स्त्रियं प्रलोभ्य गच्छतः पुरुषस्य यो दण्डस्तं ग्राह्या । तद्दण्डार्द्धं पुरुषो ग्राह्य इत्यर्थः ।

इति स्त्रीसङ्ग्रहणाख्यं व्यवहारपदम् । १७

## अथ स्त्रीपुंयोगाख्यं व्यवहारपदम् । १८

तत्स्वरूपमाह नारदः—

विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते ।
स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते ॥ इति ।

विवाहादिशब्देन स्त्रीपुंधर्मा गृह्यन्ते । अत एव मनुर्व्यवहारपदोद्देशकाले "स्त्रीपुंधर्मो विभागश्च" इत्युद्दिश्य प्रतिज्ञापूर्वकं तेषां निरूपणं चकार । ( म०अ०९।श्लो०१ )

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः ।
संयोगे विप्रयोगे च धर्मान्वक्ष्यामि शाश्वतान् ॥

इत्यादिना । संयोगे=अन्योन्यसन्निधाने । विप्रयोगे=देशतः कालतो वा व्यवधाने । शाश्वतान्=नित्यान् अवश्यानुष्ठेयानिति यावत् । के ते धर्मा इत्याकाङ्क्षायामाह—

स एव, ( अ०९।श्लो०२ )

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् ।
विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे ॥

इत्यादि । पुरुषैः=भर्तृपुरुषैः । विषये=दण्डहेतुभूतचाञ्चल्यादिविषये ।

नारदोऽपि— ( व्य०प०१३।श्लो०३० )

स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः ।
अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत् ॥ इति ।

अतोऽन्यैरपि स्वस्त्रीणामस्वातन्त्र्यं यथा भवति तथा कल्पयितव्यमित्याशयः । पुरुषेण स्वस्त्री व्यभिचारादवश्यं रक्षणीया । तथा च-

हारीतः,

एकव्रतस्कन्नभावात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्करकारिण्यो भवन्ति जीवति जारजः कुण्डो मृते भर्त्तरि गोलकस्तस्माद्रेतोपघाताज्जायां रक्षेज्जायानाशे कुलनाशः कुलनाशे तन्तुनाशस्तन्तुनाशे देवपितृयज्ञनाशो देवपितृयज्ञनाशे धर्म्मनाशो धर्मनाशे आत्मनाश आत्मनाशे सर्वस्वनाश इति ।

एकव्रतस्कन्नभावात्=स्त्रीणाम् एक एव भर्त्तेतिनियमनाशात् । परेन्द्रियोपहतत्वात्=परस्मिन् पुंसि इन्द्रियस्य मनसो रागादिना उपहतत्वात् । कुलसङ्करकारिण्यः=तज्जातिस्वभावानुगतप्रजोत्पादनेन कुलसाङ्कर्य्यम् । अत एव—

शङ्खलिखितौ,

यस्मिन् भावोऽर्पितः स्त्रीणामार्त्तवे तादृशं तन्तुं जनयन्तीति ।

तन्तुः पुत्रादिसन्ततिः ।

मनुरपि— ( अ०९श्लो०५।६।७ )

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥
इमं हि सर्वधर्माणां पश्यन्तो धर्म्ममुत्तमम् ।
यतन्ते रक्षितुं भार्य्यां भर्त्तारो दुर्बला अपि ॥
स्वां प्रसूतिं चरित्रं च कुलमात्मन एव च ।
स्वधर्म्मं हि प्रयत्नेन जायां रक्षन् हि रक्षति ॥ इति ।

द्वयोः कुलयोः=भर्त्तृकुलपितृकुलयोः । अनेन कुलद्वयवृद्धैरपि रक्ष्या इति शोककथनमुखेन दर्शितम । अत एव—

बृहस्पतिः,

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो निवार्या स्त्री स्वबन्धुभिः ।
श्वश्र्वादिभिः पालनीया गुरुस्त्रीभिर्दिवानिशम् ॥

मनुरपि—( अ०९श्लो०४ )

काले ऽदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः ।
मृते भर्त्तरि पुत्रस्तु वाच्यो मातुररक्षिता ॥ इति ।

काले=कन्यादानयोग्ये काले । वाच्यो=निन्द्यः । अनुपयन्=अगच्छन् ।

स एव— ( अ०९श्लो०३ ).

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ इति ।

याज्ञवल्क्योऽपि—

रक्षेत्कन्यां पिता विन्नां पतिः पुत्रस्तु वार्द्धके ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियाः ॥ इति ।

विन्ना=विवाहिता । पतिपुत्रविहीनायास्तु रक्षणं पतिपक्षान्तर्गतेन प्रत्यासन्नेन कार्य्यम् । तथा च—

नारदः, ( व्य०प०१३श्लो०२८।२९ )

मृते भर्त्तर्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः ।
विनियोगात्मरक्षासु भरणेषु च ईश्वरः ॥
परिक्षीणे पतिकुले निर्म्मनुष्ये निराश्रये ।
तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥

पतिपक्षस्याप्यभावे स एवाह—

पक्षद्वयावसाने तु राजा भर्त्ता स्मृतः स्त्रियः ।
स तस्या भरणं कुर्य्यान्निगृह्णीयात्पथश्च्युताम् ॥

विनियोगः=कर्माणि नियोजनम् । भर्त्ता=पोषकः । स्त्रीस्वभावं दर्शयति-दक्षः,

जलौकावत् स्त्रियः सर्वा भूषणाच्छादनाशनैः ।
सुहितापि कृता नित्यं पुरुषं ह्यपकर्षति ॥
जलौका रक्तमादत्ते केवलं सा तपस्विनी ।
इतरा तु धनं चित्तं मांसं वीर्य्यं बलं सुखम् ॥
साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत् ।
तृणवन्मन्यते नारी वृद्धभावे स्वकं पतिम् ॥
स्वकाम्ये वर्त्तमाना सा स्नेहान्न च निवारिता ।
अपथ्या तु भवेत पश्चाद्यथा व्याधिरुपेक्षिता ॥ इति ।

सुहिता=तृप्ता कृतापीत्यन्वयः । अपकर्षति=सततमाज्ञामात्रं करोति । स्वकाम्ये=स्वेच्छायाम् । अपथ्या=अत्यन्ताहितहेतुभूता ।

मनुरपि— ( अ० ९ )

नैता रूपं प्रतीक्षन्ते नासां वयसि संस्थितिः ।
सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥ (१४)
पौंश्चल्याच्चलचित्ताच्च नैस्नेह्याच्च स्वभावतः ।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥ (१५)
शय्यासनमलङ्कारं कामं क्रोधमनार्जवम् ।
द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् ॥ (१७)
नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मो व्यवस्थितः ।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः ॥ (१८)
तथा च श्रुतयो बह्वयो निगीता निगमेष्वपि ।
स्त्रीलक्षणपरीक्षार्थं तासां शृणुत निष्कृतीः ॥ (१९)
यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता ।
तन्मे रेतः पिता वृङ्क्तामित्यस्यैतन्निदर्शनम् ॥ (२०)
ध्यायत्यनिष्टं यत्किञ्चित्पाणिग्राहस्य चेतसा ।
तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते ॥ (२१)
एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति ॥ इति । (१६)

निरिन्द्रियाः=निर्वीर्या धैर्यप्रज्ञादिरहिता इति यावत् । स्त्रियोऽनृतमिति प्रायशोऽनृतवदनशीलत्वादुच्यन्ते । श्रुतयः=श्रुतिवाक्यानि । निगमेषु= वेदेषु । स्त्रीलक्षणम्=स्वरूपम् । तासां=श्रुतीनां मध्ये या निष्कृतिरूपा व्यभिचार-प्रायश्चित्तरूपास्ताः श्रुतीः शृणुत स्त्रीस्वभावज्ञानार्थमित्यर्थः ।

महाभारतेऽपि—(आनु०प०१३अ०३७)

कुलीना रूपवत्यश्च नाथवत्यश्च योषितः ।
मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ! ॥
अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च ।
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु ॥
यौवने वर्त्तमानानां मृष्टाभरणवाससाम् ।
नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः ॥
यदि पुंसां गतिर्ब्रह्मन् ! कथञ्चिन्नोपपद्यते ।
अप्यन्योन्यं प्रवर्त्तन्ते न च तिष्ठन्ति भर्तृषु ॥
अलाभात् पुरुषाणां च भयात्परिजनस्य च ।
वधबन्धभयाच्चैव स्वयं गुप्ता भवन्ति ताः ॥

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥
कामानामपि दातारं दातारं मानसान्त्वयोः ।(१)
रक्षितारं न मृष्यन्ति भर्त्तारं यत्नतः स्त्रियः ॥ इति ।

श्रीरामायणेऽपि—

नैवाङ्गनानां दयितो नापि द्वेष्योऽस्ति कश्चन ।
सर्वमेवावलम्बन्ते लता गहनजा इव ॥ इति ।

## अथ रक्षणप्रकारः ।

तत्र मनुः—(अ० ९ श्लो० १०)

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥ इति ।

प्रसह्य=आक्रम्य । अवरुद्धेति यावत् । यद्यप्यवरोधेन शरीरव्यभिचाराद्रक्षणं शक्यं तथापि मानसव्यभिचाराद्रक्षणमशक्यमित्याशयेन मनुना "न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्" इत्युक्तम् । न च मानसव्यभिचाराद्रक्षणमनर्थकमन्यजत्वाभावेन प्रजाविशुद्धिविघाताभावादिति वक्तव्यम् । यत आह—

स एव, (अ० ९ श्लो० ९)

यादृशं भजते स्त्री हि सुतं सूते तथाविधम् ।
तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत् प्रयत्नतः ॥ इति ।

यादृशं पुरुषमृतुकाले स्त्री मनसा भजते तत्समानशीलं पुत्रं जनयतीति पूर्वार्द्धार्थः । अत एवाहतुः—

शङ्खलिखितौ,

यस्मिन् भावोऽर्पितः स्त्रीणामार्त्तवे तच्छीलं पुत्रं जनयन्तीति ।

मानसव्यभिचारादपि स्त्रियं रक्षेदिति शेषः । तथा च मनुना "तस्मात्" इत्यादिनोत्तरार्द्धेनायमेवार्थो दर्शितः । परिरक्षणोपायानाह—

मनुरेव, (अ० ९ श्लो० ११)

अर्थस्य सङ्ग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्म्मे च पक्त्यां च पारिणाह्यस्य चेक्षणे ॥ इति ।

अर्थस्य सङ्ग्रहे=स्वेन समानीतार्थसंविधाने । व्यये=स्वेनोक्ते व्यये । शौचे= गृहादिशुद्धिकरसंमार्जनोपलेपनादौ । धर्म्मे=अग्निहोत्राद्यनुकूललौकिकव्यापारे । पक्त्यां=पाकव्यापारे । पारिणाह्यं=पीठादिगृहोपकरणं तस्य ईक्षणे विचारणे । निरन्तरं गृहव्यापारनियोजनादिना पुरुषान्तरचिन्ता-

---

(१) कर्तारं मनसां प्रियम् । इति मुद्रितमहाभारतपुस्तके पाठः ।

राहित्यं यथा भवति भार्यायां तथा कुर्यादिति तात्पर्यार्थः ।

बृहस्पतिरपि—

आयव्ययेऽर्थसंस्कारे गृहोपस्करक्षणे ।
शौचाग्निकार्ये संयोज्याः स्त्रीणां शुद्धिरियं स्मृता ॥ इति ।

एवंविधव्यापारासक्तचित्ततया साध्या इति व्यपदिश्यन्त इत्याह—

मनुः, (अ० ९ श्लो० १२)

आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः । इति ।

आत्मना=गृहव्यापारासक्तेनान्तःकरणेन । सुरक्षिताः-सुष्ठुरक्षिताः साध्याः । आप्तपुरुषरक्षितास्तु स्त्रियो न सम्यग्रक्षिता इत्याह—

स एव, (अ० ९ श्लो० १२)

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ॥ इति ।

आप्तकारिभिः पुरुषैः गृहे रुद्धा इत्यन्वयः । आप्ताश्च ते कारिणश्चाप्तकारिणः । अरक्षिताः=सम्यग्रक्षाविहीना इत्यर्थः । भर्तुर्द्धर्मनिष्ठत्वमपि स्त्रीणां रक्षणोपाय इति दर्शयितुं—

स एवाह, (अ० ९ श्लो० २२।२३)

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥
अक्षमाला वसिष्ठेन संयुक्ता ऽधमयोनिजा ।
शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥ इति ।

भार्याया भरणमप्यावश्यकमित्याह—

स एव--(९।९५)

देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः ।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥ इति ।

देवैर्दत्ता देवदत्ता दैववशयातेति यावत् । तां भार्यां स्वयंवरेप तिर्विन्दते लभते नतु स्वव्यापारात् । देवदत्तामित्यनेन विवाहलक्षणस्य स्त्रीपुंसयोः सम्बन्धस्य न स्वाधीनत्वं किन्तु देवकृतत्वमिति दर्शितम् । देवदत्तत्वं च स्त्रीणां-"सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिंश्च पुत्रांश्चाददद्ग्निर्मह्यमथो इमाम्" इत्यादिभ्यः श्रुतिवाक्येभ्योऽवगम्यते । तेन देवैर्दत्ताया अभरणेन दातॄणां देवानां द्रोह आपाद्यत इत्यर्थवाद इत्युक्तं मदनरत्ने । न च साध्वीमित्यस्य पतिव्रतामित्यर्थपरत्वेन व्यभिचारिण्या भरणमनावश्यकमिति वक्तव्यम् । तस्या अपि कदन्नादिनावश्यभरणीयत्वात् । तथा च—

नारदः, ( व्य०प०१२श्लो०९१ )

व्यभिचारे स्त्रिया मौण्ड्यमधःशयनमेव च ।
कदन्नं च कुवासश्च कर्म्म चावकरोज्झनम् ॥ इति ।

स्त्रिया रत्यर्थव्यभिचारे जाते मुण्डनमधःशयनं च साधयेत्, कदन्नं कुवासश्च भरणार्थं दद्यात्, अमेध्यशोधनरूपं कर्म्म कारयेदित्यर्थः ।

दोषरहिताया भार्यायाः परित्यागिनं प्रत्याह—

नारदः, ( व्य०प०१२ श्लो०९५ )

अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् ।
त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ॥ इति ।

विष्णुरपि—

निर्दोषां परित्यजन् पत्नीं चेति ।

चौरवच्छास्य इत्यनुषङ्गः । निर्दोषां=त्यागहेतुभूतदोषरहिताम् । दण्डेन स्थापयितुमशक्ये त्वाह—

योगीश्वरः, (अ० १ श्लो० ७६ )

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥ इति ।

तृतीयांशं=तद्धनतृतीयांशं राज्ञा भार्याया दाप्यः । अल्पधनो भरणमात्रपर्याप्तं धनं दाप्य इत्यर्थः ।

इति स्त्रीपुंयोगाख्यं व्यवहारपदम् । १८

---

# अथ वीरमित्रोदये

## दायभागाख्यं व्यवहारपदम् । १६ ।

यत्र मन्वादिवचनव्याख्यासु बहुधा बुधाः ।
विवदन्ते दायभागः स प्रबन्धेन वर्ण्यते ॥

तल्लक्षणमाह नारदः—(व्य० प० १३ श्लो० १)

विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः ॥ इति ।

पित्रोरयं पित्र्य इति कृतैकशेषात्पितृशब्दाद्यत् । अग्रे मातृधनस्यापि विभागकथनात् । पित्र्यस्य पुत्रैरिति च द्वयमपि सम्बन्धिमात्रोपलक्षणम् । पत्नीत्यादिनान्येषामपि भर्त्रादिधने तन्निरूपणात् । अत एवोपक्रमे मनुना पित्रादिपदं नोपात्तम् ।

(१)एष स्त्रीपुंसयोरुक्तो धर्म्मो वो रतिसंहितः ।
आपद्यपत्यप्राप्तिश्च दायधर्मं निबोधत ॥ इति । (अ०९श्लो०१०३)

दायधर्म्मोऽत्र विभागरूपोऽभिप्रेतस्तस्यैवाग्रे लक्षणकथनपूर्वकं निरूपणात् । उद्देशावसरेऽपि "स्त्रीपुंधर्मो विभागश्च" इति तस्यैव विवादपदत्वेनोद्देशात् । अत एव चाग्रे यावत्सम्बन्धिधनविभागमेव प्रदर्शितवान्मनुः ।

दायशब्दश्चायं स्वामिसम्बन्धमात्राद्यत्र द्रव्ये स्वत्वं तद्रूढ्या वदति ।(२) तथा च—

निघण्टुकारः,

विभक्तव्यं पितुर्द्रव्यं दायमाहुर्मनीषिणः ।

इत्याह । अत्रापि पितृपदं सम्बन्धिमात्रोपलक्षणमन्यत्रापि दायशब्दप्रयोगात् । विभक्तव्यं=विभागार्हमित्यर्थः । अन्यथैकपुत्रादिस्वामिके विभागाभावाद्दायशब्दवाच्यता न स्यात् ।

यत्तु जीमूतवाहनेन तदनुयायिना व्यवहारतत्त्वकृता च दीयत इति व्युत्पत्त्या

---

( १ ) रतिसंहितः=अन्योन्यानुरागयुक्तः । आपद्यपत्यप्राप्तिः=क्षेत्रजादिपुत्रकरणम् ।

( २ ) स्वामिसम्बन्धमात्रादिति । अत्र सम्बन्धो जन्यजनकभावादिर्धनस्वामिना सहान्यस्य पुत्रादेर्बोध्यः । मात्रपदेन लोकप्रसिद्धक्रयादिरूपनिमित्तान्तरमात्रव्यवच्छेदः ।

दायशब्दो ददातिप्रयोगश्च गौणः(१)। मृतप्रव्रजितादिस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिरूपफलसाम्यात्। न तु मृतादीनां तत्र त्यागोऽस्ति। ततश्च पूर्वद्रव्यस्वामिसम्बन्धाधीनं तत्स्वाम्योपरमे यत्र द्रव्येऽन्यस्वत्वं तत्र निरूढो दायशब्द इत्युक्तम्।

तन्न सुन्दरम्। निरूढत्वाङ्गीकारे दायददातिशब्दयोर्गौणत्वोपन्यासानर्थक्यात्। सर्वथाऽवयवार्थराहित्ये हि निरूढत्वम्। न च योगरूढत्वम्। अवयवार्थबाधस्य स्वयमेवोपन्यासात्। गौणमवयवार्थं परिकल्प्य तदङ्गीकारस्य निष्प्रयोजनत्वमन्योन्याश्रयत्वमनुभवविरोधो व्याघातश्च। तत्स्वाम्योपरम इति च जन्मनापि स्वत्वस्योपपादयिष्यमाणत्वादव्यापकम्।

विभागशब्दस्त्वनेकस्वाम्यानां द्रव्यसमुदायविषयाणां तत्तदेकदेशे व्यवस्थापने शक्तः। अत एवैकपुत्रादीनां पित्रादिधनस्वाम्ये विभागशब्दाप्रयोगो दायोऽनेन लब्ध इत्येव च प्रयोगः। यत्रापि चैकं दासीगवादि बहुसाधारणं तत्रापि तत्तत्कालविशेषनियतदास्यदोहनादिना तस्य तस्य स्वव्यञ्जनादस्त्येकदेशस्वाम्यव्यवस्थापनरूपो विभागशब्दार्थः। अत एव—

एकां स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे। इति,
उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते। इति,
युक्त्या विभजनीयं तदन्यथानर्थकं भवेत्।

इति च बृहस्पत्यादिवचनेषु वक्ष्यमाणरीत्या तदुपपादयिष्यते।

स च दायो द्विविधोऽप्रतिबन्धः सप्रतिबन्धश्च। पुत्रादीनां पित्रादिधने

(१) अत्र "विभागोऽर्थस्य" इति नारदवचनेन सम्बन्धिधनविभागो दायभाग इत्युक्तम्, तच्च न सम्भवति। भावकृता व्युत्पन्नस्य दायशब्दस्य त्यागरूपधात्वर्थमात्रबोधकत्वेन तादृशधनाबोधकत्वादाह—दीयते इति। दीयते यत्स दाय इति कर्मव्युत्पन्नतया कर्मकृतैव धनबोधः। एवमपि कर्मकृता धात्वर्थकर्मण एव बोधनात् प्रकृते च त्यागस्य धात्वर्थत्वेन मृतादीनां त्यागाभावेन त्यागकर्मत्वेन तद्धनबोधनासम्भवादनुपपत्तेः तादवस्थ्यादाह—ददातिप्रयोगश्चेति। दाधातुप्रयोग इत्यर्थः। चकारः पुनरर्थे। गौण इति। शक्यस्य सादृश्यात्मकः सम्बन्धो गुणः। तदधीना या लक्षणा सा गौणी तद्योगाद्गौण इत्यर्थः। तथाच पूर्वस्वामिस्वत्वनिवृत्तिपरस्वामिस्वत्वोत्पत्तिफलकत्यागत्वेन रूपेण त्यागे शक्तस्य दाधातोः पूर्वस्वामिस्वत्वनिवृत्तिपरस्वामिस्वत्वोत्पत्त्यनुकूलव्यापारत्वेन पित्रादिमरणप्रव्रज्यादिसाधारणेन रूपेण लक्षणा। सम्बन्धिनिधनाद्यनन्तरं मरणादितादृशव्यापारजन्यं यत्पूर्वस्वामिस्वत्वनिवृत्तिपरस्वामिस्वत्वोत्पत्तिरूपं फलद्वयं तच्छालित्वरूपं कर्मत्वमक्षतमेवेति न पूर्वोक्तानुपपत्तिरित्याशयः।

पुत्रत्वादिनैव सत्यपि स्वामिनि पित्रादौ जन्मनैव स्वत्वोत्पत्तेः स तेषा-मप्रतिबन्धो दायः। स्वामिसद्भावस्याप्रतिबन्धकत्वात्। यस्तु विभक्तस्या-संसृष्टिनोऽपुत्रस्य मृतस्य पितृभ्रात्रादीनां तद्धनरूपो दायः स सप्रतिबन्धः। स्वामिसद्भावस्य प्रतिबन्धकस्यापगम एव तत्र स्वत्वोत्पत्तेः।

ननु सर्वोऽपि सप्रतिबन्ध एव दायः। स्वामिसद्भावे पुत्रादीना-मपि जन्ममात्रेण स्वत्वस्य वक्तुमशक्यत्वात्। तथाहि। यदि जन्मनैव पुत्रादीनां पित्रादिधने स्वत्वं स्यात्तर्ह्युत्पन्नमात्रस्य पुत्रादेस्तत्साधा-रणमिति तदनुमतिं विना द्रव्यसाध्येष्वाधानादिषु पित्रादीनामनधिका-रापत्तौ "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इति श्रुतिविरोधः। किञ्च। विभागात् प्राक् पित्रादिप्रसादलब्धस्याविभाज्यत्ववचनं व्यर्थं स्यात्। तद्धि पित्रा पुत्रान्तरानुमत्या यदि दत्तं सर्वैरेव दत्तमिति विभागप्रा-प्त्यभावादेव प्रतिषेधोऽनर्थकः। अननुमत्या तु साधारणद्रव्यस्य दान-मेव न सम्भवतीति पित्रादिप्रीतिदत्तत्वादिवाचोयुक्तिरयुक्ता। एवं पुत्राद्यनुमतिमन्तरेण स्त्र्यादीनामपि भर्त्रादिभिः प्रीतिदानस्यासम्भ-वात् तदनुमतौ तु तैरपि दत्तत्वात्—

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते॥

इति वचने यथाकाममश्नीयाद्दद्याद्वेत्यनेनाविभाज्यत्वं भर्तृप्रीतिल-ब्धस्य यदभिहितं तदपि व्यर्थम्। न चेदमविभागावस्थायां प्रीतिदानं तस्य चाविभाज्यत्वं न प्रतिपादयति, किन्तु स्थावरादृते यद्दत्तमित्यन्व-याद्विभागोत्तरमपि भर्त्रा स्त्रियै स्थावरं न प्रीत्या देयमज्ञानाद्दत्तमपि तेन पुत्रादिभिरपहृत्य विभजनीयमस्थावरं तु न प्रत्याहर्त्तव्यमित्यनु-वादमात्रम्, स्थावरस्य स्त्रियै प्रीतिदानप्रतिषेधमात्रं तात्पर्य्येण बोध-यतीति शङ्कनीयम्। तथान्वयस्य व्यवहितयोजनाप्रसङ्गेनायुक्तत्वात्। स्थावरप्रीतिदानप्रतिषेधमात्रतात्पर्यकत्वेऽन्यांशस्यानुवादमात्रं व्यर्थ-त्वापरपर्य्यायं चापद्यते। अथ—

मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।
स्थावरस्य तु सर्वस्य न पिता न पितामहः॥

तथा,

पितृप्रसादाद् भुज्यन्ते वस्त्राण्याभरणानि च।
स्थावरं तु न भुज्येत प्रसादे सति पैतृके॥

इति वचनमवश्यं विभागप्राक्कालीनस्थावरप्रसाददानप्रतिषेधपरं वा-च्यम्। मणिमुक्तादिप्रसाददानानुमतिपुरःसरं तत्प्रतिषेधाभिधानात्।

अन्यथा तस्यानुवादमात्रत्वेन वैयर्थ्यापत्तेः। तथा च जन्मना पुत्रादीनां स्वत्वान्मणिमुक्तादिषु तदनुमतिमन्तरेणापि दाने पितुः स्वातन्त्र्यम्। स्थावरे तु तदनुमत्यैवेति विशेष इति वचनद्वयार्थस्य वाच्यत्वाज्जन्मना स्वत्वमायातीति।

मैवम्। तस्य पितामहोपात्तस्थावरविषयत्वात्। अतीते पितामहे तत्स्वाम्यनाशात्पितापुत्रयोः साधारणे तदीयद्रव्यस्वत्वेऽपि स्थावर एव पुत्रानुमत्यपेक्षा मणिमुक्तादौ तु नेति तदर्थात्।

यत्तु गौतमवचनम्—

उत्पत्त्यैवार्थस्वामित्वं लभेत इत्याचार्य्याः।

इति जन्मनः स्वत्वहेतुत्वे मिताक्षराकृता प्रमाणत्वेनोपन्यस्तं, तद्दायभागतत्त्वकृता व्याख्यातमेव। पितृस्वत्वोपरमेऽङ्गजत्वस्य (१)हेतुभूतेनोत्पत्तिमात्रसम्बन्धेनान्यसम्बन्धाधिकेन जनकधने पुत्राणां स्वामित्वात्तद्धनं पुत्रो लभते नान्यः सम्बन्धीत्याचार्य्या मन्यन्त इति। न तु पितृस्वत्वे विद्यमानेऽपि तत्र पुत्रस्वत्वमिति तदर्थः। नारददेवलवचनविरोधात्।

पितर्य्यूर्ध्वं गते पुत्रा विभजेयुर्द्धनं पितुः।

इति नारदः पितुर्द्धनमित्याह। अन्यथा धनं विभजेयुरित्येवावक्ष्यत्।

पितर्य्युपरते पुत्रा विभजेयुर्द्धनं पितुः।
अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते॥

इति देवलोऽपि पितुर्द्धनमित्युक्तोत्तरार्द्धेनास्वाम्यं हीति स्पष्टमेव तेषामस्वत्वं तत्र हेतुत्वेनोक्तवान्। निर्दोषे=पातित्यादिस्वत्वापगमकदोषरहिते।

मनुरपि-(अ०९ श्लो० १०४)

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः॥

इति जीवतोर्मातापित्रोस्तद्धने पुत्राणामस्वाम्यं व्यक्तमेवाह।

यत्तु शङ्खलिखितावाहतुः—

न जीवति पितरि पुत्रा रिक्थं भजेरन्। यद्यपि स्वाम्यं पश्चादधिगतं तैरनर्हा एव पुत्रा अर्थधर्मयोरस्वातन्त्र्यादिति।

स्मृतिचन्द्रिकाकारेण च व्याख्यातम्—यद्यपि तैः=पुत्रैः स्वकीयजन्मनः पश्चादनन्तरमेव पितृधने स्वाम्यमधिगतं=प्राप्तं तथापि जीवति पितरि तद्धनं तदिच्छां विना न विभजेरन् अर्थधर्मयोरस्वातन्त्र्यात् पितृपारतन्त्र्याद्विभागकरणेऽनर्हाः पुत्रा इति। तेनानेन वचनेन जन्मना पुत्रादीनां पित्रादिस्वामिकधने स्वत्वमिति।

---

(१) तज्जन्मत्वस्येति पाठान्तरम्।

तदपि न । मन्वादिवचनानां बहूनामस्वाम्यप्रतिपादकानामनुरोधे नास्यान्यथावर्णनीयत्वात् । वर्णितं च कल्पतरौ—यद्यपि पश्चादधिगतं पितृधनं व्यापारनिरपेक्षैः पुत्रैर्विद्यादिभिरुपात्ते धने स्वाम्यं तथापि तत्राप्यस्वाम्यं जीवति पितरि किमुत पितृधने, अर्थधर्म्मयोस्तेषां पितरि जीवत्यस्वातन्त्र्यादिति ।

किञ्च । स्वत्वं शास्त्रैकसमधिगम्यम् । तत्र च रिक्थक्रयादिवज्जन्मनः स्वत्वहेतुत्वेनानुक्तेर्जन्मना स्वत्वमप्रमाणमेव । अत एव यथा भार्य्यादिवचनम्—

भार्य्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।

यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ (मनु०८।४१६)

इति पारतन्त्र्यमात्रप्रतिपादनपरम् तथाऽस्वाम्यवचनान्यपीत्यपास्तम् । भार्य्यादिष्वध्यग्न्यादिवचनैः कर्त्तनादिना चार्ज्जकत्वेन स्वामित्वे सिद्धे युक्तमस्वातन्त्र्यमात्रपरत्वमन्यथा पूर्तादिषु धनसाध्येषु पुराणादिश्रुतं तेषामधिकारित्वमपि विरुध्येत । अत्र तु प्रत्युत जन्मनः स्वत्वहेतुत्वे प्रमाणाभावाद्यर्थमेवान्यथानेकवचनवर्णनम् ।

किञ्च यदि स्वत्वं लौकिकं स्यात्तर्हि तदुपायानामपि लौकिकत्वात्

स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः ।

इति गौतमवचनं व्यर्थमेव स्यादनुवादमात्रत्वात् । न हि पाकादोदनो भवतीत्यादि शास्त्रे निष्प्रयोजनमनुवादमात्रमुच्यते । तस्य हि वचनस्यायमर्थः । रिक्थं=दायः । क्रयः प्रसिद्धः । संविभागो=दायस्यैवैकदेशनिष्ठस्वामित्वव्यञ्जको विभागः । परिग्रहः=पूर्वमपरेणास्वीकृतस्यारण्यादिसाधारणप्रदेशसम्बन्धिनस्तृणजलकाष्ठादेः स्वीकारः । अधिगमोऽज्ञातस्वामिकस्य निध्यादेः प्राप्तिः । एतेषु स्वत्वहेतुषु सत्सु स्वामी भवति, जातेषु च जायते । ब्राह्मणस्य लब्धं=प्रतिग्रहादिप्राप्तमधिकमसाधारणम् । रिक्थादयस्तु सर्वसाधारणाः । अधिकमित्युत्तरत्र सर्वत्र सम्बध्यते । क्षत्रियस्य विजितं=युद्धविजयदण्डादिप्राप्तमसाधारणम् । वैश्यस्य निर्विष्टं=कृषिगोरक्षणादिभृतिलब्धम् । शूद्रस्य द्विजशुश्रूषादिभृतिलब्धम् । निःपूर्वस्य विशेर्भृतिवाचकत्वम् । "निर्वेशो भृतिभोगयोः" इतित्रिकाण्डशेषाभिधानात् । वैश्यशूद्रग्रहणस्योपलक्षणत्वादन्येषामप्यनुलोमजप्रतिलोमजातानां "सूतानामश्वसारथ्यम्" इत्याद्यौशनसादिप्रतिपादितं वृत्तिजातं निर्विष्टशब्देन सङ्गृह्यते । सर्वस्य भृतिरूपत्वात् । किञ्च—

योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् ।

याजनाध्यापनेनापि यथा स्तेनस्तथैव सः ॥ (मनु०८।३४०)

इत्यदत्तादायिनश्चोरस्य हस्ताद्याजनादिस्ववृत्त्यापि धनमर्ज्जयतो दण्डविधानमनुपपन्नं स्वत्वस्य लौकिकत्वे। स्ववृत्त्यार्ज्जयतो निरपराधत्वात्। मन्मते तु शास्त्रैकसमधिगम्यत्वात् स्वत्वस्य चौरदातृकयाजनादावेतद्वचनादेव स्वत्वानुत्पादकत्वात्तद्विधानमुपपन्नतरम्।

अपिच मम स्वमनेनापहृतमिति व्यपदेशो न स्यात् स्वत्वस्य लौकिकत्वे। अपहर्त्तुरेव तत्र स्वत्वात्। मन्मते त्वपहारस्य निषिद्धत्वेन स्वत्वानुत्पादकत्वादुपपन्नोऽयं व्यपदेशः। यदि च सुवर्णत्वादिकमिव तत्र स्वत्वमपि प्रत्यक्षप्रमाणकं तर्हि सुवर्णत्वादौ यथा न सन्देहस्तथास्य स्वमिदमस्य वेत्यपि सन्देहो न स्यान्निर्णीतत्वात्। इदमेवोक्तं सङ्ग्रहकारेण—

वर्त्तते यस्य यद्धस्ते तस्य स्वामी स एव न।
अन्यस्वमन्यहस्तेषु चौर्य्याद्यैः किन्न दृश्यते॥
तस्माच्छास्त्रत एव स्यात् स्वाम्यं नानुभवादपि।
अस्यापहृतमेतेन न युक्तं वक्तुमन्यथा।
विदितोऽर्थागमः शास्त्रे तथाऽवर्णि पृथक् पृथक्॥ इति।

शास्त्रे=स्वामी रिक्थक्रयेत्यादौ साधारणासाधारणरूपोऽर्थागमः=स्वत्वोपायः पृथक् पृथग्वर्णितस्तथा विदितो लौकिकत्वे तच्छास्त्रानर्थक्यं स्यादिति विदित इत्यर्थः। अन्यत् स्पष्टम्। यथावर्णमिति स्मृतिचन्द्रिकायां पाठः। पूर्वपाठस्तु मदनरत्नलिखितः।

अथ यद्यस्य यथेष्टं विनियोज्यं तत्तस्य स्वमिति लोकप्रसिद्धेर्यथेष्टविनियोज्यत्वं स्वत्वमिति चौर्य्याद्यर्ज्जिते नातिप्रसङ्गस्तत्र चौरादेर्य्यथेष्टविनियोज्यत्वाभावाद्विनियोगकाले त्रासादिदर्शनात्। अत एव सन्देहोऽप्युपपन्नः। सुवर्णत्वादितुल्यत्वाभावात् स्वत्वस्य।

नैवम्। असम्भवात्। शास्त्रेण सर्वस्य कुटुम्बभरणादौ विनियोगविशेषनियमादैच्छिकविनियोगविषयत्वस्य कुत्राप्यप्रसिद्धेः। तदप्याह सङ्ग्रहकारः शङ्कोपन्यासपुरःसरम्।

न च स्वमुच्यते तद्यत् स्वेच्छया विनियुज्यते।
विनियोगोऽस्य सर्वस्य शास्त्रेणैव नियम्यते॥ इति।

अत्र पूर्वार्द्धे शङ्कोपन्यास उत्तरार्द्धे तत्परिहारः। न च "रिक्थादिवदुत्पत्त्यैवार्थस्वामित्वम्" इति गौतमवचन उत्पत्तेरपि जन्मापरपर्यायायाः स्वत्वहेतुत्वोक्तेः सत्यपि स्वत्वस्य तदुपायानां च शास्त्रैकसमधिगम्यत्वे जन्मना पुत्रादेः पित्रादिधनस्वत्वमक्षतमेवेति वाच्यम्। त-

स्यानेकदूषणैरन्यथा व्याख्यानस्य प्रागेवोक्तत्वात् । इदमेवाभिसन्धाय धारेश्वरेणापि शास्त्रैकसमधिगम्यमेव स्वत्वमिति सिद्धान्तितम् ।

अपि च । जीवत्यपि पित्रादौ पुत्रादेस्तद्धने जन्मना स्वत्वे तदनिच्छायामपि पुत्रादीच्छयैव विभागः स्यात् । अस्वातन्त्र्यवचनान्नैवमिति चेत्, न । तथा सति दृष्टादृष्टविरोधमात्रं भवेत् व्यवहारस्तु सिद्ध्येदेव । यथा पित्रादिभिः सह पुत्रादिभिश्चतुष्पाद्व्यवहारे प्रवर्त्तमाने तेषां दृष्टादृष्टयोः श्रेयोविघातमात्रं "गुरोः शिष्ये पितुः पुत्र" इत्यादिवचनार्थ इति प्राक्प्रपञ्चितम्, तथात्रापि स्यात् । अस्त्विति चेत्, सकलनिबन्धविरोधात् । क्वचिज्जन्मनैवेति प्राचीनग्रन्थलिखनमपि जन्मनिबन्धनत्वात्पितापुत्रादिसम्बन्धस्य पितृमरणस्य च तत्स्वत्वापगमहेतुत्वेन परम्परया वर्णनीयम् ।

किञ्च । "ऊर्ध्वं पितुश्च" इत्यादिमनुवचनं जन्मना पुत्राणां स्वत्वपक्षे जीवति पितरि सत्यपि पुत्राणां स्वाम्ये तदिच्छया विना न तद्विभाग ऊर्ध्वं तु सर्वेच्छयेति विभागनिषेधार्थं प्रागिति वाच्यम् । तच्चान्याय्यम् । अस्वाम्यपरत्वापत्तेः । न च पित्रुपरमकालविधानार्थं विभागविधानार्थं चेति युक्तम् । दृष्टार्थत्वाद्विभागस्योभयस्याप्यनुपपत्तेः । नापि नियमविधिर्विभागस्य ।

एवं सह वसेयुर्वा पृथग् वा धर्मकाम्यया (अ० ९ श्लो० १११)

इति मनुना विकल्पाभिधानात् । कालविधौ च पित्रुपरमानन्तरकाल एव विभागो नैमित्तिकस्य निमित्तानन्तर्य्यबाधोऽयं स्यात् । जातेष्टिवज्जातप्राणवियोगापत्तिसरूपविशेषविरोधस्यात्राभावात् । अतो जीवतोः पित्रोस्तद्धने स्वाम्यं नास्ति किन्तूपरतयोस्तयोरिति तत्कालीनस्वत्वज्ञापनार्थं मन्वादिवचनम् । विभागस्तु स्वातन्त्र्यात्तत्कालीन इच्छाप्राप्तोऽनूद्यते । तथाचैतद्वचनविरोधादपि न जन्मना स्वत्वं वक्तुं शक्यम् । उपरमवत्पतितत्वादिकमपि पित्रादिस्वत्वनाशकारणं वक्ष्यते । तस्मात् पित्रादिस्वत्वनाश एव तद्धने पुत्रादीनां स्वाम्यं न तत्स्वत्वसमकालीनमिति स्वाम्यादिसद्भावस्य सर्वत्र प्रतिबन्धकत्वात् सर्वोऽपि सप्रतिबन्ध एव दाय इति द्वैविध्यमनुपपन्नमिति ।

अत्रोच्यते । यदि पित्रादिस्वत्वापगम एव पुत्रादीनां तद्धने स्वत्वं, तर्हि निर्दोषे पित्रादौ जीवति तेषां धनसाध्यवैदिककर्मस्वनधिकारप्रसङ्गे "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यादिश्रुतिविरोधस्तुल्यः । न च स्वकपोलकल्पितहेत्वाभाससमर्थितस्मृत्यर्थानुरोधेन श्रुतिसङ्कोचो युक्तः । आहिताग्नाविष्टप्रथमयज्ञे पित्रादौ जीवत्यपि पुत्रादीन् प्रति तत्प्रवृत्त्यवि-

शेषात् । सकलयाज्ञिकशिष्टानां तदनुष्ठानदर्शनाच्च । जातपुत्रकृष्णकेश-पदाभ्यां वयोऽर्द्धानतिक्रमस्यैव विवक्षा न तु तयोरव्यवस्थितयोः स्वरूपेणेति विरोधाधिकरणे भाष्यवार्त्तिकादौ स्थितत्वात् । न च यथा पुत्रानुमत्या पितुर्भवन्मते तदधिकारस्तथा मन्मतेऽपि पुत्रादीनामपि पित्राद्यनुमत्येति वाच्यम् । यतो द्वयोरपि मते पितुः स्वत्वस्य धने विद्यमानत्वात् स्वत्वत्यागरूपप्रधाननिष्पत्तिरविहता । भवन्मते तु पुत्रादीनां स्वत्वस्यैवाभावादनुमतेश्च स्वत्वाजनकत्वाद्यागादिप्रधाननिष्पत्तिरेव कथम् । वस्तुतस्तु पितुः पुत्रानुमतिरपि नापेक्षिता स्वातन्त्र्यात् । पित्राद्यनुमतिस्तु पुत्रादेरपेक्षिता पारतन्त्र्यादित्येतावान् विशेषः । यथा स्त्रियाः स्वधनेनापीष्टापूर्त्तादिव्रतादौ भर्त्राद्यनुमतिस्तत्पारतन्त्र्यवचनात् । अननुमतौ तु स्वतन्त्रः प्रत्यवायो वैगुण्यं वा कर्माणि न तु प्रधानस्वरूपानिष्पत्तिः । पित्राद्यनुमतेः स्वत्वोत्पादकत्वं चैतदनुरोधात्कल्प्यमानमलौकिकमशास्त्रीयं च । तस्माच्छास्त्रैकसमधिगम्येऽपि स्वत्वे कथञ्चिज्जन्मनोऽपि रिक्थादिवचनादावधिगमादिपदेन सङ्ग्रह आवश्यकः । श्रुतिस्मृतिपुराणशिष्टाचारसिद्धस्य निर्दोषे जीवत्यपि पित्रादौ पुत्रादियज्ञाद्यनुष्ठानाधिकारस्यानुरोधात् ।

वस्तुतस्तु लौकिकमेव स्वत्वं, लोके च जातमात्राणामेव पुत्रादीनां पित्रादिधने स्वाम्यव्यवहारोऽन्येषामपीति साधयिष्यामः ।

यच्च पित्रादीनामनुमत्ययोग्यपुत्रादिसाधारणस्वत्वे कथमनुमतिमन्तरेणाधानादिकं स्यादित्युक्तम्, तत् अनुमतियोग्येष्वपि पुत्रादिषु स्वातन्त्र्यात्पित्रादीनां न तदनुमत्यपेक्षा किमुतानुमत्ययोग्येष्विति परिहृतप्रायमेव । तद्विधिबलादेवाधिकारोऽवगम्यत इति तु विज्ञानेश्वराचार्य्यः । अतश्च "उत्पत्त्यैवार्थस्वामित्वम्" इति गौतमवचनस्य यज्जीमूतवाहनरघुनन्दनाभ्यां पारम्परिकोत्पत्तिस्वत्वहेतुत्वेन व्याख्यानं कृतं तदपि व्यर्थमेव ।

यत्तु शङ्खवचनं तस्यापि स्मृतिचन्द्रिकोक्तव्याख्यैव साधीयसी । कल्पतरूक्तव्याख्यायां तु विद्याद्युपात्ताध्याहारेऽनुपस्थितभूयःपदाध्याहारः प्रसज्येत । जन्मपदाध्याहारस्तु पुत्रत्वाद्याक्षेपोपस्थितेरल्पाध्याहाराच्च नायुक्तः । तेन श्रुत्युपष्टब्धस्मृत्यनुरोधान्मनुनारददेवलादिवचनानामेवास्वातन्त्र्यपरत्ववर्णनमुचिततरम् ।

यदप्युक्तं प्रीतिदत्तस्याविभाज्यत्ववचनानि जन्मना स्वत्वाभ्युपगमेऽनुपपन्नानीति । तदपि न । अनुमत्यभिप्रायेण स्थावरप्रीतिदानाभावस्थिरीकरणार्थतयोपपत्तेः । स्वातन्त्र्याद्वा पितुरनुमतिमन्तरेणापि तेन दत्ते स्थावरव्यतिरिक्ते पुत्राणामविभाज्यत्वमुच्यते । अत एव स्था-

वरे विशेषवचनम्—

स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् ।
असम्भूय सुतान् सर्वान्न दानं न च विक्रयः ॥ इति ।

"मणिमुक्ताप्रवालानाम्" इत्यादिवचनं तु जन्मना स्वत्वपक्ष एवोपपन्नतरम् । न च पितामहोपात्तस्थावरमात्रविषयत्वमुक्तं युक्तम् । "न पिता न पितामह" इति द्वयग्रहणात् । पितामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च सत्यपि न देयमिति वचनं जन्मना स्वत्वं गमयति । यथा परमते मणिमुक्ताप्रवालादीनां पैतामहानामपि पितुरेव स्वत्वं तत्स्मरणात् । तथास्मन्मतेऽपि पुत्रादीनां तत्र जन्मना स्वत्वे साधारणेऽपि पितुर्दानाधिकार इत्यविशेषः । तस्मात्पैतृके पैतामहे च द्रव्ये पुत्रादीनां यद्यपि जन्मनैव स्वत्वं तथापि पितुरावश्यकेषु धर्मकृत्येषु वाचानिकेषु च प्रसाददानकुटुम्बभरणापद्विमोक्षादिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति ध्येयम् । स्थावरादौ तु स्वार्जिते पित्रादिपरम्पराप्राप्ते च पुत्रादिपारतन्त्र्यं तुल्यमेव ।

स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् ।
असम्भूय सुतान् सर्वान्न दानं न च विक्रयः ॥
ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः ॥
इत्यादिवचनात् । अस्याप्यपवादो वक्ष्यते ।

यच्च स्वत्वस्य शास्त्रैकसमधिगम्यत्वाच्छास्त्रे च जन्मनः क्वापि स्वत्वहेतुतानभिधानात् कथं जन्मना पुत्रादीनां पित्रादिधने स्वत्वस्वीकार इत्युक्तम् । तत्तु शास्त्रैकसमधिगम्यत्वमभ्युपेत्यापि गौतमादिवचन उत्पत्तेरपि स्वत्वोपायत्वोक्तेः परिहृतमेव प्राक् ।

वस्तुतस्तु न स्वत्वस्य शास्त्रैकसधिगम्यत्वं युक्तियुक्तम् । सर्वथा शास्त्रज्ञानगन्धरहितानां प्रत्यन्तवासिनां म्लेच्छादीनामपि 'इदं मम स्वम्' 'इदमन्यस्य स्वम्' इति व्यपदेशस्तत्कृतश्च क्रयविक्रयादिव्यवहारो दृश्यते । तेनान्वयव्यतिरेकाभ्यां क्रयाद्युपायकं स्वामित्वनिरूपितं स्वत्वमपि तैर्यथेष्टविनियोगार्हत्वरूपं पदार्थान्तररूपं वा प्रत्यक्षादिप्रमाणादेवावगतमित्यवश्यं वाच्यम् । एतत्तर्कोपष्टब्धोऽनुमानवाक्यप्रयोगोऽपि विज्ञानयोगिनोक्तः—स्वत्वं लौकिकम् लौकिकार्थक्रियासाधनत्वाद्व्रीह्यादिवदित्यन्वयदृष्टान्तः । आहवनीयादीनां शास्त्रैकसमधिगम्यानां न लौकिकार्थक्रियासाधनत्वमस्तीति व्यातिरेकदृष्टान्तः । तेनान्वयव्यतिरेकी हेतुः । यद्यप्याहवनीयादीनामपि पाकादिलौकिकक्रियासाधनत्वमप्यस्ति । तथापि

तल्लोकप्रमाणकाग्न्यादिरूपेण नालौकिकाहवनीयादिरूपेणेति न व्यभिचारः। इह तु सुवर्णादिरूपेण न क्रयादिसाधनत्वमपि तु स्वत्वेनैवेति। सुवर्णत्वादिनाभरणाद्यर्थक्रियासाधनत्वात् तद्यथा लौकिकं रूपम् एवं स्वत्वमपि सर्वानुगतं लौकिकमेव। न ह्यस्वेन क्रयनिर्वाहो लोके। न चैवं "स्वामी रिक्थ" इत्यादिस्मृतीनां लोकसिद्धार्थानुवादकत्वेनानर्थक्यापत्तिरिति वाच्यम्। धर्माधर्मोपयोगितया व्याकरणस्मृताव नादिवाचकत्वतदभावरूपसाधुत्वासाधुत्वविवेकस्येव तस्योपपत्तेः। साधुशब्दाधिकरणे ( अ० १ पा० ३ अधि० ९ ) ह्येतदवस्थितम्— यत्सङ्कीर्णव्यवहारिणां लोकानामविविक्तं लौकिकमेव साधुत्वं शास्त्रेण विविच्यते। न त्वलौकिकसाधुत्वम्, साधुभिर्भाषेतेत्यादिविधाव न्योन्याश्रयप्रसङ्गादित्यादि। एवमत्रापि। तथा च नयविवेके भवनाथः "लोकसिद्धं चार्ज्जनं जन्मादि। अत एवानिन्द्यं प्रथमलोकधीविषयव्यवस्थितम्। तन्निबन्धनार्था स्मृतिर्व्याकरणादिस्मृतिवत्" इति। जन्मादीत्यादिपदेन क्रयादिग्रहणम्। व्याकरणादीत्यादिपदेन सङ्गीतरत्नपरीक्षासामुद्रिकाणां ग्रहणम्। रागादीनामपि हि लोकसिद्धानामेवानभियुक्तान् प्रति विवेकार्थमेव तल्लक्षणकथनमित्युक्तं स्मृत्यधिकरणे आचार्य्यचरणैः। ( अ० १ पा० ३ अधि० १ ) "स्वामी रिक्थ" इत्यादिवचनं तु प्रागेव व्याख्यातम्। रिक्थशब्दस्तु निष्प्रतिबन्धदायपरः संविभागशब्दश्च सप्रतिबन्धदायपर इति मिताक्षराकृता व्याख्यातम्। स्मृतिचन्द्रिकाकृता तु रिक्थं पित्रादिधने पुत्रादीनां स्वामित्वापादकं जन्मनैवेति व्याख्याय संविभागः पित्रादिधने विशेषनिष्ठस्वामित्वसम्पादको विभाग इति संविभागशब्दो व्याख्यातः। तन्न। स्वस्य सतो विभागात्स्वत्वहेतुत्वेन तत्प्रतिपादनानौचित्यात्। एकदेशव्यवस्थापनमात्रं हि स्वत्वस्य विभागेन क्रियते। मुख्यामुख्यहेतुत्वग्रहणे स्वामिपदे वैरूप्यापत्तेः। अत एवाह मिताक्षराकारः— "विभागशब्दश्चानेकस्वामिकधनविषयः प्रसिद्धो नान्यदीयविषयो न प्रहीणविषय"इति। "लोके पुत्रादीनां जन्मनैव स्वत्वं प्रसिद्धतरमिति" च। यदपि "पत्नी दुहितरश्च" इत्यादि वचनं, तदपि स्वामिसम्बन्धनिबन्धनानेकदायहरप्राप्तौ लोकप्रसिद्धेऽपि स्वत्वे व्यामोहनिरासार्थम्। प्रायेण व्यवहारस्मृतीनां लोकसिद्धार्थानुवादकत्वमिति सकलनिबन्धृभिरभिधानात्।

नियतोपायकं स्वत्वं लोकसिद्धमेवेति भगवतो गुरोरपि सम्मतम्। लिप्सानये(४।१।२) हि तृतीये वर्णके द्रव्यार्ज्जननियमानां क्रत्वर्थत्वे

स्वत्वमेव न स्यात् स्वत्वस्यालौकिकत्वादिति पूर्वपक्षासम्भवमाशङ्क्य द्रव्यार्जनस्य प्रतिग्रहादिना स्वत्वसाधनत्वं लोकासिद्धमेवेति पूर्वपक्षः समर्थितस्तेन। "ननु च द्रव्यार्जनस्य क्रत्वर्थत्वे स्वमेव न भवतीति याग एव न संवर्त्तेत, प्रलपितमिदं केनापि अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धम्" इति ग्रन्थेन। अस्यार्थष्टीकाकृता विवृत एवम्–यदा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमानां स्वत्वोपायतामिदं शास्त्रं न बोधयति। क्रत्वर्थताबोधने व्यापृतत्वात्। तथा सति प्रतिग्रहादिप्राप्तस्य स्वत्वमित्यत्र प्रमाणाभावादस्वेन च स्वत्यागात्मकयागासम्भवात् कस्याङ्गं द्रव्यार्जननियमा भवेयुरिति पूर्वपक्षासम्भव इति शङ्कार्थः। प्रलपितमित्याद्युत्तरम्। तस्यार्थः। अर्जनप्रतिग्रहादेः स्वत्वहेतुताया लोकसिद्धत्वेन शास्त्रस्य तत्राव्यापारान्नियमानां क्रत्वर्थतैव तेन गम्यत इति न यागासम्भवो नियमानर्थक्यं चेति। सिद्धान्तेऽपि तेन स्वत्वस्य लौकिकत्वाभ्युपगमेनैव विचारप्रयोजनमुक्तम्—"अतो नियमातिक्रमः पुरुषस्य न क्रतोः" इति। अस्याप्यर्थ एवं विवृतः—यदा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव क्रतुर्न नियमातिक्रमार्जितेन द्रव्येण। न तु पुरुषस्य नियमातिक्रमदोषः पूर्वपक्षे। सिद्धान्ते त्वर्जननियमस्य क्रत्वर्थत्वाभावात्केवलपुरुषार्थत्वादतिक्रमार्जितेनापि द्रव्येण क्रतुसिद्धिरप्रत्यूहा। पुरुषस्यैव तु नियमातिक्रमदोष इति। अनेन नियमातिक्रमार्जितस्यापि स्वत्वमभ्युपगतमन्यथा क्रतुसिद्ध्यभिधानविरोधात्। तत्रैवाधिकरणे कुमारिलस्वामिनोऽप्यत्रभवतः स्वत्वं लौकिकमित्येवाभिमतमिति तत्रत्यवार्तिकतन्त्ररत्नाभियोगभाजां सुलभमेव। अत एवाह शास्त्रदीपिकायां पार्थसारथिः—(अ०४पा०१अधि०२)

रागप्राप्तं तावदर्जनं न शास्त्रीयम्। रागतश्च पुरुषार्थतया प्राप्तिः। प्रत्यक्षेण चार्जितं द्रव्यं, पुरुषं प्रीणयत्पुरुषार्थं विज्ञायते न तदनुमानेन क्रत्वेकशेषतया शक्यं विज्ञातुम्। तस्मात् पुरुषार्थं द्रव्यं क्रतुरपि पुरुषकार्याणामन्यतम इति कार्य्यान्तरवत्क्रतावप्युपयुज्यत इत्येतावान् विशेषः। न तस्यैवाङ्गम्। तथासति जीवनलोपात्क्रतुरेव न सम्वर्तेतेति प्रघट्टकेन।

अत्रार्जनस्य शास्त्रीयत्वं निरस्यता स्वत्वस्य तदुपायानां च लोकसिद्धत्वं स्पष्टतरमेवोक्तम्। अन्यदपि तेनैवोक्तम् (४।१।२)

तस्मात् पुरुषार्थं द्रव्यार्जनम्। एवं च दृष्टार्थं भवति। नियमस्तु दृष्टाभावात्काममदृष्टार्थः स्यात्। अदृष्टमपि पुरुषार्थार्जनविषयत्वात् नि-

यमस्य पुरुषगतमेव कल्प्यते । तेनासाद्युपायान्तरेणार्जयन् प्रत्यवैतीति गम्यत इति ।

ततश्च "स्वामी रिक्थ" इत्यादिवचनानां लौकिकमेव रिक्थादीनां स्वत्वोपायत्वमनूद्य तदतिरिक्तोपायानिवृत्तौ तात्पर्य्यं नियमविधयेति नानर्थक्यशङ्कापि । तृप्तिसाधनभोजनाश्रितदिङ्नियमवत् । द्रव्यार्जनमेव क्रत्वर्थपुरुषार्थत्वविचारोदाहरणम् । नियमस्तु पूर्वपक्षयुक्तितयोपन्यस्तः । स एव तत्रोदाहरणमित्येव भट्टगुरुमतयोर्भेदः । स्वत्वस्य लौकिकत्वं तूभयसम्मतमिति निष्कर्षः । तद्दूषणभूषणादि तु तन्त्राभियोगवतामाकर एव व्यक्तम् । प्रस्तुतानुपयोगादिह नोच्यते ।

एतेन चौर्य्यादिप्राप्तस्यापि स्वत्वं स्यादिति यत्सङ्ग्रहकारधारेश्वराभ्यां स्वत्वस्य लौकिकत्वे दूषणमभिहितं तदपि परास्तम् । चौर्य्यादिषु स्वत्वोपायत्वस्य लोक एवाप्रसिद्धेः 'अन्यस्य स्वमिदं नास्य' इत्येवं व्यवहारात् । क्रयाद्युपायसन्देहादेव स्वत्वसन्देहोऽपि 'इदमस्य वास्य वा' इत्याकारको नानुपपन्नः । 'मम स्वमनेनापहृतम्' इति न ब्रूयादपहर्त्तुरेव स्वत्वादिति च यत् स्वत्वस्य लौकिकत्वे दूषणमभिहितं तदप्येतेनालूनविशीर्णम् ।

यच्चोक्तं सङ्ग्रहकृता—शास्त्रेण सर्वस्य तत्र विनियोगनियन्त्रणाद्यथेष्टविनियोज्यत्वरूपस्वत्वासम्भवः । इच्छया क्वापि नियोगासम्भवादिति । तदप्यापाततः । नहि वयमैच्छिकविनियोगोपाहितं स्वत्वं ब्रूमोऽपितु तदर्हत्वमात्रम् । अन्यथा राजादिभयादिच्छाप्रतीघातेऽपि तन्न स्यात्, विनियोगेच्छानिच्छादेशयोश्च स्वत्वतदभावौ विरुद्धौ प्रसज्येयाताम् । राजादिनियन्त्रणादिव शास्त्रनियन्त्रणादन्यत्रैच्छिकविनियोगाभावेऽपि तदर्हत्वस्यानपायात् । अत एव दुर्वृत्तेनाशास्त्रीयविनियोगेऽप्यस्वव्यवहारो नास्ति । प्रत्यवायमात्रं परं शास्त्रातिक्रमात् । तदर्हता च तदर्जितत्वप्रयुक्तास्त्येव । तथा च नयविवेकेऽप्युक्तम्-"तच्च तस्य तदर्हं यद्येनार्जितम्" इति । तदर्हं=यथेष्टविनियोगार्हमित्यर्थः । प्रतिबन्धादङ्कुरमजनयतोऽपि कुसूलस्थबीजस्य बीजत्वप्रयुक्तमङ्कुरोत्पादनार्हत्वमिव । वस्तुतस्तु बीजत्वाङ्कुरार्हत्वयोरिव स्वत्वयथेष्टविनियोगार्हत्वयोरपि भेद एव । अन्यथार्हतावच्छेदकापरिचयेऽर्हताया दुर्निरूपत्वात् । तेन ब्राह्मण्यमिव स्वत्वमपि तदुपायज्ञानव्यङ्ग्यं पदार्थान्तरमेवोत्पत्तिविनाशशालि । ब्राह्मण्यं तु जातिरूपं नित्यमित्येतावान् परं भेदः । इदं चाकरे व्यक्तं लीलावत्यादौ च ।

अत्र मिताक्षरायां स्वत्वलौकिकालौकिकत्वविचारप्रयोजनमुक्तम्—

शास्त्रैकसमधिगम्ये स्वत्वे—(मनु० ११।१९३)

यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुध्यन्ति दानेन तपसैव च ॥

इत्यादिस्मरणादसत्प्रतिग्रहादि यस्य यदर्जनोपायत्वेन निषिद्धं तदर्जिते तस्य स्वत्वाभावाच्चौर्याद्यर्जितवत्तत्पुत्राणामपि तदविभाज्यमेव । लौकिकत्वे तु स्वत्वस्य तदार्जितेऽपि पितुः स्वत्वात्तत्पुत्राणां पितृधनत्वेन तद्विभाज्यम् । अर्जयितुरेव प्रतिषेधातिक्रमनिमित्तप्रत्यवायात्प्रायश्चित्तम् । तत्पुत्रादीनां तु दायरूपधर्मोपायतस्तत् स्वमिति न प्रायश्चित्तमपि । (अ०१०। श्लो०११५)

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥

इति मनुस्मरणात् । प्रयोगो=वृद्ध्यर्थं द्रव्यप्रयोगः । कर्मयोग=आर्त्विज्यादिकरणम् । तत्र दायादीनां त्रयाणां वर्णचतुष्टयसाधारण्येन जयस्य क्षत्रियं प्रति, प्रयोगस्य स्वयंकृतस्य वैश्यं शूद्रं च प्रति धर्म्यत्वम् । अस्वयंकृतस्यापदि च स्वयंकृतस्यापि सर्वान् प्रति । कर्मयोगस्य तु विप्रं प्रत्येवेति विशेष इति ।

अत्र मदनरत्नकारो दूषणमाह—स्वत्वस्य शास्त्रैकसमधिगम्यत्वेऽप्यसत्प्रतिग्रहादिनिषेधो न स्वत्वानुत्पादकतां तेषा वदति । किन्तु प्रत्यवायमात्रहेतुताम् । इतरथा—

आपद्गतः सम्प्रगृह्णन् भुञ्जानो वा यतस्ततः ।
न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः ॥
कुसीदं कृषिवाणिज्यं प्रकुर्वीतास्वयङ्कृतम् ।
आपत्काले स्वयं कुर्व्वांणैनसा युज्यते द्विजः ॥

इति वचनैरेनसा न युज्यत इत्यभिधानेनापदि प्रत्यवायाभावावगमेऽनापदि प्रत्यवायस्यैवावगमात् । प्रतिषेधप्रतिप्रसवयोः समानविषयत्वौचित्यात् । अत एवानापदि तद्द्रव्यपरित्यागपूर्वकं जपतपोरूपं प्रायश्चित्तमेव विदधाति न चौर्य्यादिवद्राजदण्डमपि किञ्चिद्वचनमसत्प्रतिग्रहादौ । तेनासत्प्रतिग्रहादेः पूर्वपक्षसिद्धान्तयोर्द्वयोरपि तेषां स्वत्वोत्पादकत्वाविशेषात्तदर्जितस्य पुत्रादिविभाज्यत्वमपि तुल्यमिति नैतत् प्रयोजनं विचारस्यास्य युक्तमिति ।

अत्र वदामः । शास्त्रैकसमाधिगम्यस्वत्ववादिनो मते यथा चौर्य्यादिनिषेधस्य स्वत्वानुत्पादकत्वदण्डप्रयोजकत्वप्रायश्चित्तार्हताप्रयोजकत्वपरता तथाऽसत्प्रतिग्रहादिनिषेधस्याप्यस्ति । यथा चापदुपाधिना—

(मनु० अ० ११ श्लो० १६।१७)

तथैव सप्तमे भक्ते भक्तानि षडनश्नता ।
अश्वस्तनविधानेन हर्त्तव्यं हीनकर्मणः ॥
खलात्क्षेत्रादगाराद्वा यतो वाप्युपलभ्यते ।
आख्यातव्यं च तत्तस्मै पृच्छते यदि पृच्छति ॥

इत्यादिप्रतिप्रसवबलाच्चौर्य्ये तन्नितयाभावस्तथाऽसत्प्रतिग्रहादेरप्यस्तु । अन्यथोभयत्रापि ततः पञ्चमहायज्ञाद्यनिष्पत्तिप्रसङ्गः । शास्त्रीयत्वे स्वत्वस्याप्रसक्तचौर्य्योपायकत्वनिषेधः कथमिति चेत्, न । अधिगमान्तर्भावेन कथञ्चित्तत्प्रसक्तेस्तेनावश्यवक्तव्यत्वात् । अपरथा प्रतिषेधानुपपत्तेः । शास्त्रप्राप्तप्रतिषेधे च विकल्पापत्तिभिया "दीक्षितो न जुहोति" इत्यादिवद्भाष्यकारमतेन पर्य्युदासत्वं, सामान्यविशेषभावेन विशेषनिषेधसामान्यविध्योर्बाध्यबाधकभावोऽपि वा मतान्तरेणेत्यपि स्वीकार्य्यमेवागत्या । प्रतिग्रहादेस्तु प्रसक्तिर्ब्राह्मणादेरस्त्येवेत्यापत्तदभावोपाधिकौ प्रतिप्रसवप्रतिषेधावप्युपपन्नतरौ । तर्ह्यसत्प्रतिग्रहस्वयंकृतवाणिज्यादावनापदि ब्राह्मणस्य राजदण्डोऽपि स्यादितिचेत्, न । इष्टापत्तेः । नहि स्वधर्म्मत्यागिनो राजदण्डाभावः कस्यापि सम्मतः । स च क्वचित् सामान्यरूपेणोक्त एव गृह्यते क्वचिद्विशेषाम्नात इत्यन्यदेतत् । अत एवालौकिकस्वत्ववादिन इदमप्यपरं दूषणम् । चौर्य्यादिनिषेधस्य त्रितयप्रयोजकतागौरवं पर्य्युदासत्वादिस्वीकारगौरवं च । लौकिकस्वत्ववादिनस्तु दण्डप्रत्यवायमात्रपरत्वम् । तेषां स्वत्वानुपायत्वस्य लोकसिद्धत्वादिति रागप्राप्तनिषेधे पर्य्युदासादिस्वीकारानापत्तिश्चेति लाघवमिति ।

तस्माच्छास्त्रैकसमधिगम्ये स्वत्वेऽसत्प्रतिग्रहादेस्तदनुपायत्वात्तदर्जिते पितुः स्वत्वाभावः स्यादेवेत्यापाद्य चौर्य्याद्यर्जितपितृधनाविभागवदसत्प्रतिग्रहाद्यर्जितस्याप्यविभाज्यत्वम् । लौकिके तु तस्मिन् लोके तेषामपि तदुपायत्वसिद्धं तद्विभाज्यमिति मिताक्षरोक्तं साध्वेव प्रयोजनम् ।

इदञ्चोपलक्षणम् । पूर्वपक्षे चौर्य्याद्यर्जितपितृधनस्वीकारे यथा पुत्रादीनामपि दण्डः प्रायश्चित्तं भवत्येव तथाऽसत्प्रतिग्रहाद्यर्जितग्रहणेऽपीत्यपि प्रयोजनमवसेयम् । पितुरेव प्रायश्चित्तमित्यभिधानेन सूचितत्वात् ।

इदं त्विह विचार्य्यम् । स्वत्वस्य लौकिकत्वे चौर्य्यस्य लोके तदनुपायत्वे सिद्धे षड्भक्तानशनाद्यापदि यच्चौर्य्यमनुमतं तेन चोरिते स्व-

त्वमुत्पद्यते न वा । नाद्यः, लोकेऽनुपायत्वेनावधीरितात्तदुत्पत्तेरभ्युपगन्तुमशक्यत्वात् । नहि प्रत्यक्षविरुद्धं शास्त्रसहस्रेणापि जलादेर्दाहजनकत्वादि बोध्यते । न द्वितीयः । अस्वेन पञ्चमहायज्ञादिप्रधानानिष्पत्तेः । न च क्षुत्प्रतिघातमात्रमेव तेन क्रियतां नान्यदलौकिकमिति वाच्यम् । शिष्टाचारविरोधात् । नहि शिष्टाः पञ्चमहायज्ञमकृत्वा तदुपयुञ्जते । "यदन्नः पुरुषो लोके तदन्नास्तस्य देवता" इति स्मरणाच्च । अत एव विश्वामित्रः श्वजाघनीं श्वपचगृहादाहृत्येन्द्रादिदेवोद्देशेन त्यक्त्वा भोक्ष्यामीति मनसिकृत्य यदा यथादेवतं तद्भागांस्त्यक्तुं प्रवृत्तस्तदा तुष्टैरिन्द्रादिभिर्वृष्टिः सृष्टा सस्यं च तत्क्षणमेव प्रभूतमभूदित्याख्यायिका पुराणेषु स्मर्य्यते । शास्त्रैकसमधिगम्ये तु स्वत्वे यथाशास्त्रं चौर्यादेरपि स्वत्वोत्पादकत्वतदभावौ न विरुद्धौ । लौकिकस्वत्वतदुपायवादिनस्तूभयतः पाशारज्जुरियमिति ।

अत्र प्रतिविदध्मः । यद्यपि चौर्यस्य स्वत्वोत्पादकत्वं न लोकसिद्धं तथाप्यनेनैव सप्तमभक्ताशनकाले षड्भक्तानशिनोऽप्यभिधानात् गम्यते । स्वत्वमात्रस्य हि शास्त्रीयत्वं विरुद्धमतज्ज्ञानां क्रयादिस्वत्वसाध्यव्यवहारानुपपत्तेः । अतश्चौर्यनिषेधो दण्डोपायमात्रबोधक एव । चौर्यस्य स्वत्वोत्पादकत्वाप्रसक्तेर्न तदभावपरः । यथा ब्राह्मण्यस्य सर्वत्र प्रत्यक्षत्वेऽपि जात्युत्कर्षस्थले शास्त्रीयत्वमेव । पुरुषेयत्तानियमस्य शास्त्रैकगम्यत्वात् । यथाहुराचार्य्याः—"एतावन्मात्रं त्विहागमिकं प्रत्येतव्यम् । न ह्ययं पुरुषेयत्तानियमो लोकप्रमाणगम्य" इति । तत्रापि तावत् पुरुषपरम्पराजन्यं व्यक्तौ ब्राह्मण्यमभिव्यज्यत इति व्यङ्ग्यव्यञ्जकभाव एव । परं शास्त्रीयव्यञ्जके यत्तान्ज्ञानवतस्तादृशव्यक्तौ ब्राह्मण्यं प्रत्यक्षमेव । व्यक्तिप्रत्यक्षप्रमुखजातिप्रत्यक्षसामग्रीसम्भारादित्यपि वदन्ति । इह तु चौर्य्यमात्रस्यैव स्वत्वानुत्पादकत्वग्रहात्तादृशस्य तस्य स्वत्वोत्पादकतैव शास्त्रेण बोध्यते । न च प्रत्यक्षविरोधः । नहि प्रत्यक्षविरुद्धं शास्त्रसहस्रेणापि बोधयितुं शक्यमिति वाच्यम् । (१)न ह्यनुत्पादकत्वमपि लोकात् । तादृशेन व्यवहाराभावादन्वयव्यतिरेकगम्या स्वत्वस्य चौर्य्योपायकता नावगम्यत इत्येतावत् । तथा च पुत्रेष्ट्यादीनां लोकानवगता पुत्रादिजनकता यथा शास्त्रादवगम्यते तेषां दृष्टोपायान्तरजन्यतायामपि तथेहाप्यस्तु । स्वर्गाहवनीयादीनामलौकिकमात्ररूपाणां दृष्टोपायाभावोऽप्यधिक इत्यन्यदेतत् । प्रतिबन्धकप्रतिबद्धदाहादिजनकता यथोत्तेजकमन्त्राणामथर्वादिशास्त्रगम्या लोकप्रमाणगम्यत्वात् उ-

(१) हि स्वत्वानुत्पादकत्वमिति पुस्तकान्तरे पाठः ।

त्तेजकतायाश्च प्रतिबन्धकप्रतिबद्धकार्यजनकतातिरिक्ताया अनिर्वाच्यत्वात् । शक्तिनाशतदुत्पत्तिकल्पनायामतिगौरवात्(१) ।

यत्तु जन्मना स्वत्वं निराकुर्वता जीमूतवाहनेन "क्वचिज्जन्मनैवेति जन्मनिबन्धनत्वात्पितापुत्रसम्बन्धस्य पितृमरणस्य च कारणत्वात्परम्परया वर्णनम्" इति प्राचीनलिखनाभिप्रायमुक्त्वा कथमुत्पादनरूपेण पितृगतव्यापारेण पुत्रस्वत्वोत्पत्तिरित्याशङ्कयोक्तम्–अन्यव्यापारेणान्यस्य स्वत्वमविरुद्धं शास्त्रमूलकत्वादस्य । दृष्टं च लोकेऽपि दाने हि चेतनोद्देश्यकत्यागादेव दातृव्यापारात् सम्प्रदानस्य द्रव्यस्वामित्वम् । न च स्वीकरणात् स्वत्वं स्वीकर्त्तुरेव दातृत्वापत्तेः । परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं सम्प्रदानाधीनम् । यथा हि देवतोद्देशेन त्यागं कुर्वन्नपि यजमानो न होता किन्तु तस्यैव त्यागस्य होमाभिधाननिमित्तभूतं प्रक्षेपं कुर्वन्नृत्विगेव होतेत्युच्यते तद्वदत्रापि स्यात् । किञ्च "मनसा पात्रमुद्दिश्य"इत्यादिशास्त्रे स्वीकारात् प्रागेव दानपदं दृष्टम् । ननु ग्रहणं स्वीकारः।अभूततद्भावे च्विप्रयोगादस्वं स्वं कुर्वन् व्यापारः स्वीकारो भवति, कथं ततः प्रागेव स्वत्वम् । उच्यते । उत्पन्नमपि स्वत्वं सम्प्रदानव्यापारेण ममेदमिति ज्ञानेन यथेष्टव्यवहारार्हं क्रियते इति स्वीकारशब्दार्थः । याजनाध्यापनसाहचर्याच्च प्रतिग्रहस्य स्वत्वमजनयतोऽप्यर्ज्जनरूपता न विरुद्धा । याजनादौ दक्षिणादानादेव स्वत्वात् । पितृनिधनकालीनं जीवनमेव वा पुत्रस्यार्जनं भविष्यति । किञ्च भ्रात्रादिधने तन्मरणात्तन्मरणकालीनजीवनाद्वा भ्रात्रन्तरादेः स्वत्वमकामेनापि वाच्यं तद्वदिहाप्यस्तु" इति ।

तदेतदुत्तानमतिविलसितम् । तथा हि शास्त्रमूलकत्वादस्येति तावत् स्वत्वस्य लौकिकत्वसाधनादेव निराकृतम् । यदपि दृष्टश्च लोकेऽपीत्यादि तदप्यापातसुन्दरम् । न हि प्रतिग्रहीतर्य्यस्वीकुर्वत्यपि तस्य स्वत्वमुत्पद्यते । पात्रविशेषोद्देशेन त्यागे तेनास्वीकृतेऽपि तत्स्वत्वोत्पत्तौ परस्मै तस्य प्रतिपादनासम्भवप्रसङ्गात् ।

यदपि स्वीकर्त्तुरेव दातृत्वापत्तेरिति तदप्ययुक्तम् । परस्वत्वापत्तिफलकव्यापारस्य दानत्वात्सम्प्रदानस्वीकारानुकूलानुमानादिव्यापारस्य दानपदार्थत्वात्तत्फलोपहितता तु तस्य सम्प्रदानस्वीकारमन्तरेण न सम्भवतीति सम्प्रदानव्यापारस्तद्घटकः । न तु स एव दानशब्दार्थः।

(१) अत्र च प्रतिबन्धकोत्तेजकविचारप्रपञ्चस्तु मत्कृततर्कपादवार्तिकालोके सहजशक्तिप्रस्तावे द्रष्टव्य इत्यधिकः पाठः पुस्तकान्तरे ।

यदपि यथा हीत्यादि, तदपि न । यजमानकर्तृकाग्निहोत्रहोमादौ तदविरोधात् । यत्रापि दर्शपूर्णमासादौ त्यागमात्रं यजमानेन क्रियते चतुरवत्तस्य प्रक्षेपोऽध्वर्य्वादिभिस्तत्रापि विविक्तकर्तृकत्वाद्यथास्वं तद्व्यवहाराविरोधात् । अत्यक्तस्य प्रक्षेपे परं होमशब्दवाच्यता नास्ति। स तु त्यागः स्वकर्तृकोऽन्यकर्तृको वाऽवच्छेदकोऽस्तु । न तावता कश्चिद्दोषः । अत एव यागस्य न प्रक्षेपापेक्ष आत्मलाभो होमस्य तु तदपेक्ष एव । दानस्य न प्रतिग्रहीतृव्यापारसापेक्षतैव । तदभावे दानपदार्थानिष्पत्तेः ।

यच्च किञ्चेत्यादि, तदपि यत्किञ्चित् । उत्सर्गस्यैव तत्र विधानात् न तु दानस्य । अत एव "दाता तत्फलमाप्नोति" इत्युक्तम् । अन्यथा तस्यानुवादत्वापत्तेः । दानत्वे हि तस्य तत्फलाभावाप्रसक्तेस्तत्फलमाप्नोतीति व्यर्थमेव स्यात् । अतस्तत्र जलप्रक्षेपरूपः पात्रोद्देश्यक उत्सर्ग एव ददातिना विवक्षितो दानत्वनिष्पत्तिस्तु तस्य सम्प्रदानकर्तृकस्वीकारे सत्येवेति परमार्थः । अत एवोत्स्रक्ष्ये(१) इत्येव तत्र सङ्कल्पवाक्यं शिष्टानां नतु दास्ये इति सम्प्रदद इति वा । अतः प्रतिग्रहादेव दानस्थलेऽपि सम्प्रदानस्य स्वत्वमिति प्रतिग्रहस्यार्जनरूपत्वमविरुद्धम् । स्वत्वजनको हि व्यापारोऽर्जनशब्दार्थः । अत एवाह प्रभाकरः— 'प्रलपितमिदं केनापि अर्जनं स्वत्वं नापादयति इति विप्रतिषिद्धम्' इति । अयं ग्रन्थः प्रागेव विवृतः ।

किञ्च । प्रतिग्रहस्य ममेदमिति ज्ञानरूपस्य दातृव्यापारमात्रोत्पन्नस्वत्वव्यवहारार्थतामात्रसम्पादकतायामर्जनशब्दस्य तत्र गौणता स्यात् । अन्यस्मै तत्प्रतिपादनानुपपत्तिश्च पूर्वमुक्ता । तदस्वीकारे प्रागुत्पन्नतत्स्वत्वनाशश्च कल्प्यः स्यात् । न च दातृव्यापारात्तत्स्वत्वनाशात्साधारणसम्प्रदानस्वत्वोत्पत्तिरवश्याभ्युपेया त्वयापि, अपरथैतत्स्वत्वनाशेऽन्यस्य च स्वत्वानुत्पत्तेर्मध्यकस्य तस्य परिग्रहादिनाऽन्यस्य यस्य कस्यापि वनगतास्वामिकतृणकाष्ठादाविव तत्र स्वत्वं स्यात्परिपालनाप्रसक्तिश्च । तथा मन्मतेऽपि पात्रविशेषोद्देश्यकत्यागे पात्रविशेषस्योत्पन्नमपि स्वत्वं तदस्वीकारे नश्यत्यन्यस्य स्वीकारात्तस्योत्पद्यत इति न कोऽपि विरोधः साधारणस्वत्वविनाशात् साधारणास्वत्वोत्पत्तिवदिति वाच्यम् । यतस्तत्र साधारणस्वत्वव्यवहाराभावेन तदुत्पत्तिरप्रामाणिकी नैव स्वीक्रियते । गौरवाच्च । किन्तु दा-

(१) उत्सृजे इति पाठान्तरम् ।

तुरेव यथेष्टविनियोगार्हस्वत्वापगमेऽपि परस्वत्वापत्तिफलाभावे दानशब्दार्थानिष्पत्तेर्विधिशिरस्कफलार्थिनः प्रतिपादनावधिपरिपालनीयत्वरूपं स्वत्वमस्त्येव। यथा हुते हविषि भस्मसाद्भावावधि अस्पृश्यस्पर्शादिनिषेधाश्रयणनिमित्तदोषश्रवणानुरोधेन। तथा चान्यस्वत्वानुत्पत्तावपि न मध्यकत्वपरिग्रहाद्यनिवारणादिदोषः। शिष्टाचारोऽप्युभयत्र परिपालनरूपस्तन्मूलक एव। न चोत्सर्गमात्रस्य तत्र त्वया विध्यभ्युपगमात्परस्वत्वापाद एव न स्यादिति वाच्यम्। तादृशोत्सर्गस्यैव विधितात्पर्यविषयत्वात्। होमस्थलेऽप्यन्यथा भस्मसाद्भावानादरापत्तेः।

यच्च याजनाध्यापनसाहचर्य्यात्प्रतिग्रहस्यापि स्वत्वाजनकत्वेऽपि गौणमेवार्जनत्वमिति। तदप्यबोधात्। तत्र हि ये ये द्विजप्रभृतीनां भागास्तेषां तेषां तेभ्यो भृतिरूपेणैव दक्षिणाकाले प्रतिपादनम्। परिक्रयव्यवहारोऽप्यत एव "स्वामी कर्म्मपरिक्रय" इति जैमिनिसूत्रादौ विस्तरेण निर्णीत एव। विस्तरस्तु तत्रैव द्रष्टव्यः। कर्म्मकरानतिजनिका भृतिरेव हि परिक्रयः। एवमध्यापनेऽपि शिष्योऽध्यापकायाध्यापनभृतिमेव तत्सन्तोषजननीमध्ययनान्तेऽर्पयति। नियतभृतिकरणे तु भृतकाध्यापनमुपपातकम्। अत एव याजनाध्यापनयोः प्रतिग्रहाद्भृतिशब्दवाच्यनिर्देशाच्च पृथगभिधानमुभयमिश्रत्वात्। तेन तयोरपि मुख्यमेवार्जनत्वम्। दक्षिणात्वव्यवहारोऽप्यत एव ऋत्विगध्यापकदेये।

यदपि "भ्रात्रादिधने भ्रात्रन्तरादिस्वत्वोत्पादकत्वं तन्निधनस्य तत्कालीनभ्रात्रन्तरादिजीवनस्य वा क्लृप्तमिति पुत्रादावपि पित्रादिनिधनं तत्कालीनं जीवनं वा स्वत्वोत्पादकमस्तु न त्वक्लृप्तं पुत्रादि जन्मनैवेत्युक्तम्। तदपि जन्मनोऽपि स्वत्वोत्पादकत्वस्यावश्यकत्वोपपादनादेव परिहृतम्।

यच्चोक्तम्—"ऊर्ध्वं पितुश्च" इत्यादिमनुवचनमपि जन्मनः स्वत्वापादकत्वे न घटते। प्राग्विभागनिषेधार्थत्वे तस्यास्वार्थपरत्वापत्तेः। विभागस्य दृष्टार्थत्वेन तद्विधानकालविधानयोरसम्भवात्। विभागस्य पक्षप्राप्तस्य नियमार्थत्वसहवासविधिविरोधाद्यापत्तेः। तस्मात्पितरि सति मातरि च सत्यां तद्धनस्वाम्याभावः। उपरतयोरेव तयोः पुत्रादेस्तद्धनस्वाम्यमिति प्रतिपादनार्थमेव तद्वाक्यमिति।

तदप्युत्तानाभिधानम्। अस्वार्थविधानापत्तेस्तुल्यत्वात्। प्रागस्वातन्त्र्येण कालविधिपरत्वे बाधकाभावात्। इच्छाप्राप्तकालानुवादेऽपि व्यवहारशास्त्रत्वेनाविरोधात्। एतेन जातेष्विवच्छेषिविरोधादिनिमि-

त्वानन्तर्यबाधकाभावात्पितृपरमानन्तरक्षण एव विभागः प्रसज्येतेत्यप्यपास्तम् । कालविधानेन पितृपरमस्य निमित्तत्वाबोधनाच्च । अन्यथा निमित्ते सति नैमित्तिकस्यावश्यकत्वात्पित्रोरूर्ध्वं विभागकरणे प्रत्यवायोऽपि प्रसज्येत । पतितत्वपारिव्राज्ययोः पितृस्वत्वनाशोऽप्यधिकः । जन्मना स्वत्वं तुल्यमेव । पातित्ये तु प्रायश्चित्तानाचरण एव स्वत्वनाशो विभागानर्हता च । अन्यथा द्रव्यसाध्यं प्रायश्चित्तमपि पित्रोः स्वद्रव्येण न स्यात् । अत एव "मातुर्निवृत्ते रजसि" इत्याद्यपि कालविधिपरमेव । न तु पातित्यादिवत्तत्र स्वत्वाभावः । स तु लोकत एव विभागनिषेधाच्च भ्रात्रादावित्यादि वक्ष्यते । किञ्च । तदेवं पितृस्वत्वापगम एकः कालः अपरश्चानपगत एव पितृस्वाम्ये पितुरिच्छयेति कालद्वयमित्युक्त्वा मध्ये मिताक्षरोक्तं विभागकालत्रयं दूषयित्वा तस्मात्पतितत्वनिस्पृहत्वोपरमैः पितृस्वत्वापगम एकः कालः अपरश्च सति स्वत्वे तदिच्छात इति कालद्वयमेव युक्तमित्युपसंहरता जीमूतवाहनेनैव पितृस्वत्वानपगमेऽपि पुत्राणां विभागोऽङ्गीकृतस्तत्र पुत्राणां पितृधने स्वत्वोत्पादः कथम् । कथञ्च जीवतोः पित्रोरस्वाम्यप्रतिपादकवचनैः सह न विरोधः । अस्वस्य विभागासम्भवात्कथं तर्हि विभागः । पितृस्वत्वापगम एवोर्ध्वं पितुश्चेत्यनेन विवक्षितोऽत एव मृतपदं परित्यज्योर्ध्वमित्युक्तम् । पितृस्वत्वापगमोर्ध्वमित्यर्थः । पितृस्वत्वापगमश्च तन्निधनादिवत्तस्य पतितत्वानस्पृहत्वाभ्यामपीत्यादि स्वग्रन्थे पूर्वापरविरोधश्च न कथम् । अत्राप्युपरतस्पृहत्वादिना पुत्राणां स्वत्वं पितृधन भवतीति ज्ञापनादयमेकः काल इति च यदुक्तम् । तत्राप्युपरतस्पृहत्वादिनेत्यनेन पितृस्वत्वापगम एव यदि विवक्षितस्तर्ह्यनपगते पितृस्वत्वे तदिच्छाऽपरः काल इत्यभिधानविरुद्धम् । पितृस्वत्वापगमकालीनपुत्रादिजीवनस्यैवार्जनस्य तदीयस्य स्वीकारात्पितृस्वत्वे सति पुत्राणां तद्धने स्वत्वस्वीकारः कथम् । न ह्यनाश्रमित्वमातृरजोनिवृत्तिमात्रेण पितुः स्वत्वापगमः । पूर्वद्रव्यस्वामिसम्बन्धाधीनं तत्स्वाम्योपरमे यत्र द्रव्ये स्वत्वं तत्र निरूढो दायशब्द इति स्वोक्तदायशब्दार्थाभावात्पितृस्वत्वानपगमे यत्र विभागस्तत्र दायशब्दप्रयोगोऽपि दुःस्थ इत्यादि बहुव्याकुली स्यात् । जन्मना स्वत्वस्वीकारे तु सर्वमनाकुलमित्यादि सुधीभिरूह्यम् । अत एव मिताक्षरादौ पूर्वस्वामिसम्बन्धाधीनं यद्धने स्वत्वमन्यस्य तदेव दायशब्दवाच्यमित्युक्तं न तु पूर्वस्वामिस्वाम्योपरमोऽपि तत्र प्रवेशितः । तस्सिद्धं द्विविधो दाय इति । मिताक्षरोक्तविभागकालत्रयसमर्थनं तु तत्प्रस्तावे प्रपञ्चयिष्याम इत्य-

ले प्रसक्तानुप्रसक्तविचारेणेति ।

यच्च जीमूतवाहनेनैव मिताक्षरोक्तम्—विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनमिति विभागशब्दार्थे न च सम्बन्धाविशेषात् सर्वेषां सर्वधनोत्पन्नस्य स्वत्वस्य द्रव्यविशेषे व्यवस्थापनं विभाग इति वाच्यमित्याशङ्क्य सम्बन्धान्तरसद्भावप्रतिपक्षस्य सम्बन्धस्यावयवेष्वेव विभागव्यङ्ग्यस्वत्वापादकत्वात् कृत्स्नपितृधनगतानेकस्वत्वोत्पादविनाशकल्पनागौरवात् यथेष्टविनियोगफलाभावेनानुपयोगाच्चेति दूषयित्वा, उच्यते । एकदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतयाऽव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः । विशेषेण भजनं स्वत्वज्ञापनं विभाग इति व्युत्पत्त्या" इत्युक्तम् ।

तदायत्तत्वकृतोपन्यस्य दूषितम् । यत्रास्य स्वत्वं तत्रैव गुटिकापात इति कथं वचनाभावान्निश्चेतव्यम् । यत्र हि पितुर्निधनानन्तरं तदीयाश्वयोरेकमादाय भ्रात्रा यदर्जितं तत्रार्जकस्य द्वौ भागावपरस्यैकः सर्वसंमतः । तत्र यदि प्राचीनधनविभागकाले गुटिकापातादर्जकेन स एवाश्वः पश्चाल्लब्धस्तदा प्रादेशिकस्वत्ववादिमते प्रागर्जकस्यैव सोऽश्व इति तेनार्जितधने कथं भ्रात्रन्तरस्य विभागः । तत्रैवास्वत्वेन तदुत्पन्ने सुतरां स्वत्वाभावादस्वस्य चाविभाज्यत्वात् । यदि वार्जकेतरेण सोऽश्वो लब्धस्तदा तेनार्जितधनस्य समभाग एव युक्तः । एकस्य स्वायासेनापरस्याश्वायासेनार्जकत्वादिति दूषितम् । वस्तुतस्तु सम्बन्धाविशेषात् सर्वसम्बन्धिनां सर्वधनोत्पन्नस्य स्वत्वस्य गुटिकापातादिना प्रादेशिकव्यवस्थापनं विभागः । कृत्स्नधनगतस्वत्वोत्पादविनाशावप्यगत्या कल्पेते । संसृष्टतायां प्रादेशिकस्वकृत्स्नधनस्वत्वोत्पादविनाशाविव । तच्च—

विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः ।
पितृव्येणाथ वा प्रीत्या स तु संसृष्ट उच्यते ॥

इति बृहस्पतिवचने येषामेव हि पितृभ्रातृपितृव्यादीनां पितृपितामहोपार्जितद्रव्येणाविभक्तं स्वत्वमुत्पत्तितः सम्भवति । त एव विभक्ताः सन्तः पुनः परस्परप्रीत्या पूर्वकृतविभागध्वंसे यत्तव धनं तन्ममापि यन्मम धनं तत्तवापीत्येकस्मिन् कार्ये एकरूपतया(१) स्थितास्ते संसृष्टाः । न त्वनेवंरूपाणां धनसंसर्गमात्रेण सम्भूयकारिणां वणिजामपि संसर्गि-

(१) एकगृहितया इति पाठान्तरम् ।

त्वम् । नापि विभक्तानां द्रव्यसंसर्गमात्रेण । प्रीतिपूर्वकतादृगभिसन्धि विनेत्यभिदधता दायभागकृतापि स्वहस्तितम् । साधारणस्वत्वादेव हि—

बन्धूनामविभक्तानां भोगं नैव प्रदापयेत् ।

इति कात्यायनवचनं यथाश्रुतमेव सङ्गच्छते । यावद्भुक्तधनमात्रे स्वस्वत्वस्यापि सत्त्वात् । अत एवात्र परस्परस्य चौर्यमपि नापद्यते । एवं च—

साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥

इति नारदवचने परस्परनिरूपितदानादिनिषेधोऽपि न्यायमूलक एव । दानादेरपूर्वमपि देयादौ प्रतिग्रहीत्रादेः स्वत्वसत्त्वाद्दानप्रतिग्रहादेरसम्भवात् । अविभक्तत्वादेव चाविभक्तद्रव्येण यत्कृतं दृष्टादृष्टार्थं कर्म तत्र सर्वेषां फलभागित्वम् । तथा च—

नारदः,

भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते ।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् ॥

व्यासोऽपि—

स्थावरस्य समस्तस्य गोत्रसाधारणस्य च ।
नैकः कुर्य्यात्क्रयं दानं परस्परमतं विना ॥

अत्र समस्तस्येति विशेषणोपादानात्कृत्स्नधनगतमेव प्रत्येकं स्वत्वं प्रतीयते । तस्मात्तुल्यधनसम्बन्ध्यन्तरसत्त्वेन सम्बन्धिसकाशात्सङ्क्रान्तं धनं तस्यापि ममापीति सम्बन्धिना प्रतीयते, तद्भिन्नतौ दानादिकं प्रतिषिद्धं स्वार्थम्, अतो नैकदेशगतं स्वत्वमिति । इदं च "द्रव्यसमुदायविषयाणामनेकस्वाम्यानामेकदेशे व्यवस्थापनं विभाग" इति वदतो मिताक्षराकृतोऽप्यभिमतमिति लक्ष्यते ।

इदं त्विह विचार्यम् । द्रव्यसमुदायनिरूपितं स्वामिगतं स्वाम्यं स्वामिनिरूपितं च द्रव्यसमुदाये स्वत्वं व्यासज्यवृत्ति प्रत्येकवृत्ति वा । नाद्यः । एकैकस्वामित्वस्वत्वाश्रयनाशे तन्नाशस्यावशिष्टसमुदायगततदुत्पत्तेश्च कल्पनायामतिगौरवापत्तेः । प्रत्येकस्य प्रत्येकद्रव्ये दानक्रयादियथेष्टविनियोगानर्हत्वापत्तौ व्यवहारविसंवादापत्तेश्च । न द्वितीयः । विभागे सति तावतां नाशोत्पादकल्पनापत्तेः । स्वस्य सतो विभागो न तु विभागात् स्वत्वमिति ग्रन्थविरोधाच्च ।

अत्र ब्रूमः । प्रत्येकवृत्तीनि सम्बन्धाविशेषात् स्वत्वानि स्वाम्यानि च सन्त्येवपरस्परविभागागते परस्परस्वाम्यान्यन्यदीयद्रव्ये तानि नश्यन्ति

परमरणपारिव्रज्यादिनैवेति न काप्यनुपपत्तिः । व्यवस्थापनमपीदमेव अन्यथैकदेश उत्पादनमित्येव वदेत् । अत एव विनाशमात्रकल्पना न तु स्वत्वान्तरोत्पादकल्पना । जीमूतवाहनमते च कुत्र वास्तवं मम स्वत्वमिति विभागात्प्रागनिरूपणात्तदधीनश्रौतस्मार्त्तलौकिककर्म्मोच्छेदः । अनुमत्या (१)विभागान्तरकृतया परस्परद्रव्ये परस्परस्वत्वान्तरोत्पत्तिस्वीकारे तदुत्पादविनाशकल्पनागौरवं यत्त्वया मिताक्षराकृतं प्रत्यापादितं ततोऽपि तवाधिकमापन्नम् । व्यवहारानुपयोगेन समुदायस्वत्वस्य निष्प्रयोजनता त्वयोपन्यस्ता साप्येकदेशगतस्वत्वाभ्युपगमे तुल्यैवेति कृतमतिदूरं गत्वा ।

## अथ विभागकालकर्त्तृनिरूपणम् ।

तत्र मनुः—( ९।१०४ )

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥

पैतृकं पित्रोः सम्बन्धि प्रागुभयोपादानात् । अत एव 'पितुरूर्ध्वम्' इति पितृधनविभागकालः । 'मातुरूर्ध्वम्' इति मातृधनविभागकालोऽभिहितः । चशब्दस्तु कालान्तरसमुच्चयार्थो नतु द्वयोरूर्ध्वमिति नियमार्थः । पितृधनविभागे मातृजीवनस्याप्रतिबन्धकत्वात् । मातृधनविभागे पितृजीवनस्य । तथा चाह—

सङ्ग्रहकारः,

पितृद्रव्यविभागः स्याज्जीवन्त्यामपि मातरि ।
न स्वतन्त्रतया स्वाम्यं यस्मान्मातुः पतिं विना ॥
मातृद्रव्यविभागोऽपि तथा पितरि जीवति ।
सत्स्वपत्येषु यस्मान्न स्त्रीधनस्य पतिः पतिः ॥ इति ।

पत्युरभावेऽपि पुत्रेषु सत्सु यतो मातुस्तद्धने स्वातन्त्र्येण स्वाम्यं नास्त्यतस्तस्यां जीवन्त्यामपि पितृधनविभागो युक्तः । यतश्चापत्येषु सत्सु भार्याधने पत्युः स्वाम्याभावस्ततस्तस्मिन् जीवत्यपि पुत्राणां मातृधनविभागाधिकार इति भावः । अतश्च "अनीशास्ते हि जीवतोः" इत्यपि तत्तद्धने व्यवस्थयाऽस्वातन्त्र्यप्रतिपादकं न त्वस्वत्वप्रतिपादकं जन्मना स्वत्वस्य पुत्राणां पितृधने व्यवस्थापनात् ।

याज्ञवल्क्यः— (अ० २ श्लो० ११४ )

विभागं चेत्पिता कुर्य्यादिच्छया विभजेत्सुतान् ।

( १ ) विभागयन्तरकृतयेतिपाठान्तरम् ।

ज्येष्ठं वा श्रेभागेन सर्वे वा स्युः समांशिनः ॥

अत्रेच्छया पिता सुतान्विभजेदिति वदन् जीवत्यपि पितरि पितुरिच्छा यदा सोऽपि विभागकाल इति सूचयति । तदा च पितैव विभागकर्त्ता ।

अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते ।

इत्यनेन पुत्राणामस्वातन्त्र्यप्रतिपादनात् । निर्दोषे इति विशेषणात्पातित्यादिदोषवति सत्यपि पितरि पुत्राणां तत्पारतन्त्र्याभावात्तदिच्छा यदा सोऽपि विभागकालः पुत्राणां च तदा विभागकर्तृत्वमित्युक्तं भवति । अन्योऽपि पुत्रेच्छया विभागकालः पितरि द्रव्यनिस्पृहे निवृत्तरमणे मातरि च निवृत्तरजस्कायाम् । यथाह—

नारदः—(व्य० प० १३ श्लो० ३।३)

अत ऊर्ध्वं पितुः पुत्रा विभजेयुर्धनं समम् ।

इति पित्रोरूर्ध्वं विभागमुक्त्वा—

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
निवृत्ते चापि रमणात्पितर्य्युपरतस्पृहे ॥ इति ।

जीमूतवाहनेन तु विनष्टे चाप्यशरण इति पाठो लिखितः। विनष्टे=पतिते अशरणे=गृहस्थाश्रमरहित इति व्याख्यातं च । निवृत्ते चापि रमणादिति पाठान्तरमनाकरमित्यप्युक्तम् । तदयुक्तम् । मिताक्षरादिबहुनिबन्धालिखितत्वात् । पुत्रा धनं विभजेयुरित्यनुषङ्गः ।

गौतमोऽपि—

ऊर्ध्वं पितुः पुत्रा रिक्थं विभजेरन् ।

इत्युक्त्वा—

निवृत्ते चापि रजसि मातुर्जीवति चेच्छति । इत्याह ।

बृहस्पतिरपि—

पित्रोरभावे भ्रातृणां विभागः सम्प्रदर्शितः ।
मातुर्निवृत्ते रजसि जीवतोरपि शस्यते ॥ इति ।

तथा सरजस्कायामपि मातर्य्यनिच्छत्यपि पितरि दीर्घरोगग्रस्तेऽधर्मवर्त्तिनि पुत्रेच्छया विभागः । यथाह—

शङ्खः,

अकामे पितरि ऋक्थविभागो वृद्धे विपरीतचेतसि रोगिणि चेति ।

नारदोऽपि (व्य० प० १३ श्लो० १६)

व्याधितः कुपितश्चैव विषयासक्तमानसः ।
अयथाशास्त्रकारी च न विभागे पिता प्रभुः ॥ इति ।

अत्र पितुरुपरम एकः कालो निवृत्ते चापि रजसीति द्वितीयो जीवति चेच्छतीति तृतीय इति मिताक्षरायां जीमूतवाहनोक्तं दूषणम्-मातृरजोनिवृत्तेः पितुरुपरतस्पृहत्वविशेषणत्वे—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥ (अ० ९श्लो०९४)

इति मनुना विवाहकालविधानात्, "वनं पश्चाश्चतो व्रजेत्" इत्याश्रमान्तरगमनकालविधानाच्च तदा रजोनिवृत्तेर्मातुरसम्भवे पितरि चोपरतस्पृहे वानप्रस्थे पुत्राणामिच्छया विभागाभावप्रसङ्गः । निर्विशेषणमुपरतस्पृहत्वमेव पितृधनविभागकाल इति तूच्यमानेऽनुपरतस्पृहे पितरि पतितेऽप्यविभागप्रसङ्गात् । अथमप्यपरः काल इत्यभिधाने कालचतुष्टयापत्तिः पितुरुपरमः पतितत्वं निःस्पृहत्वमिच्छा चेति । तस्मात् पतितत्वनिःस्पृहत्वापरमैः पितुः स्वत्वापगम एकः कालोऽपरश्च सति तत्स्वत्वे तदिच्छात इति कालद्वयमेव युक्तमिति ।

तन्मिताक्षराकृदाशयापरिज्ञानात् । नहि तेन कालत्रयनियमोऽभिहितः । तथेत्यादिग्रन्थेन कालान्तरस्यानुपदमेव प्रतिपादनात् । नियमस्य निर्बीजत्वात् । पितृस्वत्वापगम एकः कालोऽपरश्चानपगत एव पितृस्वाम्ये तदिच्छात इति कालद्वयमित्यप्यशुद्धम् । निवृत्तरजस्कायां मातरि त्वनन्वयापत्तेः । नहि मातृनिवृत्तरजस्कतामात्रेण पितृस्वत्वापगमः । जन्मना स्वत्वावस्थापनात्पितृस्वत्वापगमस्य कालोपलक्षणत्वासम्भवाच्च । एवं दीर्घरोगग्रस्तत्वेऽपि न स्वत्वापगम इति कालद्वयनियमस्तत्रापि दुःसमाधः । इष्टापत्तौ तद्वचनविरोधः । यच्चोक्तं तेनैव-मातुर्निवृत्ते रजसीतिपितामहादिधनाभिप्रायम् । निवृत्ते रजसि पुत्रान्तरसम्भवाभावात्तदानीमपि पितुरिच्छयैव पुत्राणां विभागः । अनिवृत्तेरजसि क्रमागतधनाविभागे पश्चाज्जातानां वृत्तिलोपापत्तेः । नचासौ युक्तः ।

ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं च तेऽभिकाङ्क्षन्ति वृत्तिलोपो न विद्यते ॥

इति वचनात् । अत एव पितृधने कालद्वयमत एव मनुगौतमादिभिर्मृतपदं परित्यज्योर्ध्वमित्युक्तम् । ऊर्ध्वं पितुः स्वत्वापगम इत्यर्थः । यदि चास्य पितृधनविषयता स्यात्तर्हि--

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम् । (मनु, ९।१६)

इत्यस्य निर्विषयता भवेत् । निवृत्तरजसि पुत्रोत्पत्त्यसम्भवात् । मातृधनगोचरत्वं त्वनाशङ्कनीयमेव । मातुरेव निर्धनतापत्तेः । अतो

निवृत्ते रजसीति पैतामहधनविषयम् । न चेच्छामनपेक्ष्य रजोनिवृत्तिमात्रं विभागनिमित्तं सम्भवत्यनिच्छया विभागाभावात् सत्यामिच्छायां कस्येच्छयेत्यपेक्षायाम् ।

ऊर्ध्वं पितुः पुत्रा रिक्थं विभजेयुर्निवृत्ते रजसि मातुर्जीवति चेच्छति ।

इति गौतमवचनात्पितुरेवेच्छात इति निर्णीयते इति पितामहादिधनविभागस्यापि पित्रोरभाव इत्येकः कालः । मातुर्निवृत्ते रजसि पितुरिच्छात इति कालद्वयमेवेति ।

तदप्यनभियुक्तप्रमोदनम् । वृत्तिलोपापत्तेः पितृधनेऽपि तुल्यत्वात् ऊर्ध्वं विभागादित्यस्य निर्विषयत्वापत्तेरपि पितामहादिधनेऽपि तुल्यत्वात् । अस्पृहे पितरि पातित्यादिदुष्टे पितामहधनेऽपि पुत्रेच्छया विभागस्य सकलसम्मतत्वादवश्यवाच्यत्वाच्च । वस्तुतस्तु पितामहधने "भूर्या पितामहोपात्ता" इत्यादिना सदृशस्य पितापुत्रस्वाम्यस्य वक्ष्यमाणत्वात् पुत्रेच्छयापि तस्य विभाग उचित एव । यत्त्वत्र व्याख्यानान्तरमनीशत्वस्य तद्धनगोचरत्वादिकल्पनं तत्सर्वं तद्वचनविवेचने निराकरिष्यामः ।

वयं तु स्वातन्त्र्यार्हे पितरि जीवति तदिच्छैव विभागनिमित्तम् । पातित्यपारिव्रज्यादिभिस्तदनर्हे पुत्रेच्छापि । तदुपरमे तु स्वेच्छाया निमित्तत्वमर्थसिद्धमिति कालत्रयमेवानेन प्रकारेण । अन्यथा बहूनामुपरतस्पृहत्वादीनां विकल्पसमुच्चयादिकल्पनानुपपत्तौ विशेषणविशेष्यभावाद्यव्यवस्थापत्तौ बहुव्याकुलीभावः । अत एव क्वचिद्वचने केषाञ्चिदेवोपादानमनुपादानं च केषाञ्चित् सङ्गच्छते । एकमूलकल्पनालाघवेनोपरतस्पृहत्वादिभिः पितुः स्वातन्त्र्याभावस्यैकस्य सर्वैरुपलक्षणात् । "अनीशास्ते हि जीवतोः" "निर्दोषे पितरि स्थिते" "जीवतोरपि शस्यत" इत्यादिवचनस्वरसोऽप्येवमेव । अत एव पित्रोर्जीवतोर्भ्रातृणां सहवासो मुख्यस्तदनुमत्यादिना ज्येष्ठस्य कार्यक्षमस्यान्यस्य वा पुत्रस्य स्वातन्त्र्यमन्येषां तदनुरोधवृत्तित्वमिति च पक्षद्वयमुक्तवन्तो व्यासादयः ।

भ्रातृणां जीवतोः पित्रोः सहवासो विधीयते ।

इति व्यासः ।

जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यम(१) ।

---

(१) अत्र आदानं=ग्रहणम् । विसर्गः=त्यागः । आक्षेपः=न्यासकरणम् । न स्वातन्त्र्यम्=न तदनुमतिं विनाधिकारः । दीने=अतिवृद्धत्वादिना दुःखिते । अतिगते=अत्यन्तशोकरोगादिना पीडिते । इत्यर्थः ।

कामे दाने प्रोषिते आर्त्तिकृते ज्येष्ठो वार्थांश्चिन्तयेदिति हारीतः ।

शङ्खलिखितौ तु स्पष्टतममाहतुः—

पितर्य्यशक्ते कुटुम्बव्यवहारान् ज्येष्ठः प्रतिकुर्यादनन्तरो वा कार्यज्ञस्तदनुमतो न विकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि(१) दीर्घरोगिणि वा ज्येष्ठ एव पितृवदर्थान्पालयेदितरेषामृक्थमूलं हि (२)कुटुम्बमस्वतन्त्राः पितृमन्तो मातुरप्येवमवस्थिताया इति ।

तस्माद्यथोक्तरीत्या विभागस्य कालत्रयमेवेति ब्रूमः ।

अत्र मनुवचने समेत्येत्यनेन पाक्षिकं साहित्यमनूद्यते बहुत्ववत् । अन्यथैकेच्छया द्वयोश्च भ्रात्रोर्विभागो न स्यात् । सममिति तु नियम्यते । तच्च विवेक्ष्यामः ।

यत्तु पित्रोरिति द्विवचननिर्देशात्सोदरभ्रातॄणां पितृधनविभागोऽपि मातुरभाव एव कार्यः । न तु मातृधनविभागार्थं मातुरभावोपादानम् । जीवतोरपीत्यस्य मातृधनगोचरत्वानुपपत्तेरन्यधनगोचरत्वमवश्यं वाच्यमतो यत्रैव पित्रोरभावो निमित्तं तत्रैव जीवतोरपीत्यपिशब्देन जीवनस्यापि प्रशस्तत्वकीर्त्तनान्न मातुरभावो मातृधने व्याख्येय इति जीमूतवाहन आह ।

तदसम्बद्धम् । "पितुश्च मातुश्च" इति मनुवचने पृथङ्निर्देशादन्यथापि द्विवचनस्य विभागसम्बन्धविवक्षामात्रेण व्याख्यानं युक्तम् । इतरथैकतरधनेऽन्यतराभावस्यादृष्टार्थत्वापत्तेः । यच्चोक्तं जीवतोरित्यादेर्मातृधनगोचरत्वानुपपत्तेरित्यादि । तस्यापि कोऽभिप्रायः । मातुः पितरि जीवत्यस्वातन्त्र्यान्न तद्धनगोचरत्वमिति यदि तर्हि सत्स्वपत्येषु भार्य्याधनेऽपि पितुः स्वाम्यं तदभावस्यापि तत्रानुपयोगादन्यविषयत्वापत्तिः । अभिप्रायान्तरं त्वसम्भवदुक्तिकमेवेति वक्ष्यामः । तस्माद्दृष्टार्थत्वात्तद्धनविषयक एव तदभावः सङ्ग्रहकाराद्युक्तो युक्तः । यथा च पित्रोर्जीवतोर्भ्रातॄणां सहवासो मुख्यस्तथा तदूर्द्ध्वमपि । तथा च—

शङ्खलिखितौ,

कामं सहवसेयुरेकतः संहता वृद्धिमाप्स्यन्तीति ।

संहताः=सहवसन्तो द्रव्योपचये साहाय्यादिना परस्परकृतेन वृद्धिमाप्नुयुरित्यर्थः ।

नारदोऽपि— ( व्य०प० १३।५ )

---

( १ ) विपरीतचेतसि=उन्मादादिना ।

( २ ) कुटुम्बम्=कुटुम्बभरणं गार्हस्थ्यं वा ।

बिभृयाद्वैकतः सर्वान् ज्येष्ठो भ्राता यथा पिता ।
भ्राताशक्तः कनिष्ठो वा शक्त्यपेक्षा कुलस्थितिः ॥

मनुरपि—( अ० ९ )

ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः ।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥ ( १०५ )
ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।
पितॄणामनृणश्चैव स तस्मात्सर्व्वमर्हति ॥ ( १०६ )
यस्मिन्नृणं संनयति येन चानन्त्यमश्नुते ।
स एव धर्म्मजः पुत्रः कामजानितरान् विदुः ॥ ( १०७)
पितेव पालयेत् पुत्रान् ज्येष्ठभ्राता यवीयसः ।
पुत्रवच्चापि वर्त्तेरन् ज्येष्ठे भ्रातरि धर्म्मतः ॥ ( १०८ )
ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः ।
ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः ॥ ( १०९ )
यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव च पितेव सः ।
अज्येष्ठवृत्तिर्य्यस्तु स्यात्स सम्पूज्यस्तु बन्धुवत् ॥ ( ११० )
यो लोभाद्विनिकुर्वीत ज्येष्ठो भ्रातॄन्यवीयसः ।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः ॥

इत्यादिवचननिचयाद्गुणज्येष्ठवशवर्त्तितया सर्वेषां सहवासः प्रशस्तः । धर्मवृद्धिकामनया तु विभागः कार्य्य इत्याहतुर्मनुप्रजापती—

एवं सहवसेयुर्वा पृथग्वा धर्मकाम्यया ।
पृथग्विवर्द्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया ॥(मनु० ९।१११)

धर्मश्च देवाद्यर्च्चनरूपस्तस्यैव सहवासे पृथक्त्वश्रवणात् ।

तथा च—

बृहस्पतिः,

एकपाकेन वसतां पितृदेवद्विजार्च्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥ इति ।

यत्तु सङ्ग्रहकारेणाग्निहोत्रादिधर्मवृद्धिरपि धर्मवृद्धिशब्देन गृह्यत इत्युक्तम् ।

यदाह—

क्रियते स्वं विभागेन पुत्राणां पैतृकं धनम् ।
स्वत्वे सति प्रवर्त्तन्ते तस्माद्धर्म्याः पृथक्क्रियाः ॥ इति ।

प्रवर्त्तन्ते स्वत्वायत्ता अग्निहोत्रादिक्रिया इति शेष इति ।

तत्तु जन्मनैव पुत्राणां पितृधने स्वत्वाद्विभागात्प्रागपि श्रौतस्मार्त्त-

कर्म्माधिकारं प्रतिपादयद्भिरस्माभिः प्रागेव प्रत्यासि । तस्मात्पञ्चमहायज्ञादिधर्म एव धर्मशब्देनात्र ग्राह्यः । "दत्तासु भगिनीषु च" इति तु न कालार्थं किन्तु तासामवश्यं दानार्थम् ।

यथा—

यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं ततः ।
भ्रातृभिस्तद्विभक्तव्यमृणी न स्याद्यथा पिता ॥ इति ।

इति नारदवचनमृणादानावश्यकत्वार्थं न विभागकालार्थम् । पिता च यदि स्वेच्छया पुत्रान् विभजति तदापि निरङ्कुशेच्छा नोपादेया । किन्तु-

ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ।

इति पक्षयोर्मध्ये यः पक्ष इष्टः स ग्राह्य इति योगीश्वरवचनार्थः । ज्येष्ठं श्रेष्ठभागेन मध्यमं मध्यमभागेन कनिष्ठं कनिष्ठभागेन । सर्वे वा ज्येष्ठादयः समांशभाजः कार्य्या इति विज्ञानेश्वराचार्य्याः ।

प्राच्यास्तु स्वेच्छयेति पृथक्पक्षान्तरं ज्येष्ठादिभागौ च द्वौ पक्षाविति पक्षद्वयमत एव ज्येष्ठं वेति प्रथमो वाशब्दः स्वेच्छयेति पक्षापेक्षया समञ्जसो वक्ष्यमाणपक्षापेक्षत्वे क्लिष्टः स्यादित्याहुः । उपपत्तिं च तत्र वदन्ति—(व्य० प० १३। ४)

पितैव वा स्वयं पुत्रान् विभजेद्वयसि स्थितः ।
ज्येष्ठं वा श्रेष्ठभागेन यथावास्य मतिर्भवेत् ॥

इति नारदवचने ज्येष्ठं वेत्यादिनैकं विषमविभागप्रकारमुपन्यस्य यथा वास्येत्युक्तेरन्योऽपि न्यूनाधिकभागः पितुरिच्छयास्तीति गम्यते ।

हारीतोऽपि—

जीवन्नेव वा विभज्य वनमाश्रयेद्वृद्धाश्रमं वा गच्छेत् स्वल्पं वा संविभज्य भूयिष्ठमादाय वसेद्यद्युपदस्येत्पुनस्तेभ्यो गृह्णीयादिति ।

वृद्धाश्रमः=पारिव्रज्यम् । उपदस्येत्=द्रव्याभावेन क्षीणो भवत् । अत्रापि स्वल्पं वेत्यादिपक्षान्तरमुक्तम् । तस्मात्तदेकमूलकतानुरोधेन योगीश्वरवचनेऽपि तत्सङ्ग्रहायेच्छयेति पृथक्पक्ष एव युक्त इति ।

तदसत् । वाशब्दस्तावद्द्विधापि व्युत्पत्तेर्नासमञ्जसः । या चोपपत्तिरुक्ता साप्ययुक्ता । यदि वचनान्तरोपात्तपक्षान्तरसङ्ग्रहार्थमिच्छयेत्यस्य भवेदुत्तरार्द्धं व्यर्थमेव स्यादुक्तपक्षद्वयस्यापि वचनान्तरोपात्तत्वादिच्छयेत्यनेन तयोरपि सङ्ग्रहसम्भवात् । तदितरपक्षसङ्ग्रहार्थत्वे मन्दप्रयोजनता स्यादेव । इच्छाया निरङ्कुशत्वेनातिप्रसङ्गवारणाय वचनान्तरालोचनं विना तदर्थानिर्वाहात् । स्वोपात्तपक्षद्वये व्यवस्थानिरासार्थतयेच्छयेति व्याख्यायमाने वचनान्तरालोचनानावश्यकत्वात् । न च विक-

ल्पोक्तयैवेच्छालाभे इच्छयेति निरर्थकमिति वाच्यम् । उत्तरार्द्धवैयर्थ्या-पेक्षया व्यवस्थितविकल्पनिरासाय स्ववाक्योपात्तपक्षद्वयविषयतया तदनुवादस्यैवोपपन्नतरत्वात् । नारदायेकमूलकता तु विज्ञानेश्वरव्या-ख्यानेऽपि नापैति । तदुक्तपक्षद्वयस्य वचनान्तरेष्वप्युपादानात् । न च निरर्गलेच्छामात्रमेव पक्षान्तरं योगीश्वरवचनार्थोऽस्त्विति वाच्यम् ।

अयथाशास्त्रकारी च न विभागे पिता प्रभुः ।

इत्यस्य निर्विषयत्वापत्तेः । इच्छामात्रस्य शास्त्रीयत्वेऽयथाशास्त्रका-रित्वाप्रसक्तेः ।

जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत् ।
निर्भाजयेन्न चैवैकमकस्मात्कारणं विना ॥

इति कात्यायनवचसोऽपि निर्विषयता स्यात् । इच्छाया एककारण-त्वात् । न विशेषयेत्=शास्त्रीयज्येष्ठभागाद्यतिरिक्तैश्छिकविशेषवन्तं न कुर्य्यात् । कारणं च शास्त्रोक्तं पातित्यादिकं विनाऽकस्मात् क्रोधात् सुभ-गापुत्रस्नेहादिना वा न निर्भाजयेत्=भागरहितं न कुर्य्यादित्यर्थः । यत्तु-

न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः । ( )

इति योगीश्वरवचनं तदपि धर्म्यो धर्म्मादनपेतश्चेत् पित्रा कृतः कृत एव स्मृतौ न निवर्त्तते । अधर्मस्त्वयथाशास्त्रकृतो निवर्त्तत एवेत्यभि-प्राय इति विज्ञानयोगिभिरेव व्याख्यातम् । "व्याधितः कुपितश्चैव" इत्या-दिवचनानुरोधात् । एवम्—

समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः ।
तथैव ते पालनीया विनेयास्ते स्युरन्यथा ।
पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः ।
तेषां स एव धर्म्यः स्यात्सर्वस्य हि पिता प्रभुः ॥
(व्य० प० १३।१५)

इति बृहस्पतिनारदवचने अपि व्याख्येये । श्रेष्ठादिविभागेऽपि पित्रा ज्येष्ठादिभ्यो दत्तेऽन्यैरनुशयो न कार्य्यः समांशविभागे वा ज्येष्ठादि-भिरिति तात्पर्य्यार्थः । अत एव नारदः"तेषां स एव धर्म्यः स्यात्" इत्याह । श्रेष्ठादिभागश्च मनुनोक्तः—(अ९।११२)

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
ततोऽर्द्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः ॥ इति ।

समांशपक्षं बौधायन आह—

मनुः पुत्रेभ्यो दायं व्यभजदिति समोंऽशः सर्वेषामविशेषादिति ।

मनुः पुत्रेभ्यो दायं व्यभजदिति श्रुतौ विशेषाश्रवणात् सर्वेषां पु-

त्राणां समोंऽश इत्यर्थः । यदि पिता स्वेच्छया समांशेन पुत्रान्विभजते तदा स्वपत्नीभ्यः पुत्रसममंशं दद्यादित्याह—

याज्ञवल्क्यः, (अ० २ श्लो० ११५)

यदि कुर्य्यात् समानंशान् पत्न्यः कार्य्याः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥

यासां भर्त्रा श्वशुरेण वा स्त्रीधनं प्रीत्यादिना न दत्तम् । भर्त्रादिग्रहणमुपलक्षणम् । वक्ष्यमाणस्त्रीधनशून्या इत्यर्थः । तासां पत्नीनां पुत्रसमांशभाक्त्वमत्र नियम्यते । तथा च यदा श्रेष्ठभागादिनापि पिता पुत्रान् विभजति तदापि श्रेष्ठभागाद्युद्धृत्योद्धृतोद्धाराद्द्रव्यसमुदायात् पुत्रसमानेवांशान् पत्न्यो लभन्ते न स्वज्येष्ठभागादिकमित्यर्थः पर्य्यवस्यति । यस्तु पत्न्याः स्वोद्धारः परीभाण्डादिस्तमपि पत्नी लभते ।

तथा चापस्तम्बः—

परीभाण्डं च गृहेऽलङ्कारो भार्य्याया इति ।

परीभाण्डं भोजनपात्रादि यदसाधारणं यस्या अलङ्कारोऽप्यसाधारणस्तद्विवेचयिष्यते । न च पक्षद्वयेऽप्येतावता पुत्रसमांशित्वं पत्नीनां विज्ञानेश्वरेणोक्तं तर्हि "यदि कुर्य्यात् समानंशान्" इति समांशानुवादो व्यर्थः । पत्न्यो ज्येष्ठांशादि न लभन्ते इत्येतावन्मात्रमेव वाक्यार्थमिति युक्तम् । यतः—(अ० ९ श्लो० ११५। ११६)

एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेत् ।
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना ॥
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः ।
अंशमंशं यवीयांस इति धर्म्मो व्यवस्थितः ॥

इति मनुना,

द्व्यंशी वा पूर्वजः स्यादेकैकमितरेषाम् ।

इति गौतमेन,

अथ भ्रातृणां दायभागो द्व्यंशं हरेज्ज्येष्ठो गवाश्वस्य चात्र दशममजावयो गृहं च कनिष्ठस्य कार्ष्णायसं गृहोपकरणानि च मध्यमस्य ।

इति वसिष्ठेन,

ज्येष्ठस्यांशोऽधिको देयः कनिष्ठस्य वरः स्मृतः ।
समांशभाजः शेषाः स्युरप्रत्ता भगिनी तथा ॥
(व्य० प० १३। १३)

इति नारदेन चोद्धारमृते विषमभागमात्रमुक्तं तद्यदाद्रियते तदा पत्नीनामंशाभावप्रतिपादनार्थं "यदि कुर्य्यात्समानंशान्" इत्युक्तमिति न दोषः । अत एव—

भ्रातॄणामविभक्तानां यद्युत्थानं भवेत्सह।
न तत्र विषमं भागं पिता दद्यात्कथञ्चन॥ (अ० ९ श्लो० २१५)

इति मनुना सर्वेषां भ्रातॄणां द्रव्यार्जने यदि सह समानमेव उत्थानमुद्योगो भवेत्तदा पितुर्विषमविभागदानप्रतिषेधः कृतः। अत एव चोक्तमनुवचनव्याख्याने जीमूतवाहनेनोक्तम्—"उद्धारस्तु पित्रा दातव्य एव। तस्य विभागरूपत्वाभावात्(१)। न्यूनाधिकविभागस्यैव निषेधात्" इति। तस्मात् "ज्येष्ठं वा श्रेष्ठभागेन" इति याज्ञवल्क्याद्युक्त उद्धारेऽपि समांशभागिता पुत्राणामस्त्येवेति तत्रापीदं वचनं प्रवर्त्तत एव द्व्यंशादिपक्षे परं न प्रवर्त्तत इति विज्ञानयोगिनामाशयः। दत्ते तु स्त्रीधने "दत्ते त्वर्द्धं प्रकल्पयेत्" इत्यत्रार्द्धदानं वक्ष्यते। यद्यपि तदाधिवेदनिके भर्त्रा दीयमाने वक्ष्यते तथाप्याकाङ्क्षायां सत्यां समानन्यायत्वादत्रापि योज्यम्। अत एवाह—

बौधायनः,

बहूनामेकधर्माणामेकस्यापि यदुच्यते।
सर्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः॥ इति।

"भ्रातॄणामविभक्तानाम्" इत्यादि मनुवाक्यं सहोत्थानं सर्वेषां विभागप्रार्थना यदि भवतीति जीमूतवाहनेन तदनुयायिना दायतत्त्वकृता च व्याख्यातम्, "यदि पुनः पितरि जीवति पुत्रा एव विभागमर्थयन्ते तदा विषमविभागः पित्रा न दातव्य" इति वदता। तत्र सहशब्दवैयर्थ्यम् उत्थानशब्दस्य चोद्योगवाचिनोऽपि भागप्रार्थनापरत्वमन्याय्यमित्यस्मद्व्याख्यानमेवादर्त्तव्यम्। तथा च—

सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः। (अ०२श्लो०१२०)

इति योगीश्वरवचःसंवादोऽपि लभ्यते। तस्यास्मदभिमतार्थतयैवोपपत्तेः। "दत्ते त्वर्द्धम्" इत्यत्राप्यर्द्धशब्दः समप्रविभागवचनो न भवति। अतश्च यावता पूर्वदत्तमिदानीं दीयमानं च समं भवति तावद्देयमिति मिताक्षरायामुक्तम्। तत्रायमाशयः। यद्यपि नपुंसकस्यार्द्धशब्दस्य "पुंस्यर्धोऽर्द्धं समेंऽशके" इति कोषात्समांशवाचित्वमस्ति। तथापि कदाचित्तासां पुत्राधिकधनत्वं कदाचित्तदूनधनत्वमव्यवस्थितमर्द्धनियमस्य चादृष्टार्थत्वं मा प्रसाङ्क्षीदिति पुत्रसमांशितायामेव तात्पर्य्यमिति।

अत्र मदनरत्नकार आह—पत्न्य इति बहुवचनात्प्रतिपत्नि समानंशान् पिता गृह्णीयान्न तु ताभ्यः पृथक्कृत्यांशो दातव्यः। "जायापत्योर्विभागो न विद्यते" इति हारीतवचनविरोधापत्तेरिति।

(१) "एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेत्। इत्यादिना अविभक्तद्रव्यात्पृथक्कृतस्यैवोद्धारतया तस्य भागाभावादिति भावः।

तन्न। नात्र जायापत्योर्विभाग उच्यते येन हारीतवचनाविरोधः स्यात् किन्तु पत्न्यव पुत्रविभागसमये ताभ्यस्तत्समांशदानं प्रीतिदानवत्। अत एव स्त्रीधने दत्ते त्वर्द्धमित्युक्तमिति न कोऽपि दोषः।

यस्तु जीवति पितरि पुत्रेच्छया विभागः स वैषम्याश्रवणात् "मातुर्निवृत्ते रजसि" इति मनुवचने समशब्दानुषङ्गाच्च सम एव। योऽपि पितुरूर्ध्वं विभागः सोऽपि सम एव। पूर्वोदाहृतमनुवचने सममित्यभिधानात्।

हारीतोऽपि—

समानो मृते पितरि रिक्थविभागः।

पैठीनसिरपि—

पैतृके विभज्यमाने दायाद्ये भ्रातॄणां समो विभागः।

याज्ञवल्क्योऽपि—( अ० २ श्लो० ११७ )

विभजेरन् सुताः पित्रोरूर्ध्वमृक्थमृणं समम्।

पित्रोरूर्ध्वमिति कालः, सुता इति कर्त्तारः, सममिति प्रकारनियम इति मिताक्षरा।

ननु मनुनैव पितुरूर्ध्वं विभागमुपक्रम्य—

ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा॥ ( अ० ९ श्लो० १०६ )

इति सहवासपक्षं मुख्यमुक्त्वा "ज्येष्ठस्य विंश उद्धार" इत्यादिना विषमविभागोऽप्युक्तस्तत्कथं समनियम इति चेत्, उच्यते। यद्यप्ययं विषमविभागो जीवत्यजीवति च पितरि शास्त्रदृष्टस्तथापि वचनान्तरानुरोधात्कलौ सम एवेति नियमः।

अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु। (अ० १ श्लो० १०९)

इति योगीश्वरवचनात्। अत्र लोकपदेन युगमुच्यते। युगान्तरे धर्म्यमपि युगान्तरे यद्विद्विष्टं प्रतिषिद्धं तन्नाचरेदित्यर्थः। अन्यथा धर्म्यत्वास्वर्ग्यत्वयोर्व्याघातः। शास्त्रविहिते तदभिज्ञविद्वेषो बाधित एव। तदनभिज्ञपामरजनविद्वेषस्तु नास्वर्ग्यत्वापादकोऽग्नीषोमीयादिहिंसादावतिप्रसङ्गादित्यादि दूषणं स्यात्। अत एव मिताक्षरायां मधुपर्कपशुवधगवालम्भादि कलिवर्ज्यमेव लोकविद्विष्टत्वेनोदाहृतम्। कलिवर्ज्येषु च पुनरुद्वाहादिकमक्षतादीनां यत्रोक्तं तत्र ज्येष्ठांशाद्युद्धारादिकमपि। तथा च—

आदिपुराणे,

ऊढायाः पुनरुद्वाहो ज्येष्ठांशो गोवधस्तथा।
कलौ पञ्च न कुर्वीत भ्रातृजाया कमण्डलुः॥

स्मृतिसङ्ग्रहेऽपि—

यथा नियोगधर्म्मो नो नानूबन्ध्यावधोऽपि वा।
तथोद्धारविभागोऽपि नैव सम्प्रति वर्त्तते॥

नियोगधर्मो भ्रातृभार्यायां वाग्दत्तायां मृतपतिकायां गुर्वादिनियोगेन विधिना गमनम्। (१)"मैत्रावरुणीं गामनूबन्ध्यां वशामालभेत"इति विहितो गोवधः। सम्प्रति=कलौ। अत एवापस्तम्बो—

जीवन् पुत्रेभ्यो दायं विभजेत्समम्-

इति स्वमतमुक्त्वा,

ज्येष्ठो दायाद इत्येके

इति कृत्स्नधनग्रहणं ज्येष्ठस्येत्येकीयमतमुपन्यस्य

देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं(२)ज्येष्ठस्य, रथः पितुः परीभाण्डं(३) गृहेऽलङ्कारो भार्य्याया ज्ञातिधनं चेत्येके।

इत्येकीयमतत्वेनैवोद्धारविभागं दर्शयित्वा तं शास्त्रविप्रतिषिद्धमिति निराकृतवान्। शास्त्रविप्रतिषेधं च स्वयमेव विवृतवान् "मनुः पुत्रेभ्यो दायं व्यभजत् इत्यविशेषेण श्रूयते"इति(४)। तस्मान्न विषविभागः शास्त्रदृष्टोऽपि कलावनुष्ठेयः।

यत्तु मिताक्षराकृता श्रुतिविरोधेत्युक्तं तद्विचार्यम्। श्रुतिविरोधे हि सति युगान्तरेऽपि तस्याननुष्ठाने तद्बोधकवचनानां सर्वथाऽप्रामाण्यमेव स्यादिति कलिवर्ज्यतयोपन्यासो विरुद्धः। नचात्यन्तं श्रुतिविरोधोऽपि अविशेषश्रवणे सति "समं स्यादश्रुतत्वात्" (जै० अ० १० पा० ३ अधि० १३ सू० ५३) इतिन्यायलभ्यत्वात्समत्वस्य।

स्मृतिचन्द्रिकायां तु बौधायनोदाहृतं विषमविभागप्रतिपादकमपि श्रुत्यन्तरं लिखितम्। ज्येष्ठत्वादाधिक्येऽपि श्रुत्यन्तरमित्याह स एव-

धनमेकमेकमुद्धरेज्ज्येष्ठः तस्मात् ज्येष्ठं पुत्रं धनेन निरवसाययतीति श्रुतेरिति।

धनमेकमेकमिति वदन् श्रुतिवाक्यगतं धनेनेत्येकवचनं विवक्षितमिति

(१) मित्रावरुणदेवताकां वशां=बन्ध्याम् अनूबन्ध्यां गामालभेतेतिवाक्यार्थः। इयमनूबन्ध्येष्टिः सोमयागे उदवसानीयेष्ट्यनन्तरमाम्नाता आपस्तम्बेन। कलौ तु तत्स्थाने आमिक्षाया उक्तत्वात्तदननुष्ठानं याज्ञिकानाम्।

(२) कृष्णं=कृष्णवर्णं भौमं=भूमौ जातं धान्यमाषादि। कार्ष्णायसमिति केचित्।

(३) परीभाण्डम्=उपकरणं पीठादिकम्। ज्ञातिधनं च इत्यस्य ज्ञातिभ्यः पित्रादिभ्यश्च लब्धं धनमित्यर्थः।

(४) पुत्रेभ्य इति बहुवचननिर्देशात् दायमित्येकवचननिर्देशाच्चाविशेषेण श्रवणमित्यर्थः।

सूचयति, निरवसाययति=तोषयतीत्यर्थ इति ग्रन्थेन ।

जीमूतवाहनादयस्तु यदा भक्त्यतिशयादिना भ्रातृणामनुमतिस्तदोद्धारा-दिर्विषमभागोऽत एवाद्यतनानां भक्त्याद्यभावादुद्धाराद्यर्हज्येष्ठाभावाच्च समभाग एव लोके दृश्यते इत्यादिना ग्रन्थनानुमत्यननुमतिभ्यां विषमसमभागयोर्व्यवस्थामाहुः । तत्तु तथा सति पुत्रेच्छाया एव प्रयोजकत्वापत्तेः पूर्वार्द्धविरोधादनादेयम् । पित्रिच्छायाः स्वतन्त्रपक्षा-न्तरपरत्वं तु प्रागेव निरासि ।

पित्रा पुत्रेभ्यः स्वार्जितधनविभागं ददता स्वयमंशद्वयं ग्राह्यमित्याह-नारदः,

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता । इति ।(व्य०प०१३श्लो०१२)

बृहस्पतिरपि—

जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयम् । इति ।

पितुरंशद्वयग्रहणमेकपुत्रविषयमित्याहतुः-

शङ्खलिखितौ,

स यद्येकपुत्रः स्याद्द्वौ भागावात्मनः कुर्यात् । इति

व्यवहारपारिजातकार इदं वचनमेवं व्याचष्ट । एकशब्दोऽत्र श्रेष्ठवाची । तथा च यदि पुत्रो गुणवत्तया धनार्ज्जनशक्तस्तदा तेन सह विभागे पि-त्रांशद्वयं ग्राह्यमिति ।

जीमूतवाहनस्तु एकस्य पुत्रः एकपुत्र एकपितृक औरस इति यावत् । न तु एकः पुत्रो यस्येति बहुव्रीहिरन्यपदार्थप्राधा-न्येनास्य षष्ठीतत्पुरुषाद्दुर्बलत्वात् । तथा च क्षेत्रजस्य व्यावृत्तिस्तस्य द्विपितृकत्वात् । तथाचौरसपुत्ररूपः पिता स्वपितृधने भागद्वयं गृह्णी-यान्न तु क्षेत्रजादिरिति व्याचख्यौ । तदसत् । तथा सति पितामहध-नगोचरतास्य स्यात्तत्र च सदृशं स्वाम्यं पितापुत्रयोरित्यौरसस्यापि पितुः पुत्रसमांशताया व्यवस्थापयिष्यमाणत्वात् । तथा चागत्या बहु-व्रीहिरेवास्थेयः । मिताक्षराकृता त्विदं वचनमनादृतमेव ।

कात्यायनः—

द्व्यंशहरोऽर्द्धहरो वा पुत्रवित्तार्ज्जनात्पिता ।

मातापि पितरि प्रेते पुत्रतुल्यांशभागिनी ॥ इति ।

अत्र जीमूतवाहनः । (१)पुत्रस्य वित्तार्ज्जनात् पुत्रार्जितेऽपि वित्ते स्वार्जि-

---

(१) अत्र मुद्रितजीमूतवाहनदायभागे त्वित्थं पाठः—पुत्रस्य वित्तार्जनात्पितुर्द्व्यंश-हरत्वमर्धहरत्वं वेत्यस्यार्थः । न च पुत्रश्च वित्तं चेति पुत्रवित्ते तयोरर्जनात् पिता द्व्यंश-हरः पुत्रानजनात्तु सर्वहर इति वाच्यम् , अनर्जितपुत्रस्यापि भ्रातृभिर्विभागे वित्तार्जकत-या अंशद्वयस्येष्टत्वात्कथं सर्वहरत्वम् , अतो विभागार्ह—

ते इव पितुरंशद्वयमित्यस्यार्थो न तु पुत्रश्च वित्तं च तयोरर्जनादिति। अनर्जितपुत्रस्यापि भ्रातृभिर्भागे वित्तार्जकतयांशद्वयस्येष्टत्वात्। अतो विभागार्हसम्बन्धिनि विद्यमानेऽर्जकस्य द्व्यंशादिहरत्वमसति तु सर्वहरत्वमिति वाच्यं तथा सति पितापुत्रपदयोः प्रमत्तगीतता स्यात्। किञ्चार्ज्जनं स्वत्वहेतुभूतो व्यापारः। अर्ज्जनं स्वत्वं नापादयतीति विप्रतिषिद्धमित्यभिधानात्। नच पुत्रेषु स्वत्वमस्तीति सर्वस्वदाने दर्शितम्। अतस्तत्र गौणमर्ज्जनपदं वित्ते च मुख्यमिति। सकृदुच्चरिते वैरूप्यमयुक्तम्(१)। न च पुत्रस्यार्ज्जकत्वादेवांशद्वयप्राप्तेः पितुश्चास्माद्वचनादृतेऽपि वचनान्तरादेव भागद्वयसिद्धेर्वचनामिदमनर्थकमिति वाच्यम्। एतद्वचनमन्तरेण पुत्रधने पितुर्भागद्वयस्याप्राप्तेरस्य सार्थक्यात् इत्याह।

तन्न। द्वन्द्वापेक्षया षष्ठ्यर्थलक्षणावतो भवदुक्तसमासस्यायुक्तत्वात्। यच्चानर्जितपुत्रस्येत्यादिद्वन्द्वदूषणं तदप्यसम्बन्धम्। भ्रातृभागाद्यविषयकत्वादस्य। पितृधनप्रस्तावात्। न चैवं पुत्रपदं व्यर्थं वित्तार्जनस्यैव द्व्यंशहरत्वे हेतुत्वोपपत्तेरिति वाच्यम्। अस्वातन्त्र्यार्थत्वात्। यतः पुत्रोऽपि वित्तवत्तेनैवार्जितस्तेन परतन्त्रः। स्वार्जितधने पितुरंशद्वयग्रहणाग्रहो न भवतीत्यत्र तात्पर्य्यम्। यच्चार्जनपदवैरूप्यं तदप्यसत्। पुत्रेऽपि पितृस्वत्वस्येष्टत्वात्। न च सर्वस्वदाननयविरोधः। पित्राद्यस्वत्वे तस्य तात्पर्य्यात्। पुत्राद्यदानस्य तन्नयसिद्धान्तस्य भाष्यप्रदर्शितचोदकविरोधयुक्तिसिद्धत्वात्। अत एव पुत्रकन्यादानादिविधयो मुख्यार्था एव न पुत्रादिपरतन्त्रीकरणरूपगौणदानाद्यर्थाः। इदं च पितुरंशद्वयोपादानं स्वार्जितविषयं न पित्रर्जितविषयम्।

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चैव हि॥

(अ० २ श्लो० १२१)

इति याज्ञवल्क्येन तत्र पितापुत्रयोः समस्वाम्याभिधानात् समांशभागित्वमेव। तस्य ह्ययमाशयः। भूः=शालिक्षेत्रादिका। निबन्धो=राज्ञामुकस्यैकस्मिन् पर्णभरकक्रमुकभरकादावियन्ति पर्णादीनि देयानीति शासनारूढतया यत् वृत्तित्वेन दीयते तदुच्यते। तथा द्रव्यं=सुवर्णादि। तत्र पितुः पुत्रस्य च स्वाम्यं हिशब्देन प्रसिद्धमित्युच्यते। जन्मनैव स्वत्वात्। तदपि सदृशं=तुल्यम्। अतोऽत्र पुत्राणां न पित्रर्जित इव पितृपारतन्त्र्यमिति तदनिच्छयापि विभागोऽशद्वयानियमश्च पितुर्नास्तीति।

---

(१) सकृदुच्चरितः शब्दः सकृदर्थं गमयति इति न्यायात् युगपद्वृत्तिद्वयविरोधाच्चेति भावः।

बृहस्पतिः—

द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा ।
सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि ॥

पित्रा सम एवांशो ग्राह्यो न तु स्वार्जितवदंशद्वयं विषमविभागपक्षाश्रयणं वेत्यर्थ इति मदनरत्नकारः ।

जीमूतवाहनस्तु यत्र द्वयोर्भ्रात्रोर्जीवत्येव पितर्येकः पुत्रमुत्पाद्य नष्टोऽन्यश्च जीवति पश्चात्पितापि मृतस्तत्र पितृधनं प्रत्यासत्तेः पुत्रस्यैव प्राप्नोति न तु प्राङ्मृतपितृकपौत्रस्य विप्रकर्षात् तदर्थं(१) "सदृशं स्वाम्यम्" इति वचनम् । यथा पितामहधने तत्पुत्रस्य स्वाम्यं तथा तत्पौत्रस्यापि । न तु सन्निकर्षविप्रकर्षप्रयुक्तो विशेषः । पार्वणविधिना पिण्डदातृत्वेन द्वयोरपि तदुपकारकत्वाविशेषादित्यभिप्रायः । अत एव मृतापितृपितामहकः प्रपौत्रोऽपि प्रपितामहधने पुत्रपौत्राभ्यां सह तुल्यवदेव स्वामी । पिण्डदानाद्यविशेषात्(२) । जीवति तु पितरि पुत्राणां (३)तद्धनस्वाम्ये सपुत्रभ्रातृद्वयविभागे तत्पुत्राणामपि विभागः स्यात् स्वामित्वसाम्यात् । तस्मान्मृतपितृकपौत्रविषयकमिदं न पौत्रविषयकम् । न चाप्रक्रान्तत्वादतदर्थकत्वम् । प्रागनेकपितृकाणामेव प्रक्रमात् । सादृश्यवचनं तु स्वार्जितवत्पित्रिच्छया विभागाभावार्थम् । यथाह—

विष्णुः,

पिता चेत्पुत्रान् विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे । पैतामहे तु पितापुत्रयोस्तुल्यं स्वाम्यमिति ।

अतः स्वोपात्ते पिता न्यूनाधिकभागैः पुत्रानिच्छया विभजतु पैतामहे तु तुल्यं स्वामित्वं न पुनः पितुः स्वच्छन्दवृत्तिता । एतावतैवैतद्वचनोपपत्तौ सामान्यप्राप्तं पित्रिच्छया विभागकालत्वं पितुश्च भागद्वयं न निषिध्यते । जीवत्पितृकपौत्रविषयतापि वा धारेश्वरानुमतास्यास्तां तथापीच्छाकृतन्यूनाधिकभागनिरासार्थतैव । न तु पुत्रेच्छया विभागोऽशद्वयाभावश्च पितुरनेन बोध्यते ।

किञ्च—

जन्मविद्यागुणज्येष्ठो द्व्यंशं दायादमाप्नुयात् ।

---

(१) तदर्थम्=मृतपितृकपौत्रस्य प्राप्त्यर्थम् ।

(२) तेनात्र पुत्रपदं पार्वणाधिकारिसगोत्रोपलक्षणं पितामहपदं च पार्वणोद्देश्यपितृपूर्वपुरुषपरं, पितृपदम् अंशिपूर्वपुरुषधन्यपत्यपरमिति बोध्यम् ।

(३) तद्धनस्वाम्ये=पितामहधनस्वामित्वे ।

समांशभागिनस्त्वन्ये तेषां पितृसमस्तु सः ॥

इति बृहस्पतिवचनात्पितापि स्वपितृकृतनरकानिवर्त्तको गुणज्येष्ठः स्वभ्रातृभिः सह विभागे पितृसमत्वेन यत्रांशद्वयभाक् तत्र पुत्रैः सह विभागे पितैवांशद्वयं पैतामहधने नाप्नोति स्वद्वारक एव पुत्राणां तद्धनसम्बन्धः सेत्स्यतीति भवतो मुनीनां च वचनमनुचितम् । तस्मात् "इच्छया विभजेत्सुतान्" इति पित्रिच्छाया विभागकालत्वं "द्वावंशौ प्रतिपद्येत" इत्यादिवचनोक्तं पितुर्भागद्वयं चाविशिष्टं पितामहधनेऽपि । न्यूनाधिकभागमात्रं तु पुत्रेषु स्वाच्छन्द्येन भवति ।

द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा ।
सममंशित्वमाख्यातं पितुः पुत्रस्य चैवहि ॥

इति बृहस्पतिना पितापुत्रयोरंशसाम्यस्यैवाहत्य विधानात्कथं पितुरत्राप्यंशद्वयमिति चेत्,न। अंशित्वमंशकर्तृत्वं समं न तु स्वेच्छया स्वार्जितवन्न्यूनाधिकांशकर्तृत्वमिति तदर्थात् । न त्वंशवत्त्वं सममिति । स यद्येकपुत्रः स्यादित्येकपुत्रपदस्यौरसपरत्वस्योक्तत्वात् , द्विपितृकक्षेत्रजादिरूपापत्राभिप्रायं वा समांशित्वाभिधानमित्याह ।

तदनादेयम् । सन्दर्भविरोधात् । तथाहि अनेकपितृकाणां पितृद्वारकभागकल्पनामभिधायानन्तरं "भूर्या पितामहोपात्ता" इत्युक्तं तत्रास्वाम्यमेव पौत्राणां पैतामहे धने, पितरि जीवति विभागाभावो वा, तदिच्छयैव वा स्वार्जितवद्विभाग इति शङ्कात्रयमेवोत्तिष्ठति । यन्मिताक्षरायामुक्तं, तन्निराकरणार्थमेवेदं वचनं तद्व्याख्यानरीत्या सङ्गच्छते । प्रमीतपितृकपौत्रविषयकत्वेन सङ्कोचोऽस्य कुतः । न च धारेश्वरावधारितरीत्या पौत्रमात्रविषयकतायामपि न्यूनाधिकभागमात्रस्य पित्रिच्छाकृतनिरासायेदं न पित्रिच्छाकालतदीयभागद्वयस्याविशेषप्रवृत्तस्येति वाच्यम् । विनिगमनाविरहात् । किञ्च । पित्रिच्छाया हेतुत्वम् "इच्छया विभजेत्"इति तृतीयानिर्देशाच्छाब्दमार्थिकं तु तस्या विभागकालोपलक्षणत्वम् । तत्र शाब्दं हेतुं बाधमानेनानेनार्थिकं कालोपलक्षणत्वं न बाध्यत इति चित्रम् । सति च स्वाम्यसाम्ये पुत्रेच्छाया निमित्तत्वं तत्कृतं च तस्याः कालोपलक्षणत्वं गलेपातिकमापतद्दुर्वारम् ।

ननु पितुरंशद्वयं पितृत्वप्रयुक्तं न स्वाम्याधिक्यप्रयुक्तं नाप्यर्जकत्वप्रयुक्तम्। तस्य "येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव लभेत"इति वासिष्ठसाधारणवचनादेव सिद्धेः "द्वावंशौ प्रतिपद्येत"इति विशेषवचनानर्थक्यप्रसङ्गात् । तस्मात्पित्रर्जितेऽपि ज्येष्ठपुत्रत्वप्रयुक्तं यथा तस्यांशद्वयं विशेषवचनात्तथा पैतामहे पितुरपि । अत एवास्मन्मते पुत्रार्जितेऽपि

पितुरंशद्वयमिति चेत्, सत्यम्। परं तु निःसङ्कोचप्रवृत्तस्वाम्यसाम्यवचनेन तद्बाध्यते। पुत्रार्जिते तु पितुरंशद्वयाभावो भवदुदाहृत—"पुत्रवित्तार्जनात्" इति वचनस्य भवदुक्तार्थदूषणात्प्रागेव व्यवस्थापितः। न च तद्वचनादंशद्वयाभावेऽपि सामान्यवचनादेव पुत्रार्जितेऽपि पितुरंशद्वयमायात्विति वाच्यम्। वित्तार्जनस्य तत्र हेतुत्वोपन्यासवैयर्थ्यप्रसङ्गात्। न च तदर्थवादमात्रमन्यथार्जकत्वप्रयुक्तभागद्वयस्य वसिष्ठवचनादेव सिद्धेर्विशेषवचनानर्थक्यापत्तिरिति वाच्यम्। यतस्तथार्जकत्वप्रयुक्तपुत्रांशद्वयस्यावारणात् पितृत्वप्रयुक्तपित्रंशद्वयेऽपि भागसाम्य एव पर्यवसानं भवेन्न तु भवदभिमत पुत्रापेक्षया पितुरंशाधिक्यं तथाहृत्यवचनाभावात्।

यच्च किञ्चेत्यादिनानौचित्यमुक्तं तन्न किञ्चित्। वाचनिकसाम्येऽनौचित्याप्रसक्तेः। ज्येष्ठस्य ज्येष्ठत्वप्रयुक्तमंशद्वयं पितृत्वप्रयुक्तं च पितुरिति ज्येष्ठपुत्रसाम्यापत्तेस्त्वयाप्यनौचित्यस्य दुर्वारत्वात्। मदनरत्नधृतकात्यायनवचनात्तु सर्वेषां भ्रातॄणां पितापुत्राणां च समांशग्रहणमेव मुख्यमिति प्रतीयते।

सकलं द्रव्यजातं यद्भागैर्गृह्णन्ति तत्समैः।
पितरौ भ्रातरश्चैव विभागो धर्म्य उच्यते॥ इति।

अत एव योगीश्वरोऽपि—"सर्वे वा स्युः समांशिन" इति सर्वपदं प्रायुङ्क्त। अन्यथा समांशिनो वा कुर्वीत सुतानिति वदेत्।

यस्तु विभागिनां मध्ये स्वव्यवसायेन जीवनसमर्थः पितृधनादिविभागं न जिघृक्षति तं प्रत्याह—

मनुः, (अ० ९ श्लो० २०७)

भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा।
स निर्भाज्यः स्वकादंशात्किञ्चिद्दत्त्वोपजीवनम्॥

याज्ञवल्क्योऽपि—(अ० २ श्लो० ११६)

शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक्क्रिया।

निर्भाज्यो=निःसम्बन्धीकरणीयः पृथक् क्रियेत्यस्याप्ययमेवार्थः। किञ्चिद्दत्त्वेति विभागचिह्नत्वेन किञ्चिदसारमपि दत्त्वेत्यर्थः। तत्पुत्राणां दायजिघृक्षानिवृत्त्यर्थं चेदम्।

हलायुधस्तु—

कुटुम्बार्थेषु चोद्युक्तस्तत्कार्यं कुरुते तु यः।
स भ्रातृभिर्बृंहणीयो ग्रासाच्छादनवाहनैः॥ (व्य०प०१३ श्लो०३५)

इति नारदवचनैकवाक्यतालाभेन मनुवचने स निर्वाह्य इति पाठं

प्रकल्प्य स भ्रातृभिर्गृहीतभागैः स्वस्वभागादूनमाकृष्य पूरणीय इत्यर्थ इति व्याख्यातवान्। तत्तु नेहेतेत्यादिपदवैयर्थ्यापत्तेरुपेक्ष्यम्। मेधातिथिप्रमुखाचार्यानादृततया पाठकल्पनानौचित्याच्च। पृथक्क्रियेति स्पष्टवचनसंवादाच्च।

प्रकाशकारस्तु यो भागिषु धनार्थं व्यापृतेषु प्रमादालस्यादिना नेहेत=न व्याप्रियेत साहाय्यं न कुर्यात्। स्वकर्मणा=स्वव्यापारेण शक्तः=साहाय्य कर्मणि क्षमोऽपि सन् स स्वकादंशात् स्वव्यापारजनिताद्धनाद्बहिः कार्यः किञ्चिदुपजीवनं दत्वा मूलधनमात्रभागी करणीय इतीदं मनुवचनं निर्वाह्य इत्याकरपाठमङ्गीकृत्यैव व्याचष्टे। तदपि न युक्तम्। अपिशब्दाद्यध्याहारप्रसङ्गात्। योगीश्वरवचनसंवादिनोऽर्थस्य स्पष्टतरप्रतीतिकत्वाच्च। भवदुक्तार्थस्य वचनान्तरवशत्वाच्च।

कात्यायनः—

अविभक्ते निजे प्रेते तत्सुतं रिक्थभागिनम्।
कुर्वीत जीवनं येन लब्धं नैव पितामहात्॥
लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात्।
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत्॥
लभते तत्सुतो वापि निवृत्तिः परतो भवेत्।

निजे=भ्रातरि। तत्सुतं=भ्रातृपुत्रम्। जीवनं=भागः। स कीदृशं भागं लभत इत्यपेक्षिते आह–पित्र्यमंशमिति। तत्सुतो=यस्य धनं विभज्यते तस्य प्रपौत्रः। पौत्रस्य प्रस्तुतत्वात्। परतः=तत्सुतात् निवृत्तिर्भागनिवृत्तिर्भवेत्प्रपौत्रपुत्रो भागं न लभेतेत्यर्थः। अत एव—

देवलोऽपि,

अविभक्तविभक्तानां कुल्यानां वसतां सह।
भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः॥ इति।

बीजिचतुर्थमभिव्याप्य दायभाग इत्यर्थः। विभक्तानामपि संसर्गादिना सहवासे सतीयं व्यवस्था। वसतां सहेति वचनात्। पित्र्यमंशमिति कात्यायनोक्तेः पितृद्वारको भाग इति सूचितम्। अत एवाह—

याज्ञवल्क्यः, (अ०२श्लो०१२०)

(१)प्रमीतपितृकाणां तु पितृतो भागकल्पना। इति।

पैतामहे धने जन्मना स्वत्वं पौत्राणां पुत्रैः सहाविशिष्टमेव। यद्यपि

(१) अनेकपितृकाणामित्यपि पाठः।

तेन पुत्रवत्पौत्राणामपि पुत्रसम एव भाग उचितः । तथापि तेषां पितृद्वारेण भागं प्रकल्प्य स्वस्वपितृभागाधिकारो न तु पैतामहे धने स्वतो भागित्वमित्यर्थः । एतदुक्तं भवति । अविभक्ता भ्रातरो यदा पुत्रानुत्पाद्य दिष्टं गतास्तत्रैकस्य द्वौ पुत्रावन्येषां त्रिचतुराद्या इति पौत्राणां वैषम्यं तदा द्वावेकं स्वपितृभागं द्वेधा विभज्य गृह्णीतास्त्रिचतुराद्या अपि स्वस्वपितृभागमेकैकं त्रेधादिरूपेण विभज्य गृह्णन्ति न तु पौत्रसङ्ख्यया पैतामहधनभागः । अनयैव रीत्या केषु चिद्भ्रातृषु जीवत्सु केषुचिच्च पुत्रानुत्पाद्य विनष्टेषु भ्रियमाणाः स्वस्वांशभागिनोऽन्येषां पुत्राः स्वस्वपित्र्यंशभागिन इति वाचनिकोऽयं भेदः । अत एव वचनमिदमन्यवन्नानुवादकम् । उद्धारादिविषमविभागोऽपि वाचनिकः । समाशत्वं तु स्वाम्यसाम्यात्प्राप्तमेवानूद्यते ।

यत्र पैतामहमपहारादिना नष्टं पित्रोद्ध्रियते तत्र पित्रिच्छयैव पित्रार्जित इव पौत्रा विभागभाज इत्याह—

मनुः ( अ०९श्लो०२०९ )

पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् ।
न तत् पुत्रैर्भजेत्साद्धमकामः स्वयमर्जितम् ॥

स्वयमर्जितमिवेतीवशब्दाध्याहारेण योज्यम् । यद्वा तत् पितामहाद्गतमनेनैवोद्धृतमतः स्वार्जितमेव जातं यत इति हेतुतया योज्यम् । अकाम इति वचनात्पित्रिच्छयैव तादृशे पैतामहेऽपि विभागो न पुत्रेच्छयेति गम्यते ।

तथा स्मृत्यन्तरमपि—

पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिना प्राप्तं तत्र स्वाम्यं पितुः स्मृतम् ॥
प्रदानं स्वेच्छया कुर्याद्भागं चैव ततो धनात् ।
तदभावे तु तनयाः समांशाः परिकीर्त्तिताः ॥ इति ।

हृतम् = अपरैरपहृतं पितामहेन न प्रत्याहृतं पित्रा तु प्रत्याहृतमित्यर्थः । स्वशक्त्येत्युक्तेः पितामहद्रव्यानुपश्लेषेणेत्यर्थः । तदुपश्लेषेण तूद्धृतेऽर्जकत्वनिमित्तमंशद्वयं "येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव लभेत" इति वशिष्ठवचनात्पिता भजते । इदं च विद्यादिष्वपि योज्यम् । तच्च विस्तरेण विवेक्ष्यते ।

अयमत्र निर्गलितोऽर्थः । यद्यपि जन्मनैव पैतृके पैतामहे च धने पुत्रपौत्राणां स्वाम्यं तथापि पूर्वोक्तवचनैः पैतृके पुत्राणां पितृपरतन्त्रतया पितुश्चार्जकतया प्राधान्यात्पित्रा स्वार्जिते विनियुज्यमाने "स्था-

वरं द्विपदं चैव" इत्यादिप्राक्प्रदर्शितवचनात्तद्व्यतिरिक्ते पुत्रैरनुमतिरवश्यं कार्य्या । पैतामहे तु निषेधाधिकारोऽप्यस्ति तदनुद्धृते पित्रोद्धृते तु तदिच्छावशवर्त्तितैव पैतामहेऽपीति । मणिमुक्तादौ तु पैतामहेऽपि पितुरेव स्वातन्त्र्यं "मणिमुक्ताप्रवालानाम्" इत्यादिप्राग्लिखितवचनेभ्यः । अत्र पित्रुपरमानन्तरं यो भ्रातृणां विभागः स पित्रोरिति द्विवचनादुभयोपरम एव पितृधनेऽपि न तु मातुरुपरमो मातृधनगोचर इति सङ्ग्रहकाराद्युक्तमादर्त्तव्यम् । पैतृकमित्यत्र पित्रोरिदमित्येकशेषकल्पनायां प्रमाणाभावात् ,

जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।

इत्यादिना मातृधनविभागस्याग्रे वक्ष्यमाणत्वाच्च अत्र मातृधनविभागविधौ पौनरुक्त्यापत्तेश्च । याज्ञवल्क्येनापि 'मातुर्दुहितर' इत्यादिना मातृधनविभागस्य 'विभजेरन् सुताः पित्रो रिक्थम्' इति सम्बन्धो नाभिमतः किन्तु पित्रोरूर्ध्वमित्येव । पितुर्रिक्थमृणमिति तु सम्बन्धोऽर्थात् मातृरिक्थऋणविभागस्योत्तरार्द्धेनोक्तेः । अत एव प्रागुक्तशङ्खलिखितवचने "रिक्थमूलं हि कुटुम्बम्" इत्यादौ "मातुरप्येवमवस्थितताया" इत्यनेन मातुरपेक्षयाप्यस्वातन्त्र्यं विभागानाधिकारः सोदराणां तस्यामपि जीवन्त्यामित्येतदर्थमेवोक्तम् । अतश्च—

भ्रातृणां जीवतोः पित्रोः सहवासो विधीयते ।
तदभावे विभक्तानां धर्मस्तेषां विवर्द्धते ॥

इति व्यासवचने सहवासविधानमुखेन पृथग्भावनिषेधाज्जीवतोरिति साहित्यमविवक्षितम् । अत एव एकस्मिन्नपि जीवति विभागो न धर्म्यः किन्तूभयोपरमे । "पित्रोरभाव" इत्यादिबृहस्पतिवचनेऽपि निवृत्तरजस्कायां मातरि जीवन्त्यां विभागस्य मातृधनगोचरत्वानुपपत्तेरुभयाभावोक्तविभागस्यैव जीवतोरपीत्यपिशब्देन निर्दिष्टस्य शस्तत्वकीर्त्तनादुभयाभावे भ्रातृविभागः पितृधनगोचर एवेत्यवधार्य्यते । अत एव व्यासो मातरि जीवन्त्यां यो विभागस्तस्य मातृप्रधानकत्वं दर्शयति—

यथाह,

समानजातिसङ्ख्या ये जातास्त्वेकेन सूनवः ।
विभिन्नमातृकास्तेषां मातृभागः प्रशस्यते ॥

बृहस्पतिरपि—

यद्येकजाता बहवः समाना जातिसङ्ख्यया ।
सापत्नास्तैर्विभक्तव्यं मातृभागेन धर्मतः ॥ इति ।

अत्र जातिसङ्ख्यया साम्ये सापत्नानामपि भागविशेषः स्वरूपकृतो नास्तीति मातृभागत्वविधानं मातृप्राधान्यपरमेवेति नायं पुत्राणां विभागः किन्तु तन्मातृणामित्युद्दिश्य विभागः कर्त्तव्य इत्यत्र तात्पर्य्यम्। तेनैतन्मातृधन इवात्रापि मातृजीवने पुत्राणां न परस्परं विभागो धर्म्यः। अतो गौतमाद्युक्तविभागे धर्मवृद्धिरपि मात्रुपरम एव वेदितव्येति जीमूतवाहन आह। तत् पितृधने मात्रभावापेक्षया अदृष्टार्थत्वापत्तेः प्रागेव निरस्तम्।

यच्च पैतृकमित्येकशेषस्याप्रमाणकत्वात् पौनरुक्त्यापत्तेश्च नास्य मातृधनपरत्वमित्युक्तम्। तदप्यदृष्टार्थतापत्तिभयादेकशेषस्य स्वीकर्त्तव्यत्वादयुक्तम्। पौनरुक्त्यं त्वयुक्तम्। पूर्व्वोक्तस्यापि मातृधनविभागस्य विशेषविधानायानुवादोपपत्तेः। याज्ञवल्क्यवाक्ये तु मिताक्षराकृता च "मातापित्रोर्द्धं सुता विभजेरन्नित्युक्तम्। तत्र मातृधनेऽपवादमाह" इत्युत्तरार्द्धमवतारयता पौनरुक्त्यं परिहृतम्। "ताभ्य ऋतेऽन्वय" इति च दुहित्रभावेऽन्वयः पुत्रादिर्मातृधनमृणावशिष्टं गृह्णीयात् इति व्याख्याय इदं च—

विभजेरन् सुताः पित्रोरूर्ध्वमृक्थमृणं समम्।

इत्यनेनैव सिद्धमपि स्पष्टार्थमुक्तम्" इत्युक्तम्। न चात्र पित्रोरूर्ध्वमित्येवास्तु सम्बन्धः। मातृधनविभागस्योत्तरार्द्धेऽभिधानात्पितुर्ऋक्थमृणमिति पर्य्यवस्यति। तथा च "ताभ्य" इत्यादेर्निरर्थकानुवादत्वमपि न प्रसज्यतीति वाच्यम्। ऋक्थऋणपदयोः ससम्बन्धिकार्थत्वात्तदाकाङ्क्षायां स्ववाक्योपात्तपित्रोरितिपदानुषङ्गस्यैव परिशेषावगतार्थिकपितुःपदान्वयापेक्षयाऽभ्यर्हितत्वात्। तद्वशेन तु ताभ्य इत्यस्यानुवादत्वस्याप्यभ्युपगमौचित्यात्।

ये त्वन्वयपदं दुहित्रन्वयदौहित्रादिपरत्वेन व्याचक्षते। तन्मते तु वैयर्थ्यशङ्कैव नास्ति। तदेतद्विस्तरेण स्त्रीधनविभागप्रस्तावे प्रपञ्चयिष्यामः

शङ्खलिखितोक्तं मातरि जीवन्त्यामस्वातन्त्र्यं तु मानववत्तद्धनगोचरमपि सङ्गच्छत एव। भ्रातृणामित्यादिव्यासवचनमपि सहवासप्राशस्त्यमात्रमुभयजीवन आहेति जीवतोरिति साहित्यविवक्षायामपि न दोषः। वस्तुतस्तु पित्रोरूर्ध्वमपि "ज्येष्ठ एव तु गृह्णीयात्"इति सहवासस्य मुख्यत्वाद्विभागस्य च धर्मवृद्ध्यर्थत्वान्मातरि जीवन्त्यामपि धर्मस्य पञ्चमहायज्ञादेरावश्यकत्वात्तद्वृद्ध्यर्थं विभाग उचित एव।

यत्तु पित्रोरभाव इति बृहस्पतिवचने निवृत्तरजस्कायां मातरि जीवन्त्यामित्याद्युक्तं, तत्रोच्यते। उभयजीवने सहवासः प्रशस्तस्तदभावे। विभाग इति पूर्वार्द्धेनाभिहिते मातर्य्यनिवृत्तरजस्कायां सन्तानसम्भ-

वात् तद्वृत्तिलोपस्य च "ये जाताये ऽप्यजाताश्च" इत्यादिवचनेन ग-र्हितत्वान्निवृत्तरजस्कायां तु तस्यां तदप्रसक्तेरुपरतस्पृहे पितरीव वि-भागः प्रशस्त इति तस्यार्थः । तथा सति निवृत्तरजस्कायां तस्यां त-दीयऋक्थाधिकारिकन्यासन्तानस्यासम्भवात्सुतरां तदिच्छया तद्धन-विभागोऽपि पुत्राणामुचित इति मातृधनगोचरताप्यस्य वचसः स-म्भवतीति न किञ्चिदेतत् । यदपि व्यासबृहस्पतिवचसोर्मातृप्राधान्यं सापत्नविभागस्योक्तं तन्ममाप्यविरुद्धम् । यथा हि—

जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः ।

इत्यादिवचनवशाद्विभागोत्तरमपि पुत्रस्य पितृमातृपारतन्त्र्यम् तथै-तद्वचनवशान्मातृभाग एवायमिति बुद्ध्या तदाज्ञावशंवदतया तज्जी-वनावधि स्थेयमित्येतावता पितृधनविभागेऽपि तस्यां जीवन्त्यामनधि-कारः कुतस्त्य इत्यलमधिकेन ।

जीवत्पितृकविभागे पित्रा यथा स्वपुत्रांशसमांशभागिन्यः स्वपत्न्यः कार्य्यास्तथा तदुपरमविभागेऽपि पुत्रैस्ताः स्वसमांशभागिन्यः कार्य्या इत्याह—

याज्ञवल्क्यः, ( अ० २ श्लो० १२३ )

पितुरूर्द्ध्वं विभजतां माताप्यंशं समं हरेत् ।

यदि स्त्रीधनं दत्तं न भवति । दत्ते त्वर्धांशहारिणी कार्य्येति । "समांशहारिणी माता" इतिवचनात् । अत्राप्यर्द्धशब्दो न समप्रविभागवचनः । किन्तु यावता पुत्रसमांशिता भवति तावदेव विवक्षितम् । अत्र मातृ-पदस्य जननीवाचकत्वान्नापुत्रसपत्नमातृपरत्वमपि । सकृच्छ्रुतस्य मातृ-पदस्य मुख्यगौणोभयार्थत्वानुपपत्तेः ।

यत्तु,

असुताश्च पितुः पत्न्यः समानांशाः प्रकल्पिताः ।
पितामह्यश्च सर्व्वास्ता मातृतुल्याः प्रकीर्त्तिताः ॥

इति व्यासवचनात् योगीश्वरवचने पत्नीग्रहणाच्च जीवत्पितृकविभागे पत्नीमात्रस्य पुत्रसमांशवत्त्वम् । पुत्रपत्नीपदयोः पितृप्रतियोगिकसम्ब-न्धार्थकतया गौणमुख्यार्थकत्वानापत्तेः । पित्रोरूर्द्ध्वं विभागे तु पुत्रकर्तृ-कतया तत्सम्बन्धिमात्रप्रतीतेर्वैरूप्यादुभयपरत्वासम्भवात् पुत्रवती-नामेव स्वपुत्रसमांशित्वम्, अपुत्राणां तु ग्रासाच्छादनमात्रभाक्त्वमवि-भक्तसंसृष्टपत्नीनामिव । युक्तं चैतत् । जीवद्विभागे पितुः स्वातन्त्र्यात्, अ-जीवद्विभागे पुत्राणां स्वातन्त्र्यात्, मातृपदपत्नीपदस्वरसाच्च । युक्तं च अपुत्राणां ग्रासाच्छादनमात्रभाजनत्वमिति बहुतरनिबन्धस्वरसः । मिता-

क्षराकृतस्तु "जीवद्विभागे पुत्रसमांशित्वं पत्नीनामुक्तम्। इदानीं पितुरूर्ध्वं विभजतामपि पुत्रसमभागित्वं पत्नीनामाह" इत्यवतारणिकं "पितुरूर्ध्वंविभजताम्" इत्यस्य योगीश्वरवचसः प्रयच्छतोऽत्रापि सपुत्रापुत्रसकलपितृपत्नीनां पुत्रसमांशित्वमभिप्रेतमिति प्रतीयते। मदनरत्नकृताप्यत एवोक्तम्-"जननीग्रहणमपुत्राणामपि मातृसपत्नीनामुपलक्षणं पितामहीनां च। "असुताश्च पितुः पत्न्य" इत्यादिव्यासवचनात् इति । युक्तं चैतत । पितुः पत्न्य इति पुत्रप्रतियोगिकापितृग्रहणस्यान्यथा वैयर्थ्यात्। पुत्रसमांशित्वस्य पितृकृतविभागविषये "पत्न्यः कार्य्याः समांशिका" इति वदत्रापि मातर इत्येव वदेत्। तस्मात्पितृपत्नीत्वप्रयुक्तमेव जीवदजीवद्विभागसाधारणपुत्रसमांशभाक्त्वमिति मिताक्षरामदनरत्नकृतोरभिप्रायः। पितुरिति कर्त्तरि षष्ठी। तेन पितृकर्त्तृके विभागे पत्न्यः समानांशा इत्युक्तेऽर्थात्तत्प्रतियोगिकस्यैव पत्नीत्वस्य लाभाज्जीवद्विभागविषयतैवास्योचिता। तत्र तु मातृपदे मुख्यामुख्यमातृपरत्वानौचित्यात्प्रतिसम्बन्धितया च पुत्राणामेव स्ववचनोपात्तानामुपस्थितेर्जननीपरत्वमेव मातृपदस्य मुख्यार्थलाभायोचितम्। शिष्टाचारोऽप्येवम्। यदत्र युक्तं तद्ग्राह्यमित्यलमधिकेन।

बृहस्पतिः—

तदभावे तु जननी तनयानां समांशिनी।

अत्र प्रक्रमात्तच्छब्देन पिता गृह्यते।

पितरि प्रेते यदि केऽपि भ्रातरोऽसंस्कृताः सन्ति तदा तत्संस्कारं समुदायद्रव्येण विधायावशिष्टं यथांशेन विभजनीयमित्याह—

याज्ञवल्क्यः (अ० २ श्लो० १२४)

असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्वसंस्कृतैः।

भ्रातृभिरित्यभिधानाद् संस्कृता भ्रातर इति प्रतीयते।

संस्कार्य्यत्वमात्रविधानस्य दायभागप्रस्तावासम्बन्धात्समुदायद्रव्यादिति विवक्षितम्।

तथाच व्यासः—

असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात्।
संस्कार्य्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि॥

अविद्यमानेऽपि पितृधनेऽसंस्कृतसंस्कारावश्यकतामाह—

नारदः (व्य०प०१३श्लो०३४)

अविद्यमाने पित्र्येऽर्थे स्वांशादुद्धृत्य वा पुनः।

अवश्यकार्य्याः संस्कारा भ्रातृभिः पूर्वसंस्कृतैः ॥(१)

असंस्कृतभागिनीसंस्कारोऽप्यावश्यकः । सति पितृद्रव्ये ताभ्योऽशदानमपीत्याह—

याज्ञवल्क्यः ( अ० २ श्लो० १२४ )

भागिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकम् ।

असंस्कृताः संस्कार्य्या इत्यनुषङ्गः ।

मनुः—( अ० ९ श्लो० ११८ )

स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ।
स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥

अत्रोभयत्र प्रत्येकपरिकल्पितान्निजादंशादुद्धृत्य सर्वैर्भ्रातृभिर्भागिनीभ्यः प्रत्येकं चतुर्थोंऽशो देय इत्यर्थो न भवति। तथा सति बहुभ्रातृकाया बहुधनत्वं बहुभगिनीकस्य भ्रातुर्निर्द्धनतापत्तेः । तस्मात्संस्कारोपयुक्तद्रव्यदानमात्रं विवक्षितमिति रत्नाकरचिन्तामण्यादौ व्याख्यातम्। "अनूढानां तु कन्यानां वित्तानुरूपेण संस्कारं कुर्यात्" इति विष्णुवचनं च तत्रोपोद्बलकमुपन्यस्तम् । तदयुक्तम्। अंशदानाविवक्षायाः स्मृतिद्वयेऽप्यन्याय्यत्वात्। संस्काराकरणप्रत्यवायात्पृथगदानप्रत्यवायश्रवणाच्च। अन्यथा "पतिताः स्युरदित्सव" इत्यदानप्रत्यवायवचनमप्यसंस्कारप्रत्यवायपरं स्यात् । अतो मेधातिथिमिताक्षराकारादिभिर्व्याख्यातमेवम। "निजादंशात्" "स्वात्स्वादंशात्" इति नापादाने पञ्चम्यपि तु ल्यब्लोपे। तथा च तमपेक्ष्येतियावत्। एवं च यज्जातीया कन्या तज्जातीयपुत्रभागचतुर्थांशभागिनी सा कार्य्या । तथा चायमर्थो ब्राह्मणजातीया या कन्या वक्ष्यमाणो ब्राह्मणीपुत्रभागो यावांस्तच्चतुर्थांशस्तस्याः। एवं क्षत्रियादिजातीयकन्यास्वपि। तच्च यथा । यदि कस्यचिद्ब्राह्मण्येवैका पत्नी तस्याश्चैकः पुत्रः कन्यका चैका । तत्र पित्र्यं सर्वमेव द्वेधा विभज्य तत्रैकं भागं चतुर्द्धा कृत्वैको भागो भगिन्यै तेन देयोऽवशिष्टं सर्वं स स्वयं गृह्णीयात्। एवं पुत्रद्वये कन्यैक्ये च त्रेधा विभागं सर्वद्रव्यस्य विधायैकस्य चतुर्द्धाकृतस्य भागस्य चतुर्थभागं भगिन्यै दत्त्वा शेषं द्वाभ्यां यथांशं विभज्य ग्राह्यम्। पुत्रैक्ये कन्याद्वित्वे त्रेधाकृतस्य द्रव्यस्यैकं भागं चतुर्द्धा कृत्वा द्वावंशौ द्वाभ्यां कन्याभ्यां दत्त्वाऽवशिष्टं तेन ग्राह्यम्। एवं समानजातीयेषु साम्येऽपि सर्वथा भगिनीनां भ्रातृजात्युचितभागतुरीयांशभागिता यथा भवति तथोह्यम् ।यदा

(१) भ्रातॄणाम् इति पाठान्तरम् ।

तु ब्राह्मणीपुत्र एकः क्षत्रियाकन्या चैका । तत्र पितृधनं सप्तधा विभज्य क्षत्रियापुत्रभागांस्त्रींश्चतुर्द्धा विभज्य तुरीयमंशं क्षत्रियाकन्यायै दत्त्वा शेषं ब्राह्मणीपुत्रो गृह्णीयात् । यदा तु द्वौ ब्राह्मणीपुत्रौ क्षत्रियाकन्या चैका तदा पितृधनमेकादशधा कृत्वा क्षत्रियापुत्रभागांस्त्रींश्चतुर्द्धा विभज्यैकमंशं क्षत्रियाकन्यायै दत्त्वा ब्राह्मणीपुत्रावन्यत् सर्वं विभज्य गृह्णीयाताम् । एवं सर्वत्र जातिवैषम्ये भ्रातृभगिनीसङ्ख्यासाम्यवैषम्ये च योज्यम् ।

विष्णुरपि—

मातरः पुत्रभागानुसारेण भागहारिण्योऽनूढाश्च दुहितरः ।

पुत्रभागानुसारेण यथा वर्णक्रमेण पुत्राणां चतुस्त्रिद्व्येकभागभागिता तथा तत्तज्जातीयपत्नीनामपि । अनूढाश्च दुहितरः पुत्रभागानुसारेण भागहारिण्य इत्यनेन यद्यपि चतुराद्यंशानां सर्वेषां दुहितृभ्यो दानं प्रतीयते तथापि "स्वेभ्योंऽशेभ्यः" "स्वात्स्वादंशात्" इति मनुयोगीश्वराभ्यां चतुर्थांशदानस्योक्तेस्तथैव पुत्रभागानुसारो न सजातीयभ्रातृसमभागहारित्वमित्यविरोधः । स्पष्टमाह—

बृहस्पतिः,

समांशा मातरस्त्वेषां चतुर्थांशाश्च कन्यकाः । इति ।

कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते ।

पुत्राणां च त्रयो भागाः साम्यं त्वल्पधने स्मृतम् ॥

इति वदतः कात्यायनस्याप्येतदेवाभिमतम् । साम्यमित्यादेस्त्वयमर्थः । यदि संस्कारपर्याप्तमपि पितृधनं नास्ति तदा पुत्रसमभागितैव दुहितॄणामिति । अनूढानां त्वित्यादि विष्णुवचनमपि मेधातिथ्यादीना न प्रतिकूलम् । वित्तानुसारेण संस्कारमनूढानां पितुः कन्यानां स्वभगिनीनां कुर्य्यादित्यनेन संस्कारावश्यकतामात्रमत्रोच्यते न तु भागदानादाने ।

स्मृतिचन्द्रिकाकारस्तु—

कन्याभ्यश्च पितृद्रव्यं देयं वैवाहिकं वसु ।

इति देवलवचनानुसारेण संस्कारमात्रोपयोगिद्रव्यदानमेव मन्यते । वैवाहिकं वसु देयमिति वैवाहिकविशेषणस्यान्यथा वैयर्थ्यापत्तेरिति तदाशयः ।

अत्र वदामः । कन्याभ्यः पितृद्रव्यं देयमिति पृथग्विधिः । तच्च मन्वाद्यनुरोधाच्चतुर्थांशरूपमेव । वैवाहिकं वसु च देयमित्यपि पृथगेव विधिः । "विभज्यमाने दायाद्ये कन्यालङ्कारं वैवाहिकं च स्त्रीधनं लभेत" इति

शङ्खवचनसमानार्थतया। व्याख्यातं चेदं शङ्खवचनं विद्यारण्यश्रीचरणैः पराशरस्मृतिटीकायाम्—पैतृकद्रव्यविभागकाले स्वधृतालङ्कारादिकमपि कन्या प्राप्नोतीत्याह शङ्ख इति। यदि तु वैवाहिकं=विवाहोपयोगि पितृद्रव्यं कन्याभ्यो देयमित्यर्थः स्याद्वसुपदं पुनरुक्तं स्यादिति पृथग्विधिद्वयमेवात्र युक्तम्।

दायतत्त्वकृता तु

कन्याभ्यश्च पितृद्रव्याद्देयं वैवाहिकं वसु।

इति पठितम्। तत्रापि शङ्खेन समानार्थकतालाभायास्मदुक्तमेव व्याख्यानमादर्त्तुमर्हं न तु विवाहोपयुक्तद्रव्यपरतेत्यवसेयम्।

अत्र च मन्वादिवचनेषु भगिनीपदं क्वचित् क्वचिच्च कन्यादिपदं यद्यपि श्रूयते तथापि भ्रातृकर्तृकविभागाधिकारात्पितृप्रतियोगिकं कन्यात्वं दुहितृत्वं भ्रातृप्रतियोगिकं च भगिनीत्वमादायैकार्थकतावसेया। तस्मादजीवत्पितृकविभागे भगिनीनामपि पितृद्रव्यांशभागित्वं न तु संस्कार्य्यतामात्रम्। (१)पूर्वं तु यत्किञ्चित्पिता ददाति तदेव लभते विशेषवचनाभावादिति।

जीमूतवाहनेन तूक्तम् (अ०३). "प्रदद्युर्भ्रातरः" "दत्त्वांशं तु" इति मनुयोगीश्वराभ्यामभिधानान्न भगिनीभिरधिकारबुद्ध्या चतुर्थोऽंशो ग्राह्यः। न ह्यधिकारिण एकस्मै भ्रात्रेऽन्यो भ्राता स्वांशाद्दद्यादित्युच्यते। तथाच यथा संस्कारे भ्रातृणामधिकारिता तथा चतुर्थांशदानेऽपीति तददाने भ्रातृणामेव दोषो न तु तासां प्रसह्यकारितेति।

तदत्ययुक्तम्।। उक्तिवैचित्र्यमात्रस्यास्याप्रयोजकत्वात्। "इच्छया विभजेत्सुतान्" "उद्धारं ज्यायसे दत्वा" इत्यादिवत्। यदपि तेनैवोक्तम्—

येषां तु न कृताः पित्रा संस्कारविधयः क्रमात्।
कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात्॥ (व्य०प०१३ श्लो०३३)

इति नारदवाक्ये येषामिति पुंलिङ्गनिर्देशात्तदनन्तरमेव च "अविद्यमाने" इति वचनारम्भाद्भ्रातृसंस्कारार्थमेवेदं वचनमिति।

सति पितृद्रव्ये मन्वादिवचनेभ्यो भगिनीसंस्कारावश्यकत्वप्रतीतेः संस्कारोपयोगिद्रव्यदानमेव विवक्षितमिति तद्धेयम्। वचनान्तरेषु भगिनीसंस्कारस्यावश्यकत्वप्रतीतेः।

पिता पितामहो भ्राता सकुल्यो जननी तथा।

---

(१) पूर्वं तु=जीवत्पितृकविभागे तु इत्यर्थः।

कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।

इति भ्रातुरपि योगीश्वरेण भगिनीविवाहसंस्काराकरणे भ्रूणहत्यादोषश्रुतेस्तदेकमूलकतया 'येषां तेषां' इत्यस्य "सामान्यलिङ्गं नपुंसकं"इतिति वचनात्सामान्यविवक्षान्यायाच्च नपुंसकषष्ठ्यन्तत्वं विरूपैकशेषोऽपि वाभ्युपगन्तुमुचित एवेति । यवीयस इति नुमदीर्घयोरभावं छान्दसमाभिप्रेत्य—

असंस्कृता भ्रातरस्तु ये स्युस्तत्र यवीयसः ।
संस्कार्य्याः पूर्व्वजैस्ते वै पैतृकान्मध्यकाद्धनात् ॥

इति बृहस्पतिवचनं पठित्वा भ्रातृग्रहणं भगिनीनामप्युपलक्षणमिति मदनरत्नकृता व्याख्यातम् । अत्र च संस्कारसाहचर्य्यात् "अनूढानां दुहितॄणाम्" "कन्यकानां त्वदत्तानाम्" इत्यनूढत्वविशेषणोपादानाच्चापरिणीता एव चतुर्थांशभागिन्यो भागिन्योऽन्यास्तु यत्किञ्चिदौचित्याल्लभन्त इति बोध्यम् । मातृधने चेदं प्रपञ्चनीयम् ।

स्थावरस्य स्वार्जितस्य पैतामहस्य वा पुत्रानुमत्यैव पिता दानादि कुर्य्यात् । "स्थावरं द्विपदं चैव" इति प्रागुदाहृतवचनात् । यद्यपि स्वयमर्जितमित्यनेन पैतामहे कैमुतिकन्यायेन पुत्रानुमत्यावश्यकता प्रदर्शिता । तथापि कुटुम्बव्यापिन्यामापदि तु यः कश्चिदन्याननुमतावपि कुटुम्बभरणस्यावश्यकत्वात् स्थावरस्यापि दानविक्रयादावधिकारी ।

एकोऽपि स्थावरे कुर्य्याद्दानाधमनविक्रयम् ।
आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः ॥

इति वचनात् । धर्मार्थे इत्यनेनात्यावश्यकः पितृश्राद्धादिरूपो धर्मो गृह्यते । यत्तु स्मरणम्—

विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥ इति,

तत्राविभक्तानां मध्यकद्रव्ये(१) स्वाम्यसाम्यादनीशत्वमन्यानुमतिं विना सिद्धमपि स्थावरे विशेषतस्तदादरार्थमुच्यते । विभक्तानां तु व्यवहारसौकर्यार्थम् । कालान्तरे हि विभक्ताविभक्तसंशये विभागभावनावश्यं साक्ष्यादिप्रमाणेन तथा सति(२) कार्य्या स्यादन्यथा साधारणद्रव्यदानाद्यसम्भवात् । अनुमतौ तु सत्यां तदनपेक्ष(३) एव व्यवहारः

---

( १ ) साधारण द्रव्ये । ( २ ) तथा सति=अनीशत्वे सतीत्यर्थः ।
( ३ ) तदनपेक्षः=साक्ष्यादिप्रमाणनिरपेक्ष इत्यर्थः ।

सिद्ध्यति । ननु यथाश्रुतं स्थावरे विभक्तानामपि समं स्वाम्यम् । विभागस्यादृष्टार्थताप्रसङ्गात् । अतश्चान्यानुमतिमन्तरेणापि दानादिस्वरूपं सिद्ध्यत्येव । विभागभावनायां व्यवहारोऽपि । यथा—

स्वग्रामज्ञातिसामन्तदायादानुमतेन वा ।
हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी ॥

इति वचने ग्रामानुमतिः सामन्तानुमतिश्च । (१)सामन्तानुमतिस्तु सीमाविप्रतिपत्तिनिरासायापि । ज्ञातिदायादानुमतेस्तु पूर्ववदेव व्यवस्था(२) । अत एव स्मृत्यन्तरम्—

प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषतः । इति ।

अन्यथात्रापि ग्रामसामन्तानुमतिमन्तरेण दानाद्यसिद्धिः प्रसज्येत । हिरण्योदकदानेनेति—(३)

स्थावरे विक्रयो नास्ति कुर्य्यादाधिमनुज्ञया ।

इति स्थावरस्य विक्रयप्रतिषेधात्,

भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति ।
तावुभौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥

इति दानप्रशंसनाच्च कुटुम्बभरणाद्यर्थमवश्यकर्त्तव्येऽपि विक्रये सहिरण्यमुदकं क्षेत्रे दत्त्वा दानांशोऽपि कश्चिद्यथा तत्र भवति तथा दानरूपेण स्थावरविक्रयं कुर्य्यादिति सूचितम् ।

जीमूतवाहनस्तु—(अध्या० २)

स्थावरस्य समस्तस्य गोत्रसाधारणस्य च ।
नैकः कुर्यात्क्रयं(४) दानं परस्परमतं विना ॥
विभक्ता अविभक्ता वा ।

इत्यादिव्यासीयवचनद्वयमुपन्यस्य नेदमेकस्य विक्रयदानाद्यनधिकारप्रतिपादनार्थम् । यथेष्टविनियोगार्हत्वलक्षणस्य स्वत्वस्य द्रव्यान्तर इव स्थावरेऽप्यविशेषात् स्वत्वत्यागात्मकदानाद्यनिष्पत्तेः(५) वचनशतेनापि वस्तुनोऽन्यथाकरणाशक्तेः बोधयितुमशक्यत्वात् । किन्तु दुर्वृत्तपुरुषं प्रति कुटुम्बार्त्यादिनिमित्ताभावे कुटुम्बविरोधादधर्मभागि

---

(१) अत्र "तत्र ग्रामानुमतिर्व्यवहारप्रकाशनार्था न तु ग्रामानुमतिं विना व्यवहारासिद्धिः" इत्यधिकमपेक्षितम् । (२) व्यवहारसौकर्योपयोगित्वमेव ।

(३) हिरण्योदकदानेन इत्यनेनेत्यर्थः । अस्य च इति सूचितमित्यग्रेतनेन सम्बन्धः।

(४) क्रयं=विक्रयम् । ५ षष्ठ्यन्तस्यास्य बोधयितुमशक्यत्वादित्यनेनान्वयः । अत्रैव हेतुत्वेन वचनशतेनापीत्यादि योजनीयम् ।

ताज्ञापनार्थं निषेधरूपम् । एवं "स्थावरं द्विपदं चैव" इत्यादिकमपि विभक्तविषयं पूर्ववदेव वर्णनीयम्(१) अत एव—

नारदः—( व्य० प० १३ श्लो० ४२।४३ )

यद्येकजाता बहवः पृथग्धर्माः पृथक् क्रियाः ।
पृथक्कर्मगुणोपेता न चेत्कार्य्येषु संयुताः ॥
स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्य्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य हि ॥

इति सामान्यत एव विक्रयाद्यनुमन्यते । ईशास्ते स्वधनस्य हीति हेत्वभिधानात् स्थावरगोचरमपीदं वचनम् । अपरथा तदानर्थक्यापत्तेरित्याह ।

तत्सम्यगेव । परं त्वधर्मभागिताज्ञापनार्थमित्ययुक्तम् । वृथास्थावरविक्रयस्य बहून् प्रत्यपि निषेधादेकग्रहणापार्थक्यापत्तेः । व्यवहारशास्त्रस्य व्यवहारसौकर्यादिदृष्टप्रयोजनसम्भवेऽदृष्टकल्पनानुपपत्तेः । अन्यथाऽनुमतावपि तदापत्तेः कुटुम्बाविरोधजन्यवचनान्तरप्रतिपादिताधर्मप्रयोजकतापरमस्तु ।

अत्र च पुत्रेच्छया यो जीवद्विभागो यश्चाजीवद्विभागः स एकेच्छयापि भवत्याविशेषात् । अत एव विभागं प्रक्रम्य यत्कात्यायनेनोक्तम्—

अप्राप्तव्यवहाराणां धनं व्ययविवर्जितम् ।
न्यसेयुर्बन्धुमित्रेषु प्रोषितानां तथैव च ॥ इति,

तदपि सङ्गतम् । अन्यथा तदनुमतिमन्तरेण विभागाभावे तद्धनस्य बन्धुमित्रेषु न्यासविधानमनुपपन्नं स्यात् ।

तथा विष्णुरपि—

तथा रक्ष्यं बालधनमाव्यवहारप्राप्तेरिति ।

अयं च पुत्राणां विभागः पुत्रपौत्रप्रपौत्रपर्य्यन्तं समो नात्रोत्पत्तितः प्रत्यासत्तिक्रमेणाधिकारक्रमः । पुत्रादीनां त्रयाणामपि पार्वणे पिण्डदानाधिकारात् । अत एव—

देवलः,

पिता पितामहश्चैव तथैव प्रपितामहः ।

---

( १ ) स्थावरं द्विपदं चैवेति वचने न दानं न च विक्रय इत्यनन्तरमवश्यं कर्तव्यपदाध्याहारः कर्तव्यः । तथा च दानविक्रयकर्तव्यतानिषेधात् तत्करणे विध्यतिक्रमजन्यदोष एव न तु दानादिस्वरूपानिष्पत्तिः नहि वचनशतेनापि घटः पटयितुं शक्यते इति भावः ।

उपासते सुतं जातं शकुन्ता इव पिप्पलम् ।
मधुमांसैश्च शाकैश्च पयसा पायसेन च ।
एष नो दास्यति श्राद्धं वर्षासु च मघासु च ॥ इति ।

तथा च श्लोकशङ्खलिखितगौतमाः—

पिता पितामहश्चैव तथैव प्रपितामहः ।
जातं पुत्रं प्रशंसन्ति पिप्पलं शकुना इव ॥
मधुमांसेन खड्गेन पयसा पायसेन च ।
एष दास्यति नस्तृप्तिं वर्षासु च मघासु च ॥ इति ।

एवं तुल्याधिकारात् जन्मना स्वत्वस्यापि तुल्यत्वात्तुल्यभागभागिता प्रसक्तापि "अनेकपितृकाणां तु" इतिवचनेन निवर्त्तते । "जीवत्पितृकयोः पौत्रप्रपौत्रयोः पार्वणानधिकारेण पिण्डदातृत्वाभावात्पितामहप्रपितामहधनेऽनधिकारः । यदा चैकस्य पुत्रस्य पुत्राः सन्त्येकश्च पुत्र एवास्ति । तदा पुत्रस्यैको भागोऽपरश्चैकः सर्वेषां पौत्राणाम् । स्वपित्रधीनजन्ममूलकत्वात् पितामहधनसम्बन्धस्य यावत्येव धने तस्य स्वामित्वं तावत्येव तेषामपि" इति जीमूतवाहनोक्तं (अ० ३ प० १) त्वनादेयम् । जन्मना पौत्राणामपि पितामहधने स्वत्वव्यवस्थापनात् । तस्मात् पौत्राणां पितामहधने वाचनिकमेव विभागवैषम्यं न त्वौपपत्तिकम् ।

यत्तु तेनैवोक्तम्–यत्रैकस्य भ्रातुरनेकसङ्ख्याः पुत्रा अन्यस्य च ततोऽल्पसङ्ख्यास्तत्रेदमनेकपितृकाणामिति वचनं पौत्रत्वेन सर्वेषां समभागनिवृत्त्यर्थम् । जीवति तु पितरि पौत्राणां पितामहधनस्वाम्ये सपुत्रापुत्रभ्रातृद्वयविभागे तत्पुत्राणामपि विभागः स्यात् स्वाम्याविशेषादिति ।

तत्प्रागेव निरस्तम् । उक्तोऽतिप्रसङ्गोऽप्यनेनैव परास्तः । अत एव पितृभ्रातृपुत्रसमवाये पितृव्यपितृधनं तदिति भ्रातृपुत्राणां तत्र स्वाम्याभावाद्विभाग एव न स्यादित्यप्यपास्तम् । यच्च जीवत्पितृकयोरित्यादि । तदपि मन्दम् । न हि पिण्डदानाधिकार एव दायग्रहणे प्रयोजकः । ज्येष्ठे सति कनीयसामनधिकारेऽपि दायग्रहणात् । तदर्हतायाश्चात्राप्यनपायात् । गोत्रजादीनां दायहराणामनेकेषां समवाये पिण्डदानाद्युपकारित्वं धनस्वामिनो यत् तत् अनुपकारिव्यावर्त्तकपरं नतु तदेव प्रयोजकम् ।

जीवद्विभागे ऽजीवद्विभागे वा कस्यां चित्पितृपत्न्यां भ्रातृपत्न्यां वा स्पष्टगर्भायामाप्रसवं प्रतीक्ष्य विभागः कार्य्यः ।

अथ भ्रातॄणां दायविभागो याश्चानपत्याःस्त्रियस्तासामापुत्रलाभात्।

इति वशिष्ठस्मरणात् । आपुत्रलाभादिति वचनात् स्पष्टगर्भासु प्रतीक्षाऽस्पष्टगर्भासु तु नेत्यवगम्यते । अत एव तत्र पश्चादुत्पन्नस्य विभागप्रकारमाह—

योगीश्वरः, ( अ० २ श्लो० १२२ )

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।

पित्रिच्छया पुत्रेच्छया वा जीवतोः पित्रोर्विभक्तेषु पुत्रेषु पश्चात्सवर्णायां भार्य्यायामुत्पन्नो विभागभाक् । विभज्यते इति विभागः पित्रो र्भागस्तं भजते इति विभागभाग्भवति । पित्रोरूर्ध्वं स एव तयोरंशं लभत इत्यर्थः । असत्यां दुहितरि मातृभागमिति विशेषः । सवर्णायामिति विशेषणादसवर्णायां जातस्तु पित्र्याद्धनात्स्वांशमेव लभते दुहित्रभावे मातृभागं सर्व्वमेव । अनेनैव न्यायेन जीवद्विभागेऽपि विभक्तजोऽसवर्णापुत्रः स्वजात्युचितभागभागेव न सकलपित्र्यभागित्यवसेयम् । एतदेवाभिप्रेत्य—

मनुः, ( अ० ९ श्लो० २१६ )

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम् । इति ।

पित्रोरिदं पित्र्यं धनं यथोक्तव्यवस्थया हरेत् । एवकारेण भ्रातृभिः स्वांशादाकृष्य स्वभागसमभागभाक् स न कार्य्यः ।

गौतमोऽपि—

विभक्तजः पित्र्यमेवेति ।

जीवति तु पितरि मातरि तत्सपत्न्यां वाऽविस्पष्टगर्भायां विभक्तैर्विभागानन्तरोत्पन्नोऽयं स्वस्वभागादाकृष्य स्वभागसमभागभाक् कार्य्यः ।

तथा च विष्णुः—

पितृविभक्ता विभागानन्तरोत्पन्नाय विभागं दद्युरिति ।

तं च भ्रातृदत्तं तद्विभागं पितैव गृहीत्वा तं परिपालयेत् । तस्यैव तत्राधिकारात् । "अप्राप्तव्यवहाराणां" इत्यादिप्रागुक्तवचनाच्च । यच्च वचनम्—

अनीशः पूर्वजः पित्रोर्भ्रातुर्भागे विभक्तजः । इति ।

तस्याप्ययमेव विषयः । पूर्वजो विभागात्पूर्व्वमुत्पन्नः प्राप्तपितृधनविभागः पित्रोर्विभागेऽनीशो न स्वामी । विभक्तजश्च पूर्वविभक्तस्य भ्रातु र्भागेऽनीश इत्यर्थः । विभागोत्तरं च यत्पित्रार्जितं तदपि विभक्तजस्यैव ।

पुत्रैः सह विभक्तेन पित्रा यत् स्वयमर्जितम् ।
विभक्तजस्य तत्सर्वमनीशास्तत्र पूर्वजाः ॥
यथा धने तथर्णे च दानाधानक्रयेषु च ।
परस्परमनीशास्ते मुक्त्वा शौचोदकक्रियाम् ॥

इति बृहस्पतिस्मरणात् । स एव—

पित्रा सह विभक्ता ये सापत्ना वा सहोदराः।
जघन्यजास्तु ये तेषां पितृभागहरास्तु ते ॥

अत्र हेतुरनीशः पूर्वज इत्यादितद्वचनोक्त एव । ये तु विभक्ताः पित्रा संसृष्टाः पुत्रास्तैः सह तु तस्य विभागो न सकलपित्र्यधनग्रहणमित्याह—

मनुः, (अ०९ श्लो० २१६)

संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह।

तेन=पित्रा । पितुरूर्ध्वं पितृधने भ्रातृभिर्विभज्य गृहीते विभागसमयेऽस्पष्टगर्भायाः पितृपत्न्याः पश्चात्पुत्रे जाते स्वस्वभागादायव्ययविशोधितात् तैः स स्वभागसमभागभाक् करणीय इत्याह—

याज्ञवल्क्यः, ( अ० २ श्लो० १२२ )

दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्।

दृश्यात्=भ्रातृभिर्गृहीतात् । आयः=प्रतिमासं प्रतिदिनं प्रत्यब्दं यत्तदुपरि वृद्धम् । व्ययः=पितृकृतर्णापाकरणं भ्रातृभगिनीसंस्कारकरणं च। तस्य सर्वसाधारण्येन कर्त्तव्यत्वात् । न तु भ्रातृकर्त्तव्यव्ययस्तस्यैतत्सम्बन्धाभावात् । ताभ्यामायव्ययाभ्यां विशोधितात् पितृधनात् तस्य विभागोत्तरोत्पन्नस्य विभागः पूर्वविभक्तसमः स्यादित्यर्थः । एतदुक्तं भवति। प्रातिस्विकेषु स्वस्वभागेषु तदुत्थमायं प्रवेश्यावश्यकं च साधारणं व्ययं निष्काश्य।वशिष्टस्वस्वभागेभ्यः किञ्चित्किञ्चिदुद्धृत्य विभक्तजः स्वभागसमभागभाक् कार्य्य इति। वाशब्दस्तु'विभक्तेषु सुतोजात'इति पूर्वार्द्धेन सह व्यवस्थितविकल्पार्थः। व्यवस्था चोक्तैव।

हलायुधस्तु दृश्यात्=प्रत्यक्षान्न तु गुप्तात्पितृधनादित्यर्थमुक्त्वा विभक्तभ्रात्रपेक्षया योऽल्पगुणो विभक्तजस्तद्विषयोऽयं पक्ष इत्याह।

तन्निर्बीजत्वात् गुप्तस्यापि विभागानन्तरं ज्ञातस्य समभागेन विभजनीयत्वादत्र तदप्रवृत्तौ प्रमाणाभावान्नियमकल्पनेऽदृष्टार्थतापत्तेर्विज्ञानेश्वरोक्तार्थकतया वचनसामञ्जस्यादुपेक्ष्यम्।

असवर्णानां भ्रातॄणां विभागप्रकारमाह—

योगीश्वरः, ( अ० २ श्लो० १२५ )

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः।
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः॥ इति ।

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्।
ब्राह्मणक्षात्रियविशां भार्य्या स्वा शूद्रजन्मनः॥ ( अ० १ श्लो० ५७ )

इति योगीश्वरेण ब्राह्मणस्यासवर्णास्तिस्रः क्षत्रियस्य द्वे विश एका भार्य्या इति सवर्णामादाय तेषां मध्ये ब्राह्मणस्य चतस्रः क्षत्रियस्य तिस्रो वैश्यस्य द्वे इत्युक्तम् । सवर्णासवर्णसर्वभार्य्याभिप्रायेण ऽयादिसङ्ख्यानं वैश्यस्यापि द्वे शूद्रापरिहारे च स्वेति 'स्वा शूद्रजन्मन' इति वैश्याद्वैलक्षण्यासङ्गतेरसवर्णाभिप्रायैवेयं सङ्ख्येति विज्ञानयोगिभिर्व्याख्यातम् । तथा च ब्राह्मणात् ब्राह्मण्यादिषु स्त्रीषु जाताः पुत्रा यथाक्रमं वर्णशो=मातृवर्णानुसारेण । "सङ्ख्यैकवचनाच्च वीप्सायाम्" ( अ० ५ पा०४सू०४३ )इत्यधिकरणकारके शस् प्रत्ययः । वर्णे वर्णे इत्यर्थः । ब्राह्मणादिभ्यः क्षत्रियादिषु जातानां मूर्धावसिक्तादिजातिसंज्ञत्वेन तेषां वर्णशब्देन ग्रहणासम्भवान्मातृवर्णश इत्यर्थः । चतुस्त्रिद्व्येकभागाः स्युः । एतदुक्तं भवति ब्राह्मणेन ब्राह्मण्यामुत्पन्ना एकैकशश्चतुरश्चतुरो भागान् लभन्ते । तेनैव क्षत्रियायामुत्पन्नास्त्रींस्त्रीन्, तेनैव वैश्यायामुत्पन्ना द्वौ द्वौ, तेनैव शूद्रायामुत्पन्ना एकमेकमिति । वर्णश इति सर्वत्रोत्तरत्र सम्बध्यते । तथा च क्षत्रात् क्षत्रियादिषु जाता यथाक्रमं त्रींस्त्रीन् द्वौ द्वावेकमेकं च लभन्ते । विशो वैश्यादिषु जाता यथाक्रमं द्वौ द्वावेकमेकं लभन्त इति । शूद्रस्यासवर्णभार्य्याभावात्तत्पुत्राणां सजातीयपुत्रभागः पूर्वोक्त एव । यद्यपि शूद्रापरिणयने द्विजातेर्भूयान् दोषः, पुत्रार्थं विवाहस्तु सर्वथा शूद्रायां निषिद्ध एव । तथा च—

मनुविष्णू, ( मनु० अ० ३ श्लो० १५ )

हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥
शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥

तदपत्यतया=शूद्रामात्रजनितापत्यवत्तया । ब्राह्मणस्य तु क्षत्रविडपेक्षयाप्यधिकदोषतामाहतुस्तत्परिणये—

तावेव, ( मनु० अ० ३ श्लो० १० )

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥ इति ।

योगीश्वरोऽपि—( अ०१ श्लो० ५६ )

यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः ।
नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥ इति ।

तेन विप्रादिजातशूद्रापुत्राभावात्कथं तस्यांशाभिधानमिति प्रतिभाति । तथापि रतिधर्मार्थविवाहयोरनुकल्पत्वेन परिणीतायां शूद्राया

मनुषङ्गाज्जातस्य विभागाभिधानमुपपन्नमेव । शूद्र्यां जातो निषादः पारशवो वेति जातिकथनमिव । आचारमिताक्षरायामेवमेव व्यवस्थापितम् । अतएव—

मनुना, ( अ० ३ श्लो० १२ )

कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः । इति ।

कामत इत्यवरा इति च वदता सवर्णापरिणयनमेव मुख्यमित्युक्तम् ।

शङ्खलिखिताभ्यामपि—

भार्याः सजातीयाः सर्वेषां श्रेयस्यः स्युरिति पूर्वः कल्पस्ततोऽनुकल्पश्चतस्रो ब्राह्मणस्यानुपूर्व्येण तिस्रो राजन्यस्य द्वे वैश्यस्य एका शूद्रस्येति ।

आनुपूर्व्येणेत्युक्तेरुत्तरोत्तरं जघन्यता सूचिता । यत्तु मनुना चातुर्वर्ण्यपुत्रविभागे प्रकारद्वयमुक्तम्—( अ० ९ )

त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः ।
वैश्याजोऽध्यर्द्धमेकांशमंशं शूद्रासुतो हरेत् ॥ ( १५१ )
सर्वं वा रिक्थजातं तु दशधा परिकल्प्य तत् ।
धर्म्यं विभागं कुर्वीत विधिनानेन धर्म्मवित् ॥ ( १५२ )
चतुरोऽंशान् हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः ।
वैश्यापुत्रो हरेत् द्व्यंशमंशं शूद्रासुतो हरेत् ॥ इति ( १५३ )

तत्रोत्तरप्रकारो योगीश्वरसंवादी । तद्गुणवदगुणवत्क्षत्रियादिपुत्रविषयतया व्यवस्थापनीयम् । अत एव ब्राह्मणजातो राजन्यापुत्र एव यदि जन्मज्येष्ठो गुणवांश्च तदा ब्राह्मणीपुत्रसमांशभाक्, ब्राह्मणेन क्षत्रियेण च वैश्यायां जनितस्तादृक् क्षत्रियापुत्रसमांशभागित्याह—

बृहस्पतिः,

विप्रेण क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः ।
भवेत् समांशो विप्रेण वैश्याजातस्तथैव च ॥

तथा बौधायनः—

सवर्णापुत्रानन्तरापुत्रयोरनन्तरापुत्रश्चेद्गुणवान् स ज्येष्ठांशं हरेत् । गुणवान् हि शेषाणां भर्त्ता भवतीति ।

एतद्वचनेऽनन्तरोत्पन्नमात्रस्य गुणवत्त्वज्येष्ठताप्रयुक्तोत्कृष्टपुत्रसमांशभाक्त्वोक्तेर्वैश्यजशूद्रापुत्रस्याप्येवंविधस्य वैश्यापुत्रसमांशता द्रष्टव्या बृहस्पत्यनुक्तापि । ज्येष्ठांशं हरेदित्यस्योत्कृष्टसमांशहरणमेवार्थो बृहस्पतिसंवादात् उत्तमजातीयापेक्षयाधिकांशानौचित्याच्च । यदा तु शूद्राज एवैकः पुत्रो ब्राह्मणस्य तदा स तद्धनतृतीयांशहारी भागद्वयं सपि·

ण्डानां तदभावे सकुल्यानां तेषामप्यभावे श्राद्धकर्त्तुः। यदाह—

देवलः,

निषाद एकपुत्रस्तु विप्रकर्थस्य तृतीयभाक्।
द्वौ सपिण्डः सकुल्यो वा स्वधादाताथवा हरेत्॥

ब्राह्मणाच्छूद्रायां विन्नायां जातो निषादः स एकश्चासौ पुत्रश्चेदित्यर्थः। क्षत्रियवैश्ययोस्तु स धनार्द्धहरोऽपरमर्द्धमपुत्रधनग्रहणाधिकारिणस्तदुक्तक्रमेण गृह्णीयुः। तथा च—

विष्णुः,

द्विजातीनां शूद्रस्त्वेकपुत्रोऽर्द्धहरोऽपुत्ररूर्थस्य या गतिः साऽर्द्धस्य द्वितीयस्येति।

द्विजातिपदेनात्र क्षत्रियवैश्यमात्रग्रहणम्। देवलेन ब्राह्मणे विशेषाभिधानात्। एकपुत्र इति कर्मधारयः। इदमपि सद्वृत्तातिगुणवच्छूद्रापुत्रविषयम्। "यद्यपि स्यात्तु सत्पुत्र" इत्यादिना "ब्राह्मणक्षत्रियविशां" इत्यादिना च वक्ष्यमाणमनुवचनेन विरोधापत्तेः। यद्यपि सामान्यत इयं भागक्लृप्तिरुक्ता। तथापि प्रतिग्रहप्राप्तभूमिव्यतिरिक्तविषया। क्षत्रियादिसुतानां तत्र भागप्रतिषेधात्। तथा च—

बृहस्पतिः,

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत्॥

अत्र प्रतिग्रहोपादानात्क्रयादिप्राप्तायां भूमौ भवत्येव तेषामपि भागः स्वजात्यर्ह इति सूचितम्। अत एव भूमिमात्रविषये शूद्रापुत्रस्य पृथङ्निषेधो देवलेनोक्तः—

शूद्रयां द्विजातिभिर्जातो न भूमेर्भागमर्हति।
सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः॥ इति।

यत्तु—

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्।
यदेवास्य पिता दद्यात्तदेवास्य धनं स्मृतम्॥ (अ०९ श्लो०१५५)

इति मनुवचनम्। तत् पितृप्रीतिदत्तधनसद्भावविषयमिति दाक्षिणात्याः। निर्गुणापरिणीतशूद्रापुत्रविषयमिति तु पौरस्त्याः। तन्मन्दम्। "यदेवास्य" इत्यादिवाक्यशेषोपात्तव्यवस्थामपहायानुपात्तसगुणनिर्गुणव्यवस्थायाः कल्पयितुमनर्हत्वात्। अपरिणीतशूद्रापुत्रभागस्य च दासप्रस्तावेऽभिधास्यमानत्वात्प्रागुक्तैव व्यवस्था सुस्था।

मुख्यामुख्यपुत्राणां विभागव्यवस्थां वक्तुं तत्स्वरूपं निरूप्यते।

तत्र—

याज्ञवल्क्यः, ( अ० २ )

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥ ( १२८ )
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
कानीनः कन्यकाजातो मातामहसुतो मतः॥ ( १२९ )
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः।
दद्यान्माता पिता वा यं स पुत्रो दत्तकः स्मृतः॥ ( १३० )
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयंकृतः।
दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः॥ ( १३१ )
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः।

सवर्णा धर्मविवाहोढा धर्मपत्नी तस्यां जात औरसः पुत्र इति मिताक्षरा। वस्तुतस्तु नेदमेवं बोद्धव्यम्। अनुलोमजानां मूर्द्धावसिक्तादीनामौरसेष्वन्तर्भावादिति स्ववचनविरोधात्। न हि ते सवर्णायामुत्पन्नाः। ब्राह्मणादिषु येषां येन धर्मविवाहस्तदूढोत्पन्नानामनौरसत्वप्रसङ्गे तेषु सत्स्वप्यन्येषां दायग्रहणप्रसङ्गाच्च। तस्मादुत्कर्षाभिप्रायं सवर्णाग्रहणम्। धर्मपत्नीजत्वमात्रं वाक्योपात्तं क्षेत्रजादिव्यावर्त्तकं लक्षणम्। अत एव—

मनुः, ( अ० ९ श्लो० १६६ )

संस्कृतायां स्वभार्य्यायां स्वयमुत्पादयेत्तु यम्।
औरसं तं विजानीयात्पुत्रं प्राथमकल्पिकम्॥

वशिष्ठोऽपि—

द्वादशैव पुत्राः पुराणदृष्टाः स्वयमुत्पादिताः स्वक्षेत्रे संस्कृतायामौरसः प्रथम इति।

विष्णुरपि—

अथ द्वादश पुत्रा भवन्ति स्वक्षेत्रे संस्कृतायामुत्पादितः स्वयमौरसः प्रथम इति।

अत्र वचनद्वयेऽपि स्वक्षेत्रे संस्कृतायामिति व्याख्यानव्याख्येयभावोऽन्यथा पौनरुक्त्यापत्तेः।

देवलः—

संस्कृतायां स्वभार्य्यायां स्वयमुत्पादितो हि यः।

औरसो नाम पुत्रः स प्रधानः पितृवंशधृक् ।

आपस्तम्बः—

सवर्णां शास्त्रविहितां यथर्त्तु गच्छतः पुत्रास्तेषां धर्माभिसम्बन्धो दायेनाव्यतिक्रमश्चोभयोर्मातापित्रोः ।

बौधायनः—

सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात् । अथाप्युदाहरन्ति—

अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे ।
आत्मा वै पुत्रनामासि स जीवेत् शरदः शतम् ॥
आधत्त पितरो गर्भे कुमारं पुष्करस्रजम् ।
यथेह पुरुषस्यात्मा तथा त्वमिह जायसे ॥
आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात् ।
पुन्नाम्नस्त्रायसे यस्मात्पुत्रस्तेनासि संज्ञितः ॥

इत्यापस्तम्बीयबौधायनीययोः सवर्णाग्रहणमुत्कर्षाभिप्रायकमेव । अत एवासवर्णासूत्पन्नानामप्यौरसपुत्रप्रस्ताव एव विभागप्रकार उक्तः सङ्गच्छते । आपस्तम्बवचने सवर्णामपूर्वामिति रत्नाकरे धृतः पाठः । अपूर्वा न पूर्वः पतिर्यस्याः सा वाग्दत्तापि या न भवतीत्यर्थ इति प्रकाशकार इति व्याख्यातं च ।

पारिजातेऽप्युक्तम्—

सवर्णात्र द्विजस्य द्विजा शूद्रस्य शूद्रा न तु ब्राह्मणस्य ब्राह्मणी क्षत्रियस्य क्षत्रिया वैश्यस्य वैश्या । अन्यथा ब्राह्मणादिपरिणीतक्षत्रियादिपुत्राणां द्वादशविधपुत्रान्तर्भावो न स्यादिति ।

पुत्रिकायाः सुतः पुत्रिकासुतः स तत्समः औरससमः । यथाह—

श्लोकवशिष्ठः,

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥

मनुरपि—(अ० ९)

अपुत्रोऽनेन विधिना सुतां कुर्व्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम् ॥ (१२७)
अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाम् ।
विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः ॥ (१२८)
ददौ स दश धर्माय कश्यपाय त्रयोदश ।
सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् ॥ (१२९)

अत्र परिभाष्य दत्तायामुत्पन्नः पुत्रिकापुत्रो मातामहस्येत्युक्तम् । अपरिभाषितदत्तायामपि सम्भवतीति भ्रातृमतीमिति विशेषणं पुत्रिकाकरणशङ्कानिवृत्त्यर्थम् । अनेन चापरिभाषितापि पुत्रिका भवतीत्याचारमिताक्षरायां निरूपितम् । अत एव—

गौतमोऽपि,

पितोत्सृजेत्पुत्रिकामनपत्यो मदर्थमपत्यमिति संवाद्य । अभिसन्धिमात्रात्पुत्रिकेत्येकेषामिति ।

ब्रह्मपुराणेऽपि—

अपुत्रेण तु या कन्या मनसा पुत्रवत्कृता ।
राजाग्निबान्धवेभ्यश्च समक्षं वाथ कुत्रचित् ॥
प्राग्गर्भमथवा शुल्कयुक्ता पित्रा वराय वा ।
मृते पितरि वा दत्ता सा विज्ञेया तु पुत्रिका ॥
पित्र्याद्दृक्थात्समं भागं लभेतेतादृशी सुता ॥ इति ।

मनुः—(अ० ९ श्लो० १४०)

मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः ।
द्वितीयं तु पितुस्तस्यास्तृतीयं तु पितुः पितुः ॥ इति ।

अथवा पुत्रिका चासौ सुतश्च पुत्रिकासुत इति पुत्रिकैव पुत्रस्थानीयेत्यर्थः । तस्याश्चौरसो जातत्वेऽपि कन्यात्वात्पुत्रसमत्वमिति वयम् । पित्रवयवानामल्पत्वान्मात्रवयवानां बाहुल्याच्चौरससमत्वमिति मिताक्षरा । यथाह—

वसिष्ठः,

द्वितीयः पुत्रः पुत्रिकैवेति ।

द्व्यामुष्यायणस्तु—

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।
उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥ (अ० २ श्लो० १२७)

इति याज्ञवल्क्योक्तः । स बीजिनो यद्यप्यौरसस्तथाप्यन्यक्षेत्रोत्पन्नत्वादौरसादपकृष्ट एव । अत एवौरसो धर्म्मपत्नीज इत्यौरसलक्षणं तेनैवाभिहितम् । अस्माभिरपि क्षेत्रजत्वानपायात्क्षेत्रजपुत्रमध्य एव व्याख्यास्यते ।

मनुरपि—(अ० ९ श्लो० ५३)

क्रियाभ्युपगमात् क्षेत्रं बीजार्थं यत्प्रदीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥

यथा लोके क्रिया=कर्षणाख्या तदभ्युपगमात् । एकस्य वापार्थं बीजं

व्रीह्यादि नास्ति क्षेत्रमस्ति अपरस्य क्षेत्रं नास्ति बीजमस्ति । तत्र तौ मदीयं बीजं त्वदीयं क्षेत्रं तत्र तदावापेन कार्षि कुर्वंस्तत्रोत्पन्नं फलमावयोरस्त्वित्यभ्युपगमं संविदं यदि कुरुतस्तथा सति द्वावपि तत्फलभागिनौ दृष्टौ । तथा द्व्यामुष्यायणस्थलेऽप्यत्रोत्पन्नमपत्यमावयोरस्त्विति संविदा यद्येकस्य क्षेत्रेऽपरः स्वबीजमावपति तदुत्पन्नमप्यपत्यमुभयोर्भवतीति तस्य क्षेत्रजस्य द्विपितृकत्वेन द्व्यामुष्यायणसंज्ञा। अत्र याज्ञवल्क्येन "नियोगोत्पादित" इत्युक्तेर्गुरुनियुक्तस्यैव देवरसपिण्डादेर्भ्रात्रादिभार्य्यायां घृताभ्यक्तादिविधितः पुत्रोत्पादनमितरथा प्रत्यवाय उभयोरित्युक्तं भवति । तथा च—

याज्ञवल्क्यः, (अ०१ श्लो०६८।६९)

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥
आगर्भसम्भवाद्गच्छेत्पतितस्त्वन्यथा भवेत् ।
अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः ॥ इति ।

यदा त्वनाभिसन्धाय द्वयोरपत्यं परक्षेत्रे देवरादिना बीजमुप्यते तदा क्षेत्रिण एव तदपत्यम् । तदप्याह—

मनुः—(अ० ९ श्लो० ५२)

फलं त्वनभिसन्धाय बीजिनां क्षेत्रिणां तथा ।
प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्बलीयसी ॥ इति ।

फलमपत्यरूपमनभिसन्धाय यत्र परक्षेत्रे यदपत्यमुत्पाद्यते तत् क्षेत्रस्वामिन एव भवति । यथा लोके परक्षेत्रे व्रीह्यादिबीजं क्षेत्रस्वामिना सह संविदमकृत्वैव वपति यथा वा गवश्वादौ परकीयेऽन्यदीयोऽनडुदश्वादिर्वीर्य्यमावपति तत्रोभयत्रापि क्षेत्रस्वामिन एव तदुत्पन्ने फले स्वाम्यं दृश्यते इति प्रत्यक्षमित्यस्यार्थः । तत्र हेतुः–बीजाद्योनिर्बलीयसीति । गवाश्वादौ तथा दर्शनादिति भावः । तथा चाभिसन्धौ सत्येव क्षेत्रजस्य बीजिस्वाम्येन द्व्यामुष्यायणत्वम् । क्षेत्रस्वामिस्वाम्यं तु क्षेत्रज उभयत्रापीति फलितोऽर्थः । अत एव यद्यपि याज्ञवल्क्येन 'अपुत्रेण' इत्यादिवचने बीज्यभिसन्धिर्नोपात्तस्तथापि मन्वाद्येकमूलकतयानुसन्धेयः । अत एव—

क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ।

इत्यनभिसन्धिसाधारणं क्षेत्रजलक्षणमुक्तम्।अन्यथा पौनरुक्त्यापत्तेः। सगोत्रेण=देवरसपिण्डादिना । इतरेण=असगोत्रेणेत्यनुकल्पः । मनुना "सपिण्डो वा" इत्यभिधानात् । नियोगश्च वाग्दत्ताविषय एवेत्याचार्य्याः ।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः।
तामनेन विधानेन निजो विन्देत देवरः ॥ (अ० ९ श्लो० ६९)

इति मनुना तत्रैव नियोगविधिना पुत्रोत्पादनस्य नियमितत्वात्। विधवानियोगस्य प्रत्युत प्रतिषिद्धत्वाच्च। तथाहि—(अ० ९)

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥ (५९)
विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि।
एकमुत्पादयेत् पुत्रं न द्वितीयं कथञ्चन ॥ (६०)

इत्यादिविधवानियोगमुपन्यस्य निषेधति स्वयमेव—मनुः (अ० ९)

नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ (६४)
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्।
न विवाहविधावुक्तं विधवावेदनं पुनः ॥ (६५)
अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥ (६६)
स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा।
वर्णानां सङ्करं चक्रे कामोपहतचेतनः ॥ (६७)
ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम्।
नियोजयत्यपत्यार्थं गर्हन्ते तं हि साधवः ॥ इति। (६८)

अत्र वाग्दत्ताशब्देन तुभ्यमहं सम्प्रदद इत्यादिसङ्कल्पवाक्येन कन्यादात्रा दत्ता गृह्यते। विधवाशब्देन तु सप्तपदीपर्य्यन्तं विवाहोढा पश्चान्मृतपतिका। न तु विवाहात्प्रागनियतकालप्रतिश्रवणरूपवाग्दानदत्ता। या—

अव्यङ्गे ऽपतिते ऽक्लीबे दशदोषविवर्जिते।
इमां कन्यां प्रदास्यामि देवाग्निगुरुसन्निधौ ॥

इति वाक्येन प्रतिज्ञायते। अत एव पतिरिति मनुनोक्तम्। प्राग्भाविप्रतिश्रवणस्य विवाहप्रयोगबहिर्भावेन प्रतिश्राव्यस्य पतित्वमग्निगुरुसन्निधाविति वाक्येन प्रतिज्ञायते। यद्यपि सङ्कल्पितताया अपि न स पतिर्जातः। भार्य्यात्ववत्पतित्वस्याप्यलौकिकसंस्कारात्मकत्वेन विवाहभावनाभाव्यस्य ततः प्रागनुत्पत्तेः। तथापि प्रयोगोपक्रमे तत्फलीभूतद्व्यवहारसम्भवः। यजमानेष्टितः प्रागप्याहवनीयव्यवहारवत्। प्रतिश्रवणमात्रे तु न तदुपक्रमोऽपीति सर्व्वथा पतित्वव्यपदेशोऽनुप-

पन्नः। अत एव प्रतीच्योदीच्यादीनां विवाहाददर्वाग् यः प्राक्काले वाग्दत्तायास्तदुद्देश्ये मृतेऽपि पुनरविगीतशिष्टैरन्येन सह विवाहः क्रियते। अन्यथा कलौ नियोगविधेरपि निषिद्धतया पुनरक्षताविवाहस्य दूरापास्ततया स दुराचार एव स्यात्। तथा चायमर्थः। वाचा सत्ये कृते सङ्कल्पवाक्येन दाने कृते सति यस्याः पतिः पतित्वभाव्यकविवाहभावनाविषयीभूतः पुरुषो म्रियेतेति। न च विहितप्रतिषिद्धत्वाद्विकल्प एव विधवानियोगस्यास्त्विति वाच्यम्। वस्तुनि विकल्पासम्भवात्। न हि विधवायां नियोगात्प्रवृत्तस्य प्रत्यवायो भवति न भवति वेति सम्भवति। नियोगविधेः "यस्या म्रियेत" इत्यादिवचनेन वाग्दत्ताविषयत्वे नियन्त्रिते विधवाविषये प्रवृत्त्यभावाच्च। नियोजयितॄणां निन्दाश्रवणात् स्त्रीधर्मेषु व्यभिचारस्य बहुदोषजनकत्वश्रवणात् संयमस्यातिप्रशंसनाच्च तुल्यबलत्वस्यापि विधिप्रतिषेधयोरभावात्। तथा च—

मनुरेव, (अ० ९)

कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः।
न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु॥ (१५७)

इति जीवनार्थं पुरुषान्तराश्रयणं निषिध्य,

आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी।
यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम्॥ (१५८)
अनेकानि सहस्राणि कौमारब्रह्मचारिणाम्।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्॥ (१५९)
मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः॥ (१६०)
अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते॥ (१६१)

इति पुत्रार्थमपि पुरुषान्तराश्रयणं निन्दातिशयपुरःसरं प्रतिषिद्धवान्। पश्चात् स्वयमेव "यस्या म्रियेत" इत्यनेन वाग्दत्ताविषयनियोगस्य च धर्मत्वमुक्तवान्। "अनेन विधानेन" इत्युक्त्वा—

यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्।
मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ॥ (अ०९ श्लो०७०)

इति विधानमपि दर्शितवान्। घृताभ्यङ्गगुर्वनुज्ञादिः पूर्वोक्तः स्मृत्यन्तरोक्तश्च यो विधिः सोऽप्यनेनेति सर्वनाम्ना परामृश्यते। देवरग्रहणं सपिण्डादेरुपलक्षणम्। वचनान्तरानुसारात्। पतिपदं वाचा सत्ये इति च व्याख्यातमेव। "यस्मै वाग्दत्ता कन्या स प्रतिग्रहमन्तरेणैव तस्याः

पतिरित्यस्मादेवावगम्यते" (१) इति मिताक्षराग्रन्थोऽप्यस्मदुक्तार्थाभिप्रायकतयैव नेयः। यथाश्रुते दोषस्योक्तत्वात्। अत एवाग्रेतनो ग्रन्थः— "अयं च विवाहो(२) घृताभ्यङ्गादिनियमवन्नियुक्ताभिगमनाङ्गमेवेति न देवरस्य तस्यां भार्य्यात्वमापादयति। अतस्तदुत्पन्नमपत्यं क्षेत्रस्वामिन एवासत्यां संविदि। संविदैव तूभयोरपि" इति।

नारदः—( व्य० प० १२ श्लो० ५८ )

क्षेत्रिकानुमते बीजं यस्य क्षेत्रे प्रसिच्यते।
तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्मतम्॥

शङ्खलिखितौ—

मन्त्रसंस्कारकर्त्तुरपत्यमित्याङ्गिरसो बीजिक्षेत्रिकयोरनुमते यद्बीजं प्रकीर्य्यते तत् द्विधा स्वं स्यादित्युशना इति।

कात्यायनः—

क्षेत्रिकस्य मतेनापि फलमुत्पादयेत्तु यः।
तस्येह भागिनौ तौ तु न फलं हि विनैकतः॥ इति।

हारीतः—

जीवति क्षेत्रजमाहुरस्वातन्त्र्यान्मृते द्व्यामुष्यायणमनुप्तबीजत्वात्। नाबीजं क्षेत्रं फलति नाक्षेत्रं बीजं रोहत्युभयदर्शनादुभयोरपत्यमित्यपरे। तेषामुत्पादयितुः प्रथमः प्रवरो भवति। द्वौ पिण्डौ निर्वापे दद्युरेकपिण्डे वा द्वावनुकीर्त्तयेत्। द्वितीये पुत्रास्तृतीये पौत्रा लेपिनश्च त्रीनन्वाचक्षाण आसप्तमादित्येके।

जीवति=क्षेत्रपतौ तस्यैव क्षेत्रजं पुत्रमाहुः। अत्र हेतुरस्वातन्त्र्यात् स्त्रिया इत्यर्थः। मृते तु क्षेत्रपतौ "अपुत्रा शयनं भर्त्तुः" इत्यादिवक्ष्यमाणमनुवचनादस्वातन्त्र्यमविशिष्टं यद्यपि तथापि न क्षेत्रिण एव। तत्र हेतुरनुप्तबीजत्वात्। क्षेत्रिणो बीजिनं प्रत्यनुमत्यवश्यंभावादित्यर्थः। तत्रोपपादकं न बीजमित्यादि। निर्वापे=निरूप्यतेऽस्मिन्निति निर्वापः पिण्डपितृयज्ञस्तत्र द्व्यामुष्यायणाः पितृद्वयाय द्वौ पिण्डौ पृथग् दद्युः। एकपिण्डे वा द्वौ पितरावनुकीर्त्तयेत्। एकैकस्मिन् द्वौ द्वाविति वीप्सा बोध्या। "यदि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेत्" इत्यापस्त-

---

(१) अस्मादेव=पतिपदघटितमनुवाक्यादेव।

(२) घृताभ्यङ्गादिनियमवदिति। यथा घृताभ्यङ्गादिकमङ्गत्वेन विधीयते तथाऽयं विवाहोऽपि नियुक्ताभिगमनेऽङ्गं न स्वातन्त्र्येण प्रधानकर्म येन दाम्पत्यप्रसङ्गः। पुनर्भूत्वादूढाया भार्यात्वासम्भवादिति भावः।

न्वस्मरणात् । त्रयाणामपि द्वित्वादिति भावः । द्वितीय इत्यादि । द्वितीयं तृतीयं चारभ्येत्यर्थः । लेपिनश्च त्रीनित्यादि । तत्कीर्त्तनेऽपि द्वौ द्वावनुकीर्त्तयेदित्यर्थः ।

नारदोऽपि—(व्य० प० १३ श्लो० २३)

द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक् ।
ऋक्थादर्द्धांशमादद्युर्बीजिक्षेत्रिकयोस्तथा ॥

अर्द्धांशमिति यथोचितभागोपलक्षणम् ।

बौधायनः—

अथाप्युदाहरन्ति—

द्विपितुः पिण्डदानं स्यात् पिण्डे पिण्डे स्वनामनी ।
त्रयश्च पिण्डाः षण्णां स्युरेवं कुर्वन्न दुष्यति ॥ इति ।

षण्णां पितृपितामहप्रपितामहानाम् ।

स एव—

मृतस्य प्रसूतो यः क्लीबस्य व्याधितस्य वा तेनानुमतस्य क्षेत्रजः स च द्विपिता द्विगोत्रश्च द्वयोरपि स्वधाऋक्थभाग्भवति ।

मनुः—(अ० ९ श्लो० १६७)

यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा ।
स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥

अत्र सर्वत्र जीवति क्षेत्रिणि व्याध्यादिप्रतिरुद्धे पुत्रोत्पादने यथायोगं गुरूणां भर्त्तुरपि नियोगः संविरुच । मृते तु गुरूणामेव । तथा च क्षेत्रजो द्विविधो द्विपितृकः क्षेत्रिकपितृकश्च ।

गृहे प्रच्छन्न उत्पन्नो जारात्पश्चात्सवर्णजनितत्वेन निर्णीतः क्षेत्रस्वामिनो गूढजो नाम पुत्रः ।

मनुः—(अ० ९ श्लो० १७०)

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥

नचेत्यादि । पुरुषविशेषजन्यत्वेनाज्ञातोऽपिसवर्णजारजन्यत्वेनज्ञातः ।

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ।

इति योगीश्वरोक्तेः । तच्च व्याख्यास्यते ।

कानीनः कन्यकायामपरिणीतायां सवर्णाज्जातः स मातामहसुतो यस्य सा कन्या तस्यैव पुत्र इत्यर्थः । परिणीतायां तु जातो वोढुरेव गूढजः ।

यथाह मनुः—(अ० ९ श्लो० १७२ )

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥ इति ।

एतैर्वाक्यैरपरिणीतायां पितृगृहावस्थितायां सवर्णजारजः कानीनः । स च मातामहसुत इत्युक्तं, तद्विरुद्धं ब्रह्मपुराणीयं कल्पतरुलिखितं वाक्यम्—

अदत्तायां तु यो जातः सवर्णेन पितुर्गृहे ।
स कानीनः सुतस्तस्य यस्मै सा दीयते पुनः ॥

नारदवाक्यमपि तत्रैव—( व्य० प० १३ श्लो० १७ )

कानीनश्च सहोढश्च गूढायां यश्च जायते ।
तेषां वोढा पिता ज्ञेयस्ते च भागहराः स्मृताः ॥ इति ।

अत्रादत्तायां सवर्णात् पितुर्गृहे जातस्य कानीनत्वमविरुद्धम् । यस्मै सा पुनर्दीयते तस्यासौ सुत इति तु विरुद्धम् । नारदवचनेऽपि गूढोत्पन्न-सहोढकानीनानामपि वोढैव पितेति प्रतिपादितम् । मनुनापि वोढुरित्युक्तं न मातामहस्येति । या तु मिताक्षराकृता यद्यनूढायामुत्पन्नस्तर्हि माता-महसुतोऽथोढायां तदा वोढुरेवेति व्यवस्था कृता । सापि मनसि न चमत्कारमादधाति । तथा सति हि कन्याशब्दवाच्यायामपरिणीता-यामजातत्वात् तस्य कानीनत्वं दुर्वचम् । न च कन्याशब्दः स्त्र्यपत्य-मात्रपरो विशेषणवैयर्थ्यात् । गूढजादीनामपि तत्रोत्पन्नत्वेनाव्यावर्त्त-कत्वात् । सर्वा हि कस्यचित्कन्यैव । ब्रह्मपुराणवचनविरोधश्च दुष्परि-हरस्तत्रादत्तायामित्युक्तत्वात् । अत एव मानवविरोधोऽपि दुःसमाध एव । कल्पतरुकारेणापि परस्परविरुद्धवचनानि लिखितवता हृदयशून्य-वद्व्यवस्थानभिधानाद्विरोध एव न प्रतिसंहितः । तेन हि मातामहसु-तत्वं कानीनस्य बोधयन्ति बहूनि वचनान्युपन्यस्य तद्विरुद्धे ब्रह्मपुराण-नारदवचने तदनुपदमेव लिखिते । तत्र वशिष्ठस्य वचः—

कानीनः पञ्चमो यं पितृगृहेऽसंस्कृता कामादुत्पादयेत्स कानीनो मातामहस्य पुत्रो भवतीत्याह । अथाप्युदाहरन्ति—

अप्रत्ता दुहिता यस्य पुत्रं विन्देत तुल्यतः ।
पुत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥ इति ।

नारदस्यैवम्—( व्य० प० १३ श्लो० १८ )

अज्ञातपितृको यस्तु कानीनोऽनूढमातृकः ।
मातामहस्य दद्यात्स पिण्डं रिक्थं हरेत्ततः ॥

बौधायनस्यापि—

असंस्कृतामनतिसृष्टां यामुपगच्छेत्तस्यां यो जातः स कानीन इति ।

अत्र प्रतिविदध्मः । मातामहसुतत्वं कानीनस्य प्रतिपादयतां वचनानां सर्वथा या न दत्ता तस्यां सवर्णजातविषयत्वम् । वोढुः सुतत्वं प्रतिपादयतां तु सङ्कल्पितायां सप्तपदीपर्य्यन्तं विवाहभावनाभाव्यभार्यात्वमप्राप्तायां यः सवर्णादुत्पन्नस्तद्विषयत्वम् । अदत्तायामिति ब्रह्मपुराणवचने बौधायनवचने चानतिसृष्टामिति पदाभ्यामसमाप्तविवाहभावनोच्यते । न तु सर्वथाऽदत्ता । युक्तञ्चैतत् । सङ्कल्पेन पितृस्वत्वापगमपरिणेतृस्वत्वोत्पत्त्योरुपक्रमात् । पितुः सर्वथा स्वत्वापगमाभावाच्च कानीनत्वव्यपदेशस्य परिणेतृस्वत्वोपक्रमेण तदीयत्वस्य च सम्भवात् । पूर्णपितृस्वत्वे तु तदुत्पन्नस्य मातामहसुतत्वोपपत्तेः । मनुवचनस्याप्ययमर्थः । या सङ्कल्पिताऽसमाप्तविवाहभावना अत एव कन्या । परिणेतृभार्यात्वस्यानिष्पत्तेः । तादृशकन्यासमुद्भवं कानीननामानं वोढुर्येन विवाह्यते तस्य वदेदिति । अत एव पितृवेश्मनीत्यपि सङ्गतमनुवादतया । विवाहानन्तरमेव भर्त्तृगृहप्रवेशात् । मिताक्षराग्रन्थस्याप्ययमर्थः । अनूढायां=वोढुमनुपक्रान्तायाम् । ऊढायां=वोढुमुपक्रान्तायामिति । आदिकर्मणि क्तो न तु भूते । समाप्तविवाहभावनायां तु सवर्णजारजातो गूढजः । अत एव गृहे प्रच्छन्न उत्पन्नो भर्त्तृगृहे तेनाज्ञातो जात इत्युक्तम् । पुनर्भूर्द्विविधा । विवाहमात्रेणाक्षताप्यन्येन परिणीयमानैका । अन्या तु विवाहात्प्रागेव पुरुषसम्भोगदूषिता । तस्यां जातः पौनर्भवः । अत एवाक्षतायां क्षतायां वा जात इत्युक्तम् ।

मनुः—( अ० ९ श्लो० १७५ )

> या तु पत्या परित्यक्ता विधवा वा स्वयेच्छया ।
> (१)उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥

कात्यायनः—

> क्लीबं विहाय पतितं या पुनर्लभते पतिम् ।
> तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः ॥

वसिष्ठविष्णू—पौनर्भवश्चतुर्थ इति ।

चतुर्थत्वं तदनुक्रमापेक्षया ।

माता भर्त्राज्ञया पिता वा यमन्यस्मै दद्यात्स तस्य दत्तकः पुत्रः । तथा च—

मनुः, ( अ० ९ श्लो० १६८ )

> माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
> सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥

---

( १ ) पुनर्भूत्वा=पुनर्गृहिणीभूत्वा ।

आपदीत्युक्तेरनापदि दातुः प्रत्यवायः । मातापितरौ प्रत्येकं मिलितौ वा । अद्भिरिति दानप्रतिग्रहप्रकारोपलक्षणम् । सदृशं=सवर्णम् । प्रीतिसंयुक्तमिति क्रियाविशेषणम् । एकः पुत्रश्च न देयो न प्रतिग्राह्यः । तथा च—

वसिष्ठः,

शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः । न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा । स हि सन्तानाय पूर्वेषां न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुरिति ।

अत्र भर्त्रनुज्ञां विना स्त्रियाः पुत्रप्रतिग्रहनिषेधाददत्तानुज्ञे भर्त्तरि मृते विधवया कृतः पुत्रो दत्तको न भवतीत्याहुः । तन्न । अपुत्रस्य गत्यभावात्पुत्रीकरणस्यावश्यकत्वश्रवणाच्छास्त्रमूलकतदनुज्ञायास्तत्रापेक्षतेः । न चैवमनुज्ञानादन्यत्रेति व्यर्थम् । व्यावर्त्याभावाच्छास्त्रीयानुमतेः सर्वत्रावश्यकत्वादिति वाच्यम् । मुमुक्षोः पत्न्यन्तरे पुत्रवतो वानुज्ञाया असम्भवाद्भार्या यदि स्वपुत्रार्थमेव तं प्रतिगृह्णीयात्तदर्थत्वात् प्रतिषेधस्य ।

सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥ (मनु० अ०९ श्लो० १८३)

इति पुत्रकार्य्यश्राद्धादेः सपत्नीपुत्रेण सिद्धेर्भर्त्रनुज्ञां विना तादृश्या पुत्रो न कार्य्यः । उभयोरपि तत्र कार्य्यस्य तेन निष्पत्तेः । भर्त्तुर्हि स औरस एव मुख्यः तस्या अपि दत्तकवद्गौण इति तादृश्या भर्त्रनुमतिमन्तरेणेतरो न प्रतिग्राह्य इति तात्पर्य्यार्थः । वस्तुतस्तु—

भ्रातृणामकजातनामेकश्चेत् पुत्रवान् भवेत् ।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ (मनु०अ०९श्लो०१८२)

इति वचनवदेतस्यापि भ्रातृपुत्रस्य गौणदत्तकपुत्रत्वादिसम्भवेऽन्यः पुत्रप्रतिनिधिर्न्न कार्य्य इत्यर्थकतया मिताक्षरास्मृतिचन्द्रिकादौ व्याख्यातत्वाद्भर्त्तरि जीवति भार्य्यया स्वातन्त्र्येण तदननुमतौ न पुत्रीकरणीय इति भर्त्तुरनुज्ञानादन्यत्रेत्यस्यार्थः । मृते तु तस्मिन् यत्पारन्त्र्यं तदनुमतिरेवापेक्षिता । एवं सति दृष्टार्थता भवति प्रतिषेधस्य । तस्माददत्तानुज्ञे मृतेऽपि भर्त्तरि भार्य्याया दत्तकादिकरणमविरुद्धम् । मनुवचनद्वयस्य पूर्व्वोक्तार्थकत्वे उपपत्तिरपि मिताक्षरादावेवोक्ता । यदपुत्ररिक्थग्रहणाधिकारिक्रमपरे "पत्नी दुहितर" इत्यत्र "अप्रजः स्त्रीधनम्" इत्यत्र च भ्रातृपुत्रसपत्नीपुत्रयोः पत्न्यादिभर्त्राद्यभावेऽधिकारप्रतिपादनाविरोधापत्तिरिति । तच्च तत्रैव प्रपञ्चयिष्यते । अनेकपुत्रसद्भावेऽपि

ज्येष्ठः पुत्रो न देयः ।

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।

इति पुत्रकार्य्यकरणे तस्यैव मुख्यत्वाभिधानात् । क्रीतस्वयंदत्त-कृत्रिमेष्वपि समानन्यायत्वादेकपुत्रज्येष्ठपुत्रयोर्न्निषेधः । अत एव बह्वृच ब्राह्मणे हरिश्चन्द्रोपाख्याने क्रीतेऽपि ज्येष्ठपुत्रप्रतिषेधलिङ्गदर्शनं "स ज्येष्ठपुत्रं निगृह्णान उवाच" इति ।

पुत्रप्रतिग्रहप्रकारश्च—

पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसन्निकृष्ट एव प्रतिगृह्णीयात् ।

इति वसिष्ठोक्तः । अदूरबान्धवमिति देशभाषाविप्रकृष्टस्य प्रतिषेधः।

एवं क्रीतादिष्वपि । समानन्यायत्वात् । कल्पतरौ त्वदूरबान्धवमसन्निकृष्टमेवेति पाठं लिखित्वाऽदूरबान्धवं=सन्निहितमातुलादिकम् । असन्निकृष्टमेव=अविज्ञातगुणदोषमपि । अप्यर्थ एवकार इति व्याख्यातम् । "सन्देहे चोत्पन्ने दूरे शूद्रमिव स्थापयेद्विज्ञायते (१)ह्येकेन च बहूंस्ततस्त्रायते इति" इति च वशिष्ठवचनमधिकं लिखित्वैवं विवृतम् । सन्देहे बान्धवानामसन्निधानाज्ज्ञातिसन्देह उत्पन्ने शूद्रमिव=संस्कारहीनमेव दूरे स्थापयेत् । शूद्रोऽपि हि कृतपुत्रो भवतीत्यभिप्राय इति ।

क्रीतश्च ताभ्यां विक्रीत इति । ताभ्यां=मातापितृभ्यां मात्रा भर्त्रनुज्ञया पित्रा वा मूल्यग्रहणेनापरस्य दत्तः । एकपुत्रज्येष्ठपुत्रौ वर्ज्जयित्वा आपदीत्येव । सजातीयेष्वित्युपसंहारात्सवर्ण एव । यत्तु मनुनोक्तम्—

(अ० ९ श्लो० १७४)

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।

स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा ॥ इति ।

तत् गुणैः सदृशोऽसदृशो वेति व्याख्येयम् । न तु जात्याऽसदृश इति । सजातीयेष्वित्यनेन विरोधापत्तेः ।

बौधायनोऽपि—

मातापित्रोर्हस्तात्क्रीतोऽन्यतरस्य वा योऽपत्यार्थं गृह्यते स क्रीतक इति

कृत्रिमस्तु पुत्रार्थिना स्वयं धनक्षेत्रादिप्रदर्शनादिना प्रलोभ्य त्वं मे पुत्रो भवेति यः सवर्णः पुत्रीकृतः स उच्यते । मातापितृविहीनश्चेत् । तत्सद्भावे तत्परतन्त्रतया तेन पुत्रीभवितुमशक्यत्वात् ।

(१) विज्ञायते=श्रूयते हि=यतः एकेनानौरसेनापि पुत्रेण बहून्=पित्रादीन् ततः= नरकात् त्रायते इत्यर्थः ।

मनुविष्णू अपि—( मनु० अ० ९ श्लो० १६९ )

सदृशं यं प्रकुर्य्यातां गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥ इति ।

सदृशं=सवर्णम् । प्रकुर्य्यातां मातापितरौ मिलितौ प्रत्येकं वा ।

दत्तात्मा तु स्वयंदत्तः । स्वयमेव स्वात्मानमन्यस्मै दत्तवांस्तवाहं पुत्रो भवामीति स्वयमुपगतो मातापितृविहीनस्ताभ्यां त्यक्तो वा सवर्णोऽपतितः स उच्यते । तथा च—

मनुः, ( अ० ९ श्लो० १७७ )

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृतः ॥ इति ।

अकारणात्=पातित्यादिकारणमन्तरेणैव दुर्भिक्षादौ पोषणाद्यसामर्थ्यादिना मातापितृभ्यां त्यक्तः स्वतन्त्र इत्यर्थः ।

यस्तु गर्भे स्थितोऽपरिणीतावस्थायां सवर्णाज्जाराज्जातो गर्भिण्यां तस्यां परिणीयमानायां विन्नः प्राप्तः "विद्लृ लाभ "इत्यस्य निष्ठान्तं रूम् । "नुदविद" ( अ० ८ पा० २ सू० ५६ ) इति सूत्रेण निष्ठासम्बन्धितकारस्य नकारादेशः । (१)सहोढज उच्यते । स वोढुः पुत्रः । तथा च—

मनुः, ( अ० ९ श्लो० १७३ )

या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥

विष्णुरपि—

सहोढः सप्तमः । गर्भिणी या संस्क्रियते तस्याः पुत्रः स तु पाणिग्रहस्येति ।

सप्तम इति तदीयपाठक्रमापेक्षया ।

उत्सृष्टो=मातापितृभ्यां त्यक्तो यो गृह्यते पुत्रार्थिना सोऽपविद्धो नाम ग्रहीतुः पुत्रः । एतावपि सवर्णावेव ।

तथा विष्णुरपि—

अपविद्धस्त्वेकादशः पित्रा मात्रा च परित्यक्तः स येन गृहीतः ।

वसिष्ठः—

अपविद्धः पञ्चमो यं मातापितृभ्यामपास्तं गृह्णीयात् । इति ।

एकादशत्वं पञ्चमत्वं च तत्तत्पाठक्रमापेक्षया ।

यस्तु मनुना गौणपुत्रमध्ये पारशवाख्यः शूद्रापुत्रः परिगणितः । स

---

( १ ) तया सह य ऊढो विवाहितो गर्भस्तस्माज्जात इत्यर्थः । गर्भस्योढत्वात्तस्याप्यूढत्वमिति ।

योगीश्वरेण "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" इत्युक्तोपसंहारव्याजेन नियमकरणात्तस्य च कथञ्चिदपि सजातीयत्वासम्भवान्नोक्तः। अत एव "जातोऽपि" इत्यादिना ग्रन्थेन स उक्तः। द्विजातिजातस्य शूद्रापुत्रस्यान्याभावेऽपि पित्र्यक्रुक्थहरत्वाभावाच्च। तच्च वक्ष्यते। तथा च—

मनुः, (अ० ९ श्लो० १७८)

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम्।
(१)स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः॥ इति।

बौधायनोऽपि—

द्विजातिप्रवराच्छूद्रायां जातः कामात्पारशव इति।
तत्रौरसादन्ये गौणाः पुत्रा मुख्यस्त्वौरस एव।

तथा च-

मनुः, (अ० ९ श्लो० १८०)

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥

क्रियालोपात्=परिणयादिक्रियालोपादित्यर्थः। क्रियालोपादिति प्रतिनिधित्वे हेतुः। स्मृतिचन्द्रिकायां तु औरसाभावे तत्कर्तृकश्राद्धादिक्रियालोपाद्बिभ्यतो मनीषिण ऋषय एकादश पुत्रप्रतिनिधीन् कर्त्तव्यत्वेनाहुरिति व्याख्यातम्।

बृहस्पतिः—

पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः।
सन्तानकारणं तेषामौरसः पुत्रिका तथा॥
आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः।
तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना॥

ब्रह्मपुराणे—

दत्तकश्च स्वयंदत्तः कृत्रिमः क्रुत एव च।
अपविद्धश्च ये पुत्रा भरणीयाः सदैव हि॥
भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकरास्तथा।
सूतके मृतके वापि त्र्यहाशौचस्य भागिनः।
अपि वस्त्रान्नदातृणां क्षेत्रबीजवतां तथा।
शूद्रो दासः पारशवो विप्राणां विद्यते क्वचित्॥

---

(१) स पुत्रः पितृन् श्राद्धादिभिः पारयन्=प्रीणयन्नपि अन्यपुत्रवदप्रशस्तत्वाच्छवतुल्य इति पारशव इत्यर्थः।

राज्ञां तु शापदग्धानां नित्यं क्षयवतां तथा ।
अथ सङ्ग्रामशीलानां कदाचिद्वा भवन्ति ते ॥
औरसो यदि वा पुत्रस्त्वथवा पुत्रिकासुतः ।
न विद्यते तत्र तेषां विज्ञेयाः क्षेत्रजादयः ॥
एकादश पृथग्भावा वंशमात्रकरास्तु ते ।
श्राद्धादि दासवत्सर्वे तेषां कुर्वन्ति नित्यशः ॥
गूढोत्पन्नश्च कानीनः सहोढः क्षेत्रजस्तथा ।
पौनर्भवश्च वैश्यानां राजदण्डभयादपि ॥
वर्जिताः पञ्च धनिना शेषाः सर्वे भवन्त्यपि ।
शूद्राणां दासवृत्तीनां परपिण्डोपजीविनाम् ॥
परायत्तशरीराणां न कश्चित् पुत्र इत्यपि ।
तस्माद्दासस्य दास्याश्च जायते दास एव हि ॥ इति ।

एवमेतेषां पुत्राणां स्वरूपं निरूप्य तेषां दायग्रहणं निरूप्यते ।
तत्र योगीश्वरः— ( अ० २ श्लो० १३२ )

पिण्डदोऽशहरश्चैषां पूर्वाभावे परः परः ।

परः पर इति वीप्सादर्शनात् पूर्वपूर्वाभाव इत्यपि वीप्सावसेया । औरसपौत्रिकेयसमवायेऽप्येवम् । औरसे सति पुत्रिकासुतस्य दायग्रहणाभावे प्रसक्ते मनुरपवदति—(अ० ९ श्लो० १३४ )

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते ।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥ इति ।

बृहस्पतिरपि—

एक एवौरसः पित्र्ये धने स्वामी प्रकीर्त्तितः ।
तत्तुल्या पुत्रिका प्रोक्ता भर्त्तव्यास्त्वपरे सुताः ॥

नच पुत्रिकाया एव प्रथमपुत्रे जाते पश्चादौरसोत्पत्तौ पुत्रिकापुत्रस्य ज्येष्ठत्वादस्त्रीत्वाच्च ज्येष्ठांशभागिता भवेदिति युक्तम् । तस्य पौत्रत्वात् । तदाह—
मनुः, ( अ० ९ श्लो० १३६ )

अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम् ।
पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनम् ॥ इति ।

पुत्रिका हि पुत्रस्तत्पुत्रो दौहित्रोऽपि पौत्रस्तद्वान् पौत्री भवति । पौत्रस्य च ज्येष्ठत्वनांशातिरेको नैव श्रुतः । न च वसिष्ठवचने "अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति" इति पुत्रिकापुत्रस्यापि पुत्रत्वाभिधानात्तद्विरोध इति वाच्यम् । मनुविरोधेन तस्य गौण्या पिण्डदातृत्वनि-

मित्तपुत्रत्वाभिप्रायकत्वात्। पुत्रिकायाः पुमपत्यत्वाभावाद्यथा गौणं पुत्रपदप्रतिपाद्यत्वं तथा स्वजन्यपुत्रिकाजन्यपुत्रस्यापि पुंस्त्वे सत्यपि जन्यत्वाभावात्। जन्यपुंस्त्वस्यैव पुत्रपदशक्यत्वात्। तथान्येषामपि पुत्राणां पूर्वपूर्वसत्त्वे सर्वभागानर्हत्वमनेन प्रसक्तमपवदति—

वशिष्ठः,

तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति।

दत्तकग्रहणं क्रीतादीनामुपलक्षणम्। पुत्रीकरणाविशेषात्।

उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः।
सवर्णा असवर्णास्तु ग्रासाच्छादनभाजनाः॥

इति कात्यायनवचनाच्च। सवर्णाः=क्षेत्रजदत्तकादयस्ते सत्यौरसे चतुर्थांशहराः। असवर्णाः= कानीनगूढोत्पन्नसहोढजाः पौनर्भवास्ते तु सत्यौरसे न चतुर्थांशहरा अपि, किन्तु ग्रासाच्छादनमात्रभागिन इत्यर्थः कात्यायनवचनस्य।

अत एव—

विष्णुः,

अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः।
पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिनः॥

इति औरसे सति कानीनादीनां चतुर्थांशभागित्वं प्रतिषेधति। कानीनादीनामप्यौरसाद्यभावेऽस्त्येव पित्र्यसकलधनग्रहणम्। "पूर्वाभावे परः पर" इति वचनात्। यच्च मनुवचनम्— ( अ० ९ श्लो० १६३ )

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्॥ इति,

तदपि दत्तकादीनामौरसप्रातिकूलत्वेऽत्यन्तनिर्गुणत्वे च चतुर्थांशादिनिषेधपरं कानीनादिपरं च। तेषां सत्यौरसे ग्रासाच्छादनमात्रभागित्वस्योक्तत्वात् तदेकमूलकत्वकल्पनात्। क्षेत्रजस्य तु सत्यौरसे पञ्चमषष्ठांशौ मनुनैवोक्तौ। ( अ० ९ श्लो० १६४ )

षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात् पैतृकाद्धनात्।
औरसो विभजन् दायं पित्र्यं पञ्चममेव वा॥ इति।

प्रतिकूलत्वनिर्गुणत्वसमवाये षष्ठमेकतरसद्भावे पञ्चममिति व्यवस्था।

यस्तु—

समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः।

त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः ॥

इत्यादिब्रह्मपुराणादिवचनैः समभागार्हतया मन्वादिभिरुक्तस्य पुत्रिकापुत्रस्य चतुर्थांश उक्तः, पञ्चमषष्ठांशार्हतयोक्तस्य क्षेत्रजस्य तृतीयांशश्चोक्तः । स पुत्रिकापुत्रस्यात्यन्तनिर्गुणत्वेऽसवर्णत्वे च क्षेत्रजस्य चात्यन्तसगुणत्वानुकूल्ययोर्व्यवस्थापनीयः । औरसाभावे दत्तकस्याखिलधनग्रहणार्थं पृथगारब्धं मनुना ( अ० ९. श्लो० १४१ )

उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः ।
स हरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रतः ॥

स्वगोत्रतः सम्प्राप्तः किमुतेति कैमुत्यार्थोऽपिशब्दः । जनकधनग्रहणं च तस्य प्रतिषिद्धम्—
तेनैव,( अ० ९ श्लो० १४२ )

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ इति ।

ददतः स्वसम्बन्धी पिण्डस्ततो व्यपैति । स्वधा पितृतृप्तिहेतुरिति पिण्डविशेषणम् । गोत्ररिक्थानुग इति हेतुगर्भम् । दत्तकमात्रविषयकमपि सत्यौरसे चतुर्थांशहरत्वप्रतिपादकं पृथगारब्धं वशिष्ठेन—

तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति ।

क्रीतादिसाधारणं तु कात्यायनीयं प्रागेव पठितम् । तत्र तृतीयांशहरा इति कल्पतरुलिखितः पाठो यदि साकरस्तर्हि दत्तकादीनामौरसापेक्षया सगुणत्वे तृतीयांशहरत्वमिति व्याख्येयः । मनुनैव क्षेत्रजस्यौरससमभागभागित्वमप्युक्तम्—( अ०९. )

यवीयान् ज्येष्ठभार्य्यायां पुत्रमुत्पादयेद्यदि ।
समस्तत्र विभागः स्यादितिधर्म्मो व्यवस्थितः ॥(१२०)
उपसर्ज्जनं प्रधानस्य धर्मतो नोपपद्यते ।
पिता प्रधानं प्रजने तस्माद्धर्मेण तं भजेत् ॥ (१२१)
धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा ।
सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥(१४६)
यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ ।
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः॥ (१६२)

यद्यप्यौरसप्रक्रमात्समभागभागित्वं क्षेत्रजस्य तन्निरूपितमेवोक्तमित्याभाति । तथापि वाक्यविरोधे प्रक्रमस्य बाध्यत्वाद्बीजिसमभागि

त्वपरं तदिति बोध्यम्। अत एवोत्तरवचने पितुर्बीजिनः प्राधान्यमुपन्यस्यति। "सोऽपत्यं भ्रातुरुत्पाद्य" इत्यनेनापि यस्य क्षेत्रजस्तदीयधनं तस्मै दद्यादिति भ्रातृस्थानीयत्वात्तस्य स्वसमभागितां प्रतिपादयति। एवमन्यान्यप्युच्चावचभागान् क्षेत्रजादीनां प्रतिपादयन्ति बृहस्पत्यादिवचनानि कथञ्चिद्व्यवस्थापनीयानि। तत्र—

बृहस्पतिः,

क्षेत्रजाद्याः सुताश्चान्ये पञ्चषट्समभागिनः।

हारीतः—

विभजिष्यमाण एकाविंशं कानीनाय दद्यात्। विंशं पौनर्भवाय एकोनविंशं द्व्यामुष्यायणाय अष्टादशं क्षेत्रजाय सप्तदशं पुत्रिकापुत्राय इतरानौरसाय पुत्राय दद्युः।

ब्रह्मपुराणे—

समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः।
त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः॥
कृत्रिमः पञ्चमं भागं षड्भागं गूढसम्भवः।
सप्तांशश्चापविद्धस्तु कानीनश्चाष्टमांशकः॥
नवभागं सहोढश्च क्रीतो दशममश्नुते।
पौनर्भवस्तु परतो द्वादश स्वयमागतः॥
त्रयोदशमभागं तु शौद्रो भुङ्क्ते पितुर्धनात्।
तद्गोत्रजो वा धर्मिष्ठो ब्रह्मचार्य्यथवा पुनः॥

अत्रौरसे सतीति सर्वत्र ज्ञेयम्। "पूर्वाभावे परः पर"इति वचनात्। ब्रह्मपुराणीयस्य समग्रेत्यादिप्रथमश्लोकस्य पूर्वमेव विषयव्यवस्थोक्ता। अन्येषामपि गुणतारतम्येन देशाचारानुसारेण वा यथायथं व्यवस्था द्रष्टव्या। षड्भागं=षष्ठं भागम्। नवभागं नवमं भागमित्यर्थः। अन्यथार्थासङ्गतेः प्रक्रमभङ्गप्रसङ्गाच्च। परतो=दशमात्परमेकादशम्। त्रयोदशममित्यार्षम्। शौद्रः=शूद्रापुत्रः। यदपि मनुना पुत्राणां षट्कद्वयमुक्त्वा पूर्वषट्कस्य दायादबान्धवत्वमुत्तरषट्कस्य चादायादबान्धवत्वमुक्तम्।

(अ० ९श्लो० १५९।१६०)

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा।
स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः॥ इति,

तदपि स्वपितृसपिण्डसमानोदकानां सन्निहितरिक्थहराभावे पु-

र्वषट्कस्य तद्रिक्थहरत्वमुत्तरषट्कस्य तु तन्नास्ति । पितृरिक्थहरत्वं तु सर्वेषामपि पूर्वपूर्वाभावे समानमेवेति तद्दायादादायादत्वविभागो नोपपद्यते । "पूर्वाभावे परः पर" इति वचनात् ।

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । ( अ० ९ श्लो० १६३)

इत्युक्त्वा—

न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः । ( अ० ९ श्लो० १८५)

इतिवचनस्य गौणपुत्राणामेव सर्वेषां पितृरिक्थहारित्वप्रतिपादनपरत्वाच्च । दायादशब्दस्य "दायादानपि दापयेत्" इत्यादौ पुत्रव्यतिरिक्तरिक्थहारिष्वेव प्रचुरप्रयोगाच्च । बान्धवत्वं सपिण्डसमानगोत्रत्वाभ्यामुदकदानादिकार्य्यकरत्वं षट्कद्वयस्यापि समानमेवेत्येतदर्थकम् । यत्तु हारीतवचनम्—

साध्व्यां स्वयमुत्पादितः क्षेत्रजः पौनर्भवः कानीनः पुत्रिकापुत्रो गूढोत्पन्नो गूढ इति बन्धुदायादाः दत्तः क्रीतोऽपविद्धः सहोढः स्वयमुपगतः सहसादृष्टश्चेत्यबन्धुदायादा इति ।

साध्व्यां स्वयमुत्पादित औरस इत्यर्थः । सहसा दृष्टो यो मातापित्रादिविहीनोऽकस्माद्दृष्टः केनचित् परितोष्य मम त्वं पुत्रो भवेत्युक्तस्तथेति प्रतिपद्यते । कृत्रिम इति यावत् । तत्र मनुविरोधः स्पष्टः । तेन कानीनपौनर्भवयोरबन्धुदायादमध्ये परिगणनात् । हारीतेन बन्धुदायादमध्ये । दत्तकृत्रिमापविद्धेषु च व्यत्ययात् । तस्मादेवं सवर्णादिभेदेन देशाचारभेदेन वा विरोधः परिहरणीयः ।

बौधायनस्तु मन्वनुसारेणैवाह—

औरसं पुत्रिकापुत्रं क्षेत्रजं दत्तकृत्रिमौ ।
गूढजं वापविद्धं च रिक्थभाजः प्रचक्षते ॥
कानीनं च सहोढं च क्रीतं पौनर्भवं तथा ।
स्वयन्दत्तं निषादं च गोत्रभाजः प्रचक्षते ॥ इति ।

औरसपुत्रिकापुत्रक्षेत्रजकानीनगूढोत्पन्नापविद्धसहोढपौनर्भवदत्तकस्वयमुपगतकृतकक्रीतानभिधायाह—

देवलः,

एते द्वादश पुत्रास्तु सन्तत्यर्थमुदाहृताः ।
आत्मजाः परजाश्चैव लब्धा यादृच्छिकास्तथा ॥
तेषां षड् बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट् ।
विशेषश्चापि पुत्राणामानुपूर्व्याद्विशिष्यते ॥
सर्वे चानौरसस्यैते पुत्रा दायहराः स्मृताः

औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते ॥
तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः ।
हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः ॥

आत्मजत्वादिकं परिगणितेषु यथायथं स्पष्टमेव। अनौरसस्य=न विद्यते औरसो यस्य तस्येति बहुव्रीहिः।

नारदोऽपि—( व्य० प० १३ )

औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एवच ।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च । ( ४५ )
पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा ॥
स्वयञ्चोपगतः पुत्रा द्वादशैते प्रकीर्त्तिताः । ( ४६ )
एषां षड् बन्धुदायादाः षडदायादबान्धवाः ॥
पूर्वः पूर्वः स्मृतः श्रेष्ठो जघन्यो यो य उत्तरः ॥ (४७)
क्रमात्ते ते प्रवर्त्तन्ते मृते पितरि तद्धने ।
ज्यायसो ज्यायसोऽभावे जघन्यस्तदवाप्नुयात् ॥ ( ४८ )

मनुः—(अ०९श्लो०१८४ )

श्रेयसः श्रेयसोऽभावे पापीयान् रिक्थमर्हति ।
बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः ॥

बृहस्पतिः—

दत्तोऽपविद्धः क्रीतश्च कृतः शौद्रस्तथैव च ।
जातिशुद्धाः कर्मशुद्धा मध्यमास्ते सुताः स्मृताः ॥
क्षेत्रजो गर्हितः सद्भिस्तथा पौनर्भवः सुतः ।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥

हारीतः—

शूद्रापुत्राः स्वयंदत्ता ये चैते क्रीतकाः सुताः ।
सर्वे ते गोत्रिणः प्रोक्ताः काण्डपृष्ठा न संशयः ॥
स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः ।

यमः—

आपद्दत्तो ह्युपगतो यश्च स्याद्वैष्णवीसुतः ।
सर्वे ते मनुना प्रोक्ताः काण्डपृष्ठास्त्रयस्तथा ॥
कुलं काण्डमिति ख्यातं यस्मात् पूर्वाणि ते जहुः ।
तत्र ज्येष्ठतरो यः स्यात्तं वै काण्डं विनिर्द्दिशेत् ॥
स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।

तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः ॥

वैष्णवी=शूद्रेति कल्पतरौ । उक्तोपसंहारमुखेन नियममाहात्र—

योगीश्वरः, ( अ० २ श्लो० १३३ )

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ।

अयं=पूर्वाभावे परः परो धनभागित्युक्तो यो मया विधिः स सजातीयेपूत्पादकसजातीयेष्वेव क्षेत्रजादिषु ज्ञेयो न विजातीयेषु । तत्र कानीनगूढोत्पन्नसहोढपौनर्भवाणां सवर्णत्वं जनकद्वारेण न स्वरूपेण । तेषु वर्णजातिलक्षणाभावात् । वर्णजातिविवेकमभिधाय "विन्नास्वेष विधिः स्मृत" इति योगीश्वरेणैवाभिधानात् । अनुलोमजानां मूर्धावसिक्तादीनामौरसेष्वेवान्तर्भावात् "चतुस्त्रिद्व्येकभागा" इत्यादिना भागक्लृप्तिरुक्ता । तेन तेषामप्यभावे क्षेत्रजादयः पित्र्यऋक्थहारिणः । शूद्रापुत्रस्य त्वौरसत्वेऽपि न कृत्स्नपित्र्यधनभागित्वमन्याभावेऽप्यस्ति । यथाह—

मनुः, ( अ० ९ श्लो० १५४ )

यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽपि वा भवेत् ।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः ॥

यदि सत्पुत्रो विद्यमानसवर्णापुत्रो यदि वाऽपुत्रोऽविद्यमानसवर्णापुत्रो भवेत्तस्मिन्मृते क्षेत्रजादिः पुत्रोऽन्यो वा सपिण्डो रिक्थहारी शूद्रापुत्राय दशमांशादधिकं न दद्यात् । अस्मादेव वचनात्सवर्णापुत्राभावे क्षत्रियावैश्यापुत्रयोः सकलविप्रपितृधनग्रहणं गम्यते । यत्तु प्राक् चतुस्त्रिद्व्येकभागभागित्वं योगीश्वरादिभिरुक्तम् । तदतिसद्वृत्तशूद्रापुत्रविषयं वेदितव्यमन्यथा मानवविरोधात् । "ब्राह्मणक्षत्रियविशां" इति मनुवचनं तु प्रागेव व्याख्यातम् ।

शूद्रधनविभागे विशेषमाह—

याज्ञवल्क्यः, ( अ० २ )

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ( १३३ )
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम् ॥
अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते ॥ इति । ( १३४ )

शूद्रेण दास्यामुत्पन्नः पुत्रः कामतः पितुरिच्छया भागभाग्भवेत् । पितुरूर्ध्वं तु भ्रातरः परिणीतशूद्रापुत्रास्तं दासीपुत्रं स्वभागार्द्धभागिनं कुर्युः । अत्र बहुवचनात्सर्वे स्वस्वभागादर्द्धं दद्युरिति न भ्रमितव्यम् । तथा सति बहुभ्रातृकस्य ततोऽप्यतिबहुधनत्वापत्तेरव्यवस्था स्यात् । किन्त्वेकपुत्रस्य यावान् भागस्तदर्द्धभागं शूद्रापुत्रा लभन्ते । व्यक्त्यभिप्रायेण जात्यभिप्रायेण च बहुवचनैकवचने । परिणीतशूद्रापुत्रतत्पुत्राद्य-

भावे तु दासीपुत्रोऽपि कृत्स्नं शूद्रस्य पितुर्द्धनं लभत इत्यर्थाद्गम्यते। शूद्रग्रहणाद् द्विजातिभ्यो दास्यामुत्पन्नः पित्रिच्छयाप्यंशमर्द्धभागं वा तदूर्ध्वं न लभते कृत्स्नंतद्धनग्रहणं तु दूरापास्तमेव। किन्त्वप्रतिकूलश्चे· ज्जीवनमात्रमिति प्रतीयते।

गौणमुख्यपुत्राभावे मृतपतितपरिव्राजकादिधनग्रहणाधिकारिण उच्यन्ते। तत्र—

योगीश्वरः, (अ० २ श्लो० १३५। १३६)

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।
स्वर्य्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥ इति।

अपुत्रस्य पूर्वोक्तद्वादशविधपुत्ररहितस्य स्वर्य्यातस्य मृतस्य पत्न्यादयः पूर्वपूर्वाभावे पाठक्रमेणोत्तरोत्तरं धनं गृह्णीयुरित्यर्थः। अयं विधिः सर्वे· षु मूर्द्धावसिक्तादिसूताद्यनुलोमजप्रतिलोमजेषु वर्णेषु च ब्राह्मणादिषु वेदितव्य इत्यर्थः। तत्र प्रथमं पत्नी धनहारिणी। पत्नीशब्देन च विवाह· संस्कृता। "पत्युर्नो यज्ञसंयोगे" (अ० ४ पा० १ सू०३३) इति पाणिनिसूत्रा· त्। जात्यभिप्रायेण चैकवचनम्। तेन बह्वयश्चेत् पत्न्य एकस्य तदा सर्वाः सजातीयविजातीयक्रमेण यथायथं भर्त्तृधनं विभज्य गृह्णीयुः। पत्नीशब्दादासुरादिविवाहोढाया धनग्रहणं धर्म्यविवाहोढपत्न्यन्तरस· द्भावे नास्तीति गम्यते। तथा च—

स्मृतिः,

क्रयक्रीता तु या नारी न सा पत्नी विधीयते।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः॥ इति।

अत्र च दासीत्वकथनमदृष्टार्थकर्मसु सहाधिकाराभावाभिप्रायेण। न तु दासीवद्गम्यत्वाभिप्रायेण। विवाहितात्वेन परदारत्वबाधात्। अत एव मनुर्धर्म्याधर्म्यविवाहाननुक्रम्य सन्तानगतावेव गुणदोषावाह—

अनिन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा।
निन्दितैर्निन्दिता नृणां तस्मान्निन्द्यान्विवर्जयेत्॥ इति। (३।४२)

प्रजाया निन्दितत्वमपि सद्वृत्तस्वभावत्वाभावो न तु वर्णजात्यभावः। परिणेतुः परिणीतायामुत्पन्नत्वमात्रस्य वर्णजातिव्यञ्जकत्वात्। "विन्ना· स्वेष विधिः स्मृत" इत्युक्तेः। अत एव "न सा दैवे न सा पित्र्ये" इति सहाधिकार एव प्रतिषिद्धः। तथा च पित्र्यादिकर्म्मार्हतापि पतिदा· यहरत्वप्रयोजिकेति पत्नीपदेन ज्ञापितम्। अत एव श्रौतस्मार्त्तसहाधि·

कारिणी पतिव्रतैव भर्तृधनभागिनीत्याह—

प्रजापतिः,

पूर्वं मृता त्वग्निहोत्रं मृते भर्त्तरि तद्धनम् ।
लभेत पतिव्रता नारी धर्म एष सनातनः ॥

वृद्धमनुरपि—

अपुत्रा शयनं(१) भर्त्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥ इति ।

अत्रोत्तरार्द्धोक्तपाठक्रमस्यार्थक्रमेण बाधात् प्रथमं कृत्स्नमंशं लभेत पश्चात् पिण्डं दद्यादिति स्मृतिचन्द्रिकाकारेणोक्तम् । तद्धेयम् । क्रमे तात्पर्य्याभावात् । उभयाधिकारप्रतिपादनमात्रपरत्वाद्वचनस्य । अन्यथा यावदंशलाभं भर्त्रन्त्येष्टिविलम्बोऽपि प्रसज्येत । स चानेकस्मृतिनिषिद्धः । अदृष्टकल्पनापात्तिश्च। पत्न्येवेत्येवकारेणापुत्रस्यान्त्यकर्मण्यप्यपि "अपुत्रा पुत्रवत् पत्नी" इत्यादिवचनाद्भ्रात्रादिसत्त्वेऽपि सैवाधिकारिणीति दर्शितम् । अयमेवार्थः प्रपञ्चितः—

प्रजापतिना,

जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरम् ।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम् ॥
पितृव्यगुरुदौहित्रान् भर्तुः स्वस्रीयमातुलान् ।
पूजयेत्कव्यपूर्त्ताभ्यां वृद्धांश्चाप्यतिथीन् स्त्रियः ॥

कुप्यं=त्रपुसीसादि । कव्यम्=पित्रर्थं सकङ्कलिपतमन्नादि । पूर्त्तं=खातादिकर्माङ्गदक्षिणादि । एतदुक्तं भवति । स्थावरेणापि सहितं सर्वं भर्तृधनमधिगत्य धनसाध्यं स्त्र्यधिकारिकं पत्युरात्मनश्च श्रेयःसाधनकर्म पतिपक्षीयपुरस्कारेण पत्न्या कार्य्यमिति । एवंवर्त्तमानाया ये पीड़ाकारिणस्ते राज्ञा चौरवद्दण्ड्या इत्याह—

स एव,

सपिण्डा बान्धवा ये तु तस्याः स्युः परिपन्थिनः ।
हिंस्युर्धनानि तान् राजा चौरदण्डेन शासयेत् ॥

स्मृतिचन्द्रिकायां बार्हस्पत्यत्वेन पत्न्याः स्थावरग्रहणनिषेधकम्—

यद्विभक्ते धनं किञ्चिदाध्यादि विविधं स्मृतम । (२)

---

(१) शयनं पालयन्ती=तच्छयनसाधनयोनिरक्षणं सम्यक्कुर्वतीत्यर्थः । अत एवाह-व्रते इति । ब्रह्मचर्य्ये इत्यर्थः ।

(२) विधिसम्भवम् इत्यपि पाठः ।

तत् जाया स्थावरं मुक्त्वा लभते मृतभर्तृका ॥

इति वचनं लिखितम्। "जङ्गमं स्थावरं" इत्यादि प्रजापतिवचनविरोधपरिहाराय वृत्तविहीनपत्नीपरत्वमविभक्तपत्यंशविषयत्वं वान्योक्तम्—

वृत्तस्थापि कृतेऽप्यंशे न स्त्री स्थावरमर्हति।

इति तच्छेषविरोधेनापास्य दुहितृरहितपत्नीविषयत्वेन व्यवस्थापितं च। तत्र मदनरत्नकारेण मिताक्षराकल्पतरुहलायुधादिसर्वग्रन्थान्तरेष्वलिखनान्निर्मूलत्वमस्य। "जङ्गमं स्थावरं" इति प्राजापत्यस्य च सर्वत्र लिखनात्समूलत्वमिति दूषणमुक्त्वा तदुक्तव्यवस्थायाश्च स्वोत्प्रेक्षामात्रकल्पितत्वेनायुक्तत्वमभिधाय समूलत्वेऽपि स्थावरादिसमग्रधनग्रहणं ब्राह्मादिविवाहोढाविषयम्। तद्वचनेषु पत्नीशब्दप्रयोगात्। स्थावरग्रहणप्रतिषेधकबृहस्पतिवचनं तु जायास्त्रीशब्दमात्रप्रयोगादासुरादिविवाहोढाविषयमिति स्वयं व्यवस्था कृता। (सा तु) आसुरादिविवाहोढायाः पत्नीशब्देनाग्रहणाज्जायादिशब्दोपेतवचनानामपि तदेकमूलकतया तत्परत्वात् स्मृतिचन्द्रिकायामेव निरस्ता। यत्तु तदुक्तव्यवस्थायामौत्प्रेक्षिकत्वमुक्तम्, तदपि न। दुहितृसत्त्वे तत्सन्तानद्वारेण स्थावरस्योपभोगभनस्वाम्युपकारयोः सम्भवाद्दुहितृमत्या स्थावरमपि ग्राह्यं तद्रहितायास्तु तदभावान्न तद्ग्रहणमिति तत्रापि बीजसम्भवात्। अत एव पितुरपि स्थावरे स्वार्जितेऽपि पुत्रानुमतिमन्तरेणानधिकारः प्रागुक्तः।

यत्तु गृहीतधनायाः पत्न्यास्तद्धनेन जीवनमात्रं, दानाधीकरणविक्रयेषु तु नाधिकार इति—

मृते भर्त्तरि भर्त्रंशं लभेत कुलपालिका।
यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये ॥

इति कात्यायनवचनात्प्रतीयते। तदपि दृष्टार्थनटनर्त्तकादिदानास्वातन्त्र्यपरम्। अदृष्टार्थदाने तदुपयोगिनोराधीकरणविक्रययोश्च तेनैवाधिकाराभिधानात्।

व्रतोपवासनिरता ब्रह्मचर्य्ये व्यवस्थिता।
दमदानरता नित्यमपुत्रापि दिवं व्रजेत् ॥ इति।

दिवं व्रजेदित्यनेन काम्येऽपि दानादौ तस्या अधिकारः प्रतीयते किमुत नित्ये नैमित्तिके च। "जङ्गमं स्थावरं हेम" इत्यादिपूर्व्वोदाहृतप्रजापतिवचनाच्च। तत्रापि पूर्तग्रहणात्काम्येष्वप्यधिकार आयातीति स्मृतिचन्द्रिकाकारादयः। यच्चापरमपि कात्यायनवचनमेव—

अपुत्रा शयनं भर्त्तुः पालयन्ती गुरौ स्थिता।

भुञ्जीतामरणात्क्षान्ता दायादा ऊर्द्धमाप्नुयुः ॥ इति,

तत्र स्मृतिचन्द्रिकाकार आह। क्षान्ता दायादकारितधनविनियोगप्रतिबन्धं सहमाना सत्यामरणाद्भुञ्जीतेत्यर्थः। इदं च रक्षणभरणाद्यसमर्थेषु कार्य्यान्तरव्यग्रेषु श्वशुरादिषु पत्न्या यत् स्वयमेव स्वजीवनार्थमुपात्तमविभक्तं तद्विषयम्। विभक्तद्रव्यविषयत्वे मन्वादिपरिनिष्ठितार्थबाधापत्तेरिति।

पौरस्त्यास्तु गुरौ श्वशुरादिसमीपे स्थिता भर्त्तुर्धनं भुञ्जीतैव। न तु स्त्रीधनवद्यथेच्छं दानाधानविक्रयादि कुर्वीत। तस्या ऊर्द्धं दायादा दुहित्रादयस्तद्धनाधिकारिणो गृह्णीयुर्न तु ज्ञातयः। तेषां दुहित्रादिभ्यो जघन्यत्वात् तद्बाधकत्वानुपपत्तेः। पत्नी हि तेषां बाधिका। तदधिकारप्रागभावप्रध्वंसयोरविशेषाद्बाधकाभावत्वस्य तद्बाधानुपपत्तेः। नापि स्त्रीधनाधिकारिणो गृह्णीयुः। कात्यायनेनैव स्त्रीधनाधिकारिणां वचनान्तरैरुक्तत्वात् पौनरुक्त्यापत्तेः। अतः "पत्नी दुहितरश्च" इत्यादिना ये पूर्वपूर्वस्याभावे परभूता अपुत्रासंसृष्टिविभक्तमृतधनाधिकारिणो निर्दिष्टास्ते यथा पत्न्यधिकारप्रागभावे गृह्णीयुस्तथा पत्न्या जाताधिकारायाः प्रध्वंसेऽपि भोगावशिष्टं गृह्णीयुः। तदानीं दुहित्रादीनामेवान्यापेक्षया मृतोपकारकत्वात्। दानधर्मेषु महाभारतवचनमप्येतदुपोद्बलकम्।

स्त्रीणां स्वपतिदायस्तु उपभोगफलः स्मृतः।
नापहारं स्त्रियः कुर्य्युः पतिवित्तात्कथञ्चन ॥ इति।

उपभोगोऽपि न सूक्ष्मवस्त्रपरिधानादिना। किन्तु पत्युरुपकाराय देहधारणमात्रोपयोग्युपभोगानुज्ञानम्। एवं च बृहस्पतिना "पितृव्यगुरुदौहित्रान्" इत्यादिना पितृव्यपदेन भर्तृसपिण्डोपलक्षणाद्दौहित्रपदेन तद्दुहितृसन्तानोपलक्षणान्मातुलस्वस्रीयपदाभ्यां तन्मातृकुलतत्स्वसृसन्तानोपलक्षणात्तेभ्य एवार्थानुरूपं भर्त्तुः श्राद्धाद्यौर्द्ध्वदेहिकोपकारकं दद्यात्। न तु स्वपितृकुलसम्बन्धिभ्यः। तदनुमत्या तु तेभ्योऽपि। तथा च—

नारदः, (व्य० प० १३ श्लो० २८।२९)

मृते भर्तर्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः।
विनियोगेषु रक्षासु भरणेषु स ईश्वरः ॥
परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये।
तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥

इति सम्मुखमेव वचनार्थमादाय नास्त्येव स्त्रिया भर्तृरिक्थे दानविक्रयाद्यधिकार इत्याहुः।

तत्रेदं वाच्यम्। किं तस्य तथा कृतेऽपि दानादौ तत्स्वरूपानिष्पत्तिरेव। न तावदेवं युक्तम्। मन्वादिवचनैः सकलभर्तृधनग्रहणे तस्या उक्ते सति तस्यास्तत्र स्वत्वे दानादिस्वरूपानिष्पत्तेर्बाधितत्वात्। अत एव जीमूतवाहनेनैव "स्थावरस्य समस्तस्य" "विभक्ता वाऽविभक्ता वा" "स्थावरं द्विपदं चैव" इत्यादीनि स्थावरविषयाणि दानादिनिषेधवचनान्युपन्यस्याधर्मभागिताज्ञापनार्थमेतानि दुर्वृत्तं पुरुषं प्रति। कुटुम्बदुःखदानार्थमेव दानविक्रयादिप्रवृत्तं प्रति प्रतिषेधकानि न तु दानादिस्वरूपानिष्पत्तिप्रतिपादकानि। यथेष्टविनियोगार्हत्वलक्षणस्वत्वस्य द्रव्यान्तर इव स्थावरेऽप्यविशेषाद्वचनशतेनापि वस्तुनोऽन्यथाकरणाशक्त्या तत्प्रतिपादनानुपपत्तेरिति निरूपितम्। तदुक्तरीत्यात्रापि दुर्वृत्ततया दायाददुःखदानार्थमेव भर्तृरिक्थदानादिप्रवृत्ताया अस्तु प्रतिषेधातिक्रमादधर्मः। धर्मार्थं दानप्रवृत्तायाः स्वजीवनाद्यर्थं विक्रयाधाने कुर्वत्याश्च नास्त्येवाधर्मोऽपि। नच भुञ्जीतैवेति नियमाद्दायादा ऊर्ध्वमाप्नुयुरित्यभिधानाच्च दानाद्यनधिकार एव तस्या अविभक्तधन इव तत्रेति वाच्यम्। साधारणस्वत्वाश्रयाविभक्तधनेनासाधारणस्वत्वाश्रयस्यास्य वैषम्यात्। नच स्वभोगस्य प्राप्तत्वेनाविधेयत्वाद्दानादिपरिसङ्ख्यार्थ एव विधिस्तथा चानधिकारस्तत्रागत एवेति वाच्यम्। वस्त्वन्यथाकरणाशक्तेर्नियमस्य वृथादानादिना द्रव्यनाशनिवृत्त्यर्थतयैवोपपत्तेरवश्यवाच्यत्वात्। अन्यथाऽनधिकारे "दमदानरता" "पूजयेत्कव्यपूर्त्ताभ्यां" इत्यनेन दानविधिना विरोधोऽपरिहार्य्यः। यच्च दायदाः पत्न्यनन्तराधिकारिणः "पत्नी दुहितर" इत्यत्र निर्दिष्टास्ते गृह्णीयुः, प्रागभावप्रध्वंसयोः प्रतिबन्धकपत्न्यभावत्वस्याविशेषात्तदधिकारोद्भवादित्युक्तम्। तदतिस्थवीयः। दायादपदेन स्त्रीधनाधिकारिग्रहणे यथा वचनान्तरोक्तत्वात् पौनरुक्त्यं, तथा तेषामपि कात्यायनेन वचनान्तरोक्तत्वात्पौनरुक्त्याऽविशेषात्। वस्तुतस्तु जातस्वत्वे स्वामिनि मृते तत्प्रत्यासन्नानामेव तद्धनग्रहणमुचितम्। पत्न्यादिशब्दानां सम्बन्धिशब्दत्वेन द्रव्यस्वामित्वे पत्न्या उपजाते पूर्वस्वामिदुहित्रादीनां कः प्रसङ्गः। तेन यद्यपि पूर्वाभावः प्रागभावः प्रध्वंसश्चात्यन्ताभावश्च प्रतिबन्धकसंसर्गाभावतया तुल्यस्तथापि यो द्रव्यस्वामी तस्मिन् मृते तत्सम्बन्धि पत्न्यादिकमपुत्रस्य तस्य धनं लभेतेत्येव वाक्यार्थः। अन्यथा दुहित्रादिभिरपुत्रपितृधने लब्धे तन्मरणे तत्सन्तत्यतिलङ्घनेन तद्धनं पूर्वस्वामिनः पितुर्ये पित्रादयस्त एव लभेरन्निति महत्यव्यवस्था प्रसज्येत।

तस्माद्भर्तृरिक्थं पत्न्या लब्धं तस्यां मृतायां तद्भोगावशिष्टं "मातुर्दुहितर" इत्यादिवचनाद् दुहित्रादिग्राह्यत्वेन प्रसक्तं "दायादा ऊर्द्धमाप्नुयुः" इत्यनेनापोद्यते। अयं च वचनार्थः। दायादा इत्यत्र कस्येत्यपेक्षायां शयनान्वितं भर्त्तुरित्येवोपस्थितत्वादनुषज्यते। तथा चैवं वचनव्यक्तिः। तस्या ऊर्ध्वं भर्तुर्दायादा अविभक्ततद्धनाधिकारिणो विभक्तभ्रातृधनमपि तत्पत्नीभोग्यावशिष्टं गृह्णीयुर्न पत्नीरिक्थहरा दुहित्रादय इति। एवं चापूर्वार्थत्वाच्चतुर्थचरणस्यार्थवत्त्वं भवति। अन्यमते वचनान्तरोक्तार्थानुवादमात्रमनर्थकं स्यात्। तस्माददृष्टार्थे दाने दृष्टादृष्टावश्यककार्यार्थमाधौ विक्रये चास्त्येव पत्न्याः सकलभर्त्तृधनविषयोऽधिकारः। नियमस्तु नटनर्त्तकादिदानानावश्यकाधिविक्रयनिवृत्त्यर्थ इति सिद्धम्। अत एव क्षान्तेत्युक्तम्। द्रव्यप्राप्तितृप्ता वृथाद्रव्यव्ययकारिणी न भवेदित्यर्थः। दानधर्मस्थं महाभारतवचनं तु सुतरामस्मदुक्तमेवार्थमुपोद्बलयति। तथा हि स्त्रीणां स्वपतिदायः=स्वभर्त्तृरिक्थम् उपभोगफलः=उपभोगो धर्मप्रत्यासन्नो भोगो न त्वसद्भोगः फलं प्रयोजनं यस्य तादृशः स्मृत उक्तो मन्वादिभिः। उत्तरार्द्धे तदेव व्यनक्ति—स्त्रियः पतिवित्तादपहारं=वृथाव्ययं न कुर्य्युः। कथञ्चनेत्यनेनापहारस्य सर्वथैवाश्रेयस्करतामाह। अपहारो हि चौर्य्यम्। नटनर्त्तकादौ वृथादानं सूक्ष्मवस्त्रादिपरिधित्सा मिष्टभक्ष्यादिबुभुक्षेत्येवमाद्यपि संयताया अनौचित्याच्चौर्य्यतुल्यमित्यपहारशब्दो गौणः। धर्माद्यर्थदानादिकं तु न तथेति नापहारशब्देन बोधयितुं शक्यते। तस्मात्सर्वं सुस्थम्।

पत्न्या अपुत्रविभक्तासंसृष्टपतिस्वापतेयग्रहणे(१) प्रथमाधिकारप्रतिपादकान्यपराण्यपि भूयांसि स्मृतिवचनानि।

तत्र बृहस्पतिः—

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः।
शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा॥(२)
यस्य नोपरता भार्य्या देहार्द्धं तस्य जीवति।
जीवत्यर्द्धशरीरेऽर्थं कथमन्यः समाप्नुयात्॥
(३)सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः।

---

(१) स्वापतेयम्=धनम्।

(२) पुण्यापुण्येति। एकैककृते पुण्यापुण्ये विहितनिषिद्धरूपे कर्मणी तयोः फले स्वर्गनरकरूपे समा भोक्त्रीत्वेनेत्यर्थः।

(३) सकुल्यैरित्यादितृतीयात्रयं सप्तम्यर्थे। तेन सकुल्येषु पितृमातृसनाभिषु विद्यमानेष्वित्यर्थः।

अपुत्रस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥ इति ।

योगीश्वरोऽपि पूर्वाभावे पराधिकारं वदन् सर्वप्राथम्येन पत्न्या एवाधिकारमभिधत्ते ।

विष्णुरपि—(१७।४-१३)

अपुत्रधनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामि तदभावे मातृगामि, तदभावे भ्रातृगामि, तदभावे भ्रातृपुत्रगामि, तदभावे बन्धुगामि तदभावे सकुल्यगामि, तदभावे शिष्यगामि, तदभावे सहाध्यायिगामि, तदभावे ब्राह्मणधनवर्ज्जं राजगामीति ।

बन्धुरत्र सपिण्डः । शकुल्यः सगोत्रः । बन्धुपदेन वक्ष्यमाणपितृबन्ध्वादिग्रहणे योगीश्वरोक्तक्रमविरोधापत्तेः ।

कात्यायनोऽपि—

पत्नी पत्युर्द्धनहरी या स्यादव्यभिचारिणी ।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥

स्मृत्यन्तरमपि—

अपुत्रस्याथ कुलजा पत्नी दुहितरोऽपि वा ।
तदभावे पिता माता भ्राता पुत्राश्च कीर्त्तिताः ॥इति ।

एतैर्वचनैः सर्वतः पूर्वं पत्नी पतिधनभागिनीति प्रतिपादितम् ।

एतद्विरुद्धान्यपि वचनानि लक्ष्यन्ते । तथा च—

नारदः, ( व्य० प० १३ श्लो० २५ । २६ )

भ्रातृणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा ।
विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना ॥
भरणं चास्य कुर्व्वीरन् स्त्रीणामाजीवनक्षयात् ।
रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्द्युरितरासु तु ॥

इति पत्नीसद्भावेऽपि भ्रातॄणां धनग्रहणं भरणं च तत्पत्नीनामाह ।

मनुरपि—( अ० ९, श्लो० १८५ उ० )

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ।

इति पितृभ्रात्रोर्विकल्पेनापुत्रधनग्रहणाधिकारं वदति न तु पत्न्याः ।

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ।
मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥ (मनु०अ०९श्लो०२१७)

इति च स्मृतिर्मातृपितामह्योरपुत्रधनाधिकारमभिदधाति ।

शङ्खलिखितपैठीनसयोऽपि—

अपुत्रस्य स्वर्य्यातस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां

ज्येष्ठा वा पत्नी ।

इति भ्रातुः पित्रोश्चाभावे पत्न्यधिकारं कथयन्ति ।

देवलोऽपि—

ततो दायमपुत्रस्य विभजेरन् सहोदराः ।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा ॥
सवर्णा भ्रातरो माता भार्य्या चेति यथाक्रमम् ।

इति सुर्वपूर्व्वभावेन योगीश्वरेणाभिहितायाः पत्न्या भ्रात्राद्यभावेऽधिकारमाचष्टे । भ्रातृशब्देनात्र भिन्नोदराः । सहोदराणां पृथगुपादानात् ।

कात्यायनोऽपि—

विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् ।
भ्राता वा जननी वाथ माता वा तत्पितुः क्रमात् ॥

इति पित्रादिषु ग्राहकेषु पत्न्या निर्द्देशमपि न करोति ।

एतेषामन्योन्यविरुद्धानां वचनानां धारेश्वर इत्थं व्यवस्थामाह । विभक्तासंसृष्टभ्रातुरपुत्रस्य पत्नी यदि नियोगमङ्गीकुरुते तदैव पतिधनं लभते । अनियोगार्थिन्यां तु तस्यामविभक्तसंसृष्टपत्नीवद्भरणमात्रमेव । नियोगद्वारैवापुत्रपत्न्याः पतिस्वापतेयस्वामित्वम् । अत्र च बीजमनेकस्मृतिष्वपत्यद्वारैव तस्या धनसम्बन्धबोधनम् । तथा च—

गौतमः,

पिण्डगोत्रर्षिसम्बद्धा रिक्थं भजेरन् स्त्री वानपत्यस्य बीजं वा लिप्सेतेति ।

अनपत्यस्य रिक्थं पिण्डगोत्रर्षिसम्बद्धा भजेरन् तस्य स्त्री वा रिक्थं भजेत् । यदि बीजं लिप्सेत । वाशब्दो यदिशब्दार्थः । अन्यथा रिक्थग्रहणबीजलिप्सयोरतुल्यत्वेन विकल्पार्थत्वानुपपत्तेः ।

तथा मनुरपि—( अ० ९ श्लो० १४६ )

धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा ।
सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥

इति विभक्तधनसम्बन्धमप्यपत्यद्वारेणैव पत्न्या दर्शयति । तथा विभागाभावेऽपि—( मनु० अ० ९ श्लो० १२० )

कनीयान् ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि ।
समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः ॥

इति वदन्नपत्यद्वारा धनसम्बन्धोऽस्तीत्याह । तेनान्वयव्यतिरे-

काभ्यामपत्यद्वारक एव पत्न्या धनसम्बन्धो नान्यथेति सिद्धम् ।

वसिष्ठोऽपि—

रिक्थलोभान्नास्ति नियोगः ।

इति रिक्थलोभप्रयुक्तं नियोगं प्रनिषेधन्नङ्गीकृतनियोगाया एव धनसम्बन्धो नेतरस्या इति स्पष्टमेवाचष्ट । तथा च "भ्रातॄणामप्रजा" इत्यादीनि नारदादिवचनान्यनियोगार्थिनीविषयाणि पर्य्यवस्यन्ति ।

अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः ।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ (अ०२श्लो०१४२)

इति योगीश्वरोऽप्यपुत्राणामन्धादियोषितां भरणं भाषमाणः पुत्रस्यैव धनसम्बन्धप्राधान्यात्तत्कृत एव तत्स्त्रीणां धनसम्बन्ध इति सूचयन्न्यायसाम्यात् तत्सर्वत्रापत्यमूलकमेव स्त्रीणां रिक्थग्रहणं ज्ञापयति ।

यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये ।
अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाजनाः ॥

इति स्मृतिः पुरुषाणामपि पुत्रादीनां यज्ञानधिकृतानां रिक्थानधिकारं वदन्ती दण्डापूपन्यायेन सुतरामभर्तृकाणां तदनाधिकारिणीनां धनसम्बन्धं निरस्यति ।

तथा स्मृत्यन्तरमपि—

यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत् ।
स्थानेषु धर्मयुक्तेषु न स्त्रीमूर्खविधर्मिषु ॥

इति स्त्र्यादिषु धनविनियोगमपि प्रतिषेधत्साक्षात्तस्या एव कृत्स्नधनग्रहणं सुदूरं दूषयतीति ।

तदिदं विज्ञानेश्वरादयो नानुमन्यन्ते । "पत्नी दुहितर" इत्यादिषु साक्षान्नियोगानुपादानात् प्रस्तावाभावाच्च । किञ्च नियोग एव पत्न्या रिक्थसम्बन्धप्रयोजकस्तदुत्पन्नमपत्यं वा ? । प्रथमेऽनुत्पादितपुत्राया अपि स्वीकृतनियोगाया धनाधिकारः स्यान्नियोगोत्पन्नपुत्रस्य च न स्यात् नियोगमात्रेणैव भर्त्तृधनस्वाम्यात् । द्वितीये वचनान्तरैरेवापत्यस्य धनसम्बन्धसिद्धेः पत्नीति वचनमनर्थकम् ।

अथ स्त्रीणां पतिमात्रद्वारको धनसम्बन्धो न प्रकारान्तरेण । जीवति पत्यौ तद्द्वारको मृते त्वपत्यद्वारक इति बोधनार्थं नियोगार्थिपत्नीपरं पत्नीति वचनमिति मतम् । तदप्यसत् । "अध्यग्न्यध्यावहनिकं" इत्यादिवक्ष्यमाणवचनैरन्यथापि तासां धनसम्बन्धबोधनात् । भर्त्तृधने द्वचैव सम्बन्धो नियम्यत इति चेत् । तर्हि, जीवति पत्यौ

तद्धनसम्बन्धस्य "पाणिग्रहणाद्धि सहत्वं" इत्यादिगौतमवचनेनैव सि-द्धेर्मृते तु तस्मिन्नियोगनिमित्तस्तद्धनसम्बन्ध उच्यमानः क्षेत्रजपुत्रस्यै-वोक्तो भवति सोऽपि प्रागुक्त इत्यपुत्रप्रकरणे पत्नीत्यनारम्भ्यमेव ।

यच्च गौतमवचनं "बीजं वा लिप्सेत" इति यदि बीजं लिप्सेतेत्यर्थक-तया नियोगद्वारक एव धनसम्बन्धोऽपुत्रपत्न्या इत्यत्र प्रमाणमित्युक्तम् । तदप्ययुक्तम् । वाशब्दस्य पक्षान्तरवाचित्वेन यद्यर्थाप्रतीतेः । धनग्रहण-बीजलिप्सयोरतुल्यार्थतया विकल्पार्थकत्वासम्भवे निपातानामनेका-र्थत्वात्प्रकृतान्वयोपयोगी यद्यर्थ एव कल्प्यत इति चेत्, न । बीजं वा लिप्सेत संयता वा भवेदिति प्रासङ्गिकधर्मान्तरोपदेशरूपतया विक-ल्पार्थकताया एव सम्भवात् । तथा च गौतमवचसापि नियोगनिरपेक्ष-मेव भर्त्तृरिक्थग्रहणमुक्तं भवति ।

किञ्च । विधवानियोगस्य निषिद्धत्वात् "अपुत्रा शयनं भर्त्तुः पा-लयन्ती" इत्यादिमन्वादिवचनैः संयताया एव धनाधिकारप्रतिपाद-नात् "निर्वास्या व्यभिचारिण्य" इत्यादिना भरणमात्रस्याप्यसंयता-नामभावात्कृत्स्नभर्तृरिक्थग्रहणं दूरापास्तमेव ।

यच्चाभिहितं—"धनं यो बिभृयाद्भ्रातुः" "कनीयान् ज्येष्ठभा-र्यायां" "रिक्थलोभान्नास्ति नियोग" इति मन्वादिवचनैर्विभक्ताविभ-क्तधनसम्बन्धोऽन्वयव्यतिरेकाभ्यामपत्यद्वारक एव पत्न्या आया-तीति । तदपि वार्त्तम् । अविभक्ते संसृष्टिनि वा भर्त्तरि प्रेते पुत्रद्वारक एव तस्यास्तद्धनसम्बन्धोऽतो धनलोभेन नियोगो नाभ्युपेय इति तत्तात्पर्यात् । अत एव—

(१)संसृष्टानां तु यो भागः स तस्या नेष्यते बुधैः ।

( व्य० प० १३ श्लो० २४ पू० )

इत्यभिधाय तत्स्त्रीणामनपत्यानां भरणमात्रं नारदेन प्रतिपादितम् । न चैवं "भ्रातॄणामप्रजाः प्रेयात्" इत्यस्यापि संसृष्टाविभक्तविषयत्वे संसृष्टांशे "संसृष्टानां तु यो भाग"इत्यनेन पौनरुक्त्यं स्यादिति वाच्यम् । तदंशविवरणपूर्वकं स्त्रीधनाविभाज्यत्वतद्धरणयोरपूर्वयोर्विधानात् ।

यत्तु "अपुत्रा योषितश्चैषां" इति योगीश्वरवचनं, तत्तु क्लीबादीनां प्रक्रा-न्तानाम् एषामिति सर्वनाम्ना परामर्शात्तत्स्त्रीविषयमिति विभागान-धिकारिनिरूपणप्रस्तावे वक्ष्यते ।

---

( १ ) संसृष्टिनां तु यो भागस्तेषामेव स इष्यते । इति पाठो मिताक्षरायां मुद्रित-नारदपुस्तके च वर्तते । अयमेव च पाठः समीचीनो भाति ।

यदपि द्विजातिधनस्य यज्ञार्थत्वात्तदनधिकारिण्या प्रमीतपतिकया तद्ग्रहणमनर्हमित्युक्तम्। तदप्ययुक्तम्। यज्ञशब्दस्य दानाद्युपलक्षकत्वात्तत्र च तस्या अप्यधिकारात्। यथाश्रुते यज्ञभिन्नदानहोमादिष्वप्यविनियोगप्रसङ्गः। वस्तुतस्तु केवलधर्मार्थत्वमपि धनस्य नास्ति।

धर्ममर्थं च कामं च यथाशक्ति न हापयेत्। (या०अ०१श्लो०११५)

तथा "पूर्वाह्णमध्यन्दिनापराह्णानफलान्न कुर्याद्धर्मार्थकामेभ्य" इत्यादिभिरर्थकामयोरपि तत्साध्ययोरावश्यकत्वात्।

यज्ञार्थत्वं च द्रव्यस्य यदि स्यात्, हिरण्यधारणस्य क्रत्वव्यभिचारिहिरण्यसम्बन्धेन क्रत्वर्थतैव स्यादिति पुरुषार्थत्वं यत्तस्य स्थापितम्, तत्रैव विरुध्येत(१)।

---

(१) अयं भावः। तृतीयाध्यायचतुर्थपादैकादशाधिकरणम्—"अप्रकरणे तु तद्धर्मस्ततो विशेषात्" (३।४।११) इति। अनारभ्य श्रूयते—"तस्मात्सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवति" इति। तत्र संशयः—किमिदं हिरण्यधारणं क्रत्वङ्गतया विधीयते, उत क्रतुगतहिरण्यानुवादेन धारणसंस्कारो विधीयते, उत हिरण्यं हस्ते भवतीति विहितं यद्धारणं तदनुवादेन सुवर्णता शोभनवर्णतारूपो गुणो विधीयते यद्धिरण्यं भार्यं तत्सुवर्णमिति, उत हिरण्यधारणं पुरुषार्थतया विधीयत इति।

पूर्वपक्षस्तु—हिरण्यविशिष्टं धारणं यद्यपि विधीयते तथापि तस्य फलापेक्षायामस्य धारणस्य वेदवाक्यविहितत्वेन वैदिकत्वात् क्रियारूपत्वाच्च वैदिकदर्शपूर्णमासादिसाम्यात्फलवद्वैदिकं कर्म बुद्धिस्थं भवति। ततश्च तत्रैव वैदिककर्मणि प्रयाजादिवदारादुपकारं कुर्वत् क्रत्वङ्गं धारणं भविष्यति। एतावतैव फलाकांक्षानिवृत्तेः स्वर्गादिफलकल्पना न युक्तेत्येकः।

हिरण्यं भार्यमित्यत्र कृत्यप्रत्ययेन धारणविधानात्तत्कर्मणो हिरण्यस्य कृत्यश्रुत्या प्राधान्यप्रतीतेर्धारणसंस्कारो व्रीहीन् प्रोक्षतीत्यत्र प्रोक्षणमिव। भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हतीतिन्यायेनोपयुक्तस्योपयोक्ष्यमाणस्य वा संस्कारः कार्यः। उपयोगश्च प्रयोजनवत एव, निष्फलस्य लौकिकसुवर्णस्य धारणसंस्कारायोगात् क्रतुगतहिरण्यानुवादेन धारणसंस्कारविधानमिति प्रयाजादिवन्नारादुपकारकमङ्गम् अपि तु प्रोक्षणादिवत्संस्कारकर्मेत्यपरः।

क्रतुगतं हिरण्यं तद्धारणं चानूद्य लाघवात्सुवर्णमिति शोभनवर्णता विधीयत इत्यन्यः।

एवं त्रेधापि तावत् क्रत्वर्थमिति प्राप्त उच्यते। यदुक्तं वैदिकत्वक्रियात्वसाम्यात् क्रतुरुपतिष्ठते फलाकांक्षायामिति। नैष नियमो घटते। यतः स्वर्गाद्युत्पत्तेरपि क्रियात्वात् 'दर्शपूर्णमासाभ्यां' इत्यादिषु स्वर्गादेः कर्तृसम्बन्धितयोक्तेर्वैदिकत्वाच्च स्वर्गाद्युत्पत्तिं क्रतुं चोभयमुपस्थापयति वैदिकत्वं क्रियात्वं चेति हेतुद्वयं, न नियमतः क्रतुमेव,

"न स्त्री स्वातन्त्र्यमर्हति" इत्यादिवचनात् पारतन्त्र्यमात्रमस्तु स्त्रियाः न तु धनग्रहणे कोऽपि विरोधः । "यज्ञार्थं द्रव्यमुत्पन्नं" इति तु धर्मविनियोगप्रशंसार्थम् । अत एव—

स्थानेषु धर्मजुष्टेषु न स्त्रीमूर्खविधर्मिषु ।

इति वाक्यशेषः ।

मिताक्षराकृतस्तु—

यज्ञार्थं लब्धमददद्भासः काकोऽपि वा भवेत्

इति दोषश्रवणस्य पुत्रादिष्वव्यविशेषेण पित्रा यद्यज्ञार्थमर्जितं तत्पुत्रादिभिरपि तत्रैव विनियोज्यं नान्यत्रेत्येवंपरमेतदित्याहुः ।

श्रीकरादयस्तु भार्य्या भरणमात्रपर्य्याप्तं यदि भर्तृधनं तदा सर्वमेव गृह्णाति, अतिरिक्तं चेद्भ्रात्रादय इति विषयव्यवस्थामाहुः । "कृत्स्नमंशं लभेत च" इत्येतदपि तत्परमेव । वर्त्तनदानस्यावश्यकत्वात् । तेन सर्ववाक्यानामविरोध इति च तत्रोपपत्तिं कल्पयन्ति ।

वार्त्तमेतत् । सकृच्छ्रुतधनपदस्य पत्न्यपेक्षं जीवनपर्याप्तधनपरत्वं भ्रात्राद्यपेक्षं च धनमात्रपरत्वमिति तात्पर्य्यभेदस्य सति सारूप्यसम्भवेऽन्याय्यत्वात्, मनुवचने कृत्स्नपदवैयर्थ्यापाताच्च ।

किं च सत्स्वप्यौरसेषु पुत्रेषु तत्समांशग्रहणं जीवदजीवद्विभागयोरुक्तम्—

यदि कुर्य्यात्समानंशान् पत्न्यः कार्य्याः समांशिकाः ।

( या० अ० २।११५ )

पितुरूर्द्धं विभजतां माताप्यंशं समं हरेत् ॥ ( या० अ० २।१२३ )

इत्याभ्यां वचनाभ्याम् । असत्सु पुत्रेषु पत्नी भरणमात्रं लभत इति महान् व्यामोहः । तत्रापि जीवनपर्य्याप्तमेवांशशब्देन विवक्षितमिति चेत्, न । अंशशब्दसमशब्दयोरानर्थक्यप्रसङ्गात् । "दत्ते त्वर्द्धं प्रकल्पयेत्" इत्यत्रापि जीवनोपयुक्तपरत्वावश्यम्भावे सर्वथार्द्धपदार्थत्यागापत्तेश्च । अल्पधने पुत्रसमांशं बहुधने जीवनोपयुक्तमात्रं विवक्षितमिति तु विधिवैषम्यापत्तेरत्ययुक्तम् । तथाहि । तावेव समांशशब्दौ वाक्यान्तरमपेक्ष्य बहुधनजीवनमात्रपर्य्याप्तधनपरौ कदाचित्, अल्पधने तु यथाश्रुतार्थकावित्येकस्मिन्विषयौ वाक्यार्थभेदेन वाक्यभेदापत्तेरयुक्तम् । युगपच्छक्तिलक्षणावृत्तिद्वयापातश्च ।

येन विशिष्टविधिपक्षेऽपि क्रत्वर्थता स्यात् । लोकेऽपि हिरण्यसत्त्वात्र क्रतुगतहिरण्यप्रतीतिः । नहि धारणं धार्यमाणसंस्कारः । अदृष्टार्थतयापि धारणोपपत्तेः । कृत्यप्रत्ययश्च कर्मणः साध्यतामात्रं वाह न प्राधान्यम् । अनीप्सितकर्मणोऽपि विद्यमानत्वात् । अत

(१)यथा चातुर्मास्यप्रकरणे "द्वयोः प्रणयन्ति" इति वाक्येन सौमि·

---

एव धारणानुवादेन न सुवर्णतारूपगुणविधिः । क्रतुधारणाप्रतीतेः लोकेऽपि धारणसम्भ· वात् । अतो न सर्वथा क्रत्वर्थं सुवर्णधारणम् । विधिवशाच्चावश्यं फलेन भवितव्यम् । तच्च फलमर्थवादाभावे विश्वजिन्न्यायेन स्वर्गः, तत्सत्त्वे तु रात्रिसत्रन्यायेन तद्गतमे· व । अत्र तु दुर्वर्णोऽस्य भ्रातृव्यो भवतीतिश्रवणात् भ्रातृव्यस्य दुर्वर्णत्वमात्मनश्च शो भनरूपतैव फलमिति पुरुषार्थमेव हिरण्यधारणमिति सिद्धान्त इति ।

( १ ) उक्तार्थे मानं दर्शयन्नस्य न्यायस्योपपादकमधिकरणं सङ्गृह्य दर्शयति—य· था चातुर्मास्येत्यादिना । सप्तमाध्यायतृतीयपादाष्टमाधिकरणम् । "सौमिकं तु प्रणयन· मवाच्यं हीतरत्" ( ७।३।८ ) इति । सोमे सधर्मकमग्निप्रणयनं, दर्शपूर्णमासयो· श्चाधर्मकं तत् । अग्निप्रणयनं नाम गार्हपत्यादाहवनीयादिष्वाग्निनयनम् । उत्तरवेदिश्च सोम एव न दर्शपूर्णमासयोः । एवं स्थिते चातुर्मास्यस्थचतुष्कर्मसु वैश्वदेववरुणप्रघाससा· कमेधसुनारासीरीयाख्येषु श्रूयते—"द्वयोः प्रणयन्ति, तस्मात् द्वाभ्यां यन्ति ऊरू वा एते यज्ञस्य यद्वरुणप्रघासश्च साकमेधश्च" इति । तत्राद्यं द्वयोः पर्वणोरग्निप्रणयनविधायकं; त· स्मादित्यादिकं तदर्थवादवाक्यम् । तत्र संशयः । किं सौमिकप्रणयनवत्प्रणयनविधिरुत प्रणयनमात्रविधिरिति ।

तत्र पूर्वपक्षः । आद्यपक्ष एव युक्तः । द्वितीये चोदकवाक्यादेव प्रकृतिभूतदर्शपूर्ण· मासतः प्रणयनमात्रस्य प्राप्त्या तद्विध्यानर्थक्यापत्तेः । न च चोदकप्राप्तप्रणयनस्यानुवा· दकमेव तदिति वाच्यम् । प्रणयन्तीतिविधिप्रत्ययबलाद्विधेयत्वप्रतीतेः । किञ्च "न वैश्वदे· व उत्तरवेदिमुपकिरन्ति न शुनासीरीये" इति वाक्यद्वयेन तयोः पर्वणोरुत्तरवेदिप्रति· षेधः प्राप्तिसापेक्षो यतः स्वमत उपपद्यते । आद्यपक्षे हि सौमिकवदित्यतिदेशप्रतीत्या तत्रत्यसकलधर्मप्राप्तौ उत्तरवेदेरपि प्राप्तत्वात् । द्वितीये तु प्रकृतावेवोत्तरवेदेरभावात्तत्प्र· णयनप्राप्तावप्युत्तरवेदिप्राप्त्यभावेन "न वैश्वदेवे" इत्यादिप्रतिषेधासङ्गतिः स्पष्टैव । तस्मात्स प्रतिषेधोऽपि सौमिकवत्प्रणयनविधाने हेतुरिति पूर्वपक्ष्याशयः । एतदाह—द्वयोः प्रण· यन्तीत्यादिना उक्त इत्यन्तेन ।

नन्विदमयुक्तं, प्रकारान्तरेण निषेधसाफल्ये तथैव स्वीकारे दुराग्रहमात्रत्वात् । तथा हि । प्रतिषेधस्य प्राप्तिसापेक्षत्वेऽपि न त्वदुक्तरीत्या प्राप्तिः । तत्प्रकारं विनापि चातुर्मा· स्यप्रकरणपठितेनैव "उपात्र वपन्ति" इत्यनेनोत्तरवेदेर्विधानात्तल्लब्धोत्तरवेदेराद्यन्तपर्वणो· र्निषेधकमुक्तवाक्यद्वयमिति तदुपपत्त्या सौमिकप्रणयनातिदेशः पूर्वपक्ष्युक्तो न घटत इति चेत्, तदेवाह—राद्धान्तैकेत्यादीत्युपन्यस्ते इत्यन्तेन । पूर्वपक्षिमततिरस्कारकत्वा· त्सिद्धान्तित्वं, स्वोक्तेरप्ययुक्तत्वस्य तेनैव वक्ष्यमाणत्वादेकदेशित्वम्, उपात्रेति । अत्र=चा· तुर्मास्येषु उपवपन्ति वेदिम् उपकिरन्तीत्यर्थः ।

नन्विदमप्ययुक्तं, विधिवैषम्यापत्तेः । तथाहि । उपात्रेतिवाक्यं चातुर्मास्यपरमापूर्वेशे·

कप्रणयनातिदेशे "न वैश्वदेवे उत्तरवेदिमुपकिरन्ति न सुनासीरीये" इत्युत्तरवेदिप्रतिषेधेऽप्राप्तस्य प्रतिषेधायोगाद्धेतुत्वेनोक्ते, राद्धान्तैकदेशिना नातिदेशप्राप्तायाः सौमिकोत्तरवेदेरयं प्रतिषेधः किन्तु "उपात्र वपन्ति" इति प्राकरणिकवचनप्राप्ताया इत्युपन्यस्ते, प्राकरणिकं वचनं प्रथमोत्तमयोः पर्वणोः प्रतिषेधमपेक्ष्य पाक्षिकीमुत्तरवेदिप्राप्तिं मध्यमयोस्तु निरपेक्षमेव नित्यवदुत्तरवेदेः प्राप्तिं करोतीति विधिवैषम्यप्रसङ्गेन पूर्व-

---

पक्षतयोत्तरवेदिं विदधत् पर्वचतुष्टयेऽप्यविशेषेण तां विधत्ते । न वैश्वदेवे इत्यादिवाक्यद्वयं तु पर्वद्वये निषेधकम् । तथाच तद्विधिनिषेधयोर्द्वयोरपि वाक्यप्रमितत्वेन वाचनिकत्वाविशेषात्तुल्यत्वेन विकल्पः प्राप्नोति । स चेत्थम्—उपात्रेतिवाक्यम् आद्यन्तपर्वणोर्यदा न-वैश्वेत्यादिवाक्यद्वयमपेक्ष्य तेन प्राप्तस्य निषेधद्वयार्थस्यानुष्ठानाभावस्तदैव पक्षे तदपेक्ष्योत्तरवेदिं विधत्तेऽन्यथा न, मध्यमपर्वणोस्तु निषेधवाक्यानपेक्षयैव नित्यवत् तां विधत्ते । तथाच द्वयोर्वाक्यान्तरानपेक्षतयोत्तरवेदिविधिर्द्वयोर्वाक्यान्तरसापेक्षतया पक्षे विधिरिति सकृच्छ्रुतवाक्यमेकत्र पक्षे प्राप्तमेकत्र नित्यवदिति एकरूपप्रवृत्त्यभावाद्विधिवैषम्यापत्तिः । तदगत्या पूर्वपक्ष्युक्तमेव युक्तमिति चेत्, तदेव स आह—प्राकरणिकमित्यादिना दूषिते इत्यन्तेन ।

सिद्धान्तस्त्वित्थम् । विधिप्रत्ययश्रुतेः प्रणयनं तावद्विधेयमेव । तत्त्वादेव दार्शपौर्णमासिकादन्यदेतदिति गम्यते । न चैवं प्रणयनमात्रमेव, आतिदेशिकं न, किं त्वौपदेशिकमिति प्रवृत्तौ न कोऽपि विशेष इति वाच्यम् । तस्मादित्याद्यर्थवादस्य प्रणयनवाक्यैकवाक्यतया प्रामाण्योपपत्तिरित्यर्थवादबलेन मध्यमपर्वद्वये उत्तरवेदेरुपसंहारेणानुष्ठाने विशेषसत्त्वात् । तथाच "द्वयोः प्रणयन्ति, तस्मात्" इत्यादेर्मध्यमपर्वद्वयघटितत्वेन तत्रैव प्रणयनविधिर्यत्र प्रणयनं तत्रैवोत्तरवेदिविधिरिति । उपात्रेत्युत्तरवेदिविधानमप्यर्थवादानुसारेण मध्यमपर्वणोरेव नाद्यन्तयोरिति तयोरुत्तरवेदिप्राप्त्यभावात् "न वैश्वदेवे" इत्यादि वाक्यद्वयमाद्यन्तयोः पर्वणोर्नित्यानुवादकम् । "नान्तरिक्षे न दिव्यग्निश्चेतव्य" इति वत् । तथाच पर्वचतुष्टये उत्तरवेदिप्राप्तेरेवाभावाद्विधिवैषम्यमपि नास्त्येवेति प्रणयनान्तरविधिरेवेति । एतेनेदं प्रणयनविधानमाद्यन्तयोः पर्वणोरुत मध्यमयोरेवेति संशये न वैश्वेत्यादिना तत्प्रतिषेधादसत्यां प्राप्तौ प्रतिषेधानुपपत्त्याऽऽद्यन्तयोः प्रणयनं पूर्वपक्षे इत्यपि निरस्तमिति । तदाह—परमसिद्धान्तिनेति । अस्य प्रतिपादितमित्यनेनान्वयः । इत्याद्यर्थवादेति । इति विधिरादिर्यस्य सः अर्थवादः तस्मादित्यादिः तत्सहकृतमित्यर्थः । तथाच यथा तत्र तन्मते विधिवैषम्यं दोषः, तथा "पत्न्यः कार्याः" "माताप्यंशं" इत्यत्र सकृच्छ्रुतावंशसमशब्दावपि भर्तुर्बहुधनपक्षे "भरणं चास्य" इत्यादिवाक्यपर्यालोचनया जीवनोपयुक्तधनपरौ स्वल्पधने तु वाक्यान्तरनैरपेक्ष्येण नित्यवत्पुत्रांशसमांशपराविति श्रीकराद्युक्तव्यवस्थायां विधिवैषम्यदोषो दुर्निवार इति तात्पर्यम् ।

पक्षिणा तन्मते दूषिते, परमसिद्धान्तिना पूर्वपक्षयुक्तविधिवैषम्यभया-देव प्रथमोत्तमयोः पर्वणोरप्राप्तप्रतिषेधायोगात् "न वैश्यदेव" इत्ययं नित्यानुवादः "उपात्र वपन्ति" इति तु "द्वयोः प्रणयन्ति" इत्याद्यर्थवादसहकृतं मध्यमयोरेव वरुणप्रघाससाकमेधपर्वणोरुत्तरवेदिं विधत्ते न तु वचनातिदेशोऽयमिति प्रतिपादितम् ।

अत्र कश्चिदाह । भ्रातॄणामपुत्रधनग्राहित्वं
भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् ।

इति भरणोपयुक्तधनदानं च तत्स्त्रीणामुक्तम् । यदा भरणमात्रोपयुक्तमेवापुत्रधनं ततोऽपि न्यूनं वा तदा किं भ्रातर एव गृह्णन्ति पत्नी वेति विरोधे पत्न्या एव धनग्रहणं "पत्नी दुहितर" इत्यादिना पूर्वबलीयस्त्वज्ञापनयोच्यत इति ।

तदपि मन्दम् । पूर्वोक्तविधिवैषम्यस्यात्रापि तादवस्थ्यात् । धनभागितिपदं वाक्यान्तरमपेक्ष्याल्पधने जीवनमात्रपर्य्याप्तधनभाक्त्वं पत्नीविषये वदति पित्रादिषु तु सकलधनभाक्त्वमिति । कथं तर्हि विरोधपरिहार इति चेत्, शृणु । "पिता हरेत्" इत्यादिषु क्रमाप्रतीतेरपुत्रधनग्रहणाधिकारमात्रप्रदर्शकानि तानि । योगीश्वरवचसि तु "एषामभावे पूर्वस्य धनभागुत्तरोत्तर" इतिक्रमपरत्वात्पत्न्यादिगणस्य निबद्धक्रमस्याभावेऽपि तेषामर्थाविरोधात्पत्न्याद्यभावे पित्रादयोऽपुत्रधनग्राहिण इति ।

शङ्कितव्यभिचारायास्तु पत्न्या हारीतेन धनग्रहणं निषिद्धम् ।

विधवा यौवनस्था चेन्नारी भवति कर्कशा ।
आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा ॥ इति ।

अस्मादेव वचनादनाशङ्कितव्यभिचारायाः सकलभर्त्तृधनग्रहणं गम्यते । अत एव शङ्खवचने "ज्येष्ठा वा पत्नी" इत्युक्तम् । ज्येष्ठा गुणैः प्रशस्या न तु वयोज्येष्ठा । मनुनापि वर्णक्रमेण ज्यैष्ठ्यं कथितम् । यदाह- (अ० ९ श्लो० ८५)

यदि स्वाश्च पराश्चैव विन्देरन् योषितो द्विजाः ।
तासां वर्णक्रमेणैव ज्यैष्ठ्यं पूजा च वेश्म च ॥ इति ।

अतः परिणयनवयोभ्यां कनिष्ठापि सवर्णैवासवर्णातो ज्येष्ठा । सवर्णास्वपि गुणवती ।

तथा च मनुः, (अ० ९ श्लो० ८६।८७)

भर्त्तुः शरीरशुश्रूषां धर्मकार्य्यं च नैत्यकम् ।
स्वा चैव कुर्य्यात्सर्वेषां नास्वजातिः कथञ्चन ॥

यस्तु तत्कारयेन्मोहात् सजात्या स्थितयाऽन्यया ।
यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः ॥

योगीश्वरोऽपि ( अ० १ श्लो ८८ )

सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ।

तथा च यज्ञसंयोगात्पत्नीशब्देनापि सैवोच्यते । सवर्णाया अभावे तु याऽनन्तरवर्णा सैव ।

तथा च विष्णुः—

सवर्णाभावे त्वनन्तरैवापदि न त्वेव द्विजः शूद्रया धर्मकार्यमिति ।

अत्र कुर्य्यादित्यनुवर्त्तते । तथा च ब्राह्मणस्य ब्राह्मण्यभावे क्षत्रियैवापदि न तु वैश्यशूद्रे परिणीते अपि । क्षत्रियस्य क्षत्रियाया अभावे वैश्यैव । वैश्यस्यानन्तरापि शूद्रा न, किन्तु स्वैव । शूद्रायाः सर्वथा निषेधात् । तथा चानाशङ्कितव्यभिचारा वर्णक्रमेण भर्तृधनं गृहीत्वान्याः सपत्नीः परिपालयेत् । बह्व्यः सदृश्यस्तु यथास्वं विभज्य गृह्णीयुः । अतः पत्नीत्येकवचनं जात्यभिप्रायेण । तस्मादपुत्रस्यासंसृष्टिनो विभक्तस्य प्रमीतस्य साध्वी भार्य्या कृत्स्नधनाधिकारिणी । विभक्त संसृष्टिनोरपुत्रयोः साध्व्यपि भरणमात्रं "भ्रातृणामप्रजा" इत्यादिनारदादिवचनाल्लभते । व्यभिचारिणी तु भरणमपि न । "आच्छिन्द्युरितरासु" इत्यभिधानात् । यत्तु व्यभिचारिणीनामप्यशनवसनदानमुक्तम्—

एवमेव विधिं कुर्य्याद्योषित्सु पतितास्वपि ।
वस्त्रान्नमासां देयं तु वसेयुश्च गृहान्तिके ॥ इति,

तत्तु—

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् (अ० १श्लो०७०)

इति भर्त्तारं प्रस्तुत्य योगीश्वरेणाभिधानात्तदविसंवादेन भर्त्तृविषयकम् । तदपि प्रायश्चित्तावधि । अथौद्धत्यात्तदकुर्वतीनां त्वनेनापि निष्कासनमित्यादि प्रायश्चित्तप्रकाशे विवेक्ष्यामः । "पत्नी दुहितर" इत्यस्य विभक्तासंसृष्टिविषयत्वं, विभागस्य पूर्वमुक्तत्वात् संसृष्टिविभागस्य च सर्वापवादेनाग्रे वक्ष्यमाणत्वादर्थाद्व्यवतिष्ठत इति विज्ञानेश्वरलक्ष्मीधरस्मृतिचन्द्रिकाकारविश्वरूपमेधातिथिमदनरत्नकारादीनां भूयसां संमतम् ।

अपुत्रपदं पत्नीत्यादिषु श्रूयमाणं पौत्रप्रपौत्राभावोपलक्षणम् । प्रपौत्रपर्य्यन्ताभाव एव पत्न्या धनग्रहणौचित्यात् "पुत्रपौत्रैर्ऋणं देयम्" इति वचने

पौत्रस्यापि ऋणदानेऽधिकाराभिधानाद्रिक्थग्राहकान्तरसत्त्वे "ऋक्थग्राह ऋणं दाप्य" इति वचनात् तस्यैवर्णदानाधिकारे सत्यपि पौत्रे तं प्रति तद्विधानासम्भवाद्गोत्रजत्वादिना ऋक्थग्रहणे"रिक्थग्राह"इत्येतेनैव तस्यापि तत्सिद्धेर्वैयर्थ्यं पौत्रविधेः। अतः पौत्रेण पितामहरिक्थाग्रहणेऽपि पुत्रवद्दणं देयमित्युक्ते दण्डापूपिकया सति तद्रिक्थेऽन्यस्य तद्ग्रहणाधिकारो दूरनिरस्तः। एष एव प्रपौत्रेऽपि न्यायः। अत एव प्रपौत्रसङ्ग्रहार्थं पुत्रपौत्रैरिति बहुवचनम्। इतरथा द्विवचनं, व्यक्त्यभिप्रायकं बहुवचनमिति वा कल्प्यं स्यात्। एवञ्चायमर्थः। पुत्रस्य पौत्रः पुत्रपौत्रः स चेति षष्ठीतत्पुरुषोत्तरमावृत्तपुत्रपौत्रपदे पुत्रश्च पौत्रश्च तावितिद्वन्द्वे पुत्रपौत्रौ च पुत्रपौत्रश्चेतिद्वन्द्वतत्पुरुषरूपपुत्रपौत्रपदे सरूपैकशेषे बहुवचनोपपत्तिः। पुत्रपौत्रप्रपौत्रैरिति यावत्। पौत्रपदं प्रपौत्रोपलक्षणं वा। पुत्रापेक्षया पौत्रस्य तदपेक्षया प्रपौत्रस्य ऋणदाने विशेषप्रकारविधिरप्यत एव सङ्गच्छते। अन्यथा प्रपौत्रे विशिष्टविधिकल्पनापत्तिः। त्रयाणां तुल्योपकारित्वं च पार्वणविधिना पिण्डदानेन स्पष्टम्। तथा च—

मनुः, (अ० ९ श्लो० १८६)

> त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्त्तते।
> चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते।

बौधायनोऽपि—पुत्रपौत्रप्रपौत्राननुक्रम्याह—

प्रपितामहः पितामहः पिता स्वयं सोदर्य्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्र एतानविभक्तदायादान् सपिण्डानाचक्षते। विभक्तदायादांश्च सकुल्यानाचक्षते सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवतीति।

अस्यार्थः। पित्रादिपिण्डत्रये सपिण्डनेन भोक्तृत्वात्पुत्रादिभिस्तत्पिण्डस्यैव दानात्, यो हि जीवन् यत्पिण्डदाता स मृतः सन् सपिण्डनेन तत्पिण्डभोक्ता। एवं च सतिमध्यस्थितः पुरुषो जीवन् पूर्वेषां पिण्डदाता मृतश्च तत्पिण्डभोक्ता परेषां जीवतां पिण्डसम्प्रदाने, मृतैश्च तैः सह दौहित्रादिदेयपिण्डभोक्ता अतो येषामयं पिण्डदाता ये वा तद्दत्तपिण्डभोक्तारस्तेऽविभक्तं पिण्डरूपं दायमदन्तीत्यविभक्तदायादाः सपिण्डा एकपिण्डसम्बन्धात्। पञ्चमस्य तु पूर्वस्य मध्यमः पञ्चमो न पिण्डदाता नापि तद्भोक्ता। एवमधस्तनोऽपि पञ्चमो मध्यमस्य न पिण्डदाता, नापि तत्पिण्डभोक्ता। तेन वृद्धप्रपितामहात् प्रभृति पूर्वपुरुषास्त्रयः प्रति-

प्रणप्तुः(१) प्रभृत्यधस्तनपुरुषास्त्रय एकपिण्डभोक्तृत्वाभावाद्विभक्तदायादाः सकुल्या इत्याचक्षते मुनयः। कुलमात्रसम्बन्धात्। इदं सपिण्डत्वं सकुल्यत्वं च दायग्रहणोपयोगित्वेनोक्तम्। तत्प्रकरणपाठात्। आशौचविवाहाद्यर्थं तु पिण्डलेपभुजामपि। (२)

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥

इति स्मरणात्।

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। (मनु० अ० ५ श्लो० ६०)

इति च—

पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथा। (अ० १ श्लो० ५३)

इति योगीश्वरवाक्यैकवाक्यतया सप्तमे पुरुषे स्थित्वाऽष्टमे विनिवर्त्तत इति व्याख्येयम्। तेन यथा "अप्रत्तानां तु स्त्रीणां त्रिपुरुषं विज्ञायत" इत्याशौचप्रकरणपठितं तन्मात्रोपयोगि त्रिपुरुषं सापिण्ड्यं, तथेदं विभागमात्रोपयोगीति ध्येयम्। कात्यायनस्तु स्पष्टमेव पुत्रपौत्रप्रपौत्राणां धनग्रहणमाह—

अविभक्ते मृते पुत्रे तत्सुतं रिक्थभागिनम्।
कुर्वीत जीवनं येन लब्धं नैव पितामहात्॥
लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात्।
स एवांशस्तु पूर्वेषां भ्रातॄणां न्यायतो भवेत्॥
लभेत तत्सुतो वापि निवृत्तिः परतो भवेत। इति।

प्रपौत्रानन्तरमुक्तो यः प्रणप्तृप्रभृत्यनधिकारः स सपिण्डत्वेन ध्येयः। सकुल्यत्वेन त्वस्त्येव यथाप्रत्यासत्ति। "भ्रातॄणामेकजातानाम्" इत्यादि तु दायातिरिक्तश्राद्धादिपुत्रकार्य्यकारित्वपरं भ्रातृपुत्रस्य पुत्रीकरणसम्भवे नान्यः पुत्रीकरणीय इति नियमार्थम्। अन्यथा भ्रातृपुत्रस्य भ्रात्रनन्तरमभिधानमपुत्ररिक्थहार्य्यभिधायके वाक्ये क्रमपरं न सङ्गच्छेत। पुत्रादीनां त्रयाणां पित्रादित्रिकमहोपकारकारित्वात् पुत्रादिभिर्गृहीतं धनं स्वामिन एवोपकारकमुपकारप्रत्यासत्त्या तदीयमेव। उपकारप्रत्यासत्तिश्चाभ्यर्हिता।

यथाह—(मनु० अ० ९ श्लो० १०६)

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।
पितॄणामनृणश्चैव स तस्माल्लब्धुमर्हति॥

---

(१) प्रतिप्रणप्तुः=प्रपौत्रपुत्रात्।

(२) तद्दत्तपिण्डलेपभोक्तृत्वेन सपिण्डत्वमिति शेषः।

तस्मादिति हेतुत्वेनोपकारकत्वस्योपन्यासाद्दायभागप्रकरणे धनस्वाम्युपकारकत्वातिशयो यत्र स्थितस्य तद्धनस्य भवति स एव तद्धनग्राहीति प्रत्यासत्तिरौत्सर्गिकस्यार्हिता चेति सूचितम् । पुत्रादीनां महोपकारकत्वं चानेकश्रुतिस्मृतिपुराणादिप्रसिद्धम । तत्र श्रुतिर्हरिश्चन्द्रोपाख्याने बह्वृचब्राह्मणे—

ये त्विमं पुत्रमिच्छन्ति ये विजानन्ति येच न ।
किंस्वित्पुत्रेण विन्देत तन्मआचक्ष्व नारद ! ॥

इति गाथया हरिश्चन्द्रेण पृष्टो नारदो दशभिर्गाथाभिः पुत्रमाहात्म्यपराभिः प्रबोधितवानित्युक्तम् ।

स एकया पृष्टो दशभिः प्रत्युवाच

ऋणमस्मिन् सन्नयत्यमृतत्वं स गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥

इत्यादिना । स्मृतयश्च—

मनुविष्णू—(मनु० अ० ९ श्लो० १३)

पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥

शङ्खलिखितौ—

पितृणामनृणो जीवन्दृष्ट्वा पुत्रमुखं पिता ।
स्वर्गी स तेन जातेन तस्मिन् संन्यस्य तदृणम् ॥
अग्निहोत्रं त्रयो वेदा यज्ञाश्चैव सदक्षिणाः ।
ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोडशीम् ॥

मनु–लिखित–वशिष्ठ–हारीताः—( मनु० अ० ९ श्लो० १३७)

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ (१)

याज्ञवल्क्यः—(अ० १ श्लो० ७८)

(२)लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ।
यस्मात्तस्मात् स्त्रियः सेव्याः कर्त्तव्याश्च सुरक्षिताः ॥ इति ।

पुराणादिषु तूपाख्यानानि पुत्रादिप्रशंसाशंसीनि बहूनि । तस्मात् प्रपौत्रपर्यन्ताभावे विभक्तासंसृष्टिपतिरिक्थहारिणी पत्नीति सिद्धम् ।

अत्र जीमूतवाहनः । बृहस्पतिविरोधान्नेयं व्यवस्था । यदाह–(अध्या०११)

विभक्ता भ्रातरो ये च सम्प्रीत्यैकत्र संस्थिताः ।

---

( १ ) ब्रध्नस्य=सूर्यस्य । ( २ ) लोके आनन्त्यं वंशस्याविच्छेद इत्यर्थः ।

पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यते ॥
यदा कश्चित्प्रमीयेत प्रव्रजेद्वा कथञ्चन ।
न लुप्यते तस्य भागः सोदर्य्यस्य विधीयते ॥
या तस्य भगिनी सा तु ततोऽंशं लब्धुमर्हति ।
अनपत्यस्य धर्मोऽयमभार्य्यापितृकस्य च ॥
संसृष्टानां तु यः कश्चिद्विद्याशौर्य्यादिना धनम् ।
प्राप्नोति तस्य दातव्यो ह्यंशः शेषाः समांशिनः ॥ इति ।

अत्रोपक्रमोपसंहारयोः संसृष्टत्वकीर्त्तनात् तत्सन्दंशपतितं "न लुप्यते तस्य भागः सोदर्य्यस्य विधीयते" इति वचनं संसृष्टिविषयमवश्यं वाच्यम् । तत्र च "अनपत्यस्य धर्मोऽयमभार्य्यापितृकस्य च" इत्यभिधानात्पुत्रदुहितृपत्नीपितॄणामभावे संसृष्टसोदराधिकारः प्रतीयते इति कथमस्य पत्नीबाधकत्वम् ।

किञ्च "न लुप्यते" इति संसृष्टाविभक्तभ्रात्रन्तरीयद्रव्यस्य मिश्रीभूतस्य (१)लोपाशङ्कायामुपपद्यते । विभक्तासंसृष्टधने तु विभक्ते(२)का लोपशङ्का । तस्मात्संसृष्टविषयत्वमेवामीषां लिङ्गादपि ।

किञ्च । पत्नीतः पूर्वं भ्रात्रधिकारबोधकशङ्खादिवचनानां संसृष्टाविभक्तविषयत्वं विस्पष्टवचनान्तरान्न्यायाद्वा प्रबलादुच्यते? नाद्यः, विस्पष्टविशेषवचनाभावात् । "संसृष्टिनस्तु संसृष्टी" इत्यादि वक्ष्यमाणवचनं तु भ्रात्रधिकारावसरे विशेषकथनं नामुमर्थमवगमयति(३) । बृहस्पतिवचनं तु पुत्रादिपितृपर्य्यन्ताभावे संसृष्टसोदराधिकारबोधकं प्रत्युतासंसृष्टविषयकतामेवावगमयति । न द्वितीयः । न्यायो ह्ययं वाच्यः । अविभागसंसर्गयोर्यदेकस्य धनं तदेवापरस्यापीति मृतस्य तत्र स्वत्वेऽपगतेऽपि जीवतस्तत्स्वत्वात्तद्गामिता युक्ता न स्वाम्यन्तरकल्पनेति । न चासौ युक्तः । अविभागसंसर्गवतामप्यविज्ञातैकदेशव्यवस्थितिप्रतिनियताश्रयमेव स्वत्वं न त्वेकैकत्र सर्वेषां नापि समग्रे । अनेकस्वत्वोत्पादविनाशकल्पनाप्रसङ्गात् ।

किञ्च "पाणिग्रहणाद्धि सहत्वं" इत्यादिप्राग्लिखितगौतमादिवचनेभ्यः पत्न्याः परिणयादुत्पन्नं पतिधने स्वत्वमविभक्तसंसृष्टभर्त्तृमरणे

(१) लोपोऽविभाज्यत्वम् ।

(२) विभक्ते विभक्तत्वप्रतीतावित्यर्थः । क्वचित् विभक्तत्वप्रतीतौ इत्येव पाठः ।

(३) समानसम्बन्धिनां मध्ये संसर्गनिबन्धनाधिकारबोधकस्योक्तवचनस्य भ्रात्रधिकारमात्रबोधनपरत्वं नोपपद्यते । अन्यथा पुत्रसत्त्वेऽपि संसृष्टभ्रात्रधिकारप्रसङ्गादिति भावः ।

नश्यत्यन्यत्र च न नश्यतीति कल्पनायां प्रमाणाभावः । (यथा) पुत्रादिषु सत्सु तदधिकारशास्त्रबलादेव पत्नीस्वत्वनाशः कल्प्यते । (तथा) अत्रापि संसृष्ट्यविभक्तभ्रात्रधिकारशास्त्रात्तन्नाशः कल्प्यत इति चेत्, न । अन्यस्य तादृशशास्त्रस्यादर्शनात् । अस्य त्वेतद्गोचरताया अन्योन्याश्रयप्रसङ्गादसिद्धेः । सिद्धे हि संसृष्टाविभक्तभर्तृमरणेन पत्नीस्वामित्वनाशे भ्रात्रधिकारशास्त्रस्य तद्विषयकत्वम् , सिद्धे च तस्मिन् पत्नीस्वत्वनाशकल्पनेति । अत एव योगीश्वरविष्णवादिवचने पुत्रराहित्यमेवोपात्तं न तु विभक्तत्वासंसृष्टत्वे । विभागस्योक्तत्वात्संसृष्टिनां च वक्ष्यमाणत्वात् अर्थादुपात्ते एवेति चेत् , तर्हि, मुख्यगौणपुत्रेषु रिक्थग्राहितयोक्तेषु तदितरविषयत्वमप्यर्थात्सिद्ध्यतीत्यपुत्रत्वमपि नोपादेयम् । अपुत्रस्यैत एवानेनैव क्रमेणेति नियमार्थतया तत्सार्थक्यमन्ययोरपि तुल्यम् । विभागोक्तपर्य्यवसानं तु न जातमेव । संसृष्टिवचनं भ्रात्रधिकारावसरे विधानार्थं न पत्न्याद्यपवादार्थमित्युक्तमेव ।

किञ्च । शङ्खलिखितादिवचनानामविभक्तसंसृष्टभ्रातृपरत्वे तादृशस्यापुत्रस्य धनं तद्विधभ्रातृगामि तदभावे पितरौ हरेतामित्यस्य कोऽर्थः ? किं विभक्तासंसृष्टौ पितरौ गृह्णीयाताम् , उताविभक्तासंसृष्टाविति । तत्र न प्रथमः कल्पः । (१)तादृशयोः पित्रोः पत्नीबाध्यत्वात्कथं भ्रात्रभावे पत्नीतः पूर्वं तयोरधिकारबोधः । नापि द्वितीयः । (२)अविभक्तसंसृष्टपितृग्राह्यत्वे सर्वेषामविवादाद्वचनवैयर्थ्यात् ।

अपि च । यथा पित्रा भ्रात्रा च विभक्तासंसृष्टधने शरीरदातृतया "आत्मा वै जायते पुत्रः" इत्येकत्वश्रुतेर्द्धनदेहयोश्च पौत्रयोः पितुः प्रभुत्वात्तत्पितृदेयपितामहप्रपितामहपिण्डद्वये च सपिण्डनेन मृतस्य पुत्रस्य भोक्तृत्वाज्जीवति च पितरि पुत्राणां पार्वणपिण्डदानाभावाद्भ्रातृभ्यः पूर्वं पित्रोरधिकारस्तथेतरत्रापि(३) युक्तः । अविभागसंसर्गयोरविशेषाद्वा तुल्याधिकारो युक्तो न तु भ्रात्रभावे पितुरिति ।

किञ्च । पित्रोरविभक्तसंसृष्टत्वविशेषणमनुपपन्नं मात्रा सह विभागाभावेनाविभक्ताविशेषणानर्थक्यात् । (४)अत एव संसर्गाभावोऽपि । विभागपूर्वकत्वात्तस्य । यथाह—

---

(१) तादृशयोः=विभक्तासंसृष्टयोरित्यर्थः ।

(२) अत्र अविभक्तसंसृष्टभ्रातृसद्भावेऽपि इत्यधिकं मुद्रितजीमूतवाहनेऽस्ति ।

(३) संसृष्टाविभक्तधनेऽपीत्यर्थः ।

(४) विभागविरहादेवेत्यर्थः ।

बृहस्पतिः,

विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः ।
पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते ॥ इति ।

एतेन येषामेव हि पितृभ्रातृपितृव्याणां पितृपितामहार्जितद्रव्येणाविभक्तत्वमुत्पत्तितः सम्भवति त एव विभक्ताः सन्तः परस्परप्रीत्या पूर्वविभागध्वंसेन यत्तव धनं तन्मम यच्च मम तत्तवेत्यभिन्नतयैकपाकेन पूर्ववदेकगृहितया स्थिताः संसृज्यन्ते । न पुनरनेवम्भूता द्रव्यसंसर्गमात्रेण । वणिजामपि सम्भूयसमुत्थाने संसृष्टत्वव्यवहारापत्तेः । प्रीतिपूर्वोक्ताभिसन्धिरहितानां सौकर्य्यादिवशाद् द्रव्यमिश्रणेन व्यवहारादि कुर्वतां भ्रात्रादीनामप्यत एव न संसृष्टिव्यवहारः । तस्मान्मातृगतो भ्रातृसद्भावाधिकारविरोधो दुःसमाधः । अतः प्रपौत्रपर्य्यन्ताभाव एवाविशेषेणापुत्रप्रमीतभर्त्तृधने समस्तेऽधिकारिणी पत्नीत्येव रमणीयम् । न त्वश्रुतासंसृष्टविभक्तगोचरत्वकल्पना । जितेन्द्रियादयोऽप्येवमाहुः । प्रपौत्रपर्य्यन्ताभावे तस्या अपि भर्त्तुः श्राद्धादिनोपकारकत्वातिशयात् । "पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं हरेत च" इति मनुवचनादिभ्यः ।

व्यासोऽपि—

मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता ।
स्नाता प्रतिदिनं भक्त्या भर्त्रे दद्याज्जलाञ्जलीन् ॥
कुर्य्याच्चानुदिनं भक्त्या देवतातिथिपूजनम् ।
विष्णोराराधनं चैव कुर्यान्नित्यमनुव्रता ॥
दानानि विप्रमुख्येभ्यो दद्यात्पुण्यविवृद्धये ।
उपवासांश्च विविधान् कुर्य्याच्छास्त्रोदितान् शुभान् ॥
लोकान्तरस्थं भर्त्तारमात्मानं च वरानने ! ।
तारयत्युभयं नारी नित्यं धर्मपरायणा ॥ इत्यादि ।

तस्मात्पत्न्या अपि पतिनरकनिस्तारकत्वाद्धनहीनतया वाऽकार्य्यं कुर्वती स्वीयापुण्येनार्द्धशरीरसंस्तवात् "पतत्यर्द्धं शरीरस्य यस्य भार्य्या सुरां पिबेत्" इत्यादिलिङ्गदर्शनात्पतिमपि पातयेदिति तया गृहीतं स्वाम्यर्थमेव तद्धनं भवतीति सर्वेभ्योऽन्येभ्यः पूर्वं पत्न्या एव पतिधनग्रहणं युक्तम् । शङ्खादिवचने तु व्यवहितयोजना कार्य्या । अपुत्रस्य=पुत्रपौत्रप्रपौत्ररहितस्य स्वर्यातस्य धनं ज्येष्ठा प्रशस्यतमा पत्नी लभते । तदभावे दुहितृदौहित्रयोश्चाभावे पितरौ लभेयातां तदभावे भ्रातृगामीति । तदभाव इति मध्यपठितं पूर्वोत्तराभ्यामविरोधात् न्यायस्य

पूर्वमुक्तत्वाच्च सम्बध्यते। "भ्रातॄणामप्रजाः प्रेयात्" इत्यादीनि नारदादेवचनान्यपि पत्नीरूपपरिणीतस्त्रीविषयाणि। स्त्रीशब्दमात्रोपादानात्त्र। अत्र च पत्नीशब्दोपादानात्। परिणीतानामपि चापत्नीत्वं प्राक् प्रपञ्चितम्। अत एव नारदस्यैव वचनान्तरे—

अन्यत्र ब्राह्मणात्किन्तु राजा धर्मपरायणः।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः॥
(व्य० प० १३ श्लो० २५)

इति स्त्रीशब्दश्रवणादपत्नीनामब्राह्मणस्त्रीणां वर्त्तनदानमाह। पत्नीनां त्वब्राह्मणस्त्रीणामपि कृत्स्नभर्तृधनाधिकारमाह—

बृहस्पतिः,

येऽपुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः।
तेषां धनं हरेद्राजा सर्वस्याधिपतिर्हि सः॥

पत्नीभ्रातृविवर्जिता इति सब्रह्मचारिपर्यन्ताभावोपलक्षकम्। तेषां वक्रमत्वान्मध्ये राज्ञोऽननुप्रवेशात्। प्रदर्शितविष्णुवचने सहाध्यायिपर्यन्तानभिधाय—"तदभावे ब्राह्मणधनवर्जं राजगामी" इति कथनाच्चेत्तत्त्वं विविनक्ति स्म।

तत्रेदमालोचनीयम्। नारदशङ्खादिवचनानामविभक्तसंसृष्टिविषयतया व्यवस्था तत्र न्यायविरोधो वा दूषणं वचनविरोधो वा?। न तावन्न्यायविरोधः। बाधकन्यायस्याभावात्। प्रत्युत साधको न्यायोऽस्ति। तथाहि-अविभक्तप्रमीते तावत्तस्यांश एव नाभूत्किमियं गृह्णातु, दृष्टे जातोऽप्यंशः पुनः साधारणस्वत्वात्पत्न्या अपगतः। न च साधारणस्वत्वाश्रयोऽप्यविविक्तस्तद्भागोऽस्त्येवेति वाच्यम्। अस्तु, तावतापत्प्रतियोगिकं साधारणं स्वत्वं तदपगमे विद्यमानस्वत्वकः सङ्कोच एवोचितो न त्वन्यस्वत्वोत्पत्तिकल्पना।

पाणिग्रहणाद्धि सहत्वं कर्मसु तत्फलेषु द्रव्यपरिग्रहेषु च।

इति गौतमवचनात्पत्न्या अपि तद्भागेऽविविक्तेऽपि स्वत्वमुत्पन्नं ततः किमिति तत्सत्वे कल्प्यत इति चेत्, न। औपपत्तिकोऽस्ति न तु त्विकः। पत्न्याः पतिद्रव्ये स्वत्वं क्षीरनीरवदेकलोलीभावापन्नं सहाधिकारिकर्मोपयोगि न तु भ्रातॄणामिव परस्परम्। तत एव तेषां विभागो न तु जायापत्योः। एतन्न्यायमूलकमेव "जायापत्योर्न विभागो विद्यते" इति वचनम्। तथा च पत्युः स्वत्वापगमे तस्याः स्वत्वापगमोऽत्रावश्यकः। एवं चाविभक्तसंसृष्टिपतिस्वापतेये पत्न्याः स्वत्वोत्पत्तिः कल्प्यतामविभक्तसंसृष्टिस्वत्वस्य सतोऽसाधारण्यं वेति वीक्षा-

यामुत्तरपक्षकक्षीकरणमेवोचितं लाघवात् । नच पत्न्येव विभागप्रतियोगिनी । प्रापकप्रमाणाभावात् । नचैतान्येव वचनानि प्रापकाणि । तेषां विषयविवादाद्विभक्तासंसृष्टिविषयत्वेनाप्युपपत्तेः । अत एवान्योन्याश्रयोऽपि दवीयान्। विमर्शदशायां तदप्रसङ्गात्। सति विमर्शे तद्विषयत्वनिश्चयादेव । अविभागसंसर्गवतामपीत्यादि च यदुक्तं तन्नास्मत्पक्षक्षतिक्षमम्। प्रतिनियताविविक्तस्वत्वस्वीकारेऽपि संसृष्टाविभक्तविषयताया न्यायान्तरसिद्धत्वात्। न चाश्रुतविभक्तासंसृष्टविषयत्वं पत्नीत्यादिवाक्यानामप्रमाणकम् । विरुद्धनारदादिवचनानां व्यवस्थान्तरासम्भवे पूर्वोपपादितन्यायोपष्टब्धार्थापत्तेरेव प्रमाणत्वात्। व्यवस्थान्तरासम्भवं च वक्ष्यामः । न च यथा विभागस्योक्तत्वात्संसृष्टिनां च वक्ष्यमाणत्वादर्थाद्विभक्तासंसृष्टिधनपरत्वं पत्नीत्यादेरायातीति तदनुपादानं, तथा मुख्यगौणपुत्रविभागमुक्त्वा पत्नीत्यादिवचनारम्भादपुत्रधनविषयत्वमपि सिद्ध्यति तेषामित्यपुत्रस्येत्यपि न वाच्यमिति वाच्यम् । "एक एवौरसः पुत्रः" "न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः" इत्यस्यार्थस्य स्मृत्यन्तरोक्तस्य योगीश्वरेण वचनान्तरेणानुक्तेस्तदवबोधनार्थत्वात् । अन्यथा जीवदजीवद्विभागयोः सत्स्वपि पुत्रेषु पितृपत्नीनां यथांशभाक्त्वं तथात्रापीति शङ्का स्यात् । पुत्रविभागपर्यवसान उक्तत्वान्न तच्छङ्कावसर इति यदि, तर्हि, स्मृत्यन्तरेषु "एक एवौरसः" "न भ्रातरो न पितर' इति स्वतन्त्रस्य मुख्यगौणपुत्रसत्त्वे पत्न्याद्यनधिकारप्रतिपादकशास्त्रस्य सुतरामानर्थक्यं स्यात्। स्पष्टीकरणार्थमर्थन्यायसिद्धमपि निबध्यते व्यवहारशास्त्र इति समाधिः पदमात्रे सुतरां सुवदः । स्पष्टार्थं विभक्तासंसृष्टत्वे अपि कुतो नोपात्त इति चेत्, स्वतन्त्रेच्छत्वान्मुनीनाम् । आरोपे सति निमित्तानुसरणमिति न्याये च यत्र न्यायार्थसिद्धनिबन्धनमस्ति तत्र सिद्धस्य गतिश्चिन्तनीयेति रीत्या स्पष्टीकरणार्थतया वैयर्थ्यं परिह्रियते न तु तदभिधानापादनं सर्वत्रोचितम्।

यच्च "संसृष्टिनस्तु संसृष्टी" इत्यस्य भ्रात्रधिकारावसरे विशेषविधानमात्रार्थत्वं न पत्न्याद्यपवादकत्वमित्युक्तम्, तदतिवाच्यम्। तुशब्दविरोधात्, उत्तरोत्तरं पूर्वपूर्वापवादसन्दर्भाच्च। अत एव प्रतिवाक्यं तुशब्दोपादानम् । क्लीबादिवाक्यं पुत्रादिसकलदायग्रहणाधिकारिणां क्लीबत्वादिनाधिकारापवादकमिति। अत एव मिताक्षराकृता तथैव तानि वचनान्यवतारितानि व्याकृतानि च।

यत्तु किञ्चेत्यादिना शङ्खलिखितवचने भ्रात्रभावे पित्रोरधिकारो विकल्प्य खण्डितः, तदप्यतिफल्गु । भवद्भिर्मयापि व्युत्क्रमेण विभक्तासंसृष्टपितृपरत्वेन तस्य व्याख्यातुं शक्यत्वेनैकापर्य्यनुयोगात् ।

यच्चापि चेत्यादि । तदपि तुल्ययोगक्षेममित्युपेक्ष्यम् ।

यदपि किञ्चेत्यादि । तदपि मात्रंशे विशेषणासम्बन्धेऽपि योग्यतया पित्रंशे सम्बन्धाददोषम् ।

वस्तुतस्तु साक्षान्मात्रा विभागाभावेऽपि जीवद्विभागे पित्रिच्छया तस्या अपि भागसद्भावादजीवद्विभागे तु साक्षादेव विभागोक्तेः प्रीत्याऽभिसन्धिविशेषपूर्वकं पुत्रैः सह संसर्गसम्भवात् । नचैवं "विभक्तो यः" इत्यादिबृहस्पतिवचनविरोधः, अत एव मिताक्षराकृताप्युक्तम्— "संसर्गश्च न येन केनापि किन्तु पित्रा भ्रात्रा पितृव्येण वा" इत्यत्र सम्मतित्वेन तद्वचनमुपन्यस्यतेति वाच्यम् । यतस्तथा सति सकललोकव्यवहारसिद्धो दौहित्रादिसंसर्गोऽप्यन्याय्यः स्यात् । तस्माद्येषां परस्परविभागस्तेषामेव तत्पूर्वकः परस्परसंसर्गोऽप्यभिसन्धिविशेषपूर्वको न परस्परद्रव्यमिश्रीकरणमात्रेण वणिगादीनामिवेत्यत्र बृहस्पतिवचनतात्पर्य्यं न मात्रादिनिवृत्तौ ।(१)त्रिदोषपरिसङ्ख्यापत्तेः । अत एव "भ्रात्रा वा" "पितृव्येणाथवा" इत्यनास्थायां वादिशब्दस्तत्रोपात्तः । रत्नाकरे चण्डेश्वरेणाप्युक्तम् । अनास्थायां वाकारः । तेन पितृव्यजनांशिना कृतविभाग एकत्र स्थितः संसृष्टः सर्वलोकगृहीतो लभ्यत इति । वाचस्पतिरप्येवमेवाह ।

यत्तु तेनोक्तं पृथग्धनानामेकत्र मेलनमेव संसर्गो लाघवात् । न तु विभागपूर्वकत्वं तत्र विशेषणं, परस्परानुमतिश्च तत्र हेतुरिति । तन्न । पुनः शब्दविरोधात् विभागेऽपि संसर्गशब्दप्रयोगापत्तेः । जन्मना स्वत्वानङ्गीकारेण तत्रापि पृथग्धनमेलनात् । अन्यथा विकल्प उभयस्य शास्त्रार्थत्वात्पित्रादिसमुच्छ्रितसंसर्गोऽपि सकललोकसिद्धो व्याहन्येत । मिताक्षराकृतोऽपि 'न येन केनापि' इति वदतो यथाकथञ्चित्तद्द्रव्यमिश्रणसंसर्गव्यावृत्त्या विभागपूर्वकाभिसन्धिविशेषकृतसंसर्गनियम एवाभिप्रेतो न मात्रादिव्यावृत्तिः । भ्रात्रधिकारावसरे संसृष्टिसोद-

---

( १ ) स्वार्थत्याग–परार्थाङ्गीकर–प्राप्तबाधारव्यास्त्रयो दोषाः परिसङ्ख्याविधौ । स च यत्र गत्यन्तराभावस्तत्र "पञ्चपञ्च नखा भक्ष्याः" इत्यादौ स्वीक्रियते । सति गत्यन्तरे तु न युक्तः । प्रकृतेऽपि "विभक्तो यः पुनः" इति बृहस्पतिवचनस्य मात्रादिनिवृत्त्यपरकत्वेनाप्युपपत्तौ तन्निवृत्तिपरकत्वाश्रयणं नोचितमिति भावः ।

रत्वादिविशेषविधानार्थत्वं च यदस्य "संसृष्टिनस्तु संसृष्टी'इत्यादिवचनस्य भवताभिहितं तत्त्वतितुच्छम् । पित्रादिषु गोत्रजादिषु चास्य प्रवृत्त्यविरोधात् । तच्च तत्रैव विस्तरेण वक्ष्यामः । नच तावन्न्यायविरोधो दूषणम् । नापि वचनविरोधः । संसृष्टस्याप्यभार्य्यापितृकस्येति तेन विशेषणादपत्याभाव इव भार्यापित्रभाव एव संसृष्टभ्रातृधनेऽधिकार आयातीति वाच्यम् । यतः संसृष्टिधनग्रहणं

संसृष्टिनां तु यो भागः स तस्या नेष्यते बुधैः

इति नारदेन साक्षादेव तद्भार्यायाः प्रतिषिद्धम् ।

संसृष्टिनां तु यो भागस्तेषामेव स इष्यते

इति कल्पतर्वादिधृतपाठेऽप्येवकारेण पत्न्यादिप्रतिषेध आयात्येव । न चैवं नारदवचनं "भ्रातृणामप्रजा"इत्यस्य प्रक्रमबलात् "संसृष्टिनां तु यो भाग" इत्यनेन पौनरुक्त्यं स्यादतः स्त्रीशब्दस्यात्र श्रवणादन्यत्र च पत्नीशब्दस्य, पत्नीविषयत्वेन व्यवस्थैव साधीयसीति वाच्यम् । पूर्वोक्तविवरणेन स्त्रीधनाविभाज्यत्वतद्धरणमात्रविधानपरतया तदप्रसक्तेः । स्त्रीमात्रस्य तद्धनग्रहणस्य पत्नीत्यादिवाक्यैः पत्नीपदोपेतैरप्रसक्तत्वेन तत्प्रतिषेधासम्भवाच्च । वसिष्ठवचने च रिक्थलोभादिति नियोगविशेषणं भवन्मतेऽनुपपन्नम् । पुत्रादिरहिततद्धनग्रहणे यदि विभागाविभागसंसर्गाद्यविशेषेणैव तस्याः सर्वादौ, तर्हि रिक्थलोभेन नियोगाङ्गीकारस्तस्याः कदा प्रसक्तो यो निषिध्यते । मन्मते तु संसृष्टाविभक्तभ्रातृसत्त्वे नारदादिवचनात्तस्या अपुत्रभर्तृधनसम्बन्धाभावेन पुत्रद्वारैव तत्सम्बन्धात्प्रसक्तो रिक्थलोभेन नियोगस्वीकारः प्रतिषिध्यते । नचात्रापि पत्नीभिन्नाया भार्य्याया भर्तृधनानधिकारात्तस्या एव रिक्थलोभेन प्रसक्तो निषिध्यते नियोगस्वीकार इति न भवदुक्तप्रसक्तिप्रतीक्षेति वाच्यम् । पत्न्या एव तत्र प्रस्तुतत्वात्तद्भिन्नभार्य्यापरत्वानुपपत्तेः । अतश्च धारेश्वरादिभिर्नियोगार्थिपत्नीपरत्वे पत्नीत्यादिवाक्यस्येदमेव वशिष्ठवचनं प्रमाणतयोपन्यस्तम् । तस्मान्नारदवशिष्ठवाक्यबलात् संसृष्टिभर्तृधनग्रहणप्रतिषेधः पत्न्याः । बृहस्पतिवचने च—

अनपत्यस्य धर्म्मोऽयमभार्य्यापितृकस्य च

इति कथनात्पत्न्यां सत्यां सोदरस्यापि संसृष्टिभ्रातृधनग्रहणप्रतिषेध इति विरोध आवश्यकः कथञ्चिद्विषयव्यवस्थया परिहर्त्तव्योऽपरिहृतोऽन्यैः परिह्रियते । सन्दंशोत्थितप्रकरणबलात्प्रसक्तमप्यभार्य्यापितृकस्य संसृष्टिविशेषणत्वमन्यथासिद्धनारदादिवाक्यानुरोधादस-

सृष्टिपरत्वावश्यकतया बाध्यते । वाक्यविरोधे प्रकरणस्याप्रयोजकत्वात् । नचायमिति सर्वनाम्ना संसृष्टिधनग्रहणरूपधर्मस्य प्रक्रान्तस्यानेन विशेषाभिधानादनपत्यस्येतिवद्भार्य्यापितृकस्येत्यस्यापि संसृष्टिप्रमीतविशेषणत्वमिति वाक्ययोरेवायं विरोधो न वाक्यप्रकरणयोरिति वाच्यम् । सर्वनाम्नः संसृष्टिधनग्रहणपरामर्शकत्वेऽपि सोऽयमनपत्यसंसृष्टिस्वामिकधनग्रहणरूपो धर्म्मो भार्य्यापितृरहितस्यासंसृष्टिनोऽप्यनपत्यस्य प्रमीतस्य । असंसृष्टिविभक्तप्रमीतस्य धनं तु भार्य्यापितृसहितस्यैवानपत्यस्य सोदरो गृह्णीयान्न भार्य्यापित्रन्यतरवत इति वाक्यार्थोपपत्तेः। चकारोऽप्येवमनुक्तासंसृष्टिसमुच्चयार्थो व्याख्येयः। अतश्चासंसृष्टविषयेणानेन प्रकरणविच्छेदे जाते "संसृष्टानां तु यः कश्चित्" इत्यग्रिमवाक्ये संसृष्टपदोपादानमपि सार्थकं भवति । अन्यथा प्रक्रमादेवात्रापि तल्लाभे तन्मन्दप्रयोजनं स्यात् । अत एव (१)तार्त्तीये निविदधिकरणेऽसम्बद्धानिविद्भिश्छिन्नसामिधेन्यवान्तरप्रक-

---

(१) तृतीयाध्यायप्रथमपादीयैकादशाधिकरणम् "सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् । ( ३।१।११।२१ ) इति ।

दर्शपूर्णमासयोः सामिधेनीर्विधाय तासां च "त्रिः प्रथमामन्वाह" इत्यादिवचनैर्गुणान् विधाय ततो निवित्संज्ञका मन्त्राः "अग्ने महाँ असि ब्राह्मण भारत" इत्यादयो विहिताः । ततः काम्याः सामिधेनीकल्पा विहिताः । तदनन्तरमुपवीतं विहितम् । निवीतं मनुष्याणां, प्राचीनावीतं पितृणां, उपवीतं देवानाम् उपव्ययते देवलक्ष्ममेव तत्कुरुते" इति । ततः पुनरपि सामिधेनीनामेव वाचनिका गुणा विधास्यन्ते "अन्तरानूच्यं सदेवत्वाय"इत्यादयः । अन्तरानूच्यम् अनुवाक्यां पठेदित्यर्थः । तत्र संशयः उपवीतं सामिधेन्यङ्गमुत दर्शपूर्णमासाङ्गमिति ।

तत्र सामिधेनीप्रकरणस्यावान्तरस्य स्वीकारात्तदङ्गत्वमेवोपवीतविधेरिति प्राप्त उच्यते । निविद्विधिना सामिधेनीप्रकरणस्य विच्छेदितत्वान्न तदङ्गता । व्यवहितेनापि सम्बन्धे सर्वत्रातिप्रसङ्गात् । ननु निविदामप्यवान्तरप्रकरणेन सामिधेन्यङ्गत्वान्न तद्विच्छेदकत्वमिति चेत्, न । प्रकरणाद्बलवता लिङ्गेन निविदामग्निसमिन्धनाङ्गत्वावगमात् । तथाहि आहुत्यधिकरणभूतमग्निं सम्बोध्य "महाँअसि" इत्यादिभिर्निविद्वाक्यैरग्नेरुत्साहजननाय तद्गुणा आवेद्यन्ते । एतन्मूलकमेव "निविद्भिर्न्यवेदयत्, तान्निविदां निवित्त्वम्" इति तन्निर्वचनं श्रूयते । ननु यदि चाग्नेः सामिधेन्यङ्गता भवेत्तदा तद्द्वारा निविदोऽपि तदङ्गं स्युः । न चैवम् । प्रत्युत 'समिध्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्य इति व्युत्पत्त्या निविदामिव तासामप्यग्न्यङ्गतैव प्रतीयत इति न निविदां सामिधेनीनां च मिथः सम्बन्धः । तेना

णाग्राह्यमुपवीतं न सामिधेन्यङ्गमपि तु महाप्रकरणाद्दर्शपूर्णमासाङ्गम् । ये तु पश्चात्तना गुणास्ते पुनर्वचनादेव दूरस्थानुवादेनैव द्वादशोपसत्त्ववत्सामिधेन्यनुवादेन विधीयन्त इति भट्टमतेन सिद्धान्तितम् ।

वस्तुतस्तु "या तस्य भगिनी" इत्यनेन सोदराभावे यो भगिन्यधिकारः संसृष्टिधने प्रतीयते तस्यैवाव्यवहितस्यानपत्यस्येति वाक्यशेषस्थेनायामिति सर्वनाम्ना परामर्षस्तत्र च न कोऽपि विरोधः । स्मृतिचन्द्रिकायामप्येवमेवोक्तम् । अविभक्तापुत्रपतिस्वामिककृत्स्नधनग्रहणं तु पत्न्याः कात्यायनवचनविरुद्धम् । यदाह—

---

सम्बन्धिभिर्निर्वितपदैर्दर्शपूर्णमासाङ्गैर्विच्छिन्नं सामिधेनीप्रकरणं नोपवीतं ग्रहीतुमर्हति । ननु निविदङ्गत्वमेवोपवीतविधेः स्यादिति चेत्, तदपि न, अभितः कीर्तनाभावेन तासां प्रकरणाभावात् । सन्निधिना तदङ्गत्वम् इति चेत्, न । काम्यसामिधेनीकल्पैर्व्यवधानात् । तर्हि काम्यानामेवाङ्गं स्यात् व्यवधानाभावात् फलावच्छेदेन प्रकरणसद्भावाच्च । अत्र च निविदामिव काम्यानामप्यभितः कीर्तनाभावात् कथं प्रकरणत्वमिति न शङ्क्यम् अफलानामेव प्रकरणोन्मेषायाभितः कीर्तनापेक्षा नतु सफलानाम् । अतः सफलत्वेन काम्यानां प्रकरणत्वात्तदङ्गता निविदां युक्तेति चेत्, न, तेषां विकृतित्वात् । तत्त्वेन प्रकरणत्वाभावात् । साकाङ्क्षत्वलक्षणं हि प्रकरणम् । विकृतयो ह्युपकाराकाङ्क्षायां क्लृप्तोपकारत्वात्प्रथमं प्राकृतैरेव सम्बन्ध्यन्ते न तु सन्निहितैः प्रथमं सम्बध्यन्ते । सन्निहितत्वेऽपि तेषामक्लृप्तोपकारत्वात् । एवं च प्राकृतैरेवोपकाराकाङ्क्षाशान्तेरुक्तलक्षणं प्रकरणं विकृतीनां नास्ति किन्तु पाठसन्निधिमात्रम् । तच्च प्रकरणात् दुर्बलमिति महाप्रकरणाद्दर्शपौर्णमासाङ्गत्वमेवोपवीतस्य । 'सदेवत्वाय' इत्यादीनां वाचनिकानां पश्चात्तनानां गुणानां सामिधेन्यनुवादेन विधानं कथं स्यात्प्रकरणविच्छेदादिति तु न शङ्क्यम् । ज्योतिष्टोमप्रकरणपठिते "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य" इति वाक्ये सहाह्ना समाप्यमानत्वात्साह्नपदेन ज्योतिष्टोमस्याभिधानात् त्र्युपसत्त्वं तदङ्गम्, अहीनस्य इत्यनेनापि न हीनः अहीन इति योगार्थमाश्रित्य सर्वक्रतुप्रकृतित्वादहीनस्य ज्योतिष्टोमस्याभिधानसम्भवेन तत्रैव द्वादशोपसत्त्वविधाने प्राप्ते अहीनपदस्याहर्गणाख्ययागेषु द्विरात्रादिषु रूढेर्योगाच्च तस्या बलत्त्वेन दूरस्थमप्यहर्गणमनूद्य द्वादशोपसत्त्वविधानं तार्तीयतृतीयपादीयत्रयोदशाधिकरणे यथा सिद्धान्तितं तद्वत्प्रकरणविच्छेदेऽपि दूरस्थसामिधेन्यनुवादेन गुणविधानस्य शक्यत्वान्न तद्वशेन प्रकरणविच्छेदः शङ्कनीय इत्यधिकारणसिद्धान्तनिष्कर्षः । प्रकृते च "अनपत्यस्य धर्मोऽयं" इति बृहस्पतिवचने संसृष्टकरणस्थेऽपि "अभार्यापितृकस्य च" इत्यंशस्य "संसृष्टिनां तु यो भागः स तस्या नेष्यते बुधैः" इति नारदवचनानुरोधेनासंसृष्टिपरत्वे समाश्रिते तेन प्रकरणविच्छेदेऽपि सामिधेन्यनुवादवत् "संसृष्टिनां तु यः कश्चिद्विद्याशौर्यादिना धनम्" इत्यग्रेतनवाक्ये संसृष्टपदेन संसृष्टिनमनूद्य द्व्यंशादिविधानं कर्तुं शक्यं तत्पदोपादानस्य सार्थकता चेति योजनीयम् ।

स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी।
अविभक्ते धनांशे तु प्राप्नोत्यामरणान्तिकम्॥ इति।

तुशब्दो वाशब्दार्थे। तथा चायमर्थः। ग्रासाच्छादनमेव साक्षाल्लभते आमरणान्तिकं यावज्जीवं यावता धनेन जीवनं स्वऽयधिकारिकमाव- श्यकं च कर्म सिद्ध्यति तावन्तं धनांशं वा प्राप्नोति। धनांशमामरणा- न्तिकमित्युक्तेः कृत्स्नं धनमविभक्तस्य पत्युर्लभत इति निरस्तम्। न च स्त्रीशब्दश्रवणात्पत्नीव्यतिरिक्तस्त्रीपरमिदमपीति वाच्यम्। अवि- भक्त इति विशेषणानर्थक्यापत्तेः। विभक्तेऽपि भर्त्तरि पत्नीभिन्नाया अपुत्राया भरणमात्रोक्तेः। अत एव कृतेऽप्यंश इत्यनुवृत्तौ—

बृहस्पतिः,

प्रदद्यात्स्वेव पिण्डं च क्षेत्रांशं वा यदीच्छति। इति।

अस्य व्याख्यानं स्मृतिचन्द्रिकायाम्। पिण्डग्रहणमशनाच्छादनोपल- क्षणार्थम्। तत्पर्याप्तं धनं तत्सम्पादकं क्षेत्रांशं वा स्वरुच्या भर्त्रंशार्ह- पत्नीव्यतिरिक्तविधवायै भ्रात्रादिस्तद्धनग्राही प्रदद्यात्। एवकारः प्रदा- नस्यावश्यकत्वार्थ इति। एतद्विषयकमेव नारदवचनम्—

यावत्यो विधवाः साध्व्यो ज्येष्ठेन श्वशुरेण वा।
गोत्रजेनापि वान्येन भर्त्तव्याश्छादनाशनैः॥ इति।

भर्तृधनग्राहिणेति सर्वत्र शेषः। धनग्रहणनिमित्तत्वाद्भरणं स्यात्। साध्व्य इत्यनेन सर्वत्र साध्वीनामेव भरणमसाध्वीनां तु पत्नीनां च न। तदपि "आच्छिन्द्युरितरासु तु" इति प्रागुक्तनारदवचनवाक्यशेषादि- भ्यः। अत एव साध्वीनां जीवनार्थं श्वशुरादिभिर्दत्तमन्यैरपि दाया- दैर्नापहरणीयमित्यप्याह—

बृहस्पतिः,

स्थावरादि धनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु।
न तच्छक्यमपाहर्त्तुं दायादैरिह कर्हिचित्॥ इति।

अन्यादृशीनां तु दत्तमप्यपहर्त्तव्यमित्याह—

कात्यायनः,

भोक्तुमर्हति कृत्तांशं गुरुशुश्रूषणे रता।
न कुर्याद्यदि शुश्रूषां चैलपिण्डे नियोजयेत्॥
अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका।
व्यभिचाररता या च स्त्रीधनं न च सार्हति॥

नार्हतीत्यनेन न देयं जीवनपर्याप्तमपि दत्तमपि च तादृश्याः स- काशादपहरणीयमिति द्वयमप्युक्तं भवति। यत्तु "तस्मात् स्त्रियोऽनि-

न्द्रिया अदायादा" इति श्रुतिवचनं, तन्मूलकं च—

निरिन्द्रिया ह्यदायादाः स्त्रियो नित्यमिति स्थितिः ।

( अ० ९ श्लो० १८ )

इति मनुवचनं, तद्द्वयमपि यासां शृङ्गग्राहिकया धनग्रहणं नोक्तं तद्विषयमवसेयम् । गौतमामिताक्षरायां हरदत्तोऽप्येवमेवाह ।

केचित्तु निरिन्द्रियपदसमभिव्याहारान्निन्दामात्रपरं तदित्याहुः । तन्न । दायादत्वांशे निन्दाया निषेधकल्पनावश्यम्भावात् रागाद्दायग्रहणप्राप्तेर्नित्यानुवादासम्भवात् । अनिन्द्रियत्वं तु पुम्पारतन्त्र्यात्कथञ्चिदनुवादः । वस्तुस्वभावविपरीतनिषेधकल्पनस्य बाधात् । तस्मात्पूर्वोक्त एव समाधिः ।

पराशरस्मृतिटीकायां विद्यारण्यश्रीचरणास्तु श्रुतिमेवैनामन्यथा व्याचख्युः । पात्नीवतग्रहे पत्न्या अंशो नास्तीत्यदायादपदस्यार्थः । तत्र हेतुरनिन्द्रिया इति । "इन्द्रियं वै सोमपीथ" इति सोमेऽपीन्द्रियशब्दप्रयोगात्ततो निर्गता इति सोमपानानाधिकृता इति पात्नीवतग्रहप्रशंसेति ।

इति पत्न्याधिकारविचारः ।

पत्न्यभावे दुहितरोऽपुत्राविभक्तासंसृष्टिधनभाजः ।

तथा च—

मनुः, ( अ० ८ श्लो० १३० )

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥

बृहस्पतिरपि—

अङ्गादङ्गात्सम्भवति पुत्रवद् दुहिता नृणाम् ।
तस्मात् पितृधनं त्वन्यः कथं गृह्णीत मानवः ॥ इति ।

अत्र "पुत्रेण समा" "पुत्रवत्"इति च साक्षाज्जन्यत्वेऽपि पुत्रे पित्रवयवानां बाहुल्येन सङ्क्रान्तेर्दुहितरि चाल्पानां

पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।

इत्यादिवचनैः स्मृतिष्वायुर्वेदे च प्रतिपादनात्पुत्रतुल्यत्वं दुहितुरुक्तमिति द्रष्टव्यम् । आत्मनि "आत्मा वै जायते पुत्र" इत्यात्मभूतपुत्रतुल्यायामित्यर्थः । तिष्ठन्त्यामित्यनादरे सप्तमी । तामनादृत्येत्यर्थः । यद्यप्यनेनौरसपुत्राभावे दुहितुर्धनग्रहणमित्यत्र न्याय उक्तस्तथापि गौणपुत्रपत्न्योरभावे दुहितुर्धनग्रहणमिति को न्यायः । उच्यते । नारदेन मन्दानुग्रहाय सोऽपि स्पष्टीकृतः । यदाह—

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात्। इति। (व्य०प०१३श्लो०५०उ०)
विवृतं चेदं तेनैव—
पुत्रश्च दुहिता चोभौ पितृसन्तानकारकौ। इति। (व्य०प०१३श्लो०५०पू०)

अयमाशयः। पुत्रदुहितरावुभौ पितुः पौत्रदौहित्राख्यसन्तानकारकावतः सन्तानप्रवर्त्तकत्वस्य तुल्यत्वात् दुहितुरपि पुत्रवदधिकारः। पौत्रदौहित्राख्यसन्तानयोश्च स्वरूपतस्तुल्यत्वाभावात्कार्य्यतस्तुल्यत्वमभिप्रेतम्। कार्यमपि नर्णापाकरणरिक्थग्रहणलक्षणम्।

पुत्रपौत्रैर्ऋणं देयम्।

पितामहद्रव्यमधिकृत्य च—

तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः।

इति वचनाभ्यां पौत्रे सति दौहित्रस्य तदनधिकारात्। तेन दृष्टमात्रकार्य्यं श्राद्धकर्त्तृत्वम्।

पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रका मताः।

इति विष्णूक्तेः। एवं च दृष्टादृष्टोपकारकस्वसन्तानमुखेनोपकारकपुत्रात्केवलात् दृष्टोपकारकस्वसन्तानमुखेनोपकारिका दुहिता न्यूना। न चैवं पत्न्यपेक्षया प्रत्यासन्ना जन्या दुहितेति पत्नीतः पूर्वं सैव धनमर्हतीति वाच्यम्। यतः सहाधिकारेणाग्निहोत्रादिवैदिककर्मोपकारिका कामाख्यपुरुषार्थसाधनतया सन्तानसाधनतया च दृष्टादृष्टोपकारकत्री देहार्द्धसंस्तुता पत्न्येव ततोऽधिका। ततश्च पुत्राभाव इति पत्न्यभावस्याप्युपलक्षकम्। प्राग्लिखितविष्णुवचनादस्माच्च योगीश्वरवचनात्। यद्यपि पुत्रकर्तृकश्राद्धे सम्प्रदानतया स्वयमेवादृष्टोपकारकः पिता दुहित्रपेक्षया प्रत्यासन्न इति "पिता हरेदपुत्रस्य रिक्थं" इतिवचनस्यावसर उचितो दुहितुः प्राक्। तथापि "तस्यामात्मनि तिष्ठन्त्यां" इत्यनेन शारीरप्रत्यासत्त्या सैवाग्रेसरीति तदभावे तद्वचनस्यावसरः। वाशब्दोपादानेन तस्य क्रमपरत्वाभावात्।

जीमूतवाहनस्तु (अ० ११ परि० २)

दुहितुरधिकारे सन्तानकारकत्वस्य हेतोर्निर्देशात्सन्तानस्य च पिण्डदस्यैवोपकारकत्वादपिण्डदस्यानुपकारकत्वेनान्यसन्तानवच्चाविशेषात् पुत्रवती सम्भावितपुत्रा वा दुहिता धनाधिकारिणी। वैधव्यत्वबन्ध्यत्वदुहितृप्रसूत्वादिना विपर्य्यस्तपुत्रा पुनर्नाधिकारिणीत्याहस्थं दीक्षितमतामित्याह।

तदपि चिन्त्यम्। प्राथमिककन्याधिकारस्य "अपुत्रमृतस्य कुमारी रि

कथं गृह्णीयात्तदभावे चोढा" इति पराशरवचनात् "कन्याभ्यश्च पितृद्रव्यात्" इति देवलवचनाच्च तेनैव प्रथमं कन्यैवैका पितृधनाधिकारिणीत्यनेन ग्रन्थेनाभिधानात्। तदानीं च पुत्रसम्भावनानिश्चयाभावात्। हेतुनिर्देशस्य प्रत्यासत्त्यतिशयमात्रप्रदर्शकतयाप्युपपत्तेः। किञ्च। स्वयमेव कन्याया असम्भवे सम्भावितपुत्रायाः पुत्रवत्याश्चाधिकार इति वदन् हेतोर्व्यभिचारितां दर्शयति। तस्मादस्मदुक्तरीत्यैव प्रत्यासत्त्यर्थतया हेतुर्व्याख्येयः।

धारेश्वर–देवस्वामि–देवशतप्रभृतयस्तु "पिता हरेदपुत्रस्य" इत्यादिवचनविरोधपरिहाराय दुहित्रधिकारप्रतिपादकवचसां पुत्रिकाविषयत्वं, तदभावे तु पित्रादय एव यथोक्तक्रमेणाधिकारिण इत्याहुः।

तदतिपेशलम्। पुत्रिकाया "औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः" "तृतीयः पुत्रः पुत्रिका विज्ञायत" इति योगीश्वरवाशिष्ठादिवचनैर्गौणपुत्रकोटिनिविष्टायाः क्षेत्रजादिपुत्रवत् "न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः" इति गौणपुत्रविषयेण मानवेन वचनेन पत्न्यां सत्यामपि रिक्थग्राहिण्यास्तदभावे रिक्थग्राहित्वं दण्डापूपिकयैव सिद्धमिति वचनारम्भानर्थक्यापत्तेः। दुहितृमात्रवाचकानां बहूनां वचनानां विना कारणं विशेषपरत्वकल्पनानुपपत्तेश्च। किञ्च। भवन्मते "अङ्गादङ्गात्सम्भवति" इत्यादिना पुत्रिकाविषयेण वचसा पुत्रिकाया धनग्रहणे उक्ते पुनः—

सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता।
कृताऽकृता वाऽपुत्रस्य पितुर्द्धनहरी तु सा॥

इत्यनेन पुनर्द्धनहरत्वप्रतिपादनं तेनैव मुनिना क्रियमाणं विवरणमात्रतयाऽपुनरुक्तं कर्त्तव्यं स्यात्। सामान्यविशेषविषयतया तु स्पष्टमेवापौनरुक्त्यम्। सदृशी=पितृसवर्णा। सदृशेन=सवर्णेनोढेति प्रकृष्टापकृष्टवर्णसम्बन्धनिरासाय। तज्जातस्योत्तमवर्णमातामहश्राद्धादिनिषेधादिति जीमूतवाहनोक्तमनादेयम्। ऊढापदेनैवाधमवर्णसम्बन्धनिरासात्। न ह्यधमवर्णोढत्वमुत्तमवर्णायाः सम्भवति। तस्मादुत्तमवर्णनिरासार्थमेव सदृशग्रहणम्।

ननु नारदेन कन्यारूपाणां पितृभ्रातृरहितानां सर्वासामेव दुहितॄणां पितृधनप्राप्तिरुत्सर्गतोऽभिहिता।

यथाह—(व्य० प० १३ श्लो० २७)

स्यात्तु चेत् दुहिता तस्याः पित्र्योंऽशो भरणे मतः।
आसंस्काराद्धरेद्भागं परतो बिभृयात्पतिः॥ इति।

तस्या इति पतिपुत्रविहीनपत्नीमधिकृत्याह । तेन तादृश्या यदि दुहिता विद्यते तस्या भरणनिमित्तमत्र पित्र्योंऽशस्तस्मादाविवाहसंस्काराद्भरणार्थमेव सा पितृधनभागं हरेत्परतो विवाहादूर्द्धं पतिस्तां बिभृयात् । तेन तावत्कालभरणावशिष्टमपि ततो गृह्णीयात् । यथेष्टविनियोगार्थं तु कन्यायाः पितृधनग्रहणं दूरापास्तमेव । ततश्चास्यापवादकानि दुहितुः पितृधनप्राप्तिप्रतिपादकानि वचनानि सर्वाणि पुत्रिकाविषयाण्येव वाच्यानि । अन्यथा द्वयोरपि दुहितृसामान्यविषयतयोत्सर्गापवादत्वानुपपत्तेः । तस्माद्धारेश्वरादिमतमनुमन्तव्यमिति चेत्, न । स्यादेव यदि नारदवचनं विभक्तविषयं स्यात् । पौर्वापर्य्यपर्य्यालोचनया संसृष्टाविभक्तविषयं तत् स्फुटमवगम्यते । ततश्च विभक्तविषये दुहितृमात्रस्य पत्न्यभावे पितृधने ग्रहणप्रतिपादकानि प्रापकाण्येव नापवादकानीति न पुत्रिकामात्रविषयत्वे तेषां किमपि बीजं पश्यामः । यत्तु सकलपितृधनग्रहणाधिकारप्रतिपादकतया "कन्याभ्य" इत्यादि देवलवचनं जीमूतवाहनेनोपन्यस्तं तत्पूर्वापरविरुद्धम् । जीवद्विभागे कन्यानां विवाहमात्रोपयुक्तधने तस्य प्रमाणतयोपन्यासात् । तदपि चास्माभिः प्राङ्गिरस्तम् । दुहितृष्वपि प्रथममप्रत्ताः पितृधनं गृह्णीयुस्तदभावे प्रत्ताः तासामपि मध्ये प्रागप्रतिष्ठितास्तदभावे प्रतिष्ठिताः सर्वाः समानरूपास्तु समं विभज्य गृह्णीयुरित्यर्थतः सिद्धम् । तथा च—

कात्यायनः,

पत्नी पत्युर्द्धनहरी या स्यादव्यभिचारिणी ।
तदभावे तु दुहिता यद्यनूढा भवेत् तदा ॥ इति ।

गौतमः, स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति ।

अप्रतिष्ठिता=निर्धनाः । यद्यपि स्त्रीधनमित्युक्तं तथापि तुल्यन्यायतया पितृधनविषयमप्येतत् । बन्ध्यत्वादिना सन्तानरहिता प्रतिष्ठितेति तु न युक्तम् । तस्याः सन्तानमुखेनादृष्टोपकाराभावेन धनहारित्वायोगात् । "सदृशी सदृशेनोढा" इति प्राक्पठितं बृहस्पतिवचनं स्मृतिचन्द्रिकाकार इत्थं व्याचख्यौ । अत्राद्यानि चत्वारि विशेषणानि पत्न्या ऊर्ध्वमर्थग्राहिदुहितृविषयाणि । ततः प्राग्धनग्राहिदुहितृविशेषणे द्वे अवशिष्टे कृताऽकृता वेति । अत्र पुत्रिकेति विशेष्याध्याहारः । इतरत्र दुहितेति विशेष्याध्याहारः । वाशब्दश्च व्यवस्थितविकल्पार्थः । एवं चायमर्थः । औरसपुत्रविहीनस्य पितुर्द्धनं द्विविधापि पुत्रिका पत्न्याः पूर्वं गृह्णीयात् । सवर्णादिविशेषणोपेता तु दुहिता तत ऊर्ध्व-

मिति । एवं च पत्न्या ऊर्ध्वं सवर्णादिविशेषणोपेतप्रतिष्ठिताऽप्रतिष्ठितोढानूढानां दुहितॄणां समवाये प्रागनूढैव गृह्णाति पित्रा भर्त्तव्यत्वात् । तदभावे ऊढाऽप्रतिष्ठिता । भर्त्रा भर्त्तव्यत्वेऽपि भर्त्तुर्भरणासामर्थ्येनाप्रतिष्ठितत्वात् । तदभावे प्रागुक्तया प्रस्थासत्त्या सवर्णादिविशेषणोपेता प्रतिष्ठितापि धनं गृह्णाति । अन्यैस्तु कृतेति पुत्रिकापरम् अकृतेति दुहितृमात्रपरमभ्युपेत्य वाशब्दं चानास्थापरमास्थायाखिलदुहितृमात्रविषयं विशेष्याध्याहारमन्तरेणैव व्याख्यातम् । सेत्यनेन दुहितृमात्रपरामर्शात् । दुहितर इति बहुवचनं सजातीयानां समांशोऽसमानजातीयानां वर्णक्रमेण विशेषांश इति प्रतिपादनाय ।

इति दुहित्राधिकारः ।

## दुहितुरभावे दौहित्रः ।

चशब्दादनुक्तसमुच्चयार्थात् ।

विष्णुः,

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः ।
पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रकाः समाः ॥

अपुत्रपौत्रेति दुहितृपर्य्यन्ताभावोपलक्षणम् ।

मनुरपि—(अ० ९ श्लो० १३६)

अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम् ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥ इति ।

पौत्रीत्यनेन यथा पुत्राभावे पौत्रः पितामहधनाधिकारी तथा दुहित्रभावे दौहित्र इत्युक्तम् ।

बृहस्पतिरपि—

यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु ।
तथैव तत्सुतोऽपीष्टे मातृमातामहे धने ॥

यथा=येन दौहित्रदेयपिण्डेन दुहिता पितृधनाधिकारिणी तथैव=तेनैव पिण्डदानेन दुहितृसुतोऽपि मातामहधने स्वामी सत्स्वपि बन्धुषु पित्रादिष्वित्यर्थः । न च पुत्रिकापुत्रविषयमिदं वचनम् । तस्या इति तत्सुत इति च सर्वनामभ्यां प्रकृतदुहितृमात्रपरामर्शात् । अत एव मनुरपि दौहित्रमात्रस्यैव मातामहधनाधिकारं दर्शयति—(अ० ९)

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।
स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥ (१३२)
पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः ।
तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥ इति । (१३३)

पितुरिति मातुः पितुरिति व्याख्येयम्। अत एवाग्रे मातामहाय चेत्याह। अथवा यथा स स्वपितुरखिलं रिक्थं गृह्णाति तथाऽपुत्रस्य मातामहस्यापि। स्वयमेव तत्पुत्रकार्य्यकारित्वात्। तदेवाह–स एवेति। स्वपित्रे मातामहाय चेत्यर्थः। मातापितराविति च न यथाक्रममन्वयः। किन्तु पौत्रस्य पिता दौहित्रस्य माता तस्य धनस्वामिनो देहतः सम्भूतौ इति यथायोग्यम्। केचित् "अपुत्रपौत्र" इतियथाश्रुतविष्णुवचनात्पत्नीदुहितृतः प्राग्दौहित्रस्य धनाधिकारमाहुः। तत् योगीश्वराविरोधात् "तथैव तत्सुतोऽपि" इति बृहस्पतिवचनेऽपि दुहितृतस्तस्य जघन्यभावावगतेर्हेयम्।

इति दौहित्राधिकारः।

## दौहित्राभावे पित्रौ धनभाजौ।

अत्र मिताक्षरा। यद्यपि(१) युगपदधिकरणवचनतायां द्वन्द्वस्मरणात्तदपवादत्वाच्चैकशेषस्य मातापित्रोर्द्धनग्रहणे क्रमो न प्रतीयते तथापि विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातात् एकशेषाभावपक्षे च मातापितरावित्यत्र मातृशब्दस्य पूर्वश्रवणात्पाठक्रमोऽवगम्यमानः क्रमाकाङ्क्षायां सत्यां न परित्यक्तुमर्ह इति प्रथमं माताऽपुत्रपुत्रधनभाक् तदभावे पिता। किञ्च। पिता पुत्रान्तरेष्वपि साधारणो माता त्वस्यैवासाधारणीति प्रत्यासत्त्यतिशयात्—

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्।

इति मनुना प्रत्यासत्त्यतिशयेन धनग्रहणाधिकारस्य विनिगमितत्वात्सपिण्डसमानोदकादिष्वेव विनिगमनाकाङ्क्षायामेतद्वचनप्रवृत्तेरप्यदण्डवारितत्वादिति।

अत्र स्मृतिचन्द्रिकाकारः प्रगल्भते। "सारस्वतौ भवत" इत्यत्रोत्पत्तिवाक्ये क्रमावगत्यभावेन याज्यानुवाक्याक्रमेण प्रधानानुष्ठानक्रमः पञ्चमे निरूपितो न त्वेकशेषत एव काचित्क्रमात् गतिरुपपादिता(२)। तद्वदत्रापि क्रमार्थ-

(१) युगपत् अधिकरणानां द्रव्याणां वचनं यैः पदैः तेषां भावस्तत्ता तस्याम् उभयपदार्थप्राधान्य इति यावत्।

(२) पञ्चमाध्यायाद्यपादीयसप्तमाधिकरणम्। "मुख्यक्रमेण वाङ्गानां तदर्थत्वात्" (५।१।१४) इति।

"सारस्वतौ भवत" इत्यनेन पुरोडाशहविष्कं यागद्वयं विहितम्। सरस्वती देवताऽस्य सारस्वतः पुरोडाशः सरस्वान् देवताऽस्य सारस्वतः। स च स च तौ सारस्वतौ इत्येकशेषः। पुरोडाशयज्ञस्येष्टिविकृतित्वात्प्रकृतिवदित्यतिदेशेन "चतुरो मुष्टीन्निर्वपति" इति विहितो निर्वापस्तत्र प्राप्तः। स किमनियमेन कर्तव्य उत स्त्रीदैवत्यनिर्वापं कृत्वा पुन्दै-

मन्यत्प्रमाणमन्वेषणीयम्। तदभाव इतरेतरयोगस्य द्वन्द्ववदेकशेषेऽप्यवगतेर्विभज्यैव पित्रोस्तुल्यतया धनग्रहणं युक्तम्। यत्तु पिता सपत्नीपुत्रेष्वपि साधारणो माता त्वसाधारणीति प्रत्यासत्त्यतिशयात्तस्या एव पितृतः प्राग्धनग्रहणं न्याय्यमित्युक्तम्। तदप्यन्याय्यम्। नहि जननीजनकयोर्जन्यं प्रति प्रत्यासत्तितारतम्यमस्ति। पुत्रान्तरजनकस्याप्येतज्जनकताया मातृतुल्यत्वात्। नहि जनकतापि व्यासज्यवर्त्तिनी। न च पितृगृहीतं धनं भिन्नोदरेष्वपि सङ्क्रामति, मातृगृहीतं त्वेतत्सहोदरेष्वेवेति मातुरेव धनग्रहणमिति वाच्यम्। तस्याः प्रत्यासत्तेर्भ्रातृभगिनीधनाधिकारविनिगमकतया जनकाज्जनन्या धनग्रहणविनिगमकत्वासम्भवात्। द्वन्द्वस्थानीयैकशेषात्तुल्यतावगतौ प्रत्यासत्तेरप्रयोजकत्वाच्च। सत्यां हि क्रमाकाङ्क्षायां सा क्रमनियामिका न त्वसत्यामपि। तस्मात्पित्रोस्तुल्यस्वाम्याद्विभज्यैवानपत्यविधुरपुत्रधनग्रहणमिति श्रीकरः। तदयुक्तम्। "पिता हरेदपुत्रस्य रिक्थं" "स्वर्य्यातस्य ह्यपुत्रस्य माता दायमवाप्नुयात्" इत्यादिवचनेषु पितुर्मातुश्च निरपेक्षस्वाम्यप्रतीतेर्युगपद्ग्रहणायोगात्। व्रीहियवयोर्न्निरपेक्षसाधनत्वप्रतीतौ मिश्रत्वायोगवत्।

केचित्तु मातुर्गर्भधारणपोषणादिनात्यन्तोपकारित्वात् "सहस्रं तु पितुर्म्माता गौरवेणातिरिच्यते" इत्यादिस्मरणाच्च प्रथमं मातुर्द्धनाधिकारमाहुः।

---

वत्यनिर्वापः कार्य इति संशये अतिदेशप्राप्तनिर्वापे क्रमाप्रतीतेः अनियमेन निर्वाप इति पूर्वपक्षे, सिद्धान्तः। मुख्ययागक्रमेणैव निर्वापः कार्यः यतो हौत्रकाण्डे पूर्वं स्त्रीदेवताया याज्यानुवाक्ये समाम्नाते "प्रणो देवी सरस्वती" इति। पश्चाच्च पुन्देवताया "पपीयिवांसं सारस्वतः" इति। अनेन याज्यानुवाक्याक्रमेण स्त्रीयागस्य प्राथम्यमवगम्यते। ततस्तद्धर्मस्य निर्वापस्यापि मुख्यक्रमानुसारेणैवानुष्ठानक्रम इति।

एवं च तत्राधिकरणे "सारस्वतौ" इत्युत्पत्तिवाक्ये एकशेषसत्त्वेऽपि तेन क्रमाप्रतीत्या यथा याज्यानुवाक्यामन्त्रपाठक्रमेण यागयोरनुष्ठानक्रमः स्वीकृतस्तथात्रापि पितराविस्यत्रैकशेषेण तदप्रतीत्या सामान्यतो दौहित्रानन्तरं मातापित्रोर्युगपद्विभज्य धनग्रहणप्राप्तिस्तदभावे भ्रातॄणामित्यादि।

वस्तुतस्तु नैतदधिकरणविरोधोऽप्यत्र। विषयभेदात्। तत्र हि "सारस्वतौ" इत्यत्र सरूपैकशेषाद्विग्रहवाक्येऽपि न क्रमप्रतीतिरतः को वा क्रम इत्याकाङ्क्षायां श्रौतो मन्त्रक्रमो युक्त इति तत्क्रमेण यागानुष्ठानक्रमो निरूपितो न तु सर्वत्रैकशेषे क्रमप्रतीत्यभावस्तदभिप्रेतः। अत्र तु "पिता मात्रा" इति विजातीयैकशेषसत्त्वाद्विग्रहवाक्यादावश्यं क्रमप्रतीतेः स क्रमो युक्त एवेति विभावनीयम्। अग्रे स्वयमेव ग्रन्थकृता सूचयिष्यते चैतत्।

तदपि तुच्छम् । पितुरपि संस्कारवृत्तिसम्पादनादिना बहुधा संविधातृत्वात् "तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात्" इत्यादिस्मरणेन सत्प्रतिपक्षत्वाच्च गौरवमात्रस्य धनग्रहणप्रयोजकत्वे "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता" इत्यादिस्मरणाच्च पितृतोऽपि पूर्वमाचार्यस्याधिकारापत्तेर्भ्रातृभ्रातृपुत्रयोश्च सतोः पितामहपितृव्यादीनामेव प्रागधिकारापत्तेः ।

जीमूतवाहनस्तु—( अ० ११ प० ३ )

पितरावित्यस्मात्पितृक्रम एवावगम्यते । तथाहि पितृप्रातिपदिकात्प्रथमं पितुरवगतौ द्विवचनबलेनैकशेषकल्पनायां सरूपैकशेषासम्भवे विष्णुमन्वादिवचनसंवादाच्च विरूपैकशेषत्वनिश्चये मातुरवगमात् । अतः क्रमज्ञानं क्रमाभिधानव्याप्तं क्रमाभिधाने व्यापके निवर्त्तमाने निवर्त्तत इति श्रीकरोक्तिर्विपरीतक्रमोक्तिश्च विज्ञानेश्वरीया न युक्तेत्याह ।

तस्मान्नैयायिकक्रमस्यात्राव्यवस्थितत्वाद्बृहद्विष्णुवचनोक्तः क्रम आदरणीयः । तत्र च दुहितृगामीत्युक्त्वा तदभावे पितृगामि तदभावे मातृगामीत्युक्तम् । मिताक्षराकारस्य तु प्रथमत एव तादृशपाठेनैव बृहद्विष्णुवचनं लिखतस्तद्विरुद्धन्यायमात्रावलम्बनेन पितरावित्यत्र पितृतः प्राङ्मातुः पुत्रधनाधिकारं सिद्धान्तयतो महत्येव हृदयशून्यता प्रतिभाति । दौहित्रस्यापि दुहितृकोटिनिविष्टत्वाद्बृहद्विष्णुना पृथगनभिधानम् । तेन दौहित्राभावोऽपि दुहित्रभावेनोपलक्ष्यत इति मन्तव्यम् । तस्मात् स्मृतिचन्द्रिका-मदनरत्नकार-कल्पतरु—रत्नाकर—पारिजातकारप्रभृतीनां बहूनां पितुरभावे मातुः पुत्रधनाधिकार इत्येव सिद्धान्तः । वाचस्पतिना तु "तदभावे मातृगामि तदभावे पितृगामी" इति बृहद्विष्णुवचनं पठित्वा यथामिताक्षरमेव सिद्धान्तितम् । तत्तु कुत्रापि तदतिरिक्तग्रन्थे तथापाठस्यालिखनाद्भ्रान्तिविलसितमेव । विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादिस्यापि मिताक्षराग्रन्थो दुष्टः । विग्रहवाक्ये पूर्वनिपातनियमाभावात् , समासे हि तन्नियमः शाब्दिकैः स्मर्य्यते न तु विग्रहवाक्य इत्यादि विज्ञानेश्वरोक्तन्याये यद्दूषणमन्यैरुक्तं तत्परिहाराय पराक्रम्यते । युगपदधिकरणवचनता तावत् द्वन्द्वस्य वचनाधिकरणे वार्त्तिके तन्त्ररत्ने च महता प्रबन्धेन निरस्ता । इतरेतरयोगोऽपि पदान्तरान्वये द्वन्द्वाच्छाब्दरीत्या प्रतीयते । तेन पितरौ धनभाजावित्यनेन युगपदन्वयोऽपि । वस्तुगत्या योः क्रमेऽपि न वाक्यदोषः । सर्वैश्च श्रीकरमिश्रादिभिस्तदभ्युपगमार्वं समाधेयमिदम् । एकशेषाभावपक्षे च मातापितरौ मातरपितरावत्र मातृशब्दस्य पूर्वं श्रवणात्समासैकशेषयोश्च तुल्यप्रतीतिजन-

कत्वाभावे विकल्पायोगादत्रापि तथा प्रतीतिरभ्युपेया। विग्रहवाक्ये यद्यपि पूर्वनिपातनियमो नानुशासनसिद्धस्तथापि व्याख्यातृसम्प्रदायसिद्धोऽस्त्येव। न हि क्वापि पिता च माता च पितराविति विगृह्णन् दृश्यते किन्तु माता च पिता च पितरावित्येवेत्यणुरपि विशेषोऽध्यवसायकर इति न्यायेन तस्यापि विनिगमकता सम्भवतीत्यनेनाशयेन तथोक्तेःसम्भवः। पितुः पुत्रान्तरसाधारण्यं मातुस्त्वसाधारण्यमिति प्रत्यासत्तिरपि जनकताया अव्यासज्यवृत्तित्वेऽपि तदभिप्रायेणैवोक्ता। साधारण्यासाधारण्ये हि सम्बन्धकृते व्यपदेशप्रतीतिविलम्बाविलम्बने भवत एव तथानुभवात्। वाक्यार्थबोधे क्रमाभावे किमिति वस्तुक्रम आश्रियत इति श्रीकरोक्तिस्तु वचनान्तरे निरपेक्षस्वास्यावगत्या क्रमापेक्षया स्मृतिचन्द्रिकाकारादिभिरप्यवश्यं निरस्यैव। बृहद्विष्णुवचनविरोधः परं दुरुत्तरोऽवशिष्यते। तत्रापि यथाशक्ति प्रतिविधीयते। गौरवप्रतिपादकानि वचनानि तावन्मातापितृविषयाणि विरुद्धानि दृश्यन्ते। तानि विषयव्यवस्थयावश्यमविरोधं नेयानि। तथाहि—

उपाध्यायाद्दशाचार्य्य आचार्य्याणां शतं पिता।
सहस्रं तु पितुर्माता गौरवेणातिरिच्यते॥
गर्भधारणपोषाभ्यां तेन माता गरीयसी।

इत्यादीनि मातुरभ्यर्हितत्वप्रतिपादकानि।

तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात्।

इत्यादिस्मृतिवचनानि, पित्राज्ञया परशुरामेण मातुः शिरश्छिन्नं, रघुनाथेन कौशल्यया निवारितेनापि पित्राज्ञया राज्यं विहाय वनवास आदृत इत्यादिपौराणिकान्यर्थदर्शनानि च पितृपूज्यताप्रत्यायकानि। तेषां चायमविरोधप्रकारः। यथा—पिता महागुरुलक्षणोपेतः "स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति" इत्यादियोगीश्वरादिवचोभिः प्रतिपादितो माता च तदाज्ञावशवर्त्तित्वादिपातिव्रतात्वप्रयोजकसमस्तलक्षणरहिता। तयोर्मध्ये मातुरपेक्षया पितैवाधिकोऽभ्यर्हितः। यत्र तु मातारुन्धत्यादिवत्समस्तपातिव्रतागुणोपेता पिता तु जन्ममात्रप्रदः तत्र मातैव पितुरपेक्षयाभ्याधिकमान्या। चिरकारिकोपाख्यानादौ महाभारतादिष्वेवमुपाख्यानस्वरसादयमर्थ उन्नीयते तदत्रापि मन्वादिवचनेष्वपुत्रपुत्रधनग्रहणाधिकारः क्वचिन्मातुः प्रथमं क्वचित्पितुः प्रतीयमान एवमेव व्यवस्थापयितुमर्हः। तथाहि—( अ० ९ श्लो० २१७ )

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।
मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥ इति मनुः,

भार्य्यासुतविहीनस्य तनयस्य मृतस्य च ।
माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया ॥ इति बृहस्पतिः ।
पुनर्मनुरेव, ( अ० ९ श्लो० १८५ )
पिता हरेदपुत्रस्य रिक्थं भ्रातर एव च । इति ।

"तदभावे पिता तदभावे माता" इति प्राग्दर्शितबृहद्विष्णुवचनात् । योगीश्वरवचने तु पितराविल्यत्र विज्ञानेश्वरोक्तरीत्या प्राङ्माता तदनु पिता । अन्यमते सम्भूय विभागः पितुर्वा प्राथम्यमिति विप्रतिपत्तौ पितुरधिकमान्या या माता सा पितुरपेक्षया प्रथमाधिकारिणी । या तु पितुरपेक्षया न्यूनमानभाक् सा पितुः पश्चात् । युक्तं चैतत् । वृत्त्यादिसंविधानमकुर्वतः पितुरपेक्षया मातुरेवाधिकोपकारकत्वाद्धनग्रहणम् । वृत्त्यादिसंविधानकर्त्तुस्तु तस्य यावज्जीवं भरणपोषणादिनातिशयितोपकारकस्य धनग्रहणमिति सर्वस्मृतीनां सर्वनिबन्धानां चाविरोधेन सुस्थता भवतीत्यादि सुधीभिर्विभाव्यम् ।

इति पित्रोरधिकारः ।

## पित्रोरभावे भ्रातरो धनभाजः ।

यद्यपि "अपुत्रधनं भ्रातृगामि" "अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यं तदभावे पितरौ" इत्यादिशङ्खपैठीनसिवचनयोः "भ्रातर एवच" इति मनुवचने च पितृतः प्राक् भ्रातॄणां धनग्रहणं प्रतीयते । "मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनम्" इति च मनुवचने भ्रातृतः प्राक् पितामह्याः । तथापि क्रमपरयोगीश्वरबृहद्विष्णुवचनाविरोधाय तेषां धनाधिकारमात्रपरत्वम् । एतत्क्रमाविरोधसूचनार्थमेव मनुना "भ्रातर एव वा" इति, पैठीनसिनापि "ज्येष्ठा वा पत्नी" इति वाशब्दः प्रयुक्तोऽन्यथा तुल्यकक्षाधिकारिषु तत्प्रयोगोऽत्यन्तमयुक्तः स्यादिति मिताक्षराकारादयो बहवः ।

कल्पतरुकारस्तु पत्नीभ्रातृस्थले श्राद्धाद्यधिकारिणी साध्वी पत्नी प्रथमाधिकारिणी तदन्या तु भ्रातृपितृतोऽनन्तरम् । पितृभ्रातृस्थले तु पितृपितामहाद्युपार्ज्जितं यद्विभागेन पुत्रे सङ्क्रान्तं धनं तत्तस्मिन्नपुत्रे प्रमीते पित्रोः पितृद्रव्याविरोधेन यत्तेनोपार्ज्जितं तत्पित्रोः सतोरपि भ्रातॄणामेवेत्याह ।

मम तु प्रतिभाति "मातर्य्यपि च वृत्तायां" इति मनुवाक्ये "तदभावे मातापितरौ" इति शङ्खपैठीनसिवचनयोः,

ततो दायमपुत्रस्य विभजेरन् सहोदराः ।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा ॥
सवर्णा भ्रातरो माता भार्य्या चेति यथाक्रमम् ।
तेषामभावे गृह्णीयुः कुल्यानां सहवासिनः ।

इति देवलवचने सर्वत्रापि "वृत्तायां" "तदभावे यथाक्रमम्" इत्यादिपदैः क्रमप्रतीतेर्योगीश्वरबृहद्विष्णुवचनयोरेव क्रमपरत्वमितरेषां त्वधिकारमात्रपरत्वेन तदविरोधेन तत्तत्स्थाननिवेशेऽप्यक्षतिरिति समाधिर्नैव साधुः किन्तु क्षेत्रजादिपुत्रस्थले यथा स्मृतिवचनक्रमविपर्य्यास औरसानुकूल्यप्रातिकूल्यगुणवत्त्वागुणवत्त्वादिभिर्व्यवस्थापितस्तथात्रापि दायभागप्रकरणे पुत्रादीनां पित्राद्युपकारकत्वकीर्त्तनस्य गुणवत्त्वादिकीर्त्तनस्य वानन्यप्रयोजनत्वात्प्रत्यासत्तितारतम्यवत् धनस्वाम्युपकारातिशयानतिशयगुणवत्त्वागुणवत्त्वादिभिर्यथावचनं स सर्वोऽपि क्रमविपर्य्यासः समाधेयोऽन्ये तु समाधयः कुशकाशावलम्बनमात्रतुल्या अनुपादेया इति । एवमग्रेऽपीति सर्वं सुस्थम् ।

भ्रातृष्वपि प्रथमं सहोदराः ।
अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् । ( ९।१८७ )

इति मनुना—

बहवो ज्ञातयो यस्य सकुल्या बान्धवास्तथा ।
यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥

इति बृहस्पतिना च प्रत्यासत्त्यतिशयस्यैवासति विशेषवचने विनिगमकत्वेनोक्तेः । भिन्नोदराणां मातृकृतविप्रकर्षात् । भ्रातर इति सामान्यग्रहणात्सोदराभावे भिन्नोदराः । इदमेव व्यक्तमुक्तम्—

सङ्ग्रहकारेण,

सोदर्याः सन्त्यसोदर्य्या भ्रातरो द्विविधा यदि ।
विद्यमानेऽप्यसोदर्य्ये सोदर्य्या धनभागिनः ॥ इति ।

इति भ्रात्रधिकारः ।

## भ्रात्रभावे तत्सुता भ्रातृसुता धनभाजः ।

न च "तथा तत्सुता" इति तथाशब्देन भ्रातृभ्रातृपुत्रयोः सादृश्यप्रतिपादनात् "अनेकपितृकाणां तु पितृतो भागकल्पना" इति वचनाच्च तयोः पित्रभावे विभज्य धनग्रहणमस्त्विति वाच्यम् । विष्णुवचनाविरोधेन तथाशब्दस्य चशब्दार्थत्वात् । अन्यथा तथापदस्य पूर्वत्राप्यन्वयसम्भवेन पित्रोर्भ्रातॄणां च विभज्य ग्रहणमित्यपि कुतो न स्यात् । तच्चेद्विष्णुवचनविरोधान्नेत्युच्यते सोऽत्रापि तुल्यः । "अनेकपितृ-

काणां तु" इतिवचने भ्रात्रभावे तेषामधिकारे सम्पन्ने कस्मिंश्चिद्दव्यपुत्रे भ्रातरि प्रमीते विद्यमानानां भ्रातॄणां सर्वेषां तद्धनसम्बन्धे जाते तद्विभागात् प्रागेव तन्मध्येऽपि यदि कश्चिन्मृतस्तदा तत्पुत्राणां पितृव्यैः सह समविभागे प्रसक्ते स्वपितृविभागमेव ते विभज्य गृह्णीयुर्न सर्वे पितृव्यसममित्येतदर्थम् । भ्रातृसत्त्वे तत्पुत्राणां पितृव्यधनेऽनधिकारात् । "पूर्वाभावे परः पर" इति योगीश्वरवचनात् "तदभावे भ्रातृपुत्रगामी" इति विष्णुवचने भ्रातृपरामर्शकतत्पदेन भ्रात्रभावाभिधानाच्च । भ्रातृपुत्रेष्वपि प्रत्यासत्त्यतिशयात्पूर्वं सोदरभ्रातृजास्तदभावे भिन्नोदरजाः । युक्तं चैतत् । असोदरभ्रातृपुत्रो हि धनिनो मातरं विहाय स्वं पितामहीविशिष्टस्य धनिपितुः पिण्डं ददातीति सोदरभ्रातृपुत्राज्जघन्यस्तदनन्तरमेवाधिकारीति । न च सपत्नीकत्वे त्रयाणां श्राद्धदेवतात्वात्सपत्नमात्रादीनामप्यस्ति तत्रानुप्रवेश इति वाच्यम् । मात्रादिशब्दानां स्वजननीपितृजननीपितामहजननीष्वेव मुख्यत्वात्तेनैव च रूपेण श्राद्धानुप्रवेशस्मरणात् ।

यथा स्मरन्ति—

स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधाकरम् ।
पितामही च स्वेनैव स्वेनैव (१)प्रपितामही ॥ इति ।
सपत्नमात्रादीनामननुप्रवेशः प्रत्युत
अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥

इति स्मरणादायाति । किञ्च सपत्नीकदेवताकश्राद्धविधेर्नित्यत्वं पुत्रादिसर्वजनाधिकारिकत्वात्सपत्नमात्रादीनां चानित्यत्वान्नित्यानित्यसंयोगविरोधान्मात्रादेसापेक्षमेव सपत्नीकत्वविधायकत्वं युक्तम् ।

इति भ्रातृपुत्राधिकारः ।

## भ्रातृपुत्राभावे गोत्रजाः ।

ते च पूर्वोक्तपितृभ्रातृतत्सुतभिन्ना गृह्यन्ते गोबलीवर्दन्यायात् । ते च पितामही सपिण्डाः समानोदकाश्च । तत्र प्रथमं पितामही धनभाक् । "मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम्" इति मानवान्मात्रनन्तरं पितामह्या धनग्रहणे प्रसक्ते पित्रादीनां भ्रातृसुतपर्यन्तानां बद्धक्रमाणामन्तस्तदनुप्रवेशासम्भवादुत्कर्षेऽप्यग्रे तदुत्कालनकारणाभावात्तदनन्तरं पितामहादयोऽन्ये गोत्रजा इति विज्ञानेश्वरः ।

(१) तथैव इति पाठान्तरम् ।

अत्र स्मृतिचन्द्रिकायां गोत्रजा इत्यत्र सरूपैकशेषेण पुमांस एव गोत्रजा न तु स्त्रीरूपाः। विरूपैकशेषो हि कुक्कुटावानय मिथुनं करिष्याम इत्यादिवाक्यशेषादिसमभिव्याहारादिप्रमाणान्तरावगततात्पर्य्यग्रहनिबन्धनः। न चात्र प्रमाणमस्ति। प्रत्युत भ्रातृसुतादिसाहचर्य्यं पुङ्गोत्रजग्रहण एव साधकमस्ति। किञ्च पत्नीदुहित्रादीनां शृङ्गग्राहिकया धनग्रहणाधिकारोक्तेः "तस्मात् स्त्रियो निरिन्द्रिया अदायाः" इति श्रुतेरस्तु तद्व्यतिरिक्तविषयता। गोत्रजादिस्थले तद्विरोधाद्विरूपैकशेषकल्पनैव हातुमर्हा। अत एव "जीवन् पुत्रेभ्यः पिता दायं विभजेत्" इत्यापस्तम्बसूत्रं व्याचक्षाणेन तद्भाष्यकारेण पुत्रेभ्य एव दायं विभजेत न स्त्रीभ्यो दुहितृभ्य इत्युक्तोक्तं यद्यपि "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" (अ० १ पा० २ सू० ६८) इति पाणिनिस्मरणात्पुत्रेभ्य इत्यत्र पुत्राश्च दुहितरश्चेति विगृह्य विरूपैकशेषेण दुहितृणामप्यत्र पुत्रेऽनुप्रवेशः शक्यते कर्त्तुं तथापि "पुमांसो दायादा न स्त्रियः। तस्मात् स्त्रियो निरिन्द्रिया आदाया इति श्रुतेः" इति श्रुतिविरोधात्तात्पर्यग्राहकमानाभावाच्च विरूपैकशेषोऽनुशिष्टोऽप्यत्र न ग्राह्य इति भाष्यकाराभिप्रायः।

जीमूतवाहनोऽपि याज्ञवल्क्येन च पित्रादिदौहित्रस्यापि तद्गोत्रजातस्य पिण्डदानानन्तर्य्यक्रमेणाधिकारप्रतिपत्त्यर्थं गोत्रजग्रहणं कृतम्। सपिण्डस्त्रीणां च व्युदासार्थम्। तासामतद्गोत्रजातत्वात्। अत एव अर्हति स्त्रीत्यनुवृत्तौ—

बौधायनः,

न दायं निरिन्द्रिया अदायाश्च स्त्रियो मता इति श्रुतेरिति।

न दायमर्हति स्त्रीत्यन्वयः। पत्न्यादीनां त्वधिकारो विशेषवचनादविरुद्ध इति। ( अ० ११ प० ६ )

तन्न साधु। मन्वादिवचनेषु प्राग्लिखितेषु पितामह्या धनाधिकारस्य शृङ्गग्राहिकयैव विधानात्तदेकवाक्यतया योगीश्वरवचनस्यापि विरूपैकशेषेण तत्सङ्ग्रहेऽपि श्रुतेस्तदन्यपरत्वेनाविरोधात्। जीमूतवाहनस्य तु मात्रधिकारविचारप्रस्तावे पितामहसन्तानात्पूर्वं पितामह्याश्च परतः पितामह्या धनाधिकारः पितृतः परतो मात्रधिकारवत् याज्ञवल्क्येन मात्रधिकारप्रदर्शनेनैव पितृव्यादिभ्यः पूर्वं पितामह्योरधिकारस्य सूचितत्वात्पृथङ्नोक्त इति वदतोऽत्र च सपिण्डस्त्रीव्युदासार्थं गोत्रजग्रहणं वदतः पूर्वापरविरोधानुसन्धानमपि नास्ति शृङ्गग्राहिकया योगीश्वरवचने पितामह्याः पितृव्यादिपत्नीवदनभिधानस्य तुल्यत्वात्तद्वदेवादायादश्रुतिप्रवृत्तेरविरोधात्। विद्यारण्यश्रीचरणोक्तप्राग्लिखित—"तस्मान्निरि-

न्द्रिया" इत्यादिश्रुतिव्याख्याने तु स्त्रीणां दायग्रहणप्रतिषेधकत्वमेवास्याः श्रुतेर्नास्तीति न वा शङ्का नचोत्तरम् । परं तु बौधायनमुनिवचनविरोधे तद्व्याख्यानं कथमुपपद्यताम् । अस्तु वा इन्द्रियपदस्य वाक्यशेषात्सोमपरता तथापि दायादत्वाभावाभिधानावलम्बनस्यान्यस्यासत्वान्निरालम्बनश्रुतेश्चासम्भवात्सिद्धवत्कीर्त्तनानुपपत्तिप्रसूतप्रतिषेधकल्पनावश्यम्भावात् । तस्माद्धर्मेणाविज्ञातेन हतेन ब्रह्महेत्यत्रेवेति ध्येयम् ।

पितामह्या अभावे पितामहादयः सगोत्राः सपिण्डा धनभाजः । भिन्नगोत्राणां सपिण्डानां बन्धुशब्देन ग्रहणात् । तत्रापि पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्पुत्राश्च क्रमेण धनभाजः । पितामहसन्तानाभावे प्रपितामही प्रपितामहस्तद्भ्राता तत्सूनवश्चेत्येवमासप्तमात्समानगोत्राणां सपिण्डानामपुत्रधनभाक्त्वम् । सपिण्डाभावे समानोदकानाम् । ते च सपिण्डानामुपरि सप्त जन्मनामज्ञानावधिका वा । यथाह—

मनुः, ( अ० ५ श्लो० ६० )

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
समानोदकभावस्तु निवर्त्तताचतुर्दशात् ॥
जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यते । इति ।

विष्णुवचने बन्धुसकुल्यपदाभ्यां सपिण्डसगोत्रौ गृह्येते इति प्रागेव प्रतिपादितम् । समानोदका अपि प्रत्यासत्तिक्रमेण धनभाजः । समानोदकाभावे बन्धवो धनभाजः । बन्धवश्च त्रिविधा आत्मबन्धवः पितृबन्धवो मातृबन्धवश्च । तथा च—

स्मृतिः,

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥
पितुः पितृष्वसुः पुत्राः पितुर्म्मातृष्वसुः सुताः ।
पितुर्म्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥
मातुः पितृष्वसुः पुत्रा मातुर्म्मातृष्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥ इति ।

तत्रापि प्रत्यासन्नत्वात्प्रथममात्मबन्धवस्तदनन्तरं पितृबन्धवस्तदनु मातृबन्धव इति क्रमः । मनुस्मृतौ—

तदभावे सकुल्यः स्यादाचार्य्यः शिष्य एव वा ।

इत्यत्र सकुल्यशब्देन सगोत्रसमानोदकानां मातुलादीनां बन्धुत्रयस्य च ग्रहणम् । योगीश्वरवचनेऽपि बन्धुपदेन मातुलाद्युपलक्षणमन्यथा मातुला-

दीनामग्रहणमेव प्रसज्येतेति तत्पुत्राणां धनाधिकारस्ततः प्रत्यासन्नानां तेषामेव स नेति महदनौचित्यमापद्येत ।

बन्धूनामभावे आचार्य्यो धनभाक् । यद्यपि योगीश्वरवचन आचार्य्यो नोपात्तस्तथापि शिष्य उपात्तः । ततः प्रधानतमः प्रत्यासन्नतमश्चाचार्य्य औचित्यादुपलक्षणीयः । "आचार्य्यः शिष्य एव वा" इति मनुना "पुत्राभावे प्रत्यासन्नः सपिण्डस्तदभावेऽन्तेवासी" इत्यापस्तम्बेन च स्पष्टमेवाचार्य्याभावे शिष्यस्याधिकारबोधनाच्च । शिष्याभावे सब्रह्मचारी सहाध्यायी धनभाक् । यस्यैकस्मादाचार्य्यादुपनयनाध्ययने स सब्रह्मचारी । सब्रह्मचारिणोऽभावे ब्राह्मणद्रव्यव्यतिरिक्तं राजा गृह्णीयात् । सहाध्यायिपर्य्यन्तमधिकारमुक्त्वा "तदभावे ब्राह्मणधनवर्जं राजगामी" इति प्रागुदाहृतविष्णुवचनात्,

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा धर्म्मो न हीयते ॥
अहार्य्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः ।
इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः॥ (अ० ९ श्लो०१८८।१८९)

इति मनुवचनाच्च ब्राह्मणद्रव्यं सब्रह्मचारिपर्य्यन्ताभावे श्रोत्रियो ब्राह्मणः प्रथमं गृह्णाति । तदभावे ब्राह्मणमात्रम् । यथाह—

गौतमः,

श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्निति ।

ब्राह्मणमात्रं तु मनुवचने ब्राह्मणमात्रग्रहणात् ।

नारदोऽपि—

ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन ।
ब्राह्मणस्यैव दातव्यमेनस्वी स्यान्नृपोऽन्यथा ॥ इति ।

पुत्रादीनां पत्नीपर्य्यन्तानां दायहराणां वानप्रस्थादिविषयेऽपवादमाह—

योगीश्वरः, ( अ० २ श्लो० १३७ )

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।
क्रमेणाचार्य्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥ इति ।

ब्रह्मचार्य्यत्र नैष्ठिको यतिसाहचर्य्यात् । तेनोपकुर्वाणकस्य धनं पुत्रादिदौहित्रान्तानामसम्भवात्पित्रादय उक्तक्रमेण गृह्णीयुः । क्रमश्चात्र प्रतिलोमो ज्ञेयः । तथा च नैष्ठिकस्य मृतस्य धनमाचार्य्यस्य, यतेः सच्छिष्यस्य, वानप्रस्थस्य धर्मभ्रात्रेकतीर्थिनः । धर्मभ्राता प्रतिपन्नो भ्राता । तीर्थशब्दस्याश्रमवाचित्वादेकतीर्थ्येकाश्रमी । धर्मभ्राता·

चासावेकतीर्थी चेत्यर्थः। शिष्यस्य सत्त्वं तु न सद्वृत्तत्वम्। दुर्वृत्तपुत्रादीनामपि धनानधिकारस्य प्रमाणान्तरेणैव प्राप्तत्वात्, तच्च वक्ष्यते, किन्त्वध्यात्मशास्त्रश्रवणधारणतदर्थानुष्ठानक्षमत्वं ग्राह्यम्। मदनरत्नकारस्तु "वानप्रस्थधनमाचार्यो गृह्णीयाच्छिष्यो वा" इति विष्णुवचनं लिखित्वानुलोममेव क्रमं मत्वा वानप्रस्थधनमाचार्य्याभावे शिष्यो गृह्णीयादित्याह। नच "अनंशास्त्वाश्रमान्तरगता" इति वसिष्ठादिवचनैर्नैष्ठिकादीनां धनसम्बन्धाभावस्य वक्ष्यमाणत्वात्तद्धनग्रहणाधिकारिकथनमत्रानुपपन्नम्। न च रिक्थग्रहणस्य तेषां वसिष्ठादिभिर्निषेधेऽपि प्रकारान्तरार्जिततदीयधनाधिकारप्रतिपादकमिदं भविष्यतीति वाच्यम्। "ब्रह्मचारी यतिश्चैव पक्वान्नस्वामिनावुभौ" इतिस्मृतेर्ब्रह्मचारिणश्च प्रतिग्रहादिनिषेधात्। अनिचयो भिक्षुरिति यतेर्द्रव्यसञ्चयस्यैव निषेधात्तयोस्तावदुपायान्तरार्जितधनाभावोऽपि। वानप्रस्थस्यापि दद्यादेव न प्रतिगृह्णीयादित्यादिभिः प्रतिग्रहादिनिषेधाच्चाधनमिति चेत्, न। वानप्रस्थस्य तावत्

अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा।
अर्थस्य निचयं कुर्य्यात्कृतमाश्वयुजे त्यजेत्॥

इति वचनाद्भोजनादिपर्याप्तयत्किञ्चिद्धनसङ्ग्रहोऽस्त्येव। यतेरपि

कौपीनाच्छादनार्थं तु वासोऽपि बिभृयाद्यतिः।
योगसम्भारभेदांश्च गृह्णीयात्पादुके तथा॥

इति वचनाद्वस्त्रपुस्तकादि किञ्चिदस्त्येव। नैष्ठिकस्यापि शरीरयात्रार्थं वस्त्रादिसम्बन्ध आवश्यकः। तेन मृतानां तेषां तत्केन ग्राह्यमित्यपेक्षायां दायादान्तरापवादेनैतेऽधिकारिण उच्यन्त इति।

## अथ संसृष्टिधनविभागः।

तत्र मनुः—(अ० ९ श्लो० २१०)

विभक्ताः सहजीवन्तो विभजेरन् पुनर्यदि।
समस्तत्र विभागः स्यात् ज्यैष्ठ्यं तत्र न विद्यते॥ इति।

अत्र समविभागनियमादेव विषमविभागप्रकारनिरासे सिद्धे ज्यैष्ठ्यं तत्र न विद्यत इति पुनर्वचनं ज्यैष्ठ्यादिकृत एव विषमविभागो न भवति बह्वल्पधनसंसर्गानुरोधात्तु विषमविभागो भवत्येवेति सूचनार्थम्। केचित्तु संसृष्टद्रव्यापेक्षयांशज्यैष्ठ्यादिकृतो विषमविभागो भवत्येव। संसृष्टद्रव्यविभागस्तु सम एवेत्येतज्ज्ञापनाय ज्यैष्ठ्यमिति वाक्यशेष इत्याहुः। तन्न। एतादृशव्यवस्थाया अस्मादप्रतीतेः। समस्तत्र विभागः

स्यादित्युक्त्या द्रव्योपचयेऽपि साम्यनियमप्रतीतेः ।

संसृष्टिविभागेऽप्यविभक्तविभागवत्संसृष्टद्रव्याविरोधेन विद्यादिलब्धस्याविभाज्यत्वं तुल्यमेव प्राप्तमपवदति—

बृहस्पतिः—

संसृष्टानां तु यः कश्चिद्विद्याशौर्य्यादिनाधिकम् ।
प्राप्नोति तस्य दातव्यो ह्यंशः शेषाः समांशिनः ॥

संसृष्टिता च पित्रादिनैव कर्त्तव्या नान्येन "विभक्तो यः पुनः पित्रा" इत्यादिप्राग्लिखितबृहस्पतिवचनादिति बहवः ।

अस्माभिस्तूपलक्षणं पित्रादिग्रहणमित्यादि प्रागेव प्रपञ्चितम् । अविभक्तविभागात्संसृष्टिष्वपि मिथो विभागकरणात्प्राग् यो मृतस्तस्य पुत्राः "प्रमीतपितृकाणां तु पितृतो भागकल्पना" इतिवचनात् स्वस्वपित्र्यंशं विभज्य गृह्णीयुः । यस्य तु संसृष्टिनो मृतस्य पुत्रादयो न सन्ति तद्धनग्रहणे पत्नीत्यादिवचनात्पत्न्यादीनां प्राप्ते तदपवादत्वेन स्वर्य्यातस्य ह्यपुत्रस्येत्यनुवृत्तावाह—

योगीश्वरः,

संसृष्टिनस्तु संसृष्टीति ।

तु शब्दात्पूर्वापवादः । अपुत्रस्य संसृष्टिनो मृतस्य धनं संसृष्ट्येव गृह्णीयान्न पत्न्यादिरित्यर्थः । एतेन पत्न्याद्यपुत्रधनग्रहणाधिकारिगणे भ्रात्रधिकारावसरे वचनमिदं प्रवर्त्तते इति व्याचक्षाणो जीमूतवाहनो भ्रान्त एवेत्यवसेयम् । अस्याप्यपवादः—

सोदरस्य तु सोदरः ।
दद्यादपहरेच्चांशं जातस्य स मृतस्य च ॥ इति ।

( अ० २ श्लो० १३८ )

संसृष्टिनः संसृष्टीत्यस्यात्रापि सम्बन्धः । तथाचायमर्थः । सोदरः संसृष्टी संसृष्टिनः सोदरस्य जातस्य पुत्ररूपेणोत्पन्नस्य अंशं दद्यात् तत्पुत्राय दद्यादिति यावत् । मृतस्य पुत्रादित्रयरूपेणाप्यजीवतोऽशम् अपहरेत् आत्मसात्कुर्य्यात् स्वयमेव गृह्णीयादित्यर्थः । पदद्वयानुषङ्गं विनैव व्याख्याने तुशब्दबलायातमस्य पूर्वापवादत्वं भज्येत । एवं च सोदरासोदरसंसृष्टिसद्भावे सोदर एव संसृष्टी सोदरसंसृष्टिधनग्रहणाधिकारी न भिन्नोदर इति पूर्वोक्तापवादः ।

यत्र तु भिन्नोदर एव संसृष्टी सोदरो न । तत्र द्वयोर्विभज्य पुत्रादिरहितभ्रातृधनग्रहणमित्याह—

अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत् ।

असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः॥ इति ।

( या० अ० २ श्लो० १३९ )

अत्रासंसृष्टिपदं काकाक्षिवत्पूर्वोत्तरार्द्धयोर्द्वयोरपि सम्बध्यते । तथा संसृष्ट इत्यपि । तच्च पूर्वार्द्धे एकोदरसंसृष्टः सोदर इत्यर्थकम् । उत्तरार्द्धे तु संसृष्टित्वार्थकम् । अन्यमातृज इत्यनन्तरं चैवकारोऽध्याहार्यः । ततश्चायमर्थः । अन्योदर्य्यः सोदरोऽपि संसृष्टी चेद्धनं हरेत् । असंसृष्टी चेदन्योदर्य्यो न हरेत् । तथा चान्वयव्यतिरेकप्रदर्शनेन भिन्नोदरस्य संसृष्टित्वमेवैकं धनग्रहणकारणं न भ्रातृत्वमात्रमित्युक्तं भवति । तथा संसृष्टः सोदरोऽसंसृष्ट्यपि चेद्धनं हरत्किमुत संसृष्टी । संसृष्टः संसृष्ट्यप्यन्यमातृज एवैको धनं न हरेत् किन्तु सोदरेण संसृष्टिनापि सह विभज्य गृह्णीयात् । अत्रायं पर्य्यवसितोऽर्थः । असंसृष्टिसोदरे संसृष्टिभिन्नोदरे च सति अपुत्रभ्रातुर्द्धनं सोदरत्वसंसृष्टित्वरूपैकैकधनग्रहणकारणयोगात्समं विभज्य गृह्णीयाताम् । सोदरोऽपि चेत्संसृष्टी कारणद्वययोगेन बलवत्त्वात्सर्वं स एव गृह्णीयादिति । अत्र चैकैकनियमेनार्थादपरकारणनिराससिद्धावपि दृढीकरणाय पुनस्तन्निरासः । उभयथापि वाक्यव्युत्पत्तेः । पुंलिङ्गत्वं संसृष्टीत्यादावविवक्षितम् । अत एव मनुना सोदरभगिनीनामपि तद्धनग्रहणमुक्तम्—

यथाह,

( अ० ९ श्लो० २११ । २१२ )

विभक्ताः सह जीवन्तो विभजेरन् पुनर्यदि ।

इति संसृष्टिविभागं प्रक्रम्य—

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ।
सोदर्या विभजेयुस्तं समेत्य सहिताः समम् ॥
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ।

येषां=संसृष्टिनां मध्येऽन्यतरः संसृष्टी ज्येष्ठः कनिष्ठोऽपिशब्दात् मध्यमो वांशप्रदानतो हीयेतानधिकारी अंशप्रदाने स्यात् । सार्वविभक्तिकत्वात्सप्तम्यर्थे तसिः । विभागकाले पातित्येनाश्रमान्तरपरिग्रहेण वा म्रियेत वाऽगृहीतभाग एव, तर्हि तस्य भागो न लुप्यते पृथगुद्धरणीयः । स च प्रथमं तत्पुत्रादिभ्यो देयः । तदभावे सोदर्य्या भ्रातरोऽसंसृष्टा अपि । समेत्य देशान्तरगतास्तत आगत्य सहिता मिलिताः, ये च भ्रातरो भिन्नोदरा अपि संसृष्टाः संसृष्टिनः सनाभयो मृतस्य सहोदरा भगिन्यश्च समम्=अवैषम्येण विभजेयुर्विभज्य गृह्णीयुरित्यर्थः । अत्र सोदरभ्रातृभगिनीनामसंसर्गेऽपि

संसर्गे च भिन्नोदराणामपि धनाधिकारमभिदधता मनुना योगीश्वरोक्त एवार्थः स्पष्टमुक्तो भवति ।

अत्र श्रीकरः । "संसृष्टिनस्तु संसृष्टी' इत्यस्यासोदरसंसृष्टिमात्रविषयत्वेऽन्यानपेक्षत्वात् "सोदरस्य तु सोदर" इत्यस्याप्यसंसृष्टसोदरमात्रविषयत्वे तथात्वादसोदरे संसृष्टिनि सोदरे चासंसृष्टिन्युभयोः प्रवृत्तावसापेक्षयोरुभयोर्विधायकत्वं स्यात् । नचैकस्य सापेक्षनिरपेक्षोभयरूपतया विधायकत्वं विधिवैषम्यापादकमुचितम् । यथा "द्वयोः प्रणयन्ति" इत्यस्य "न वैश्वदेव उत्तरवेदिं" इत्यादिनिषेधकृतविकल्पसापेक्षं पर्वद्वये विधानमन्यपर्वद्वये तु निरपेक्षमिति सप्तमाधिकरणे विधिवैषम्यभयादन्यथा सिद्धान्तितम् । तथात्रासोदरे संसृष्टिन्यसंसृष्टिनि च सोदर उभयोरप्रवृत्तौ न कोऽपि तद्धनं गृह्णीयादित्यापतत् । अतः "संसृष्टिनस्तु" इत्यनेन संसृष्टिधने संसृष्टिनोऽधिकार उक्ते तदपवादोऽयं 'सोदरस्य तु' इति । तथा च संसृष्टिनोऽप्यसोदरस्य सोदरे संसृष्टित्वरहितेऽपि सति नाधिकार इत्याह ।

तन्मीमांसानयतत्त्वानालोचननिबन्धनमभिधानम् । न हि द्वयोः क्वचिन्निरपेक्षयोः शास्त्रयोः क्वचिदुभयविषयसमावेशवशादेकत्र प्रवृत्तिमात्रेण वैरूप्यं भवति । तथा सति केवलोद्गातृप्रतिहर्त्रपच्छेदे निरपेक्षयोः सर्वस्वदाक्षिण्यादाक्षिण्यशास्त्रयोर्युगपदुभयापच्छेदे प्रवृत्त्यभावान्निरोधाभावेन किं केन बाध्यत इति विचारो निर्मूलः स्यादपच्छेदनये(१) । तस्मात् क्वचिद्विध्यन्तरबाधनिरपेक्षविधानं क्वचित्तद्बाधसापेक्षं चेत्तदा वैरूप्यं यथा "उपात्र वपन्ति" इत्यत्र प्राङ्निरूपितम् । अन्यथा "चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्राऽमावास्यां" इत्यनयोरुपांशुयागाग्नीषोमीयविषय ऐन्द्रदध्यैन्द्रपयोविषये चैकैकशः प्रवृत्तयोरुभयोः सा-

(१) (अ० ६ पा० ५ अ० १७) ज्योतिष्टोमे हविर्धानीनाम गृहमेकम् अपरं च बहिष्पवमानाख्यं गृहम् । तत्र च पिपीलिकावत्पङ्क्तिमाबध्य पुरोगामिनः कच्छं गृहीत्वा हविर्धानीगृहादृत्विजो बहिष्पवमानाख्यं गृहं गच्छन्ति गच्छतां च मध्ये उद्गाता ऋत्विक् यदि स्खलेत् कच्छं मुञ्चेत् तदा दक्षिणामदत्त्वा प्रक्रान्तो यज्ञः समापनीयः पुनरपि स यज्ञः प्रयोक्तव्यस्तत्र पूर्वं दित्सितं दद्यात् । यदि प्रतिहर्ता स्खलेत् तदा तस्मिन्नेव प्रयोगे सर्वस्वं दद्यात् इति विधिद्वयमस्ति । एतयोश्चैकैकस्य स्खलनस्थले एकैकस्य प्रवृत्तत्वात् युगपत्स्खलने नैकस्यापि प्रवृत्तिः स्याद्भवन्मते विधिवैरूप्यात् । तथा चात्र प्रथमत उद्गात्रे दाक्षिणामदत्त्वा प्रतिहर्त्रे सर्वस्वं दीयत इति पारम्परीणः सिद्धान्तो व्याहतः स्याद्भवन्मते इति भावः ।

धारणे हविषि विषयसमावेशोऽप्येकमपि न प्रवर्त्तेत(१)। यदपि स्वयमुपवर्णितं "संसृष्टिनस्तु" इत्यस्यापवादः "सोदरस्य तु" इत्यादिरितितदत्यसम्बद्धम्। विलिंगमकाभावेन वैपरीत्यस्यापि सम्भवात्। पौर्वापर्यमात्रस्याप्रयोजकत्वात्। यच्चान्योदर्य्यवचनं संसृष्टिनस्त्वित्यस्यैव विवरणार्थमित्युक्तम्, तेन वचोभङ्ग्यानर्थक्यमेव तस्योक्तम्। किञ्च सोदरेऽसंसृष्टिनि संसृष्टसोदरापवादार्थसोदरवचनस्य वर्णनात्सोदरासोदरयोरुभयोरप्यसंसृष्टित्वे प्रवृत्त्यभावात् तुल्याधिकारोऽनाधिकारो वा द्वयोरपि स्यात्। अथात्रापि सोदरवचनमेव प्रवर्त्तते तर्ह्येकत्र संसृष्टिवचनबाधसापेक्षमन्यत्र तन्निरपेक्षमिति प्रत्युत तत्रैव विधिवैरूप्यम्। यथा सौमिकी वेदिर्यदि दीक्षणीयादिष्वतिदेशप्राप्तदर्शपौर्णमासिकवेदिबाधेन विधीयेत तर्हि तत्रातिदेशबाधसापेक्षस्तद्विधिरन्यत्र तन्निरपेक्ष इति वैरूप्यादवेदिमद्विषयकत्वमेव तस्य व्यवस्थापितं तन्त्रे। अस्मन्मते तु व्याख्यातरीत्या द्वयोर्भिन्नविषयत्वेनानर्थक्यवैरूप्ययोर्न प्रसक्तिरिति कृतं विस्तरेण।

स्मृतिचन्द्रिकाकारस्त्वाह "येषां ज्येष्ठः कनिष्ठो वा" इत्यादिमनुवचने च शब्देन सोदरभ्रातृभगिन्यसोदरसंसृष्टभ्रातॄणामितरेतरयुक्तानां(२) विभागकर्तृतायाः समेत्यसहितशब्दाभ्यामवगतेर्योगीश्वरवचने च संसृष्टिसो

---

(१) दर्शपूर्णमासयोर्हविषां स्पर्शनद्वयं व्यवस्थितमन्त्रद्वयसाध्यमाम्नायत उक्तवाक्याभ्याम्। तत्र 'पृथिवीहोता' इत्यादिमन्त्रश्चतुर्होता, 'अग्निर्होता' इत्यादिमन्त्रः पञ्चहोता। पौर्णमास्याम् अमावास्याम् इत्युभयत्रापि सप्तम्यर्थे द्वितीया। कर्माकाङ्क्षायां वाक्यान्तरोपात्तमुपांशुयागीयमैन्द्रधिरूपं हविः सम्बन्ध्यते। एवं द्वितीयवाक्येऽप्यग्निषोमीयस्यैन्द्रपयोद्रव्यस्य समुपस्थितिः। एवं च पूर्वत्र दर्शपौर्णमासान्तर्गतपौर्णमासीकर्तव्यस्योपांशुयागस्य केवलदधिरूपहविःस्पर्शने विध्यन्तरनिरपेक्षा प्रवृत्तिरुक्तविधेः उपांशुयागस्य केवलदधिकरणकत्वात्। एवमेवापरत्र पञ्चहोत्रेत्यभिमर्शनविधेर्दर्शपौर्णमासान्तर्गतस्य दर्शमात्रकर्तव्यस्य अग्नीषोमीययागस्य केवलैन्द्रपयोरूपद्रव्यस्पर्शे निरपेक्षा प्रवृत्तिः अग्नीषोमीयस्य केवलपयोद्रव्यकरणकत्वात्। आग्नेययागे दर्शपौर्णमासान्तर्गते दर्शे पौर्णमास्यां च कर्तव्ये दधिपयोरूपोभयद्रव्यके हविर्द्वयस्पर्शार्थं विध्योर्युगपत्प्रवृत्तौ भवन्मते विधिवैषम्यापातात् न कोऽपि प्रवर्तेत। एवं चात्र द्वयोरेव विषयसत्त्वात् प्रवृत्त्या मन्त्रद्वयेन हविर्द्वयस्य दधिपयोरूपस्य स्पर्श इति सिद्धान्तोऽपि भवन्मते व्याहतः स्यादिति भावः।

(२) अत्र पुस्तकान्तरे–विभागकर्तृत्वावगतेर्ये संसृष्टा भिन्नोदरभ्रातरस्तैः सहिताः सोदर्याः सनाभयो भगिन्यश्च तमछुप्तभागं समं विभजेरन्नित्यन्वयान्मिलितानामेव–इत्यधिकः पाठो वर्तते।

दरसद्भावे भिन्नोदरस्यानधिकारावगतेरस्ति तावदनयोर्विरोधः । एत-द्विरोधपरिहारार्थं केचिदेवं मानवं व्याचक्षते । तम्=अलुप्तभागं सोदरा यदि संसृष्टास्तदा त एव गृह्णीयुर्नासंसृष्टिनः सोदरा अपि । संसृष्टसोदरा-भावे सर्वे सोदराः समेत्य मिलित्वा सहिताः=समप्रधानभावेन समम्=अन्यूना-धिकं विभजेरन् सोदराणामभावे सनाभयो भगिन्यस्तासामप्यभावेऽन्यो-दर्य्या इति । तदेतदनेकाध्याहारदोषादतिक्लिष्टत्वाच्चोपेक्षणीयम् । विज्ञा-नेश्वरव्याख्यानमपि मानवसंवादाय "अन्योदर्यस्तु संसृष्टी नान्योदर्यो ध-नं हरेत्" इति पाठेन योगीश्वरवचनस्य यत्, तदप्यावृत्त्यध्याहारादि-ना क्लिष्टमत्यन्ताप्रतीयमानार्थकं स्वप्रज्ञाविलसितमात्रम् । तस्माद्य-थाप्रतीयमानार्थकयोरेव मनुयोगीश्वरवाक्ययोर्विषयव्यवस्थयैवाविरोधो वाच्यो नातिक्लिष्टेकार्थ्येनेति सैवोच्यते । स्थावरजङ्गमात्मकोभयविधध-नसद्भावे मनुवचनं संसृष्टासंसृष्टानां भ्रातॄणां भगिनीनां च विभज्य ग्र-हणं बोधयति, योगीश्वरवचनं तु केवलस्थावरसद्भावे केवलतादितरद्र-व्यसद्भावे वा तद्विषयम् ।

अन्तर्द्धनं तु यद्द्रव्यं संसृष्टानां तु तद्भवेत् ।
भूमिं गृहं त्वसंसृष्टाः प्रगृह्णीयुर्यथांशतः ॥

इति प्रजापतिवचनात् । द्रव्यमिति गोबलीवर्द्दन्यायेन प्रकटस्य द्विपद-चतुष्पदादिरूपस्य जङ्गमद्रव्यस्य ग्रहणम् । संसृष्टानां भिन्नोदराणामिति शेषः । योगीश्वरवचसि नान्योदर्य्यादिति पाठः । तस्मात् केवलस्थावरस-द्भावे केवलजङ्गमसद्भावे च योगीश्वरवचनादसंसृष्टोऽपि सोदर एव तद्गृह्णीयान्न तु संसृष्टोऽपि भिन्नोदरः । उभयविधधनसद्भावे तु प्रजाप-तिवचनोक्तव्यवस्थयाऽसंसृष्टाः सोदरा भ्रातृभगिन्यः संसृष्टा भिन्नो-दराश्च विभज्य गृह्णीयुः । मनुवचनस्याप्येतदर्थतैवेति ।

तदसत् । अध्याहाराक्लिष्टतादिदोषस्य तवाप्यनपायात् । प्रजापतिवच-नोक्तव्यवस्थाया विज्ञानेश्वरीयव्याख्यानेऽप्यविरोधात् । अत एव मदनरत्नकृ-ता तद्व्याख्यानमभ्युपेत्यैव प्रजापतिवचनमपि व्यवस्थापकतया पठितम् । प्रत्युत भवद्व्याख्याने योगीश्वरवचने पौनरुक्त्यं दुष्परिहरमापद्यते । "अ-न्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत्" इत्यनेनोक्तस्यैवार्थस्य "सं-सृष्टो नान्यमातृज" इत्यनेनान्यूनानातिरिक्तस्य प्रतिपादनात् । मानवसं-वादिनोऽपुनरुक्तस्यार्थस्य क्लेशेनापि वक्तुं शक्यत्वे मूलभूतश्रुत्यन्तर-कल्पनागौरवापादकस्यार्थान्तरस्य कल्पयितुमनुचितत्वाच्च । याज्ञवल्क्य-स्मृतिटीकायाम्—

शूलपाणिः,

अन्योदर्य्यः संसृष्टी नान्योदर्य्यधनं गृह्णीयात् । असंसृष्ट्यपि सोदर एव गृह्णीयात् । न तु संसृष्टः सापत्नभ्राता । 'नान्योदर्य्यो धनं हरेत्' इति पाठे अन्योदर्य्यः सन् संसृष्ट्यपि धनं न गृह्णीयादिति व्याख्या(१) । असंसृष्टिसोदराधिकारार्थमिदं वचनमतो न पुनरुक्ततेत्याह । तच्च श्रीकरमतसमानयोगक्षेमम् ।

रत्नाकरकृत्त्वाह—यस्तु कल्पतरौ नान्योदर्य्यधनं हरेदिति पाठो दृश्यते स मूलभूतयाज्ञवल्क्यमिताक्षरापारिजातहलायुधग्रन्थेषु 'नान्योदर्य्यो धनं हरेत्' इति पाठदर्शनात्तदनुसारिव्याख्यानदर्शनाच्च लिपिप्रमाद एवेति ।

दायतत्त्वकारस्तु सोदरेऽसंसृष्टिनि संसृष्टिन्यसोदरे च कतरस्तावत् गृह्णीयात् । एवं सोदरासोदरयोः संसृष्टिनोः सद्भावे कतर इत्यत्र प्रथम आह-अन्योदर्य्यस्त्विति । अन्योदर्य्यः पुनः संसृष्टी सन् गृह्णीयान्नान्योदर्य्यमात्रः । किन्त्वसंसृष्ट्यपि पूर्ववचनस्थसोदरपदानुषङ्गात्सोदरो गृह्णीयात् । तेनैकत्र विषये पूर्ववचनोक्तसोदरत्वसंसृष्टित्वयोरेकशः सम्बन्धेन तुल्यत्वाद्विभज्य ग्रहणमेतदुभयसत्त्वे वाऽसोदरस्यासंसृष्टिनोऽतुल्यरूपत्वान्नेति द्वितीय आह—संसृष्टो नान्यमातृज इति । सोदरे संसृष्टे सत्यन्यमातृजः संसृष्टोऽपि न गृह्णीयात् । अर्थात्तत्र संसृष्टी सोदर एव गृह्णीयात् । संसृष्टत्वाविशेषेऽपि सोदरत्वेन तस्यैव बलवत्त्वादित्याह ।

तदपि मिताक्षरादिसंवाद्येव । व्याख्यानकौशलं त्वधिकम् ।

यदा तु संसृष्टः पिता पितृव्यो वा नास्ति तदाऽसंसृष्टभिन्नोदरो गृह्णीयात् । तदभावे त्वसंसृष्टः पिता । तदभावे तत्पत्नी । तथा च—शङ्खः,

स्वर्य्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नीति ।

स्वर्यातस्यापुत्रस्य संसृष्ट्यभावे भिन्नोदरासंसृष्टिभ्रातृगामि द्रव्यमित्यर्थः । तेन संसृष्टिधनविषये यथास्थितमेवेदं वचनमिति स्मृतिचन्द्रिकामदनरत्नकारावाहतुः ।

संसृष्टभ्रातृविषयमेवैतत्तेन पितृपत्न्योस्तदभाव इति न विरुद्धमिति मिताक्षराकारादयः । स्मृतिचन्द्रिकायां शङ्खवचने ज्येष्ठग्रहणं सुसंयतत्वादिगुणवत्त्वकथनार्थं न तु मध्यमादिनिवृत्त्यर्थम् । पुनरपि तदभाव इति वक्तव्ये वाशब्दः प्रयुक्तः फलसाम्यात् । तथाहि वाशब्दाद्विकल्पः

---

(१) अत्र अन्योदर्यः अन्योदर्यः सन् अन्योदर्यत्वादेवेति द्वितीयान्योदर्यपदस्य हेतुपरत्वेन व्याख्यानमित्यवगन्तव्यम् ।

प्रतीयते। न चात्र स्वाम्यरूपे वस्तुनि तुल्यवद्विकल्पः सम्भवति। नहि वस्तूनि विकल्पन्त इति न्यायस्य शास्त्रसिद्धत्वादुपपत्तिसिद्धत्वाच्च। तस्मादत्र वाशब्दादभावविकल्पावगतेः फलसाम्यमस्त्येव। एवं चायं क्रमः भ्रात्रभावे पिता, तदभावे माता, तदभावे ज्येष्ठा पत्नीति। मदनरत्ने तु मातापित्रोर्विपरीतक्रमः। मिताक्षरोक्तन्यायाद्विभक्तासंसृष्टविषयविष्णुवचनवदत्र न्यायबाधकवचनाभावादिति तदाशयः। अत एव "पत्नी दुहितर" इति वचने विष्णुवचनानुरोधेन स्मृतिचन्द्रिकावत् पितरावित्यत्र प्राक् पिता तदभावे मातेत्येव तत्रोक्तम्। प्रपञ्चितं चैतद्विस्तरेणास्माभिः प्रागेव। ततश्च विवदन्(१) पत्नीदुहित्रादिक्रमविरोधादविरोधयितत्संसृष्टभागविषयमिति कल्पते विभक्तोक्तनैयायिकपत्नीदुहित्रादिक्रमोऽत्र वाचनिकक्रमेण बाध्यते। अस्मिन् क्रमे कस्य चिन्न्यायस्याभावाद्वाचनिक एवायं क्रमः।

नारदोऽपि—

मृते पत्यौ तु भार्य्यास्तु अभ्रातृपितृमातृकाः।
सर्वे सपिण्डास्तु धनं विभजेयुर्यथांशतः॥ इति।

अस्यार्थः। भार्य्याः=पत्न्यः। अभ्रातृपितृमातृकाः याः पत्युर्भ्रातृपितृमातरस्तदभावविशिष्टा इत्यर्थः। अत्र द्वन्द्वसमासे भ्रात्रपेक्षयाभ्यर्हितपित्रादिपदपूर्वनिपातं परित्यज्य वैपरीत्येन समासरचनां कुर्वता नारदेन संसृष्टापुत्रद्रव्यं प्रथमं भ्रातृगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे वृत्तस्थपत्न्यभिगामीति दर्शितम्। एवं च संसृष्टपत्नीनां मुख्यगौणपुत्राभावे न प्रथमं दायहरत्वं किन्तु संसृष्टसोदरभिन्नोदरभ्रातृपितृणामप्यभाव इति द्रष्टव्यम्। सर्वे सपिण्डास्त्वित्यादेस्त्वयमर्थः। संसृष्टापुत्रस्य ये भ्रातृपितृभ्रातृव्यतिरिक्ताः सपिण्डा भ्रातृपुत्रादयस्ते स्वधनं पूर्वमपुत्रधनेन सह स्वापित्रादिना संसृष्टं तदूर्ध्वं तत्पत्नीभिः सह यथांशतो भ्रातृपुत्राणां भ्रात्रंशो भार्य्याणां भर्त्रंश इत्येवमंशानतिक्रमेण विभजेयुरिति। पत्न्यभावे संसृष्टापुत्रांशं तद्भगिनी लभते। तथा च—

बृहस्पतिः,

या तस्य भगिनी सा तु ततोऽंशं लब्धुमर्हति।
अनपत्यस्य धर्म्मोऽयमभार्य्यापितृकस्य च॥

अमातृकस्य चेति चशब्दार्थः। भगिन्यभावे केवलाः सपिण्डाः अनन्तराः सपिण्डास्तद्दायं विभजेरन्। यथांशतः "तस्य तस्य धनं भवेत्" इति मनूक्तप्रत्यासत्तिक्रमेण लभेरन्। प्रातिपदोक्तानामभावात्।

(१) अत्र विवदन् इत्यस्य स्थाने मदनरत्न इति पुस्तकान्तरे पाठः।

तथा च—

स एव,

मृतोऽनपत्योऽभार्य्यश्चेदभ्रातृपितृमातृकः ।
सर्वे सपिण्डास्तद्दायं विभजेरन् यथांशतः ॥

तद्दायं संसृष्टदायम् । मृतोऽनपत्य इत्यादेः प्रतिपदोक्तसंसृष्टधनग्राहिरहितश्चेदित्यर्थः। सपिण्डाभावे तु विभक्तमृतधनवदेव संसृष्टस्वर्य्यां तद्द्रव्यमपि प्रागुक्तक्रमेण प्रत्यासत्तितारतम्येन समानोदकादिगामीति द्रष्टव्यम् । संसृष्टद्रव्यमधिकृत्य सपिण्डेभ्य ऊर्ध्वं विशेषास्मृतेरिति। ननु सत्यपि पत्न्यादौ वचनान्मृतसंसृष्टिधनस्य संसृष्टिभ्रात्रादिग्राह्यत्ववत् संसृष्टासंसृष्टपुत्रसद्भावेऽपि पितृधनस्याप्येतद्वचनबलात् संसृष्टिपुत्रमात्रग्राह्यत्वमास्त्वति चेत्, न। अपुत्रस्येति पूर्ववचनस्थस्यानुषङ्गादपुत्रसंसृष्टिमरणस्य धनग्रहणकारणत्वात् संसृष्टिनश्च पुत्रेणापुत्रत्वाभावात् "संसृष्टिनस्तु" इत्यस्याप्रवृत्तेः "विभजेरन् सुताः पित्रोः" इति वचनात्पित्रंशे पुत्रयोर्द्वयोरत्रापि समभागभागित्वम् । प्राक्तनः स्वांशः परं संसृष्टपुत्रेण भुक्तावशिष्टः पृथगुद्धरणीयः । पितुर्यावांस्तदानीं विद्यमानोऽशः स संसृष्टाभ्यां विभज्य ग्राह्यः । न च संसृष्टिनस्त्वित्यत्रापुत्रपदानुषङ्गोऽस्त्विति वाच्यम् । सपुत्रसंसृष्टिभ्रात्रादिधनेऽपि पुत्रादिबाधेन तदंशस्य भ्रात्रादिग्राह्यतापत्तौ सकलदेशीयानादिव्यवहारबाधापत्तेः । अन्यथा पुत्रवदपुत्रसाधारणस्यापुत्रमात्रविषय पत्नीत्यादिवाक्यापवादकत्वानुपपत्तेस्तद्बोधकतुशब्दविरोधापत्तेश्च। न च भ्रात्रादिसंसृष्टिन एवापुत्रविशेषणं व्यावर्त्तकत्वात् ।पुत्रसंसृष्टिनस्तु न व्यावर्त्याभावात् असम्भवाच्च। "सम्भवे व्यभिचारे च स्याद्विशेषणवर्थवत्" इत्यभियुक्तोक्तेरिति वाच्यम् । पृथग्वाक्यद्वयाभावात्, एकत्र च वाक्ये क्वचिद्विशेषणपुरस्कारेण क्वचिच्च तदपुरस्कारेण विधिप्रवृत्तौ विशेषणघटिताघटितवाक्यार्थद्वयनिबन्धनविधिवैषम्यरूपवाक्यभेदापत्तेः । किञ्च पित्रादिद्रव्यस्वाम्ये पुत्रत्वादिकमेवापतितत्वादिविशिष्टं प्रयोजकं न तु संसृष्टत्वाविशिष्टमपि गौरवात् । तच्च सर्वेषां संसृष्टानामसंसृष्टानां च तुल्यमिति सर्वेषामेव पुत्रादीनां विशेषेण तद्धनग्रहणमुचितम् । न च विभागेन पित्रादिद्रव्यार्हत्वापगमः । सर्वेषु पुत्रेषु विभक्तासंसृष्टेष्वपुत्रवद्भार्य्यादीनामेव तत्र धनाधिकारापत्तेः । प्रत्युतापस्तम्बेन हारीतेन च विभागोत्तरमपि पितापुत्रयोः परस्परधनाधिकारप्रतिपादनाच्च ।

यथाहतुस्तौ—

जीवन्नेव वा विभज्य वनमाश्रयेत वृद्धाश्रमं वा गच्छेत् स्वल्पेन

वा संविज्य भूयिष्ठमादाय वसेत् यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात् क्षीणांश्च विभजेदिति ।

वृद्धाश्रमं=पारिव्राज्यम् । उपदस्येत् भक्ष्याभावेन क्षीयेत् । विभक्तजे तु सति पूर्वविभक्तानां पुत्राणां प्राप्तोऽपि पितृधनाधिकारो बृहस्पतिवचनेनापोद्यते ।

यथाह सः—

अनीशाः पूर्वजाः पित्रोर्भ्रातुर्भागे विभक्तजः ।
पुत्रैः सह विभक्तेन पित्रा यत् स्वयमर्जितम् ॥
विभक्तजस्य तत् सर्वमनीशाः पूर्वजाः स्मृताः ।
यथा धने तथर्णे च दानाधानक्रयेषु च ॥
परस्परमनीशास्ते मुक्त्वा शौचोदकक्रियाम् ॥ इति ।

संसृष्टिधनहारकेण तत्स्त्रियः परिपालनीयास्तत्कन्याश्च विवाहपर्यन्तं पोषणीयाः संस्कर्त्तव्याश्चेत्याहतुः शङ्खनारदौ । संसृष्टिनं प्रक्रम्य

भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा ।
विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना ॥
भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् ।
रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्द्युरितरासु च ॥
या तस्य दुहिता तस्याः पित्र्योंऽशो भरणे मतः ।
आसंस्काराद्धरेद्भागं परतो बिभृयात्पतिः ॥ इति ।

इतरासु=भर्त्तृशय्यामरक्षन्तीषु दुर्वृत्तास्विति यावत् । आसंस्कारादित्यभिविधावाङ् । तेन विवाहकरणमपि लभ्यते ।

इति संसृष्टिविभागः ।

## अथ स्त्रीधनविभागं वक्तुं तत्स्वरूपं तावन्निरूप्यते ।

तत्र मनुः, ( अ० ९ श्लो० १९४ )

अध्यग्न्यध्यावहानिकं दत्तं च प्रीतिकर्मणि ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ इति ।

षड्विधमिति न्यूनसङ्ख्याव्यवच्छेदपरं नाधिक्यनिरासाय ।
अत एव—

योगीश्वरेण, ( अ० २ श्लो० १४३ )

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्त्तितम् ॥

इत्याद्यशब्द उपात्तः । विष्णुनापि षड्विधानि स्त्रीधनान्युक्तानि ।

स यथाह—

पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकं बन्धुदत्तं शुल्कमन्वाधेयकमिति स्त्रीधनमिति ।

नारदः—( व्य० प० १३ श्लो० ८ )

अध्यग्न्यध्यावहनिकं भर्तृदायस्तथैव च ।
भ्रातृदत्तं पितृभ्यां च षड्विधं स्त्रीधनं स्मृतम् ॥ इति ।

षड्विधत्वं मानववदेव व्याख्येयम् । स्त्रीधनशब्दश्चायं यौगिकः स्त्रीस्वामिकं धनमिति । न तु पारिभाषिकः । योगसम्भवे परिभाषाया अन्याय्यत्वात् । योगीश्वरेण रिक्थक्रयादिसाधारणस्वत्वोपायलङ्घहायाद्यपदं प्रयुक्तम् । ननु च क्वचित् स्त्रीधनत्वनिषेधोऽनुपपन्न एवं सति स्यात् । नहि स्त्रीस्वामिकत्वं तत्र निषेद्धुं शक्यते । बाधात् । यथाह—

कात्यायनः,

तत्र सोपाधि यद्दत्तं यच्च योगवशेन वा ।
पित्रा भ्रात्राऽथवा पत्या न तत्स्त्रीधनमुच्यते ॥ इति ।

उपाधिरुत्सवादावेवेदमस्य दत्तं त्वया धार्य्यमलङ्कारादि नान्यदेति नियमस्तत्पूर्वकं दत्तं सोपाधि । योगो वचनं दायादानां, कन्यायै दत्तमिदं तद्धनं कथं विभाज्यमिति । शिल्पप्राप्तं सख्यादिभ्यः प्रीत्या प्राप्तं तदपि न स्त्रीधनमित्यप्याह—

स एव,

प्राप्तं शिल्पैस्तु यत्किञ्चित्प्रीत्या चैव यदन्यतः ।
भर्तुः स्वाम्यं सदा तत्र शेषं तु स्त्रीधनं स्मृतम् ॥ इति ।

पारिभाषिकत्वे भ्रात्रादिदत्तत्वेन प्राप्तं स्त्रीधनत्वं प्रतिषिध्यते । तेनैतस्माद्भिन्नमेव पित्रादिदत्तं शिल्पादिप्राप्तभिन्नं वा स्त्रीधनमिति परिभाष्यते इति चेत्, उच्यते । नात्र स्त्रीधनत्वनिषेधः । किन्तु तत्कार्य्यविभागादिनिषेधः । अत एवोत्तरश्लोके तत्र भर्तुः स्वाम्यमित्युक्तम् । भर्तुस्तद्विनियोगे स्वातन्त्र्यं न स्त्रिया इत्यर्थः । प्रथमश्लोके तु स्त्रीस्वत्वनिषेधोऽपि सम्भवति उपाधियोगपदयोरुपादानात् । तादृशदाने च स्वत्वाभावस्य प्रसिद्धत्वात् ।

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्त्तयेत् ॥ (अ० ८ श्लो० १६५)

इति मनुवचनात् ।

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ (मनु०अ०८श्लो०४१६)

इत्यपि वचनं भार्याविषये शिल्पादिप्राप्तपरमेव । एकमूलकल्प नालाघवात् । अध्यग्न्यादिस्वरूपं निरूपितं—
कात्यायनेन,

विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम् ॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् ।
अध्यावहानिकं नाम स्त्रीधनं तदुदाहृतम् ॥
प्रीत्या दत्तं तु यत्किञ्चिच्छ्वश्र्वा वा श्वशुरेण वा ।
पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ।
विवाहात्परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रिया ॥
अन्वाधेयं तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा ॥
(१)गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम् ॥
मूल्यं लब्धं तु यत्किञ्चित्तच्छुल्कं परिकीर्त्तितम् ।
ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥(२)

भर्त्तुः सकाशादिति कल्पतर्वादौ पाठः । अध्यग्न्यादिशब्दास्तु योग-रूढास्तादृशस्त्रीधनादावप्रयोगात् । गृहोपस्करणादीनां यन्मूल्यं कन्या-र्पणोपाधित्वेन वरादिभ्यः कन्याभरणरूपेण गृह्यते तच्छुल्कमिति मदन-रत्ने व्याख्यातम् । मिताक्षरायां तु यद्गृहीत्वा कन्या दीयते तच्छुल्कमि-त्युक्तम् । उभयत्रापि ग्रहीतॄणां पित्रादीनां कन्याया इदमित्युद्देशो विव-क्षितः । अन्यथा तत्स्वत्वाभावेन स्त्रीधनत्वव्यपदेशत्वानुपपत्तेः । जीमू-तवाहनेन तु कर्मिणामिति पठित्वा गृहादिकर्मिभिः शिल्पिभिस्तत्कर्मकरणे भर्त्रादिप्रेरणार्थं स्त्रियै यदुत्कोचदानं तच्छुल्कं तदेव मूल्यं प्रकृत्यर्थ-त्वादिति व्याख्यातम् । पुनश्चोक्तम्—

यदा नेतुं भर्तृगृहे शुल्कं तत्परिकीर्त्तितम् ।

इति व्यासोक्तं वा भर्तृगृहगमनार्थमुत्कोचादि यद्दत्तं तच्छुल्क-मित्यर्थ इति । तत्र स्त्रीधनत्वव्यपदेशोऽन्यस्त्रीधनवत् सुगम एव । आ-धिवेदनिकं रूपान्तरविवाहकाले पूर्वभार्यायै यद्दीयते । यदाह—
याज्ञवल्क्यः, ( अ० २ श्लो० १४८ )

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।

---

( १ ) गृहं प्रसिद्धम् । उपस्कर उलूखलादिः । वाह्यो वृषादिः । दोह्यो गवादिः । आभरणं प्रसिद्धम् ।

( २ ) सुदाय एव सौदायिकम् । स्वार्थिकष्ठञ् । स्वदायतो लब्धमिति वा ।

न दत्तं स्त्रीधनं यासां दत्ते त्वर्द्धं प्रकल्पयेत् ॥ इति ।

पित्रादिभिर्जीवनाद्यर्थं स्त्रीभ्यो धनदाने विशेषमाह—

कात्यायनः,

पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै ।
यथाशक्त्याद्विसाहस्राद्दातव्यं स्थावरादृते ॥

स्थावरेतरधनं यथाशक्ति कार्षापणसहस्रद्वयपर्य्याप्तं देयमित्यर्थः ।

व्यासोऽपि—

द्विसाहस्रः परो दायः स्त्रियै देयो धनस्य तु ।

आद्विसाहस्रादिति कात्यायनेन पर इति च व्यासेनोक्तेरितोऽधिकमतिधनिनापि न स्त्रीभ्यो देयमिति दर्शितम् । अयं च नियमः प्रतिवत्सरमलङ्कृदर्पणे ज्ञेयस्तेनानेकवत्सरेषु जीवनार्थं दीयमानमितोऽधिकमपि भवति चेन्न दोषः । जीवनाद्यर्थत्वाद्दानस्य । यावज्जीवं च द्विसाहस्रमात्रेण तन्निर्वाहासम्भवात् । स्त्रीधनेऽपि भर्त्रनुमतिमन्तरेण स्त्रीणां न स्वातन्त्र्यमित्याह—

मनुः, ( अ० ९ श्लो० १९९ )

न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात् ।
स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञया ॥ इति ।

निर्हारो व्ययः । क्वचित्तु स्त्रीधने तासां स्वातन्त्र्यमस्ति । यदाह सौदायिकस्वरूपमुक्त्वा—

कात्यायनः,

सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् ॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥

भर्तृदत्ते तु स्थावरेतर एव स्वातन्त्र्यमित्याह—

नारदः,

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत् ।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते ॥

स्थावरे भर्तृदत्ते स्त्रिया निवासाद्युपभोगमात्रं न दानविक्रयादिकमित्यर्थः । "अपुत्रा शयनं भर्त्तुः" इत्यादि कात्यायनवचोऽपि भर्त्तृदत्तस्थावरविषयमेव नारदैकवाक्यतयेति केचित् । अस्माभिस्तु "पत्नी दुहितर" इति व्याख्यानावसरेऽस्य विषयश्चिन्तितः । पुरुषाणामपि कस्मिन्नपि स्त्रीधने न स्वातन्त्र्यं स्वाम्याभावादित्याह—

कात्यायनः,

न भर्त्ता नैव च सुतो न पिता भ्रातरो नच ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥
यदि त्वेकतरोऽप्येषां स्त्रीधनं भक्षयेद् बलात् ।
सवृद्धिकं स दाप्यः स्याद्दण्डं चैव समाप्नुयात् ॥
तदेव यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्व्वकम् ।
मूलमेव तदा दाप्यो यदा स धनवान् भवेत् ॥
अथ चेत्स द्विभार्य्यः स्यान्न च तां भजते पुनः ।
प्रीत्या संसृष्टमपि चेत् प्रतिदाप्यः स तद्बलात् ॥
ग्रासाच्छादनवासानामुच्छेदो यत्र योषितः ।
तत्र स्वमाददीत स्त्री विभागं रिक्थिनां तथा ॥

स्त्रिया धनं गृहीत्वा यद्यपरभार्य्यया सह वसत्येनां चावजानीते तदा गृहीतं तद्धनं राज्ञा बलाद्दाप्यः । भक्ताच्छादननिवासान् यदि भर्त्ता न ददाति तदा तेऽपि स्त्रिया बलाद्ग्राह्यास्तत्पर्य्याप्तं धनं वा ग्राह्यमिति श्लोकद्वयस्य 'अथ चेत्' इत्यस्यार्थः । इदमपि तस्या दोषराहित्ये बोध्यम् । दुष्टा पुनः किमपि स्त्रीधनं न लभत इत्याह—

स एव,

अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका ।
व्यभिचाररता या च स्त्रीधनं न तु सार्हति ॥

नार्हतीत्यनेन तया लब्धमप्याच्छिद्य ग्राह्यमिति सूचितम् । अपकारक्रियायुक्ता सदा भर्त्तुः प्रतिकूलाचरणपरा । निर्मर्य्यादार्थनाशिकेत्यपि पाठः ।

देवलः—

वृद्धिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।
भोक्त्री तत्स्वयमेवेदं पतिर्नार्हत्यनापदि ।
वृथा मोक्षे च भोगे च स्त्रियै दद्यात् सवृद्धिकम् ॥ इति ।

वृद्धिर्वर्द्धनार्थं पित्रादिना दत्तमिति स्मृतिचन्द्रिकायाम् । मदनरत्ने तु वृत्तिरिति पठितम् । वृत्तिर्ज्जीवनार्थं पित्रादिभिर्दत्तमिति व्याख्यातं च । लाभो=गौरव्यादिप्रीत्यर्थं यल्लभ्यते कुतश्चित् । वृथा=आपदमन्तरेण । मोक्षस्त्यागो दानमिति यावत् । स्त्र्यननुज्ञातत्यागभोगविषयमेतत् । तदनुज्ञया त्वनापद्यपि न दोषः । स्वयमेवेत्येवकारः स्वापत्यानां व्युदासार्थः । भर्तृव्युदासस्य पतिर्नार्हतीत्यनेनाभिधानात् । भर्तृव्युदासे ततो बहिरङ्गाणां भ्रात्रादीनां व्युदासस्यापि दण्डापूपि-

कया सिद्धत्वात्। अनापदीत्यभिधानादापदि न दोषः। अत एव—

पुत्रार्त्तिहरणे चापि स्त्रीधनं भोक्तुमर्हति।

इति तस्यैव वाक्यशेषः। पतिरित्यनुषङ्गः। पुत्रग्रहणं कुटुम्बोपलक्षकं तस्यार्त्तिर्भक्ष्याद्यभावनिमित्ता पीडा तस्या हरणे। चशब्दादन्यस्मिन्नपि धनाभावनिमित्ते सङ्कटे स्त्रीधनमननुज्ञातमपि पतिस्त्यक्तुं भोक्तुं चार्हतीत्यर्थः।

ननु परधने त्यागभोगयोः स्वाम्यनुज्ञया विना कथमर्हता बाधितानेन बोध्यते, अनुज्ञायां त्वनापद्यपि न विरोधः। उच्यते। वचनबलात्तादृशविषये व्यये स्वत्वमेव तस्य नन्वित्यदोषः। अत एव—

योगीश्वरोऽपि—(अ०२श्लो०१४७)

दुर्भिक्षे धर्मकार्ये च व्याधौ सम्प्रतिरोधके।
गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति॥

धर्मकार्ये=आवश्यके नित्ये नैमित्तिके च। सम्प्रतिरोधके दण्डाद्यर्थं राज्ञावरोधे कृते। वाचस्पतिस्तु सम्प्रतिरोधक इति व्याधिविशेषणं कार्यानुष्ठानबाधक इति च तदर्थं इत्याह। नाकामो दातुमर्हतीत्यपि दारिद्र्यादिकृतदानासामर्थ्ये बोध्यम्। सति तु सामर्थ्ये दुर्भिक्षादिगृहीतमवश्यं देयम् एतावतैव वचनोपपत्तौ सामर्थ्येऽप्यदानमिच्छयेत्यस्य कल्पयितुमनर्हत्वात्। पतिग्रहणादापद्यपि पत्युरेव पत्नीधनग्रहणाधिकारः। प्रतिदानं चेच्छया नान्यथेति ज्ञेयम्।

भर्त्रा दातुं प्रतिश्रुतं भार्य्यायै तस्मिन् मृते पुत्रादिभिस्तस्यै देयमित्यप्याह—

स एव,

भर्त्रा प्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैः। इति।

सुतग्रहणं पौत्रप्रपौत्रयोरुपलक्षणमृणवदित्यभिधानात्। अनेन स्त्रीधने जीवन्त्यां तस्यां सुतानां जन्मना स्वत्वेऽपि नास्ति विभाग इति गम्यते। एवं स्त्रीधनमुक्तम्।

अथ तद्विभागो निरूप्यते।

तत्र मनुः—(अ०९श्लो०१९२)

जनन्यां संस्थितायां तु समं सर्वे सहोदराः।
भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः॥

अत्र द्वन्द्वसमानार्थकचशब्दोपादानात् सोदरभ्रातृभगिनीनां मिलितानां मातृधनाधिकारो गम्यते। सोदरग्रहणं भिन्नोदरव्यावृत्त्यर्थम्।

देवलः—

सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं स्त्रियाम् ।
अप्रजायां हरेद्भर्त्ता माता भ्राता पितापि वा ॥

अत्र तु द्वन्द्वस्यैव श्रवणात्पुत्राणां कन्यानां च सहाधिकारः प्रतीयते । इदं चान्वाधेयपतिप्रीतिदत्तद्विविधस्त्रीधनविषयम् । यथाह—

मनुरेव, (अ०९श्लो०१९५)

अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् ।
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥

अन्वाधेयं=पूर्वलक्षितम्, यच्च पत्या प्रीत्या दत्तं तत् स्त्रीधनं वृत्तायाः मृतायाः स्त्रियाः या प्रजा पुत्रदुहितृरूपा तस्याः स्वं भवति । पत्यौ जीवतीत्यनादरे सप्तमी । जीवन्तमपि पतिमनादृत्येत्यर्थः । तस्यानधिकारस्तत्रेति यावत् । अत्र च प्रजाया इति सामान्याभिधानात् स्त्रीपुंसप्रजायाः समस्वाम्यावगतेस्तुल्यवद्विभज्य मातृधनग्रहणं न पुनः पूर्वं भगिनीनां तदभावे भ्रातृणामिति । भगिन्यश्च मनुवचनेऽनूढा ग्राह्याः । तथा च—

बृहस्पतिः,

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत् समूढा तु लभते मानमात्रकम् ॥

अपत्यानां=पुत्राणाम् । दुहितुः पृथगुपादानात् । तदंशिनी=पुत्रसमांशिनी । मानमात्रकमिति गौरवार्थं, तदनुसारेण किमपि लभते न तु पुत्रसमांशमित्यर्थः ।

अप्रत्तानामभावे प्रत्तानामपि सभर्तृकाणां भ्रातृसमभागित्वमित्याह—

कात्यायनः,

भगिन्यो बान्धवैः सार्द्धं विभजेरन् सभर्तृकाः । इति ।

विभागकाले दौहित्रीभ्योऽपि किञ्चिद्देयम् । तथा च—

मनुः, ( अ० ९ श्लो० १९३ )

यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः ।
मातामह्या धनात्किञ्चित्प्रदेयं प्रीतिपूर्वकम् ॥

यथार्हत इत्युपयोगदारिद्र्याद्यपेक्षयेत्यर्थः । न च दौहित्रीणां तदा धनस्वाम्याभावात् किमिति दानमिति वाच्यम् । यथा पैतृके पुत्रसत्त्वे कन्यानां दायानर्हत्वेऽपि वचनबलात्तुरीयांशदानमेवमत्राप्युपपत्तेः । अत एव प्रीतिपूर्वकमित्युक्तम् । प्रीतिपूर्वकत्ववचनादेवानावश्यकत्वमपि सूचितमत्र । तत्र तु "पतिताः स्युरदित्सव" इति दोषकीर्त्तनादावश्यकत्वमिति भेदः ।

यौतकं तु कुमारीणामेव मातृधनम् । न पुत्राणां नापि प्रत्तदुहितॄणामित्याह—

मनुरेव, (अ०९श्लो०१३१)

मातुस्तु यौतकं यत्स्यात् कुमारीभाग एव सः । इति ।

युमिश्रण इति धात्वनुसाराद्विवाहकाले एकासनोपविष्टयोर्वधूवरयोर्यद्बान्धवैर्दीयते तद्युतयोरिदं यौतकमिति व्युत्पत्त्या यौतकमित्युच्यते । केचित्तु विवाहे स्त्रीपुंसयोरेकशरीरतया मिश्रता भवति । "अस्थिभिरस्थीनि मांसैर्मांसं त्वचा त्वचं" इति श्रुतेः । भर्तुर्वध्वस्थ्यादिभिरस्थ्यादीन्येकीभवन्तीत्यर्थ इत्याहुः । 'यदेतद्धृदयं तव तदस्तु हृदयं मम यदिदं हृदयं तदस्तु हृदयं तव' इति मन्त्रलिङ्गाद्विवाहे मिश्रतेत्यन्ये । युतयोर्यौतकमिति निघण्टौ । "यौतकं यौतुकं च तत्" इतिकोशाद्यौतुकमित्यपि पाठः । भर्तृगृहलब्धात्पृथग्धनतया पितृगृहलब्धं मातृधनं यौतकम् । यौतकशब्दस्यामिश्रणमप्यर्थः । युमिश्रणामिश्रणयोरिति धातुपाठात् युतसिद्धाविति प्रयोगाच्चेति देवस्वाम्याह । तदसत् । पितृगृहलब्धात्पृथग्धनतया भर्तृगृहलब्धं यौतकमित्यस्यापि विनिगमकाभावे वक्तुं शक्यत्वेनास्य कल्पनामात्रत्वात् । कुमारीणामनेकत्वे "समं स्यादश्रुतत्वात्" ( जै० अ० १० पा० ३ अधि० १२ सू० ५३ ) इति न्यायेन स एव विभागो विशेषाश्रवणात् । एतत्त्रिविधभिन्नं मातृधनं दुहितॄणाम् । तत्रापि प्रथममप्रत्तानां, तदभावे प्रत्तानाम्, तत्रापि प्रथममप्रतिष्ठितानां, तदभावे प्रतिष्ठितानां, सधवानां तदभावे विधवानाम् । तथा च—

गौतमः,

स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति ।

अप्रतिष्ठिता अनपत्या निर्धना दुर्भगा विधवेत्यपरार्केण कल्पतरुकारेण च व्याख्यातम् । प्राक्तनं द्वयमेवेति विज्ञानेश्वरादिभिः । अत्र च स्त्रीधनमिति सामान्योक्तिरपि त्रिविधप्रागुक्तस्त्रीधनभिन्नविषया । स्मृतिचन्द्रिका—मदनरत्नयोरेवमुक्तम् । जीमूतवाहन—स्मार्त्तभट्टाचार्याभ्यां तु प्रागुक्तं गौतमवचनं, "मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः" इति नारदवचनम्, "दुहितॄणामभावे तु रिक्थं पुत्रस्य तद्भवेत् ।" इति कात्यायनवचनम्, "मातुर्दुहितरः शेषमृणात् ताभ्य ऋतेऽन्वयः" इति योगीश्वरवचनम् । एवमन्यान्यपि स्त्रीधनस्य दुहितृग्राह्यत्वपराणि स्मृतिवचनानि प्रागुक्तमन्वादिवचनविरोधात् "मातुस्तु यौतकं" इति प्रागुक्तमनुवचनानुरोधात् "मातुः पारिणय्यं स्त्रियो विभजेरन्" इति वाशिष्ठानुसाराच्च

यौतकमात्रविषयाणीत्युक्तम्। पारिणय्यं=परिणयनलब्धं यौतकमिति तात्पर्यं व्याकृतम्। कल्पतरौ विवादचिन्तामणौ च पारिणाय्यमिति पठित्वा स्त्रीपरिच्छदादर्शकङ्कतिकादीति व्याख्यातम्। विज्ञानेश्वरस्तु सर्वमेव स्त्रीधनं पुत्रादिसत्त्वेऽपि प्रथमं दुहितृ-दौहित्री-दौहित्रगामि। तदभावे पुत्रादिगामि। अप्रजःस्त्रीधनं तु व्यवस्थापयिष्यते। "मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः" इति योगीश्वरवचने दुहितृमात्रं ताभ्य इत्यनेन न परामृश्यते किन्तु दौहित्रीदौहित्रावपि। "मातुर्दुहितरोऽभावे दुहितॄणां तदन्वय" इति नारदवचनात्। अत्र तदन्वय इत्यनेन तच्छब्देन दुहितरोऽनन्तराः परामृश्यन्ते। तथा च दुहित्रन्वयो दौहित्रीदौहित्ररूपः। तत्रापि प्रथमं दौहित्री तदभावे दौहित्रः। "दुहितॄणां प्रसूता चेत्" इति वक्ष्यमाणयोगीश्वरवाक्ये दुहितृशब्देन दुहितृदुहितरो गृह्यन्ते। साक्षाद्दुहितॄणां "मातुर्दुहितर" इत्यत्र तेनैवोक्तत्वात् पुनरुक्त्यापत्तेः। दुहितॄणामन्वय इति सामान्योक्तेर्दौहित्राधिकारोऽपि। पुत्राधिकारस्तु "विभजेरन् सुताः पित्रोरूर्ध्वमृक्थमृणं समम्" इत्यत्र पित्रोरित्येकशेषाल्लभ्यते। तच्च प्रागेव प्रपञ्चितम्। "ताभ्य ऋतेऽन्वयः" इत्यत्राप्यन्वयपदेन योग्यतया षष्ठ्यन्तमातृपदान्वयात् दुहितॄणां च पृथगुपादानात् पुत्रादिरेव गृह्यते। दुहित्रभावे तदधिकारप्रतिपादनार्थत्वाच्च न पौनरुक्त्यम्। "जनन्यां संस्थितायां तु" इति मनुवचनस्य त्वयमर्थः। सर्वे सहोदरा मातृकं रिक्थं स्वाधिकारावसरे समं भजेरन् सनाभयः सोदरा भगिन्यश्च स्वाधिकारावसरे। न तु द्वयेऽपि सम्भूय विभजेरन्नित्यर्थः। इतरेतरयोगस्य द्वन्द्वैकशेषयोरभावादप्रतीतेः। चशब्दस्य तु विभागकर्तृत्वान्वयमात्रेणाप्युपपत्तेः। यथा देवदत्तः कृषिं कुर्याद्यज्ञदत्तश्चेत्युक्ते नेतरेतरयोगप्रतीतिः। वाक्यान्तरेण च द्वयोरपि मातृधनाधिकारे प्राप्तेऽपि सममित्यनेनात्रोद्धारादिविषमविभागनिवृत्त्यर्थं वचनम्। सोदरसनाभिग्रहणमसोदरभ्रातृभागिनीनिवृत्त्यर्थम्। अत एवाधमजातिस्त्रीधनं भिन्नोदरापि प्रकृष्टजातीयसपत्नीपुत्री तदभावे च तदपत्यं गृह्णातीत्युक्तम्—

मनुना, (अ०९श्लो०१९८)

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत्॥ इति।

अत्रानपत्यक्षत्रियादिजातीयस्त्रिया इति विवक्षितम्। ब्राह्मणीपदं चोत्तमजात्युपलक्षणम्। "अप्रजःस्त्रीधनं भर्त्तुः" इत्यस्य चायमपवादः। अतश्चानपत्यवैश्याधनं क्षत्रियादुहितानपत्यशूद्राधनं च वैश्यादुहिता

गृह्णाति। तदभावे तदपत्यानि तदभावे "अप्रजःस्त्रीधनं" इत्यस्य तत्र प्रवृत्तिः। तस्मात् स्त्रीधने सापत्यप्राग्दुहित्राद्यधिकारस्तदनु पुत्रादीनामित्याहुः।

अत्र जीमूतवाहनः। (अ०४ प०२) मनु—बृहस्पति—शङ्खलिखित-वचनेषु द्वन्द्वाश्रवणेऽपि समुच्चयवाचिचशब्देन तदर्थलाभाद्देवलवचने तु पुत्रकन्यानामिति द्वन्द्वस्यापि श्रवणात्तत्संवादेन तत्रापि चशब्दस्येतरेतरयोगार्थकत्वौचित्याद्भ्रातृभगिनीनां सोदराणां विभज्य सहैव धनग्रहणं युक्तम्। किञ्च। केवलदुहितॄणामेव सकलमातृधनाधिकारे यौतके विशेषवचनमनर्थकम्। न च कुमारीपदोपादानात्प्रत्तदुहितृव्यावृत्त्यर्थं तदिति युक्तम्। तद्व्यावृत्तेः सर्वस्त्रीधन एव गौतमादिवचनेषूक्तत्वात्। कुमार्य्यभावे प्रत्ताद्यधिकारस्यात्राप्यवर्जनीयत्वात्। तस्मात्पुत्रपत्न्योस्तुल्यवदधिकार एव मन्वाद्यभिप्रेतोऽध्यग्न्यादिस्त्रीधनविषयो यौतकविषयस्तु पुत्रीमात्राधिकार इत्येव व्यवस्था। अन्वाधेयपतिप्रीतिदत्तमात्रग्रहणं तु मनुवचनान्तरेऽध्यग्न्याद्युपलक्षणमितरथा यौतके पृथगारम्भस्यानर्थक्यापत्तेरित्याह। दायतत्त्वकृदादीनामप्येतदेव मतम्।

अत्रेदं प्रतिभाति। अन्वाधेयादिग्रहणस्योपलक्षणत्वे प्रमाणाभावात्तदुभयव्यतिरिक्तसर्वमातृधने दुहित्रधिकारः प्रथमं, तदनु पुत्राधिकारः। यौतके विशेषवचनं तु प्रत्तादिनिवृत्त्यर्थम्। अन्यत्रापि सा समैवेति चेत्, सत्यम्। किन्तु। न नियता यौतके तु नियता। तेन यौतकं कुमार्यभावे विवाहभेदेन स्त्रीधनं भर्त्रादीनामेव भवति न प्रत्तादीनामिति स्मृतिचन्द्रिकाकारादीनामाशयः। विज्ञानेश्वराचार्य्याणां त्वयमभिप्रायः। सामान्यतः स्त्रीधनमात्रस्य दुहितृग्राह्यताबोधकानामनन्यथासिद्धवचनानुरोधेन सङ्कोचः कर्त्तव्यो न च मन्वादिवचनमनन्यथासिद्धपुत्रकन्यानां सहाधिकारप्रतिपादकम्। पुत्राधिकारमात्रप्रतिपादनपरत्वात्। नच चशब्दद्वन्द्वाभ्यां सहाधिकारः। विभागकर्तृत्वान्वयेनापि तदुपपत्तेः। अन्यथा "पितरौ"इत्यादौ "मातापित्रोस्तदिष्यते" इत्यादौ च द्वन्द्वैकशेषश्रवणे सकलनिबन्धसम्मतः क्रमो मातापित्रोर्न स्यात्। विष्णुवचनाद्यनुरोधात्तत्र शब्दान्वयसाहित्यमात्रेण तदुपपत्तिरर्थक्रमस्त्वन्यथाप्यविरुद्ध इत्युच्यते। तर्ह्यत्रापि "ताभ्य ऋतेऽन्वयः"। "दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्भवेत्" इत्यादियोगीश्वरकात्यायनवचनावगतार्थक्रमान्यथाभावे द्वन्द्वचशब्दादीनां शाब्दान्वयसाहित्यमात्रेणोपपत्तिरस्तु न तु तदनुरोधेन तेषामेवान्यविषयत्वम्। सिद्धे सहाधिकारे तेषां सङ्कोचस्तत्सङ्कोचे चैषां सहाधिकारपरत्वनिश्चय इतीतरेतराश्रयत्वं चेति। अन्वाधेयादौ

विशेषवचनमनर्थकमिति चेत्, न । यौतके चन्द्रिकाकारादिमतवदेव सार्थकत्वात् । अन्वाधेयग्रहणस्योपलक्षणतया प्रजामात्राधिकारे तेन प्रतिपादिते "जनन्यां संस्थितायां तु" इत्यादिवचनैः स्वाम्यादिविधानमित्येवं सर्वेषां सार्थकत्वात् । तस्मात्सर्वं सुस्थमिति ।

श्रीविद्यारण्यश्रीचरणैस्तु स्मृतिचन्द्रिकामिताक्षरयोर्द्वयोरप्यनुसारेण द्वयमपि लिखितं न तु विविक्तम् । पुत्रादिभ्यः प्राक् दुहितृदुहितुस्तदनु दौहित्राणामधिकार इति तु मिताक्षरा—चन्द्रिका—मदनरत्नकाराणां विद्यारण्यश्रीचरणानां चाविसंवादेन सम्मतः ।

जीमूतवाहन—दायतत्त्वकारौ तु दुहित्रभावे पुत्राणामेवाधिकारो न तु दौहित्र्या द्यधिकाराऽन्तरम् । तथा हि नारदवचने "दुहितॄणां तदन्वय" इति । अत्र दुहितुरन्वयपदेनान्वयपुत्रादिवाचकेन नान्वयः सम्भवति । दुहितृपदस्य जन्यविशेषवचनस्य जन्यान्तरे समत्वेन निराकाङ्क्षतयान्वयासम्भवात् । तच्छब्दस्यापि दुहितृत्वरूपेणैव तदुपस्थापकस्य नैराकाङ्क्ष्याविशेषात् । किञ्च । याज्ञवल्क्यवचने तावत् दुहितर इति प्रथमान्तस्य ताभ्य इति च पञ्चम्यन्तस्य च षष्ठ्यन्तान्वययोग्यत्वान्वयपदेनानन्वयाद्व्यवहितस्यापि मातुरित्यस्यैवान्वयः तदेकवाक्यतयात्रापि मातुरन्वय एव पुत्रादिर्गृह्यते न दुहित्रन्वयः । किञ्च । "सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवति" इति बौधायनवचनादनन्तराङ्गजपुत्राधिकार एव प्रत्यासत्तेरुचितो न तु व्यवहिताङ्गजदौहित्रादेरित्याहतुः । तन्मन्दम् । जन्यवाचकस्य जन्यान्तरेणानन्वये 'अस्य पुत्रपुत्र' इत्यादावप्यन्वयो न स्यात् । तज्जन्यं प्रति सम्बन्धितयाऽविरोधस्त्वत्रापि तुल्यः । अन्यथा दुहितु; पुत्र इत्यत्राप्यन्वयो न स्यात् । तस्माच्छब्दव्युत्पत्त्यज्ञानमेवेदम् । याज्ञवल्क्यवचने च यद्यपि मातुरन्वयः पुत्रादिरेवोक्तस्तथापि "विभजेरन् सुताः पित्रोः" इत्यनेन प्राप्ताधिकाराणामेव ऋणदानदुहित्रभावोपाधिकत्वज्ञापनार्थोऽनुवादः । स च दौहित्रानन्तरमप्यविरुद्धः । "सत्स्वङ्गजेषु" इति बौधायनवचनं तु मातृसाधारण्येन पुत्राणां धनाधिकारमात्रमङ्गजपदस्य चापत्यमात्रवाचकत्वात् पुत्रदुहितृसाधारणमधिकारं प्रतिपादयद्वचनान्तराविरुद्धं प्रत्यासत्त्यैव व्याख्यातुं युक्तमिति न किञ्चिदेतत् । सन्तानाभावे त्वाह—

योगीश्वरः, (अ०२श्लो०१४४)

अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः ।

अप्रजसि दुहित्रादिप्रपौत्रपर्यन्तरहितायाम् अतीतायां मृतायां बान्धवा वक्ष्यमाणश्लोकोक्ताः तत्=स्त्रीधनमवाप्नुयुः । विवाहभेदेन व्यवस्थया बा·

न्धवानामधिकारमाह—

स एव, (अ०२श्लो०१४५)

अप्रजःस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि ।
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत् ॥ इति ।

चतुर्षु ब्राह्मदैवार्षप्राजापत्येषु । अपिशब्दाद्गान्धर्वपरिग्रहः । यद्वा अतद्गुणसंविज्ञानबहुव्रीहिणा ब्राह्मभिन्नदैवार्षप्राजापत्यगान्धर्वाश्चत्वारः । तेन—

ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् ।
अप्रजायामतीतायां भर्तुरेव तदिष्यते ॥(अ०९श्लो०१९६)

इति मनुवचनाविसंवादः । ब्राह्मादिविवाहोढाया धनमनपत्याया भर्तुर्भवति । तदभावे भर्तुः प्रत्यासन्नानाम् । स्वामिप्रत्यासत्तेर्भर्त्रैवान्तराये भर्तृप्रत्यासत्तेरेव पुरस्करणीयत्वात् । शेषेषु आसुरादिषु परिणीतायास्तु पितृगामि एकशेषेण मातापितृगामि । तत्रापि प्राङ्मातृगामि तदनु पितृगामि "पितरौ" इत्यत्रोक्तान्न्यायात् विरुद्धवचनान्तराभावाच्च । अत एव—

मनुना, (अ०९श्लो०१९७)

यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु ।
अतीतायामप्रजसि मातापित्रोस्तदिष्यते ॥

इति द्वन्द्वे मातृशब्दस्य पूर्वनिपातेन मातुः प्राथम्यमवगमितम् । कन्याधने च मातुरभावे पितुरधिकारश्रवणादत्रापि तथैवौचित्यात् । यथाह बौधायनः,

रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम् ।
तदभावे भवेन्मातुस्तदभावे भवेत्पितुः ॥ इति ।

मातापित्रोरभावे तत्प्रत्यासन्नगामि । पूर्वोक्तेषु सर्वेष्वेव विवाहेषु प्रसूता अपत्यवती चेत् दुहितॄणां तद्धनम् । दुहितृशब्देन चात्र दुहितृदुहितरो लक्ष्यन्ते इति प्रागेवोक्तम् । तत्राप्यनूढादिक्रमो गौतमादिप्रतिपादितो दुहितृधनग्रहणकाले दौहित्रीभ्योऽपि प्रीत्या किञ्चिद्दानमिति च प्रागेव निरूपितम् । दौहित्रीणां च मातामहीधनग्रहणं भिन्नमातृकाणां विषमाणां मातृद्वारेण पौत्राणां पितृद्वारेणेव । "प्रतिमातृ वा स्ववर्गे भाग"(१) इति गौतमस्मरणात् ।

जीमूतवाहनस्तु (अ०४प०३) ब्राह्मादिविवाहेषु यद्धनं तदेवानेन व्यवस्था-

---

(१) अत्र वाशब्द एवार्थे । स्ववर्गे दौहित्रीवर्गे, प्रतिमातृ मातरि मातरि स्वस्वमातृविषये इत्यर्थः ।

प्यते न तु तत्तद्विवाहोढायाः सर्वं धनम्। ब्राह्मादिषु यद्धनमिति सम्बन्धे (१)वर्त्तमानसम्बन्धेन लक्षणायास्तदुढस्त्रीपरत्वेऽतीतविवाहक्रियाद्वारकसम्बन्धेन लक्षणाया जघन्यत्वादित्याह। तदनुगामी दायतत्त्वकृदप्येवम्।

तदपेशलम्। पूर्ववचने अप्रजःस्त्रीधनं बान्धवा गृह्णीयुरिति सामान्यत उक्ते कीदृश्या अप्रजसः के बान्धवा गृह्णीयुरित्येवाकाङ्क्षोदयाद् ब्राह्मादिपदानां तद्विशेषणत्वस्यौचित्यात्। यच्च वर्त्तमानभूतसम्बन्धकृतं विनिगमकमुक्तम्। तदपि तुच्छम्। विभागकालेऽतीतत्वस्योभयत्राविशेषात्। धनलाभकाले वर्त्तमानत्वस्य चाप्रयोजकत्वात्। विवाहजन्यभार्य्यात्वसम्बन्धस्यान्तरङ्गत्वाच्च।

यत्तु सर्वेष्वपि विवाहेषु पित्रोः सकाशात्तया प्राप्तं, विवाहोत्तरं तत् भ्रातृणामेव। यदाह—

कात्यायनः,

पितृभ्यां चैव यद्दत्तं दुहितुः स्थावरं धनम्।
अतीतायामप्रजसि भ्रातृगामि तु सर्वदा॥ इति।

विश्वरूपजीमूतवाहनौ तु कन्यादशायां यत्पितृभ्यां दत्तं तद्भ्रातृगामि। विवाहात्परतो लब्धस्यान्वाधेयत्वात्। विवाहकाललब्धस्य च विवाहभेदेन भर्तृगामित्वान्मातापितृगामित्वाच्चेत्याहतुः।

तन्न। स्थावरविषयत्वादस्याविरोधात्। न च दण्डापूपिकया स्थावरग्रहणे जङ्गमग्रहणं भ्रातृणामायात्येवेति वाच्यम्। अपवादे तन्न्यायाप्रवृत्तेः। शुल्कं तु सोदराणामेव। "भगिनीशुल्कं सोदर्य्याणां" इति गौतमवचनात्। सोदराभावे मातुः। "ऊर्द्ध्वं मातुः" इति तद्वचनादेव। "पूर्व्वं चैके" इति तु परमतम्। बन्धुदत्तं प्रथममप्रजसो मृताया बन्धूनां तदभावे भर्तुः।

बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत्।

इति कात्यायनवचनात्। पूर्वोक्ताप्रजःस्त्रीधनाधिकार्यभावे त्वाह—

बृहस्पतिः,

मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा।

---

(१) सम्बन्धे इति अन्वय इत्यर्थः। वर्तमानेति। वर्तमानः कालस्तत्र विवाहस्य यः सम्बन्धोऽधिकरणत्वं तद्रूपेणेत्यर्थः। अतीतेति। अतीता या विवाहक्रिया तद्द्वारकसम्बन्धस्तज्जन्यसंस्कारवत्त्वरूपस्तेनेत्यर्थः। जघन्यत्वादिति। तत्त्वं च विवाहाधिकरणकालत्वापेक्षया तज्जन्यसंस्कारवत्त्वरूपस्य लक्ष्यतावच्छेदकस्य गुरुत्वात्। यद्वा, अतीतत्वं वर्तमानध्वंसप्रतियोगित्वम्। तथा च वर्तमानकाललक्षणापेक्षया अतीतविवाहक्रियासम्बन्धलक्षणायां ध्वंसप्रतियोगित्वरूपाधिकपदार्थप्रवेशेन गौरवादितिभावः।

श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः ॥
यदासामौरसो न स्यात् सुतो दौहित्र एव वा ।
तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः ॥

अत्रौरसपदेन पुत्रपुत्र्योरुपादानम् तयोः सर्वापवादकत्वात् । अपवादक्रमश्च प्रागुक्त एव । सुतपदेन च सपत्नीपुत्रस्य ।

सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥ (अ०९श्लो०१८३)

इति मनुवचनात् । न तु सुतपदमौरसविशेषणमानर्थक्यात् । सपत्नीपुत्रसद्भावेऽपि स्वस्रीयाद्यधिकारापत्तावनादिव्यवहारविरोधाच्च । तथा च दौहित्राभावे औरसपुत्रादिस्तदभावे सपत्नीपुत्रः । तत्सुत इति तच्छब्देन व्यवहितयोरौरससपत्नीपुत्रोरुपादानं नानन्तरस्यापि दौहित्रस्य। दौहित्रपुत्रस्य पिण्डदाने बहिर्भावात् । तथा च दौहित्रपर्यन्ताभावे प्रथममौरसस्तदनु तत्पुत्रपौत्रौ । "पुत्रपौत्रैर्ऋणं देयं" इति ऋणापाकरणाधिकारिणां पिण्डदानाधिकारिणां च तेषामेव रिक्थग्रहणौचित्यात् । तदभावे सपत्नीपुत्रतत्पुत्राणाम् । तेषामेव तदा पिण्डदातृत्वादृणापाकर्तृत्वाच्च । प्रागुक्तमनुवचनाच्च । तदेषामभावे सत्स्वपि श्वशुरादिषु सपिण्डेष्वनन्यगतिकैतद्वचनबलाद्भगिनीपुत्रादीनामेव मातृष्वस्रादिधने प्रत्यासत्तितारतम्येनाधिकारः । स्नुषादीनां तु ग्रासाच्छादनमात्रभाक्त्वम् । वचनविरोधे सपिण्डवत्प्रत्यासत्तेरप्रयोजकत्वात् । "तस्मात् स्त्रियो निरिन्द्रिया अदाया" इति श्रुतेः । "अनिन्द्रिया ह्यदायाश्च स्त्रियोऽनृतमिति स्थितिः" इति तन्मूलकमनुवचनाच्च ।(अ०९श्लो०१८) शृङ्गग्राहिकया यत्र कण्ठोक्तः "पत्नीदुहितर" इत्यादौ यासां स्त्रीणां धनाधिकारस्तासामेव। अन्यासां तु श्रुतिमनुवचनाभ्यां दायग्रहणनिषेध एवेति स्मृतिचन्द्रिकाकारहरदत्तादीनां दाक्षिणात्यनिबन्द्धॄणां जीमूतवाहनादिपौरस्त्यसर्वनिबन्द्धॄणां सिद्धान्ताच्च ।

इति स्त्रीधनविभागः ।

## अथ विभागकाले केनाचिदपह्नुतस्य पश्चाद् ज्ञातस्य विभागप्रकारः ।

तत्र मनुः, ( अ० ९ श्लो० २१८ ) ।

ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि ।
पश्चाद्दृश्येत यत्किञ्चित्तत्सर्वं समतां नयेत् ॥

योगीश्वरः—( अ० ९ श्लो० १२६ )

अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते ।

तत् पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥

अत्र समपदादुद्धारविभागो निषिद्धः । विभजेरन्निति वचनाद् येनैव दृष्टं तेनैव न ग्राह्यं, नाप्यपहर्त्रेऽल्पं दातव्यमिति बोध्यते । एतावता वचनस्यार्थवत्त्वे स्तेयदोषाभावः समुदायद्रव्यापहारे स्वबुद्ध्या गृहीतत्वादिति केषां चिद्वचनं प्रलापः । साधारणद्रव्ये परस्वत्वस्यापि सत्त्वेन परस्वापहारस्य स्तेयपदार्थस्यावारणीयत्वात् । अथ परकीयबुद्ध्या न गृहीतमिति न स्तेयमित्युच्यते, तन्न । अपह्नवे परकीयबुद्धेरावश्यकत्वात् । अत एवापह्नुतमित्युक्तम् । ननु मनुना ज्येष्ठस्यैव समुदायद्रव्यापहारे दोषो दर्शितो न कनीयसाम्–

यो लोभाद्विनिकुर्वीत ज्येष्ठो भ्रातृन् यवीयसः ।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः ॥ इति ।
( अ० ९ श्लो० २१३ )

सत्यम् । परन्तु सम्भावितस्य स्वतन्त्रस्य पितृस्थानीयस्य ज्येष्ठस्यापि दोष उक्ते तत्परतन्त्राणां पुत्रस्थानीयानां दण्डापूपन्यायेन दोषः सुतरामुक्त एव भवति । अत एव समुदायद्रव्यापहारे समविभागवचनस्य स्तेयदोषाभावपरत्वमाचक्षाणा अनेन मनुवचनेन दूरापास्ताः । अविशेषेण दोषप्रतिपादिकया श्रुत्या च ।

यथा—

यो वै भागिनं भागान्नुदते चयते वैनं सः, यदि चैनं न चयतेऽथ पुत्रमथ पौत्रं चयत इति ।

यो भागिनं भागार्हं भागान्नुदते निरस्यति । भागं तस्मै कथञ्चिद्बलाद्वञ्चनया वा न प्रयच्छतीति यावत् । स भागान्नुन्न एनं= नोत्तारं चयते नाशयति दोषवशात् । यद्येनं न नाशयति तस्य पुत्रं पौत्रं वा नाशयतीति श्रुतेरर्थः । श्रुत्यज्ञास्तु प्रलपन्तु नाम । साधारणद्रव्यस्यापि परस्वत्वेनापहारपदार्थानपायादित्युक्तमेव । यथा मौद्गे चरौ विपन्ने सादृश्यात्प्रतिनिधितया माषेषु गृह्यमाणेषु "अयज्ञिया वै माषा" इति निषेधो न प्रवर्त्तते मुद्गावयवबुद्ध्या गृह्यमाणत्वादिति पूर्वपक्षिते निषेधस्य प्राप्तिमात्रापेक्षित्वात्तत्रापि माषावयवानामप्यवर्जनीयग्रहणं यज्ञसाधनत्वं चेति निषेधप्रवृत्त्यनपायात्प्रतिनिधितयापि तदनुपादानं सिद्धान्तितम् । (१)

( १ ) षष्ठाध्यायतृतीयपादषष्ठाधिकरणे "विप्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः" इत्यस्यत्रेत्यर्थः । तत्र हि "अयज्ञियावै माषा वरकाः कोद्रवा" इति श्रूयते । तत्र संशयः । "मौद्गं चरुं निर्वपेच्छ्रीकामः" इति विहितमुद्गाभावे प्रतिनिधित्वेन माषा ग्राह्याः न वेति व्रीह्यभावे नीवारवन्मुद्गाभावे माषा ग्राह्याः । तत्त्वेन जातिसादृश्याभावे

राज्ञे तु भागिभिर्न निवेदनीयं राज्ञे. निवेदितमपि तेन सामादिनैव दापनीयमिति प्रीत्यविच्छेदादिदृष्टप्रयोजनकमेव ।

कात्यायन आह—

बन्धुनापहृतं द्रव्यं बलान्नैव प्रदापयेत् । इति ।

अविभागकालेऽनेन बहु भुक्तमित्यपि न वक्तव्यम् । भुक्तमपि राज्ञा न ग्राह्यमित्याशयेनाह—

स एव,

बन्धूनामविभक्तानां भोगं नैव निवर्त्तयेत् ॥ इति ।

न हि न्यूनाधिकभोगो वारयितुं शक्योऽवर्जनीयत्वादिति भावः । एवं दृष्टार्थतयैवोपपत्तौ नास्यापि स्तेयदोषाभावपरत्वमदृष्टार्थत्वापत्तेः । तस्मादत्रापि स्तेयप्रायश्चित्तं राजदण्डश्च भवत्येवेत्यवधेयम् ।

## अथाविभाज्यम् ।

तत्र योगीश्वरः—( अ० २ श्लो० ११८ । ११९ )

पितृद्रव्याविरोधेन यदन्यत् स्वयमार्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥

पितृद्रव्याविरोधेनेति सर्वशेषः । स्वातन्त्र्ये(१) पितृद्रव्योपघातेन यन्मैत्रादि लब्धं तस्याप्यविभाज्यत्वापत्तौ महाजनाचारविरोधो विद्यालब्धे नारदवचनविरोधश्च ।

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन् ॥ इति ।

( व्य० प० १३।श्लो० १० )

कात्यायनस्त्वविभाज्यविद्याधनलक्षणमुखेनैतदेव द्रढयति ।

यथाह—

परभक्तोपभोगेन विद्या प्राप्तान्यतस्तु या ।
तया प्राप्तं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥ इति ।

---

ऽप्यवयवसादृश्यात् । निषेधस्तु माषादिरूपेण ग्रहणे प्रवर्तते न तु मुद्गावयवोपादानेनावर्जनीयतया प्राप्तमाषावयवरूपेण अतः प्रतिनिधित्वमेवेति पूर्वपक्षे उक्तनिषेधकवाक्येन माषादिजातीयस्य सर्वात्मना यज्ञसाधनत्वं निरस्यते "अयज्ञिया वै माषा" इति सामान्येन श्रवणात् । अतो नान्तरीयका अपि माषावयवा वर्ज्या एव । तस्मान्न ते प्रतिनिधित्वेन माह्या इति सिद्धान्तितम् ।

( १ ) सर्वशेषत्वेनान्वयाभावे इत्यर्थः ।

मनुरपि स्पष्टमाह—

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ ( अ० ९ श्लो२०८)

श्रमेण=सेवादिना । क्रमादभ्यागतायां पितृद्रव्याविरोधेनोद्धृतायामपि भूम्यां विशेष उक्तः—

शङ्खेन,

पूर्वनष्टां तु यो भूमिमेकश्चेदुद्धरेत् क्रमात् ।
यथाभागं लभन्तेऽन्ये दत्त्वांशं तु तुरीयकम् ॥ इति ।

उद्धर्त्रे चतुर्थांशमुद्धरणमूल्यमधिकं दत्त्वांशत्रयं सर्वे समं विभजेरन्नित्यर्थः । यद्यप्येतादृशाविभाज्यत्वं यद्येन लब्धं तत्तस्यैवेति न्यायादेव प्राप्तं, तथापि प्रायो व्यवहारशास्त्रे न्यायसिद्धानुवादकान्येव वचनानीति परिभाषाप्रकरणे प्रपञ्चितमिति न दोषः । अविभाज्यान्तरमप्युक्तम्

मनुना,

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥ ( अ०९ श्लो०२१९)

पत्रं=वाहनम् । वस्त्रादि यद्येन धृतं तत्तस्यैव । अधृतं तु विक्रयाद्यर्थं विभाज्यमेव । कृतान्नं पक्वान्नं सर्वैर्यथाशक्ति भोक्तव्यं न तु तोलयित्वा विभाज्यम । उदकमुदकाधारः कूपादिः सर्वैर्यथोपयोगमुपभोज्यः । स्त्रियो दास्यो विषमा न विभाज्याः पर्य्यायेण कर्म कारयितव्याः । पित्रवरुद्धास्तु समा अपि न विभाज्याः । "स्त्रीष्ववरुद्धासु न विभाग" इति गौतमवचनात् । योगक्षेमशब्दाभ्यामिष्टापूर्त्ते उच्येते । तयोरविभाज्यत्वं पितृद्रव्याविरोधेनार्जितयोरपि दृष्टान्ततयोच्यते । न हि स्वतः फलतो वा तस्य विभागः सम्भवति पैतृकस्य तु सुतराम् । तथाचाह—

लौगाक्षिः,

क्षेमं पूर्त्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः ।
अविभाज्ये च ते प्रोक्ते शयनासनमेवच ॥ इति ।

योगक्षेमशब्देन तत्कारिणो राजमन्त्रिपुरोहितादय उच्यन्ते इति केचित् । शस्त्रचामरोपानत्प्रभृतय इत्यन्ये । प्रचारो गृहारामादिप्रवेशनिर्गममार्गः । तस्याप्यविभाज्यत्वम् । पितृधृतं वस्त्रादिकं श्राद्धभोक्त्रे दातव्यम् । यथाह—

बृहस्पतिः,

वस्त्रालङ्कारशय्यादि पितुर्यद्वाहनादिकम् ।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥ इति ।

स्त्रीधृतोऽप्यलङ्कारो न विभाज्यः।

यथाह मनुः, ( अ० ९ श्लो० २०० )

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्।
न तं भजेरन्दायादा भजमानाः पतन्ति ते॥ इति।

धृत इत्यनेनाधृतस्य विभाज्यत्वमेव। पत्यौ जीवतीत्यनेन पतिजीवनाचिह्नतया यत्र देशे यो धार्य्यते स न विभाज्य इति सूचितम्। पितृप्रसादलब्धस्यापि न विभागः।

पितृप्रसादाद् भुज्यन्ते वस्त्राण्याभरणानि च।
भुज्यन्ते इति वचनादविभाज्यत्वम्। तथा पितृदत्तस्यापि।
पितृभ्यां यस्य यद्दत्तं तत्तस्यैव धनं भवेत्।

इति च स्मरणात्। पितृप्रसाददानप्रीतिदाने अर्थौचित्यानुरोधेनैव ज्ञेये। न तु यथाकामम्। महाजनाचारविरोधात्। पितृद्रव्याविरोधोपार्जितप्रपञ्चो भूयःसु शौर्य्यादिविषयमादाय स्मृतिवचःसु दृश्यते स ग्रन्थविस्तरभिया न लिख्यते।

## अथ विभागानधिकारिणः।

तत्र योगीश्वरः—( अ० २ श्लो० १४० )

क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः।
अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याः स्युर्निरंशकाः॥

तज्जः=पतितजः। क्लीबान्धौ यदि जन्मत आरभ्य तदा विभागानर्हावेव। यदि त्वन्तरा तदा तदपगमश्चेदौषधादिना तर्हि "दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्" इति रीत्या विभागार्हावेवेति ध्येयम्। आद्यशब्देनाश्रमान्तरगतपितृद्वेष्युपपातकिबधिरमूकनिरिन्द्रियाणां ग्रहणम्। यथाह—

वशिष्ठः,

अनंशास्त्वाश्रमान्तरगता इति।

नारदोऽपि—( व्य० प० १३ श्लो० २१ )

पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः।
औरसा अपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः॥ इति।

मनुरपि—( अ० ९ श्लो० २०१ )

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः॥ इति।

व्याधिना निर्गतमिन्द्रियं यस्य स निरिन्द्रियः तेन क्लीबाद्भेदः।

कश्चित्तु निरिन्द्रियाः पाणिपादादिहीना इत्याह । एते क्लीबादयोंऽशभाजो न भवन्ति किन्तु ग्रासाच्छादनदानादिना भर्त्तव्याः पोषणीयाः । अभरणे तु महान् दोषः । यथाह—

मनुः, ( अ० ९ श्लो० २०२ )

सर्वेषामपि चैतेषां दातुं न्याय्यं मनीषिणा ।
ग्रासाच्छादनमत्यन्तं पतितोऽह्यददद्भवेत् ॥ इति ।

अत्यन्तं=यावज्जीवम् । तत्रापि पतितोपपातकिनोर्य्यावत्प्रायश्चित्ताचरणमनंशित्वम् । औद्धत्यादिना प्रायश्चित्तमकुर्वतोऽस्तु नियतमेव । एतेषां च विभागात्प्रागेव दोषभाक्त्वेऽनंशित्वम् न पुनर्विभागोत्तरमपि । दत्तविभागापहरणे प्रमाणाभावात् । पश्चादप्यौषधादिना दोषनिर्हरणेऽस्त्येवांशभागितेति विज्ञानेश्वराचार्य्याः । युक्तं चैतत् । दोषप्रयुक्तत्वाद्विभागानर्हतायाः । "विभक्तेषु सुतो जातः सवर्णायां विभागभाक्" इतिन्यायसाम्यात् । पतितादिषु लिङ्गमविवक्षितमनुपादेयगतत्वात् "ब्राह्मणो न सुरां पिबेत्" इत्यादिवत् । तेन यथासम्भवं "पत्नी दुहितर" इत्यादेरप्ययमपवादः(१) । क्लीबादीनामनंशत्वेऽपि तत्पुत्राणामंशोऽस्तीत्याह—

योगीश्वरः, ( अ० २ श्लो० १४१ )

औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः ।

निर्दोषाः=पूर्वोक्तानंशत्वप्रयोजकदोषशून्याः । तत्र क्लीबस्य क्षेत्रजपुत्रः सम्भवत्यन्येषामौरसोऽपि । पुत्रद्वयग्रहणमितरपुत्रव्युदासार्थम् । पतिततत्सुतयोर्न भरणम् । तथा च—

देवलः,

मृते पितरि न क्लीबकुष्ठ्युन्मत्तजडान्धकाः ।
पतितः पतितापत्यं लिङ्गी दायांशभागिनः ॥
तेषां पतितवर्ज्जेभ्यो भक्तं वस्त्रं च दीयते ।
तत्सुताः पितृदायांशं लभेरन् दोषवर्जिताः ॥

लिङ्गी=प्रव्रजितादिः । पतितपदेनात्र पतितसुतस्यापि ग्रहणं पतितोत्पन्नत्वेन तस्यापि पतितत्वात् । "पतितापत्यं पतितमेवान्यत्र स्त्रियाः सा हि परगामिनी भवति" इति स्मृतेः । मृत इति विभागकालोपलक्षणं जीवद्विभागेऽप्यनर्हत्वात् ।

---

( १ ) पत्नीदुहित्रादीनामप्यन्धत्वादिदोषदुष्टत्वेंऽशानधिकारित्वमितिभावः ।

कात्यायनोऽपि—

अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते ।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति ॥

हीनस्त्रीपरिणयानन्तरमुत्तमस्त्रीपारिणयने द्वयोरप्यक्रमोढात्वं तयोः सगोत्रादनियोगोत्पन्नः क्षेत्रजः पुत्रो नार्हति धनम् । अक्रमोढायामपि सवर्णेन पित्रोत्पादितः पुत्रो धनाधिकारी क्रमोढायामसवर्णजातोऽपि । तथा च—

कात्यायनः,

अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः ।
असवर्णप्रसूतस्तु क्रमोढायां च यो भवेत् ॥
प्रतिलोमप्रसूतायास्तस्याः पुत्रो न रिक्थभाक् ।
ग्रासाच्छादनमात्रं तु देयं तद्बन्धुभिर्मितम् ॥
बन्धूनामप्यभावे तु पित्र्यं द्रव्यं तदाप्नुयात् ।
स्वपित्र्यं तद्धनं प्राप्तं दापनीया न बान्धवाः ॥ इति ।

क्लीबादीनामपि दारपरिग्रहेण पुत्रसम्भव उक्तो-मनुना, ( अ० ९ श्लो० २०३ ) ।

यद्यर्थिता तु दारैः स्यात् क्लीबादीनां कथञ्चन ।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥

तन्तुरपत्यम् । न च क्लीबादेरुपनयनाभावेन पतितत्वात् कथं दारसम्बन्ध इति वाच्यम् । उपनयनानर्हतयानुपनीतत्वे शूद्रवदपतितत्वात्। एतेषां क्लीबादीनां दुहितरो विवाहपर्य्यन्तं भर्त्तव्याः संस्कर्त्तव्याश्च । तत्स्त्रियस्तु पुत्ररहिताः साध्व्यो भरणीया अप्रातिकूलाश्चेत् । अन्यथा बहिष्करणीयाः । तदाह—

योगीश्वरः, ( अ० २ श्लो० १४१।१४२ )

सुताश्चैषां प्रभर्त्तव्या यावन्तो भर्तृसात्कृताः ।
अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः ॥
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैवच ।

आपस्तम्बः—

अपपात्रितस्य रिक्थपिण्डोदकानि निवर्त्तन्ते ।

अपपात्रितो भिन्नोदकीकृतः ।

तथा बृहस्पतिः—

सवर्णाजोऽप्यगुणवान्नार्हः स्यात् पैतृके धने ।
तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते ॥

उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः ।
अतस्तद्विपरीतेन नास्ति तेन प्रयोजनम् ॥
तया गवा किं क्रियते या न धेनुर्न गर्भिणी ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः ॥
शास्त्रशौर्य्यार्थरहितस्तपोज्ञानविवर्जितः ।
आचारहीनः पुत्रस्तु मूत्रोच्चारसमः स्मृतः ॥

अयमर्थः । पित्रादेरौर्ध्वदेहिककर्मणः कर्त्ता सुतोऽसंस्कृतोऽपि वरः श्रेष्ठो वेदपारगोऽप्यपरो न वर इति ।

पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥

इति स्मृतेः । पुत्रकर्म्मकर्तुः पितृधनस्वाम्यमेव वेतनमतस्तदकुर्व्वतः कुतो वेतनाधिकार इति भावः ।

मनुरपि, ( अ० ९ श्लो० २१४ )

सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम् । इति ।

श्रौतस्मार्त्तकर्मानधिकारिणो विकर्मासक्ताश्च भागानर्हा इति भावः ।

इति विभागानधिकारिणः ।

## अथ विभक्तकृत्यम् ।

तत्र नारदः—( व्य० प० १३ श्लो० ४२।४३ )

यद्येकजाता बहवः पृथग्धर्माः पृथक् क्रियाः ।
पृथक्कर्म्मगुणोपेता न चेत्कार्य्येषु संमताः ॥
स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्य्युर्य्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य हि ॥ इति ।

अस्यार्थः । एकस्माज्जाता बहवो भ्रातरो यदि विभक्ता इति शेष इति केचित् । वयं तु पृथग्धर्म्मा इत्यादेरेव विभक्ता इत्यर्थः । तद्विधानस्यात्राप्रतीतेरानर्थक्याच्च । पृथग्विभिन्नो धर्मो देवपितृद्विजार्च्चनरूपो येषां न त्वग्निहोत्रादिरूपः । तस्य द्रव्यसाध्यत्वेऽप्यविभागेऽपि पृथक्त्वात् ।

तथा च—

बृहस्पतिः,

एकपाकेन वसतां पितृदेवद्विजार्च्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥

एतच्च प्राङ्निरूपितम्। पृथक् क्रिया लौकिककृष्यादिरूपा येषां,पृथक्-विभिन्ना ये कर्मणां कण्डनपेषणादीनां गुणा उपसर्जनभूता मुसलोलूख-लदृषदुपलादयस्ते येषाम्। ते चेत्कार्य्येषु न संमताः परस्परमनुमतिं यद्यपि न कुर्वन्ति। तथापि ते स्वभागान् यदि दद्युर्विक्रीणीयुर्वा तत्सर्वम् अ-न्यदप्याधीकरण ऋणादानादि यथेष्टं स्वेच्छया कुर्य्युः। विभक्ता यद्य-नुमतिं कुर्वन्ति व्यवहारसौकर्य्यमात्रं भवति। अथ न कुर्व्वन्ति तथा पि न दानाद्यनिष्पत्तिः। तत्र हेतुः हि यस्मात्ते स्वधनस्यासाधारण-स्वत्वापन्नस्य धनस्य ईशाः स्वामिनः। साधारणे स्वत्वे हि परस्परानुमत्य-पेक्षा न त्वसाधारणेऽपीति भावः।

यत्तु बृहस्पतिनोक्तम्—

विभक्ता वाऽविभक्ता वा सपिण्डाः स्थावरे समाः।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥ इति,

तदप्यविभक्तानुमतिं व्यवहारसौकर्य्यार्थमेव प्रतिपादयति ग्रामा-द्यनुमतिवदित्यवसेयम्। स्थावरे हि चिरकालस्थायिनि पत्रसाक्ष्या-दिविगमे विभागाविभागनिर्णयो दुःशकः स्यात् कालान्तरे। सत्यां त्वनुमतौ विभागनिर्णयानपेक्ष एव व्यवहारः सिद्ध्यति सर्व्वानुमत्या दत्तत्वादित्याशय इति विज्ञानेश्वरादयो बहव आहुः।

स्मृतिचन्द्रिकाकारस्तु यदि विभक्ता अपि स्थावरविभागं दुष्करं मन्यमा नास्तत्फलमेव फलकाले विभज्य भोक्ष्याम इत्यभिसन्धिना तदितरध-नमेव पृथक् विभज्य गृहीत्वा स्थावरं मध्यकमेव स्थापयन्ति तादृश-स्थावरविषयमिदमित्याह।

तत्कल्पनामात्रम्। अविभक्तत्वादेव तत्रानुमत्यपेक्षणात्।

स एव—

येनांशो यादृशो लब्धः प्राप्य तं न विचालयेत्। इति।

प्राप्य=स्वीकृत्य। विभागकाले मत्वा पश्चाद्विप्रतिपद्यमानो राज्ञा वा-रणीयोऽत्याग्रहे दण्ड्यश्चेत्याह—

स एव,

स्वेच्छागतविभागो यः पुनरेव विसंवदेत्।
स राज्ञांऽशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ॥

अनुबन्धो=निर्बन्ध आग्रह इति यावत्।

इति विभक्तकृत्यम्।

॥ ...

अथ विभागप्रकारे उक्ते तत्सन्देहे निर्णयप्रकार उच्यते।

तत्र याज्ञवल्क्यः—( अ० २ श्लो० १४९ )

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः॥

विभागस्य निह्नवेऽपलापे विभक्तमध्ये केनचित् कृते ज्ञातिभिः पितृबन्धुभिः बन्धुभिर्मातुलादिभिः, साक्षिभिश्चोदासीनैः साक्षिलक्षणलक्षितैः। यद्यपि ज्ञातिबन्धवोऽपि साक्षिविधयैव निर्णयकारणं तथापि बहिरङ्गसाक्ष्यपेक्षयान्तरङ्गास्ते श्राद्धादिपृथग्भावरूपविभागलिङ्गतत्त्वज्ञा विभागकर्त्तारश्चेति गोबलीवर्द्दन्यायेन पृथगुपात्ताः। लेख्येन विभागपत्रेण च विभागस्य भावना निर्णयो ज्ञातव्यः। तथा यौतकैः पृथक्कृतैः "युमिश्रणामिश्रणयोः" इति धात्वनुसारात्, गृहैः क्षेत्रैश्च।

नारदः—( व्य० प० १३ श्लो० ३६ )

विभागधर्मसन्देहे दायादानां विनिर्णयः।
ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यप्रवर्त्तनात्॥

ज्ञातिग्रहणं तेषु सत्सु नान्यसाक्षिपुरस्कार इत्येतदर्थम्। कार्य्यं कृष्यादि तस्य पृथक्प्रवर्त्तनात्।

शङ्खः—

गोत्रभागविभागार्थसन्देहे समुपस्थिते।
गोत्रजैश्चाप्यविज्ञाते कुलं साक्षित्वमर्हति॥

कुलं=बन्धवो मातुलादयः। अत एव नारदेन मुख्यत्वाज्ज्ञातय एव निर्दिष्टाः। ज्ञातृभिरिति पाठस्त्वनाकरः पुरातनपुस्तकेषु निबन्धेषु चादर्शनात्। लिखितं तु साक्षिभ्यो बलवदिति परिभाषायां निरूपितम्।

नारदः—( व्य० प० १३ )

दानग्रहणपश्वर्थगृहक्षेत्रपरिग्रहाः।
विभक्तानां पृथग्ज्ञेयाः पाकधर्म्मागमव्ययाः॥ ( ३८ )
साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथञ्चन॥ ( ३९ ॥
येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरिक्थतः।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्॥ ( ४० )

धर्म्मो वैश्वदेवादिः। "एकपाकेन वसतां" इति प्रागुक्तवचनात्।

भ्रातॄणामविभक्तानामेको धर्म्मः प्रवर्त्तते।
विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथक्॥

इति नारदेनैवोक्तत्वाच्च । ( व्य० प० १३ श्लो० ३७ )

बृहस्पतिः—

साहसं स्थावरं न्यासः प्राग्विभागश्च रिक्थिनाम् ।
अनुमानेन विज्ञेयं न स्यातां पत्रसाक्षिणौ ॥

न स्यातामित्यत्र यदीत्यध्याहारः ।

पृथगायव्ययधनाः कुसीदं च परस्परम् ।
वणिक्पथं च ये कुर्युर्विभक्तास्ते न संशयः ॥

आयो व्ययो धनं च पृथग्येषामिति विग्रहः । कुसीदः=वृद्ध्यर्थं धनप्रयोगः । वणिक्पथो=वाणिज्यम् । परस्परमिति एको भ्रातोत्तमर्णः परश्चाधमर्णः एको विक्रीणीते परश्च क्रीणाति इत्येवमादिभिर्लिङ्गैर्विना विभागमनुपपद्यमानैर्विभागः प्रमातव्य इत्यर्थः । एताः क्रिया इति बहुवचनान्मिलितानामेवैषां लिङ्गत्वमिति न भ्रमितव्यम् । व्यस्तसमस्तानामपि तदविनाभावात् । न्यायमूलकत्वाच्च वचनस्य । अनुमानेनाप्यनिर्णये दिव्यैः शपथैश्च विषयाल्पत्वभूयस्त्वानुसारेण निर्णयः । "युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत्" इति परिभाषायां निरूपितम् ।

यत्र तु मानुषं निर्णायकं नास्ति युक्तयश्चाभासा दिव्यशपथाव्यवसायश्चान्यतरस्य न भवति तत्र पुनर्विभागः कार्य्य इत्याह—

मनुः, ( न लभ्यते )

विभागे यत्र सन्देहो दायादानां परस्परम् ।
पुनर्विभागः कर्त्तव्यः पृथक्स्थानस्थितैरपि ॥ इति ।

स च परिशोध्यायव्ययमित्यादि संसृष्टिविभागादिरीत्येत्यनुसन्धेयम् । यच्च मनुनैवोक्तम्—( अ० ९ श्लो० ४७ )

सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ इति ।

तत् परावृत्तिकारणाभावे । कन्यादानदानान्तरयोरप्येवम् ।

इति विभागसन्देहे निर्णयः ।

इति श्रीमन्महाराजाधिराजश्रीवीरसिंहदेवोद्योजितश्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशे दायभागाख्यं प्रकरणं समाप्तम् ।

---

## अथ द्यूतसमाह्वयाख्यं व्यवहारपदम् ।

तस्य स्वरूपमाह नारदः—( व्य० प० १३ श्लो० १ )

अक्षब्रध्नशलाकाद्यैर्देवनं जिह्मकारितम् ।
पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयम् ॥ इति ।

अक्षाः=पाशाः । ब्रध्नश्चर्मपट्टिका । शलाका दन्तादिमय्यो दीर्घचतुरस्राः। आद्यग्रहणाच्चतुरङ्गादिक्रीडासाधनं करितुरङ्गरथादिकं गृह्यते । तैरप्राणिभिर्या पणपूर्विका क्रिया । तथा वयोभिः=पक्षिभिः पारावतादिभिः चशब्दान्मल्लमेषादिभिश्च प्राणिभिर्या पणपूर्विका क्रीडा क्रियते तदुभयं यथाक्रमं द्यूतसमाह्वयाख्यं व्यवहारपदमित्यर्थः । द्यूतं च समाह्वयश्च द्यूतसमाह्वयम् । अत एव—

मनुः, ( अ० ९ श्लो० २२ )

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः ॥ इति ।

तत्र सभिकं प्रत्याह नारदः-( व्य० प० १६ श्लो० २ )

सभिकः कारयेद्द्यूतं देयं दद्याच्च तत्कृतम् ।
दशकं तु शतं वृद्धिस्ततः स्याद्द्यूतकारिणः ॥
अथ वा कितवो राज्ञे दत्त्वा लाभं यथोदितम् ।
प्रकाशं देवनं कुर्य्यादेवं दोषो न विद्यते ॥ इति ।

तस्य वृत्तिमाह याज्ञवल्क्यः, ( अ० २ श्लो० १९९ )

ग्लहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।
गृह्णीयाद्धूर्त्तकितवादितराद्दशकं शतम् ॥ इति ।

परस्परसम्प्रतिपत्त्या कितवैः परिकल्पितः पणो ग्लहस्तत्र ग्लहे तदाश्रया शतिका शतपरिमिता तदधिकपरिमिता वा वृद्धिर्यस्यासौ शतिकवृद्धिस्तस्मात्कितवात् पञ्च पणा आयो यस्मिन् शते तत्पञ्चकं शतं जितस्य ग्लहस्यात्मवृत्त्यर्थं विंशतितमं भागं गृह्णीयादित्यर्थः । "तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते" (५।१।४७) इतिकन् । सभा कितवनिवासार्था यस्यास्त्यसौ सभिकः सभापतिस्तु कल्पिताक्षादिनिखिलक्रीडोपकरणस्तदुपचितद्रव्योपजीवी । इतरात् अपूर्णशतवृद्धेः कितवाद्दशकं शतं जितस्य दशमभागं गृह्णीयादित्यर्थः । एवं क्लृप्तवृत्तेः सभिकस्य यत्कर्त्तव्यं तदाह—

स एव, ( अ० २ श्लो० २०० )

स सम्यक्पालितो दद्यात् राज्ञे भागं यथाकृतम् ।

जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमी ॥ इति ।

यः क्लृप्तवृत्तिर्द्यूताधिकारी स राज्ञा धूर्त्तकितवेभ्यो रक्षितस्तस्मै राज्ञे यथाप्रतिपन्नमंशं दद्यात् । तथा जितं द्रव्यं पराजितसकाशादासेधादिना उद्धृत्य जेत्रे जयिने दद्यात् । तथा क्षमी भूत्वा द्यूतकारिणि विश्वासार्थं सत्यं वचो वदेदित्यर्थः ।

नारदोऽपि—( व्य० प० १६ श्लो० २ )

सभिकः कारयेद्द्यूतं देयं दद्याच्च तत्कृतम् । इति ।

बृहस्पतिरपि—

सभिको ग्राहकस्तत्र दद्याज्जेत्रे नृपाय च । इति

द्यूतपराजितकितवानां बन्धनादिना पणग्राहको भवेत् । पणग्रहणात्प्रागेव स्वकीयं द्रव्यं जेत्रे नृपाय च यथाभागं सभिको दद्यादित्यर्थः । तथा च—

कात्यायनः,

जेतुर्दद्यात् स्वकं द्रव्यं जितं ग्राह्यं त्रिपक्षिकम् ।
सद्यो वा कितवेनैव सभिकात्तु न संशयः ॥ इति ।

त्रिपक्षिकमित्यनेन यथासामर्थ्यमात्रिपक्षात्कालो देय इति दर्शितमिति स्मृतिचन्द्रिकायाम् । यदा तु जेत्रे जितं द्रव्यं सभिको दापयितुमशक्तस्तदा राजा दापयेदित्याह—

याज्ञवल्क्यः, ( अ० २ श्लो० २०१ )

प्राप्ते नृपतिना भागे प्रसिद्धे धूर्त्तमण्डले ।
जितं ससभिके स्थाने दापयेदन्यथा नतु ॥ इति ।

प्रसिद्धे=अप्रच्छन्ने राजाध्यक्षसमान्विते ससभिके सभिकसहिते कितवसमाजे सभिकेन च राजभागे दत्ते राजा धूर्तकितवमविप्रतिपन्नं जितं पणं दापयेत् । अन्यथा प्रच्छन्ने सभिकरहितेऽदत्तराजभागे द्यूते जितं पणं जेत्रे न दापयेदित्यर्थः । प्राणिद्यूते प्राणिनां जयपराजयौ तत्स्वामिनोरित्याह—

बृहस्पतिः,

द्वन्द्वयुद्धेन यः कश्चिदवसादमवाप्नुयात् ।
तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः ॥ इति ।

पणपरिकल्पनं कृताकृतामित्याह—

नारदः—

परिहासकृतं यच्च यच्चाप्यविदितं नृपे ।
तत्रापि नाप्नुयात्काममथवानुमतं तयोः ॥ इति ।

काम्यत इति कामः पणः । अत्र जयपराजयविप्रतिपत्तौ निर्णयप्रकारमाह—

याज्ञवल्क्यः, ( अ० २ श्लो० २०२ )

द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हि । इति ।

द्यूतव्यवहाराणां द्रष्टारः सभ्याः त एव कितवा एव नियोक्तव्या राज्ञा न श्रुताध्ययनसम्पन्ना इत्याद्युक्तनियमोऽस्ति । साक्षिणोऽपि त एव द्यूते द्यूतकरा एव कार्याः । न तत्र स्त्रीबालवृद्धकितवेत्यादिसाक्षिनिरूपणोक्तनिषेधोऽस्तीत्यर्थः ।

विष्णुरपि—

कितवेष्वेव तिष्ठेरन् कितवाः संशयं प्रति ।
य एव तत्र द्रष्टारस्त एवैषां तु साक्षिणः ॥ इति ।

साक्षिणां परस्परविरोधे त्वाह बृहस्पतिः—

उभयोरपि सन्दिग्धौ कितवाः स्युः परीक्षकाः ।
यदा विद्वेषिणस्ते तु तदा राजा विचारयेत् ॥ इति ।

अनियुक्तद्यूतकारिणो दण्डमाह—

नारदः, ( व्य० प० १६ श्लो० ७ )

अनिर्दिष्टस्तु यो राज्ञा द्यूतं कुर्वीत मानवः ।
न स तं प्राप्नुयात्कामं विनयं चैव सोऽर्हति ॥ इति ।

ये तु कूटं द्यूतं कुर्वन्ति तेषां दण्डमाह—

याज्ञवल्क्यः, ( अ० २ श्लो० २०२ )

राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपाधिदेविनः । इति ।

कूटैरक्षादिभिः उपधिना=मणिमन्त्रादिना मतिवञ्चनेन च ये दीव्यन्ति तान् श्वपदादिनाङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेदित्यर्थः । निर्वासने विशेषमाह—

नारदः, ( व्य० पं० १६ श्लो० ६ )

कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत् ।
कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः ॥ इति ।

दण्डने विशेषमाह विष्णुः—

द्यूते कूटाक्षदेविनां करच्छेदः । उपधिदेविनां सन्दंशोऽङ्गुष्ठतर्जन्योरिति ।

यानि तु द्यूतनिषेधकानि मनुवचनानि । ( अ० ९ )

द्यूतं समाह्वयं चैव यः कुर्य्यात्कारयेत वा ।
तान् सर्व्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥ ( २२४ )

प्रकाशमेतत्तास्कर्य्यं यद्देवनसमाह्वयौ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥ (२२२)
द्यूतं समाह्वयं चैव राजा राज्ये निवारयेत् ॥
राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥ (२२१)

इत्यादीनि, तानि कूटाक्षदेवनविषयतया राजाध्यक्षसभिकराहित तया वा योज्यानि। अत एव—

बृहस्पतिः,

द्यूतं निषिद्धं मनुना सत्यशौचधनापहम्।
अभ्यनुज्ञातमन्यैस्तु राजभागसमन्वितम् ॥
सभिकाधिष्ठितं कार्य्यं तस्करज्ञानहेतुना। इति।

याज्ञवल्क्योऽपि (अ०२श्लो०२०३)

द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात्। इति

राज्ञा द्यूतं एकं मुखं प्रधानं यस्य तत् तथोक्तं कार्य्यम्। राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः। तस्करज्ञानकारणात् ल्यब्लोपे पञ्चमी। तस्करज्ञानरूपं प्रयोजनं पर्य्यालोच्येत्यर्थः। प्रायशश्चौर्य्यार्जितधना एव कितवा भवन्त्यतश्चौरविज्ञानार्थमेकमुखं कार्य्यमित्याशयः। द्यूते विहितं धर्मजातं समाह्वये अतिदिशति—

स एव, (अ०२श्लो०२०३)

एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये। इति।

सभिकवृत्तिकल्पनादिलक्षणो धर्म्मः समह्वायेऽपीत्यर्थः।

इति द्यूतसमाह्वयाख्यं व्यवहारपदम्। २०

इति श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशे समाप्तमष्टादशविवादपदनिरूपणाख्यं तृतीयं प्रकरणम्।

## अथ प्रकीर्णकाख्यं चतुर्थं प्रकरणमारभ्यते।

तत्र बृहस्पतिः—

एष वादिकृतः प्रोक्तो व्यवहारः समासतः।
नृपाश्रयं प्रवक्ष्यामि व्यवहारं प्रकीर्णकम् ॥ इति।

तल्लक्षणभेदावाह नारदः, (व्य०प०१७)

प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयाः।
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ॥ (१)
पुरः प्रमाणं सम्भेदः प्रकृतीनां तथैवच।
पाखण्डनैगमश्रेणिगणधर्मविपर्य्ययाः ॥ (२)

पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ।
प्रतिग्रहविलोपश्च कोप आश्रमिणामपि ॥ ( ३ )
वर्णसङ्करदोषश्च तद्वृत्तिर्नियमस्तथा ।
न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णकम् ॥ इति । ( ४ )

प्रतीघातो=भङ्गः । तत्कर्म=सिंहासनावरोहणादि राजकर्म । पाखण्डा-
ः पूर्वमेव व्याख्याताः । प्रकीर्णके विवादपदे ये विवादा राजाज्ञोल्ल-
नतदाज्ञाकरणतत्कर्मरक्षणादिविषयास्ते नृपसमवायिन एव । तत्र
स्याचारव्यपेतेन मार्गेण वर्त्तमानानां प्रतिकूलतामासाद्य नृप एव
हारनिर्णयं कुर्य्यात् । एवं वदता यो नृपाश्रयो व्यवहारस्तत् प्रकी-
मित्युक्तं भवति । विषयविशेषे दण्डविशेषमाह—

ाज्ञवल्क्यः, ( अ० २ श्लो० २९५ )

न्यूनं वाभ्यधिकं वापि लिखेद्यो राजशासनम् ।
पारदारिकचोरं वा मुञ्चतो दण्ड उत्तमः ॥

यो राजदत्तभूमिनिबन्धयोर्मध्येऽन्यतरस्य परिमाणात् न्यूनत्वाधि-
त्यान्यतरं प्रकाशयन् राजशासनत्वेन लिखति । यश्च पारदारिकं चौरं
गृहीत्वा राज्ञेऽनिवेद्य मुञ्चति तावुभावप्युत्तमसाहसं दण्डनीयावित्यर्थः।

ासोऽपि—

न्यायस्थाने गृहीत्वार्थमधर्मेण विनिर्णयम् ।
कुर्वन्त्युत्कोचकास्ते तु राजद्रव्यविनाशकाः ॥
उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत् । इति ।

राज्ञः कोशापहरणे दण्डमाह—

नुः, ( अ०९श्लो०२७५ )

राज्ञः कोशापहर्तॄंश्च प्रतिकूलेष्ववस्थितान् ।
घातयेद्विविधैर्दण्डैर्हरेत् सर्वस्वमेवच ॥ इति ।

सर्वस्वहरणमसाधारणं यद्यस्य जीवनोपकरणं तदतिरिक्तविषयम् ।

। एव—

रदः, ( व्य०प०१७श्लो०१० । ११ )

आयुधान्यायुधीयानां बीजानि कृषिजीविनाम् ।
वेश्यास्त्रीणामलङ्कारं वाद्यतोद्यादि तद्विदाम् ॥
यच्च यस्योपकरणं येन जीवन्ति जीविकाम् ।
सर्वस्वहरणेऽप्येतन्न राजा हर्त्तुमर्हति ॥ इति ।

वधस्थाने मौण्ड्यं ब्राह्मणस्य कर्त्तव्यमित्याह—

नुः, ( नोपलभ्यते )

ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनाङ्कने ।
ललाटे चाभिशस्ताङ्कं प्रयाणं गर्दभेन तु ॥ इति ।

तत्कर्मकरणे दण्डमाह—

याज्ञवल्क्यः, ( अ०२श्लो०३०२ )

राजयानासनारोहे दण्डो मध्यमसाहसम् । इति ।

कात्यायनोऽपि—

राजक्रीडासु ये सक्ता राजवृत्त्युपजीविनः ।
अप्रियं चास्य यो वक्ता वधं तेषां प्रकल्पयेत् ॥ इति ।

शूद्राणां प्रव्रज्यादिकरणे दण्डमाह—

स एव,

प्रव्रज्यावसितं शूद्रं जपहोमपरं तथा ।
वधेन शासयेत्पापं दण्ड्यो वा द्विगुणं दमम् ॥ इति ।

धर्मशास्त्रानुसारेण व्यवहारदर्शिनो राज्ञः फलमाह—

यमः,

एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च ।
यशोऽस्मिन् प्रथते लोके स्वर्गे वासस्तथाऽक्षयः ॥ इति ।

प्रत्याशं परिवर्द्धतेऽर्थिजनतादैन्यान्धकारापहे
श्रीमद्वीरमृगेन्द्रदानजलधिर्यद्वक्त्रचन्द्रोदये ।
राज्ञादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते
ग्रन्थेऽस्मिन् व्यवहारजातविषयः पूर्णः प्रकाशोऽभवत् ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजित-
चरणकमल-श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज-
श्रीमन्महाराजमधुकरसाहसूनु-श्रीमन्महाराजाधिराज-
चतुरुदधिवलयवसुन्धराहृदयपुण्डरीकाविकासदिनकर-
श्रीवीरसिंहदेवोद्योजित श्रीहंसपण्डितात्मज-श्रीपरशुराममिश्रसूनु-
सकलविद्यापारावारपारीणधुरीण-
जगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु-
श्रीमन्मित्रमिश्रकृते वीरमित्रोदये व्यवहारप्रकाशे
प्रकीर्णकाख्यं चतुर्थं प्रकरणं समाप्तम् ।

समाप्तश्च व्यवहारप्रकाशः ।



६४ व्याप्तिपञ्चकरहस्यम् सिंहव्याघ्रलक्षणरहस्यं च । श्रीमथुरानाथतर्कवागीशकृतम् । न्यायाचार्य पं० शिवदत्तमिश्र विरचित गंगानिर्झरिणीव्याख्यया टिप्पण्यादिर्विभूषितं च । [ न्या० वि० ८ ] रु० ०-१२

६५ सिद्धान्तबिन्दुः । श्रीमधुसूदनसरस्वती विरचितः । श्रीभगवानूशङ्कराचार्य विरचित दशश्लोकव्याख्यारुपः श्रीगौड ब्रह्मानन्दविरचित न्यायरत्नावलीनारायणतीर्थ विरचित लघुव्याख्या टिप्पणीसहितः । [ वेदान्त वि० ८ ] रु० ४—०

६६ अन्त्यकर्मदीपकः आशौचकालनिर्णयसहितः । प्रेतकर्मब्रह्मीभूतयति कर्मनिरूपणात्मकः महामहोपाध्याय पं० श्री नित्यानन्दपन्तपर्वतीय विरचितः । [ कर्मकाण्ड वि० ६ ] रु० १—८

६७ सांख्यदर्शनम् । श्रीमद्विज्ञानभिक्षुकृत सांख्यप्रवचनभाष्यसमलङ्कृतम् । [ सांख्य वि० १ ] रु० २—०

६८ अनेकार्थसङ्ग्रहो नाम कोशः । आचार्यश्रीहेमचन्द्रेण विरचितः । [ कोश वि० २ ] रु० २—०

६९ शिशुपालवधम् । श्रीमन्माघकविनिर्मितं श्रीवल्लभदेवकृतया सन्देहविषौषधिव्याख्यया महामहोपाध्याय श्रीमल्लिनाथकृतया सर्वङ्कषाव्याख्यया समेतम् । सजिल्द ग्लेज कागज । सम्पूर्णम् । [ काव्य वि० ९ ] रु० ३—०

६९ ,, ,, [ संपूर्णम् ] २फ मोटा कागज ० २—४

७० जागदीशीपञ्चलक्षणी सिंहव्याघ्रलक्षणं च । श्रीजगदीशतर्कालङ्कारकृतम् । न्यायाचार्य पं० शिवदत्तमिश्र विरचित गंगानिर्झरिणीव्याख्यया टिप्पण्यादि विभूषितं च । [ न्याय वि० ९ ] रु० ०—८

७१-१ ब्रह्मसूत्रशाङ्करभाष्यम् । चतुःसूत्र्यन्त पूर्णानन्दीय व्याख्या सहितया श्रीगोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम् । द्वितीयाध्यायस्य द्वितीयपादान्तो प्रथमोभागः ( वेदान्तविभागे ९ ) रु० २—८

७१-२ ब्रह्मसूत्रशाङ्करभाष्यम् । श्रीगोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम् । द्वितीयाध्यायस्य तृतीयपादमारभ्य समाप्तिपर्यन्तम् । द्वितीयोभागः । ( वेदान्त वि० ९ ) रु० २—८

७२-१-सिद्धान्तशिरोमणिः । श्रीभास्कराचार्य विरचितः । गणिताध्यायः वासनाभाष्य सहितः ज्योतिषाचार्य म० म० श्रीबापूदेवशास्त्रिकृतटिप्पणी सहितः । [ ज्यो० वि० ४ ] रु० २—०

७२-२-सिद्धान्तशिरोमणिः । ,, ,, ,, गोलाध्यायः वासनाभाष्य सहितः । ज्योतिषाचार्य म० म० श्रीबापूदेवशास्त्र कृत टिप्पणी सहितः । [ ज्यो० वि० ४ ] रु० २—०

७३ काकचण्डीश्वरकल्पतन्त्रम् । पण्डित रामकृष्ण शर्मणा सम्पादितम् । पण्डित बटुकनाथ शर्म्मा एम. ए. साहित्योपाध्याय इत्येतेन लिखितया प्रस्तावनया सनाथीकृतम् । [ आयुर्वेद शास्त्रविभागे १ ] रु० ०—८

७४ किरातार्जुनीयम् । श्रीमत्कविकुलचूडामणिभारविविरचितम् मल्लिनाथसूरिकृतया घण्टापथसमाख्यव्याख्यया तथा पं० श्रीगङ्गाधरशर्मणा कृतया सुधाऽऽख्यव्याख्यया समलङ्कृतम् । [ सर्गत्रयमात्रम् ] । [काव्य वि० १०] रु० ०—१२

७५ चन्द्रालोकः । पीयूषवर्षश्रीजयदेवकवि प्रणीतः । श्रीमत्पद्मनाभमिश्रापराभिधान प्रद्योतनभट्टाचार्य विरचितया चन्द्रालोकप्रकाशापराख्य 'शरदागम' टीकया सङ्कलितः । साहित्याचार्येण खिस्ते इत्युपाख्यनारायणशास्त्रिणा भूमिकादिभिः सम्भूष्य सम्पादितः । [ अलङ्कार वि० ३ ] रु० ०—१०

७६ किरातार्जुनीयम् । श्रीमत्कविकुलचूडामणिभारविविरचितम् । मल्लिनाथसूरिकृतया घण्टापथसमाख्यया तथा पं० श्रीकनकलालशर्मणा कृतया भावार्थदीपिनीव्याख्यया समलङ्कृतम् । [सर्गत्रयमात्रम्] [काव्य वि० ११] रु० ०-

७७ शक्तिवादः, श्रीगदाधरभट्टाचार्यप्रणीतः, पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्तभट्टाचार्यविरचितविवृतिसहितः । [न्यायविभागे १०] रु० ३-

७८ माथुरीपञ्चलक्षणी । पं० श्रीउमानाथार्ज्यालकृतव्याख्या सहिता तथा माथुरीसिंहव्याघ्रलक्षणम् । पं० श्रीहरिरामशुक्ल विरचितया व्याख्यया सहितं तथा पं० श्रीहरिहरशास्त्रि सङ्कलित माथुरीपञ्चलक्षणी क्रोडपत्रेण च । [न्याय वि० ११] रु० ०-

७९ रसाध्यायः । टीकया संवलितः । [आयुर्वेदशास्त्र वि० २] रु० ०—

८० पाणिनिव्याकरणे वादरत्नम् । न्यायव्याकरणाचार्य मीमांसक शिरोमणि पं० सूर्यनारायणशुक्लेन विरचितम् । प्रथमो भागः । (व्या० वि १०) रु० १-

८१ गणितकौमुदी । ( हिन्दीभाषाटीकासहिता ) प्रथमापरीक्षापाठ्यनिर्द्धारितगणितसंग्रहपुस्तकम् । [गणितविभागे १] रु० ०-

८२ छन्दःकौमुदी । ( हिन्दीभाषाटीकासहिता ) प्रथमापरीक्षापाठ्यनिर्द्धारितछन्दःसंग्रहपुस्तकम् । [छन्दोविभागे ३] रु० ०-

८३ योगदर्शनम् । महर्षिप्रवरपतञ्जलिप्रणीतम् । तत्र (१) भोजवृत्तिः, (२) भावागणेशवृत्तिः, (३) नागोजीभट्टवृत्तिः, (४) मणिप्रभा, (५) योगचन्द्रिका, (६) योगसुधाकराख्य टीका षट्कसमेतम् । [योग० विभागे१] रु० २-

८४ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् । म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा पं० ब्रह्मशङ्करमिश्रकृतपरीक्षोपयोगि सुधाऽऽख्यव्याख्यया सहितः । १ से ४ सर्गः मू० १-४-० । १ से ५ सर्गः रु० १-८-० तथा ६ से १० सर्गः १-

८५ योगदर्शनम् । पण्डित बलदेवमिश्रकृतया सटिप्पण्यायोगप्रदीपिकाख्य विवृत्या समन्वितम् । (योग विभागे २) रु० १-

८६ काव्यमीमांसा । राजशेखरविरचिता । साहित्याचार्य पण्डित श्रीनारायणशास्त्रीखिस्तेकृत काव्यमीमांसा-चन्द्रिका टीका सहिता । प्रथमाध्यायमारभ्य पञ्चमाध्यायपर्यन्ता प्रथमो भागः । (काव्य विभागे १३) रु० ०—

८७ नागानन्दनाटकम् । श्रीहर्षदेवप्रणीतम् । काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्येति पदवी विभूषितेन पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्या समलङ्कृत्य बृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम् । (नाटक विभागे १) रु० १—

८८ मेघदुतकाव्यम् । महाकवि श्री कालीदासविरचितम् । मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रावर्द्धिन्या तथा साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्तेकृत भावप्रबोधिनी व्याख्या टिप्पण्या च सहितम् । (काव्य वि० १४) रु० ०-

८९ जागदीशीव्यधिकरणम् । न्यायाचार्य पं० श्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । (न्यायविभागे १२) रु० २-

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । (अलङ्कारविभागे ४) रु० १

९१ वैयाकरणसिद्धान्तचन्द्रिका । पण्डित श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत सुबोधिन्या श्रीलोकेशकरकृत तत्त्वदीपिकया व्याख्यया च सहिता सटिप्पण । उत्तरार्द्ध । (व्या० वि० ११) रु० २-